आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ९७

# श्रीमज्जैमिनिप्रणीते मीमांसादर्शने

## चतुर्थाध्यायमारभ्य सप्तमाध्यायान्तश्चतुर्थो भागः ।

श्रीकुमारिलभट्टविरचितटुप्टीकाख्यव्याख्यासहितशाबरभाष्यसमेतः ।
सोऽयं पुण्यपत्तनीयमीमांसाविद्यालयाध्यापकपदाधिष्ठितैः
'मीमांसाविद्वान्' पदभाग्भिर्गुरुवर्यैर्वैद्यनाथशास्त्रिचर-
णान्तेवासिभिस्तीर्थहळ्ळीग्रामाभिजनसुब्बाशास्त्रिभिः
संशोधितष्टिप्पण्यादिना समलंकृतश्च ।

एतत्पुस्तकं
बी. ए. इत्युपपदधारिभिः
विनायक गणेश आपटे
इत्येतैः
पुण्याख्यपत्तने
श्रीमत् 'महादेव चिमणाजी आपटे' इत्यभिधे-
यमहाभागप्रतिष्ठापिते
आनन्दाश्रममुद्रणालये
आयसाक्षरैर्मुद्रयित्वा
प्रकाशितम् ।

शालिवाहनशकाब्दाः १८५४
खिस्ताब्दाः १९३२ ।



मूल्यं सार्धरूपकचतुष्टयम् ( ४॥० ) ।

# ग्रन्थानां सूचीपत्रम् ।


| | मूल्यम् । रु० | आ० |
|---|---|---|
| ... ... ... | ० | ६ |
| रप्रणीतभाष्याभ्यां संवलितः | १ | ६ |
| ... ... ... | ० | ४ |
| ग्रान्तिव पुरातनः । ... | ५ | ० |
| भाष्याद्युपेता । ... | ० | १४ |
| द्युपेता । ... ... | १ | ० |
| ांकरभाष्योपेता । ... | १ | ४ |
| द्युपेता । ... ... | १ | ० |
| ९ **मुण्डकोपनिषत्**—सटीकशांकरभाष्याद्युपेता । ... ... | ० | १० |
| १० **माण्डूक्योपनिषत्**—सटीकशांकरभाष्यगौडपादीयकारिकाद्युपेता । | २ | ५ |
| ११ **ऐतरेयोपनिषत्**—सटीकशांकरभाष्याद्युपेता । ... | १ | ४ |
| १२ **तैत्तिरीयोपनिषत्**—सटीकशांकरभाष्याद्युपेता । ... | १ | १२ |
| १३ **तैत्तिरीयोपनिषद्भाष्यवार्तिकम्**—सुरेश्वराचार्यकृतं सटीकम् । | २ | २ |
| १४ **छान्दोग्योपनिषत्**—सटीकशांकरभाष्योपेता । ... ... | ५ | ० |
| १५ **बृहदारण्यकोपनिषत्**—सटीकशांकरभाष्योपेता । ... | ८ | ० |
| १६ **बृहदारण्यकोपनिषद्भाष्यवार्तिकम्**—भागत्रयात्मकम् । | २२ | ८ |
| १७ **श्वेताश्वतरोपनिषत्**—भाष्यदीपिकाद्युपेता । ... ... | २ | ४ |
| १८ **सौरपुराणम्**—श्रीमद्द्वैपायनप्रणीतम् । उपपुराणम् । ... | ३ | ० |
| १९ **रसरत्नसमुच्चयः**—श्रीमद्वाग्भटाचार्यविरचितः । वैद्यकग्रन्थः । | ३ | १२ |
| २० **जीवन्मुक्तिविवेकः**—विद्यारण्यविरचितः सटीकः । ... | ३ | १२ |
| २१ **ब्रह्मसूत्राणि**—सटीकशांकरभाष्योपेतानि भागद्वयात्मकानि । | १२ | ० |
| २२ **श्रीमच्छंकरदिग्विजयः**—विद्यारण्यकृतः । टीकाटिप्पणीभ्यां सहितः । | ६ | ० |
| २३ **वैयासिकन्यायमालाविस्तरः**—भारतीतीर्थमुनिप्रणीतः । ... | १ | १२ |
| २४ **जैमिनीयन्यायमालाविस्तरः**—श्रीमाधवप्रणीतः । ... | ८ | ० |
| २५ **सूतसंहिता**—माधवकृतटीकोपेता । भागत्रयात्मिका । ... | ११ | ८ |
| २६ **हस्त्यायुर्वेदः**—पालकाप्यमुनिविरचितः । ... ... | ७ | ६ |
| २७ **वृन्दमाधवः**—श्रीमद्वृन्दप्रणीतः । सटीकः । वैद्यकग्रन्थः । | ६ | १२ |
| २८ **ब्रह्मपुराणम्**—श्रीमद्व्यासमहर्षिविरचितम् । प्रथमं महापुराणम् । | ६ | ४ |
| २९ **उपनिषदां समुच्चयः**—श्रीनारायणशंकरानन्दकृतदीपिकासहितः । | ६ | १२ |
| ३० **नृसिंहपूर्वोत्तरतापनीयोपनिषत्**—भाष्याद्युपेता । ... | १ | १२ |

| ग्रन्थनाम । | मूल्यम् । | |
|---|---|---|
| | रू० | आ० |
| ३१ **बृहदारण्यकोपनिषन्मिताक्षरा**—श्रीनित्यानन्दमुनिविरचिता । | २ | १२ |
| ३२ **ऐतरेयब्राह्मणम्**—सायणभाष्यसमेतम् । भागद्वयात्मकम् ।... | १० | १० |
| ३३ **धन्वन्तरीयनिघण्टुः**—श्रीधन्वन्तरिविरचितः । वैद्यकग्रन्थः | ६ | ४ |
| ३४ **श्रीमद्भगवद्गीता**—शांकरभाष्योपेता । ... ... | २ | ० |
| ३४ **श्रीमद्भगवद्गीता**—सटीकशांकरभाष्योपेता । ... ... | ६ | ४ |
| ३५ **संगीतरत्नाकरः**-शार्ङ्गदेवकृतः सटीको द्विभागः। गानशास्त्रम् । | १० | ४ |
| ३६ **तैत्तिरीयारण्यकम्**—सायणभाष्यसमेतं भागद्वयात्मकम् । | ९ | १ |
| ३७ **तैत्तिरीयब्राह्मणम्**—सायणभाष्यसमेतं भागत्रयात्मकम् ।... | १४ | ८ |
| ३८ **ऐतरेयारण्यकम्**—सायणभाष्यसहितम् । ... ... | ३ | ० |
| ३९ **संस्काररत्नमाला**-गोपीनाथभट्टविरचिता । भागद्वयात्मिका । | १२ | ८ |
| ४० **संध्याभाष्यसमुच्चयः**—खण्डराजश्रीकृष्णपण्डितादिप्रणीतः । | २ | ० |
| ४१ **अग्निपुराणम्**—महर्षिव्यासप्रणीतम् । महापुराणम् ... | ५ | ४ |
| ४२ **तैत्तिरीयसंहिता**—सायणभाष्यसमेता । भागनवकात्मिका । | ४८ | १० |
| ४३ **वैयाकरणसिद्धान्तकारिकाः**—भट्टोजीदीक्षितकृताः सटीकाः । | ० | १२ |
| ४४ **श्रीमद्भगवद्गीता**—पैशाचभाष्यसमेता । ... ... | १ | ८ |
| ४५ **श्रीमद्भगवद्गीता**—मधुसूदनश्रीधरकृतटीकोपेता । ... | ५ | ४ |
| ४६ **याज्ञवल्क्यस्मृतिः**-अपरार्ककृतटीकासहिता भागद्वयात्मिका । | १३ | ० |
| ४७ **पातञ्जलयोगसूत्राणि**—भाष्यवृत्तिभ्यां समेतानि । ... | ३ | ० |
| ४८ **स्मृतीनां समुच्चयः**—अङ्गिरःप्रभृतिसप्तविंशतिस्मृत्यात्मकः । | ५ | ० |
| ४९ **वायुपुराणम्**—महर्षिव्यासप्रणीतम् । महापुराणम् । ... | ४ | १२ |
| ५० **यतीन्द्रमतदीपिका**—श्रीनिवासदासकृता । प्रकाशटीकोपेता । | १ | ४ |
| ५१ **सर्वदर्शनसंग्रहः**—माधवाचार्यप्रणीतः । ... ... ... | २ | ० |
| ५२ **श्रीमद्गणेशगीता**—नीलकण्ठकृतटीकोपेता । ... ... | २ | ० |
| ५३ **सत्याषाढश्रौतसूत्रम्**—सत्याषाढविरचितं भागदशकात्मकम् । | २८ | ५ |
| ५४ **मत्स्यपुराणम्**—श्रीमद्द्वैपायनमुनिप्रणीतम् । महापुराणम् । | ६ | ० |
| ५५ **पुरुषार्थचिन्तामणिः**—आठवलेइत्युपाह्वविष्णुभट्टकृतः । | ४ | ० |
| ५६ **नित्याषोडशिकार्णवः**—भास्कररायोन्नीतटीकासहितः । | ३ | ८ |
| ५७ **आचारभूषणम्**—हिरण्यकेश्याह्निकसोकोपाह्वत्र्यम्बककृतम् । | ४ | ६ |
| ५८ **आचारेन्दुः**—मोटइत्युपाह्वत्र्यम्बकविरचितः । ... | ४ | ० |
| ५९ **श्राद्धमञ्जरी**—केळकरोपाह्वबापूभट्टविरचिता । ... | २ | ० |
| ६० **यतिधर्मसंग्रहः**—विश्वेश्वरसरस्वतीकृतः । ... ... | १ | १२ |

| ग्रन्थनाम । | मूल्यम् । | |
|---|---|---|
| | रू० | आ० |
| ६१ गौतमप्रणीतधर्मसूत्रम्—हरदत्तकृतटीकासमेतम् । ... | २ | ८ |
| ६२ ईशकेनकठप्रश्नमुण्डमाण्डूक्यानन्दवल्लीभृगूपनिषदः-सटीकाः | २ | ८ |
| ६३ छान्दोग्योपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ | १२ |
| ६४ बृहदारण्यकोपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ | ४ |
| ६५ शाङ्खायनब्राह्मणम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । ... | १ | ४ |
| ६६ काव्यप्रकाशः—उद्द्योतयुतप्रदीपसहितः । ... | ६ | ४ |
| ६७ ब्रह्मसूत्राणि—दीपिकासमेतानि । ... ... | ४ | ८ |
| ६८ बृहद्ब्रह्मसंहिता—नारदपञ्चरात्रान्तर्गता । ... ... | १ | १२ |
| ६९ ज्ञानार्णवतन्त्रम्—ईश्वरप्रोक्तम् । तन्त्रशास्त्रग्रन्थः । ... | १ | ४ |
| ७० स्मृत्यर्थसारः—श्रीधराचार्यविरचितः । ... ... | १ | १० |
| ७१ बृहद्योगतरङ्गिणी—त्रिमल्लभट्टविरचिता भागद्वयोपेता । | १० | १२ |
| ७२ परिभाषेन्दुशेखरः—वैद्यनाथकृतगदाख्यटीकायुतः । ... | २ | ६ |
| ७३ गायत्रीपुरश्चरणपद्धतिः—श्रीमच्छंकराचार्यविरचिता ।... | १ | ८ |
| ७४ द्राह्यायणगृह्यसूत्रवृत्तिः—रुद्रस्कन्दप्रणीता । ... | १ | ० |
| ७५ ब्रह्मसूत्रभाष्यार्थरत्नमाला—सुब्रह्मण्यविरचिता । ... | ४ | ४ |
| ७६ ईशकेनकठोपनिषदः—दिगम्बरानुचरकृतव्याख्यासमेताः । | १ | ० |
| ७७ वेदान्तसूत्रमुक्तावलिः—ब्रह्मानन्दसरस्वतीविरचिता । ... | २ | ६ |
| ७८ त्रिस्थलीसेतुः—नारायणभट्टविरचितः । ... .. | ३ | १२ |
| ७९ छान्दोग्योपनिषत्—मिताक्षराव्याख्यासमेता । ... | २ | ० |
| ८० वाक्यवृत्तिः—श्रीमच्छंकराचार्यकृता सटीका । .. | ० | ८ |
| ८१ आश्वलायनश्रौतसूत्रम्—नारायणकृतवृत्तिसमेतम् । ... | ४ | ११ |
| ८२ ब्रह्मसूत्रवृत्तिः—हरिदीक्षितविरचिता । ... ... | २ | ७ |
| ८३ संक्षेपशारीरकम्—व्याख्यासहितं भागद्वयोपेतम् । ... | ९ | १ |
| ८४ अद्वैतामोदः—अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । ... | २ | ० |
| ८५ ज्योतिर्निबन्धः—शूरमहाराष्ट्रश्रीशिवराजविरचितः । ... | ३ | १५ |
| ८६ विधानमाला—श्रीनृसिंहभट्टविरचिता । ... ... | ४ | ४ |
| ८७ अग्निहोत्रचन्द्रिका—किंजवडेकरोपाह्ववामनशास्त्रिकृता । | २ | १४ |
| ८८ निरुक्तम्—दुर्गाचार्यकृतवृत्तिसमेतम् । भागद्वयात्मकम् । .. | १६ | ४ |
| ८९ काव्यप्रकाशः—संकेताख्यटीकासमेतः । ... ... | ३ | ४ |
| ९० शाङ्खायनारण्यकम्-ऋग्वेदान्तर्गतबाष्कलशाखीयम् । ... | ० | ६ |

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ९७

# श्रीमज्जैमिनिप्रणीते मीमांसादर्शने

चतुर्थाध्यायमारभ्य सप्तमाध्यायान्तश्चतुर्थो भागः ।

---:०:---

श्रीकुमारिलभट्टविरचितटुप्टीकाख्यव्याख्यासहितशाबरभाष्यसमेतः ।

सोऽयं पुण्यपत्तनीयमीमांसाविद्यालयाध्यापकपदाधिष्ठितैः
'मीमांसाविद्वान्' पदभाग्भिर्गुरुवर्यवैद्यनाथशास्त्रिचर-
णान्तेवासिभिस्तीर्थहळ्ळीग्रामाभिजनसुब्बाशास्त्रिभिः
संशोधितष्टिप्पण्यादिना समलंकृतश्च ।

एतत्पुस्तकं

बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

श्रीमत् 'महादेव चिमणाजी आपटे' इत्यभिधे-
यमहाभागप्रतिष्ठापिते

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८५४

खिस्ताब्दाः १९३२



मूल्यं सार्धरूपकचतुष्टयम् ( रु० ४।८ ) ।

# प्रकाशः

—:०:—

विदितचरमेवैतद्विश्वेषां विविधानवद्यहृद्यविद्याकमलिनीराजहंसायमानानां पण्डावतां विदुषाम् । यदिहाऽऽब्रह्मस्तम्बपर्यन्ते जगत्युच्चतमकोटिमभिप्राप्ते देवासुरनरवर्गेऽपि कुमारः कुमारी वा युवा वा युवतिर्वा जरन्वा जरती वा यो वा को वा तिर्यग्योनिप्रभवो वा शरीर्यहोरात्रमविश्रान्तं यदुद्दिश्य श्राम्यति तदिदं सुखमेवैकमिति निखिलैर्दर्शनकृद्भिर्विद्वद्भिश्चान्यैर्व्यवहर्तृभिः सर्वैरेकमुखेन समस्वरमुद्घुष्यत इति ।

सुखं च यद्यपि विषयेन्द्रियसंबन्धाज्जायमानं ब्रह्मानन्दानुभवादाविर्भूयमानं चेति द्विप्रकारकं तथाऽपि वैषयिकसुखस्य ' एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ' इति श्रुतौ आनन्दलेशात्मकत्वप्रतिपादनाल्लेशपदमाहात्म्याच्च तत्राऽऽक्षिप्यमाणानन्दलेशप्रतिद्वन्द्विनो दुःखाधिक्यस्यावश्यंभावाद्बलवत्तरेण तेजोराशिना दीपप्रभाया इव तिरस्कृतत्वाद्भूयसा दुःखांशेन स्वल्पांशस्य सुखलेशस्येति कृत्वा तादृशसुखस्य विरागिणामिव सरागिणामपि केषांचित्सुखत्वेनाप्रतिभानात्प्रतिभानेऽपि दुःखासंभिन्नेतिविशेषणांशविरहेणौपचारिकं तस्य सुखपदाभिधेयत्वम् । तस्मान्न यद्दुःखकणिकयाऽपि संपृक्तं न च कदाऽप्यंशतोऽपि क्षीयते नापि यस्मादधिकमन्यत्तादृशं निरतिशयमभङ्गुरं च यत्सुखं तदर्थमेवायं सर्वैः स्थेयाञ्श्रमः संप्रतीयते ।

निरुक्तसुखं तु ' सर्वं खल्विदं ब्रह्म ' ' नेह नानाऽस्ति ' ' एकमेवाद्वितीयम् ' ' एकत्वमनुपश्यतः ' इत्यादिप्रमुखश्रुतिभिरनुसंहितादद्वयब्रह्मकुञ्जानुसंधानज्ञानपुञ्जादेव संजायते ।

स च ज्ञानसहस्रांशुर्जनमनःशिखरिशिखरे यथातात्पर्यमुदयतामिति मुहुर्मुहुर्वेदान्तापरपर्यायाः श्रुतिशिरोभागाः परिचीयन्ते मनीषिभिः । तदेव च पुनस्तात्पर्यतः संजग्राह भगवान्बादरायण उत्तरमीमांसाभिख्यचारुचतुष्कमन्दिरनिर्माणेन । अत एवास्या एव मीमांसायाः सर्वतोऽभ्यधिकत्वम् ।

यथैव खलु भगवतः पाणिनेस्तन्त्रमधिजिगमिषुभिर्भट्टोजिदीक्षितकृतिः सिद्धान्तकौमुद्यधीयते तथैव च किल वेदान्ततत्त्वगहनं

जिज्ञासमानैर्धीमद्भिः सैषा श्रीमतो बादरायणस्य कृतिरुत्तरमीमांसा प्रवेष्टुमिष्यते ।

इमामेव च वस्तुस्थितिं समालोच्य भगवन्तः श्रीशंकराचार्यपूज्यपादाः समस्तवेदान्तसिद्धान्तोपकारक्षमं ललितललितेन वाक्यसंदर्भयोजनेन विशदविशदेन विषयविवेचनेनोत्तमोत्तमेन चोपपत्तिप्रदर्शनप्रकारेण सकलेतरव्याख्यातिशायि सरलं सुबोधं च भाष्यमारचयांबभूवुः ।

यथा च सिद्धान्तकौमुदी मूलकारनिर्मितया प्रौढमनोरमया, तच्छिष्यप्रणीतया तत्त्वबोधिन्या, नागोजीभट्टकृतेन शब्देन्दुशेखरेणान्याभिश्च सरलासुबोधिन्याद्यनेकव्याख्याभिरुपचयमुपारूढा विराजते, एवमेव नूनमियमप्युत्तरमीमांसा रत्नप्रभान्यायनिर्णयभामत्यादिविविधशारीरकव्याख्याभिः समुचिताभिः शाखोपशाखमभिवृद्धिमुपागत्य परिमितैरक्षरैरनतिरिक्तेनार्थेनान्यूनेन विषयविन्यासेन वेदान्तहृत्तलस्पर्शिना तत्त्वनिरूपणेन वेदान्ततन्त्ररहस्यमधिजिगांसमानानां विद्यार्थिनामिव विदुषामपि बहूपकरोतीत्यनुभवमात्रसिद्धं खल्वेतत्सहृदयानां निखिलानामधीतिनां प्रत्यात्मवेद्यम् ।

सेयं मीमांसा, अङ्गभूतकर्मकाण्डीयवेदवाक्यार्थतात्पर्यनिर्णायकपूर्वमीमांसापेक्षया प्रधानीभूतनित्यसुखाविर्भावलक्षणपरमपुरुषार्थसाधनीभूतज्ञानकाण्डीयवेदवाक्यतात्पर्यार्थनिश्चायकत्वादतितरां श्रेष्ठा । श्रेष्ठत्वं चास्या उत्तरशब्देनैव सूच्यते । अत एव चेयं श्रेष्ठत्वावेदकेन 'उत्तरमीमांसा' इति शब्देन संबोध्यते शिष्टैः । अत एव च विवादास्पदशास्त्रतात्पर्यभूतगूढार्थान्वयने मीमांसाश्रयणावसरे निबन्धयद्भिर्विद्वन्मूर्धन्यैर्मान्यैराचार्यैरियमुत्तरमीमांसैव स्थले स्थले सादरं प्रमाणत्वेनोपढौकिता । किंच पाणिनिदर्शनस्य वेदान्तशास्त्रस्येवाभेदपरत्वं ग्राहयद्भिर्महाभाष्यकारादिभिर्जगद्ब्रह्मणोरैक्यस्य प्रतिपत्त्यर्थमुत्तरमीमांसासमाश्रितयुक्तिप्रयुक्त्यवलम्बनेनैव तद्ग्राहितम् । नैतावदेवापि तु श्रीमध्ववल्लभरामानुजाचार्या अपि दर्शनकाराः स्वस्वदर्शनदृष्टेषु द्वैतशुद्धाद्वैतविशिष्टाद्वैतवादेषु तत्तन्मताधारस्तम्भेषु विषये न्यूनतां परिहर्तुमिव परिपूर्णतां स्वतन्त्रतां प्रमाणसिद्धतां च दृढीकर्तुमिव च यथायथं श्रीभाष्यादिना कृतपरिष्कारामिमामेवोररीकार्षुः । तत एव च स स वादो जगति प्रसृमरो

भूत्वा तत्तन्मतग्राहिणामपि जनानां समादरणीयतां रमणीयतां च नितरामयासीदिति जानन्त्येव कृतधियः । किंचाहो मीमांसारसिकाः, पश्यतेदानीमिदमपरमस्याः कौशलकुतूहलम् । श्रीमत्याऽनया मीमांसयाऽमृतरसं वेदान्ता ममन्थिरे । पूर्वमीमांसया तु, अन्यमेव कमपि विरसमिति ।

अयि निरतिशयसुखास्वादवद्धादरास्तत्साधनज्ञानाभ्यसनैकव्यसनिनः पञ्चजनाः शृणुतेदानीं किमपि वक्तव्यम् । भारतवासीयानां दैवदुर्विलासाद्वा करालकलिकालपरिणामाद्वा भगवत्या भवितव्यतायाः प्रभावाद्वाऽन्यस्माद्वा कुतश्चिन्निदानान्न जाने, परं महता संरम्भेण संप्रवृत्तः खलु कालविपर्ययः सकलानेवोच्चावचप्राणभृन्निकुरम्बान्बहु व्याकुली चकार । अश्रद्धया च लोकानां मनस्तथा समाक्रान्तं यथाऽज्ञानालस्याद्युपहतचेतसः सन्तो दुराचारमेव सदाचारं परिपश्यन्ति स्म । श्रुतिस्मृतीतिहासपुराणप्रभृतीनि सच्छास्त्राण्यपि तृणायामंसत । न समस्तीश्वरो न परलोको नतरां च भक्ष्याभक्ष्यपेयापेयस्पृश्यास्पृश्यविवाह्याविवाह्यविभाग इत्येवं निरर्गलमजल्पिषुः । एवं संप्रवृत्ते सर्वत्र ह्राससमयेऽस्तमिते बुद्धिवैभवे निवृत्तायां वेदशास्त्रचर्चायां लुप्तप्रायायां शिक्षणपरिपाट्यां पराङ्मुखीभूतायां हरिप्रियायां त्रिविधदुःखदुःखितायां च जनतायां प्रावर्तिष्ट महाञ्जीवनकलहकोलाहलः ।

क्रमेण च जर्जरीभूते शिक्षितवर्गे विशीर्णे च पुष्पत्सुखसाधने ग्रन्थसंभारेऽज्ञानपङ्कनिमग्ने भरतखण्डे तदुद्धारार्थं पूर्ववज्जगति ज्ञानं प्रचारयितुमीशसेवामिवानुषङ्गतो देशसेवामपि च साधयितुं सततसमुत्सुका सुगृहीतनामधेयाऽऽनन्दाश्रमनाम्नी काऽपि संस्था प्राचीनसंस्कृतशास्त्रीयग्रन्थोद्धारिणी कस्यापि किमपि किंचिदपि साहाय्यमधारयन्ती सर्वात्मना स्वतन्त्रीभूता स्वसत्तामेवाऽऽवहन्ती स्वसामर्थ्येनैव स्वात्मानं पुण्यनगर आविरकार्षीदिति ।

यथैव खलु श्रीबादरायणशंकराचार्यप्रमुखा दर्शनकारा अन्ये च भामतीकारानन्दगिरिमधुसूदनसरस्वतीप्रभृतयः पण्डितमूर्धन्यावतंसाः, अद्वैतमतानुगान्भूयसो निबन्धानुपन्यभान्त्सुस्तथैव किलेयमपि महनीयाऽऽनन्दाश्रमसंस्था शांकरमतानुवर्तिनः शतशो वेदान्ततन्त्रनिबन्धा-

न्परिष्करणपूर्वकं मुद्रणेनोपनिबध्नती श्रीभगवत्पूज्यपादाननुकरोति । प्रकरोति च लोकानां निरतिशयसुखसाधनमार्गं निष्प्रतिबन्धम् ।

अद्ययावदनया संस्थया श्रुतिस्मृतीतिहासपुराणादिग्रन्थान्व्याकरण-न्यायमीमांसाधर्मशास्त्रादींस्तत्र तत्र मुख्यान्विशालांश्च शास्त्रीयग्रन्थान्सु-परिष्कृत्य संमुद्र्य प्रकाश्य च वेदशास्त्रादिसंरक्षणजनितं महच्छ्रेयः सम-पादीति प्रथितमेवैतदकूपारपारं गतेष्वपि देशेषु । अनेनैव प्रकारेणेयं लोकानन्ददाऽऽनन्दाश्रमसंस्था चिरायाकरोत्करोति करिष्यति चाग्रे मुक्तसंशयं महान्तं लोकोपकारम् ।

संप्रति तु पुनः सर्वत्र प्रसृतायां वेदान्तरहस्यजिज्ञासायां प्रवृत्तायां च श्रुतिशिरोभागापरपर्यायवेदचर्चायां सुतरां प्रचारमर्हति पारमर्षसूत्रा-त्मकोत्तरमीमांसातन्त्रालोचनम् । तदन्तरा हि न पुनः शक्यं केनाप्य-न्येन साधनेन वेदान्तार्थज्ञानम् । यो ह्युत्तरमीमांसाज्ञानशून्यः सन्प-ण्डितंमन्यः स्वमतिसामर्थ्येनैव वेदान्तार्थमाकलयितुं प्रयतते स खलु प्रांशुलभ्ये फले लोभादूर्ध्वबाहुर्वामन इव न केवलमुपहासपात्रतां प्रयाति किंत्ववस्थापयत्यात्मानमप्यवनतिमार्गे ।

यद्यपि कतिपये वेदान्ततन्त्रग्रन्थसंदर्भा अन्यत्र क्वापि विप्रकृष्टजन-पदे पूर्वममुद्र्यन्तेति श्रूयते तथाऽपि कीलकदोषाद्वा तद्योजकप्रमादाद्वा संशोधकौदासीन्याद्वा समयासत्त्वाद्वाऽनेकप्रत्यन्तरालाभाद्वा स्खल-नस्य पुंधर्मत्वाद्वा समुचितपरिष्करणानलंकृततया नारीरमंस्त आलो-कयतां मनांसि । अतो रमणीया अपि न कमनीया अभूवन्नधीषिषूणां जिज्ञासूनां वा । तादृशा अपि नालभ्यन्तापेक्षितसमये ।

इदमेव च वस्तुतत्त्वमाकलय्य दुष्प्रापसुविशालग्रन्थमुद्रणे दृढं गृही-तादरयाऽनया संस्थया कियन्तो लघवः कतिचन मध्यमाः कतिपये तु महान्त इति संकलनेन पञ्चषाधिकशतं ग्रन्था मुद्रणावस्थामन्वभा-विषत । संशोधनादिकार्यसंपादनाय च तत्तद्विषयेषु चिरस्य कृतपरि-श्रमा आनुभविकाविद्वांसो यथोचितमासिकवेतनविश्राणनेन संगृहीता आसते । अन्तराऽन्तरा तत्तच्छास्त्रपारंगतत्वेन प्रसिद्धैर्महद्भिर्विद्वद्भिः संशोध्य ग्रन्था आदीयन्ते । प्रदीयन्ते च तेभ्यः संशोधनवचनानि । मुद्रणकर्तारोऽप्यन्यत्र मुद्रणयन्त्रशालायां विशालायां पञ्चषहायनानि संपादितमुद्रणकार्या एव च मासिकवेतनेनाऽऽत्मसात्क्रियन्ते ।

प्रतिमासं च मुद्रणकार्यसंपादनाय संकलनेन सहस्रादप्यधिको द्रविण-राशिव्ययः संघटते ।

एवं महत्याऽऽरभट्या महान्तं प्रयासमनुभूय द्रव्यव्ययं च विधाय मुद्रिते ग्रन्थविषये जिघृक्षुजनसमालोचने क्रियमाणे जनास्तावद्द्वि-विधा दृश्यन्ते । उपासका अनुपासकाश्च । तत्रोपासकास्त्रिविधाः । केवलं लक्ष्म्युपासकाः, केवलं वाग्देव्युपासका उभयोपासकाश्चेति । तत्राऽऽदिमाः प्रायेण वाग्देवीं न रोचयन्ते । द्वितीयाः पुनर्न लक्ष्म्यां लक्षं ददते । तेषां लक्ष्म्युपासनमवक्तव्यमेव । उभयानुपासकानां मध्ये केचिदविचारणीयचरिताः, कतिपये तूपेक्षाविषया इति तान्मा संपिस्पृक्षीद्विचारः । उर्वरिता उभयोपासकाः । ते चापि—

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥

इत्युक्तेः स्मारयितारो भवन्ति । एकोऽपि जिघृक्षुर्भवति न वेति यावत् ।

ईदृश्यामवस्थायां सांप्रतं पुस्तकमुद्रणकार्ये कियन्महत्त्वमापन्नं कियच्च दुःशकं कष्टदं च संजातमित्यनुमीयेतैवेति न पृथक्कथनमपेक्षते । धर्मतत्त्वनिर्णयीयप्रास्ताविकान्तर्गतः ' यदि चाऽऽनन्दाश्रमसंस्थया मुद्रणार्थं नादास्यतावकाशस्तर्हि सर्व एवायमात्मासादनप्रयासो धर्म-तत्त्वनिर्णयस्य व्यर्थो जातः स्यात् ' इत्युल्लेखोऽपि निबन्धलेखन-कार्यापेक्षयाऽपि मुद्रणकार्यस्यैव महत्त्वमित्यवगमयति सुतरां तु तदि-तरकार्यापेक्षया ।

तदिदं महत्कार्यमनया संस्थयाऽद्ययावदव्याहतं संपाद्यत इतीय-मानन्दाश्रमसंस्था स्वान्यासां धर्मसंस्था-कर्मसंस्था-आश्रमसंस्था-जा-तिसंस्था-लोकसंस्थेत्यादिसर्वासां संस्थानां जीवातुभूतेत्युक्तिर्नात्युक्ति-कोटिमधिरोहेदित्यास्तां तावत् ।

एतावता प्रबन्धेन कृतादुद्देश्यकर्तव्ययोः स्वरूपस्य विवेचना-दस्याः संस्थाया जन्मसहभुवो मुद्रणविषये सामान्यनिर्बन्धा ह्येव-मुत्कष्टुं शक्यन्ते—

१—श्रीसच्चिदानन्दाधिष्ठितायामानन्दाश्रमसंस्थायां स्वल्पा महान्तो वा संजातपरिष्करणसंस्काराः संस्कृतग्रन्था एव मुद्रणसंस्कारोत्सव-मर्हेयुः । न पुनः कीदृशा अपि महाराष्ट्रादिभाषाग्रन्थाः ।

२–संस्कृतग्रन्था अपि प्रायः शास्त्रीया एव भवेयुः ।

३–शास्त्रीयेष्वपि वेदान्तग्रन्थाः, तत्राप्यद्वैतवेदान्तीयाः शांकरग्रन्थाः प्रथमत आहत्य मुद्रणेन सभाजयितव्याः । तदनु व्याकरणन्यायमीमांसास्मृतीतिहासपुराणधर्मशास्त्रादयोऽपि चतुर्दशविद्यासमाख्याः ।

४–तत्र चाऽऽनन्दाश्रमसंस्कृतग्रन्थावलिप्रवेशार्हाः प्रथमं संभावनीयाः । तदनु ग्रन्थावलिप्रवेशानर्हा अपि संस्थाप्रवेशार्हाः ।

५–त एते सर्वेऽपि ग्रन्थाः संमुद्र्य प्रकाशिताः सन्तः सर्वात्मना संस्थाधीनतां प्रदर्शयन्तस्तत्सत्तामेव धारयेयुः । न लेशतोऽपि परकीयसत्तां सहेयुः ।

६–उपर्युक्तनियमेषु यदि कश्चिद्देशकालादिपरिस्थित्यनुसारान्न्यूनाधिकभावेन विपर्ययो नामाप्तः समालोच्येतान्यो वा कश्चन नूतननिर्बन्धः स्वात्मानं लब्धुं समुत्सहेत, चेत्तदानीं तदानींतनाः संस्थाध्यक्षास्तत्रप्रभवेयुरिति ।

अद्ययावत्प्रचलितः संस्थाङ्गीकृतग्रन्थमुद्रणसंप्रदायोऽपि निरुक्ताङ्कितानेव मुद्रणनिर्बन्धानुपोद्बलयति ।

संप्रति चाऽऽनन्दाश्रमसंस्थास्थपूर्वसंप्रदायासिद्धग्रन्थमुद्रणनिर्बन्धभराक्रान्तमिमं जैमिनीयसूत्राणां चतुर्थाध्यायमारभ्य सप्तमाध्यायान्तं चतुर्थं भागं सह समुचिताभ्यां टुप्टीकाशाबरभाष्याभ्यां मुद्रयितुं प्रवृत्तः श्रीमान्महाभाग आपटेकुलोद्भवो गणेशात्मजो विनायकरायः (आनन्दाश्रम म्यानेजिंगट्रस्टी) श्रीसच्चिदानन्दस्य कृपाकटाक्षेण तत्पारं गतवानिति सादरं समर्पयं च प्रकाशयति तदनुशासनवशवर्ती—

पुण्यपत्तने ज्ये० व० १४ शनौ शके १८५४ } आनन्दाश्रमस्थपण्डितप्रधानः—मारुलकरोपाह्वः शंकरशास्त्री ।

# मीमांसाविद्यालयनिवेदनम् ।

---

**मीमांसेतरग्रन्थाः ।**

यदर्थं हि तत्रभवतां विदुषां वैदिकशिष्टानां समारम्भस्तद्धि मीमांसाशास्त्रगद्धान्तितन्यायानुसारं वैदिकानामग्निहोत्रादिकर्मणामनुष्ठानम् । तच्च यथाशास्त्रं भवत्विति पुनः पुनरालोचयन्ति शिष्टा मीमांसान्यायान् । नैतावदेव किंतु स्वग्रन्थन्यूनतां परिहर्तुमुपादेयतामापादयितुमिव तत्तद्ग्रन्थकाराः स्वग्रन्थे पञ्चषान्द्वित्रान्वा मीमांसान्यायानुपाददते । किं पुनर्भगवान्कृष्णोऽपि वाग्मीरण्या बृहस्पतिमपि न्यक्कुर्वन् स्वग्रन्थे श्रेष्ठतामापादयितुं ' मीमांसयेवानेकभावनानुविद्धया गीतया ' इति दृष्टान्तभूतां भगवतीं मीमांसामाजहार । मम्मटप्रभृतयोऽपि भूयांस आलंकारिकाः स्वग्रन्थप्रौढतां संपादयितुमिवान्विताभिधानवादप्रबलदौर्बल्य–पाञ्चमिकप्रवृत्त्यादिकप्रभृतीनि मीमांसाप्रतिष्ठितानि प्रकरणानि समुदचैषुरिति नासंमतं भूयोविदाम् । वैयाकरणा अपि पतञ्जलिप्रभृतिग्रन्थाध्ययनं, विना मीमांसासाधनं यथावन्न भवतीति संप्रतिपन्नाः ।

**मीमांसोपयोगः ।**

यतः पूर्वमीमांसा हि वाक्यशास्त्रं, वाक्यसमूहरूपं च शास्त्रजातमिति यामनधीत्य न निर्विचिकित्सं शास्त्रार्थः शक्यः संप्रतिपत्तुं तामध्वरमीमांसां सर्वशास्त्रप्रदीपभूतां प्रविरलप्रचारतया लुप्तप्रायां पुनरुद्धर्तुं समुद्यतो मीमांसाविद्यालयः । प्रायो विद्वांसोऽपीदं शास्त्रं पौरोहित्येन चरतां ब्राह्मणानामेवोपयोगि प्रयोगरूपनिश्चायकत्वादिति मन्यन्ते । सोऽयमेषां मतिविपर्ययो वेदवाक्यानामेव तत्र मीमांसितत्वश्रवणकृत इति मन्यामहे । न हि वेदवाक्यान्युदाहृत्य व्युत्पादिता गुणा दोषा वा वाक्यान्तरेषु स्वभावं परिजह्युः । न हि जामात्रर्थमपि कृतं मधुरान्नं पररसनां प्राप्य विपरीतं भवति ; न हि गुणानां दोषाणां वा तत्त्वं वैदिकत्वनिबन्धनमपि तु वाक्यत्वनिबन्धनम् । यथा माधुर्यानुभवो रसनेन्द्रियनिबन्धनो न तत्र जामातृत्वं प्रयोजकम् । अतो वाक्यमात्रे ते ज्ञातव्याः । तथाऽत्र व्युत्पादिता न्याया वाक्यतात्पर्यनिर्णायकतर्करूपत्वात्स्वेच्छया लौकिकेष्वपि वाक्येषु योजनीयम् । न पुनरदृष्टपरेष्वेव वैदिकेष्विति युक्तं कल्पयितुम् । अत एव राजनियमपण्डितानामपि मीमांसाध्ययनं स्वे कर्मणि शक्नोति परं नैपुण्यमाधातुमित्यपि शक्यं वक्तुम् । यद्यपि शास्त्रान्तरेष्वपि कृतेन श्रमेण बुद्धिर्विशदा भवति तेषामपि तथाविधतर्कोप-

बृंहितत्वात्तथाऽपि न तत्र ते साकल्येन सन्ति न वा तेषां स्वरूपं विचारितमिति न तदध्ययनेन मीमांसाया गतार्थत्वं युक्तं संभावयितुम् । न हि गृहे कृष्णोऽस्तीति कतिचिदौषधानि तदर्थमाहृतानि तावता तद्गृहमौषधालयो न वा तद्गृहवासिनो रोगनामान्यौषधनामानि च शृण्वन्तोऽपि भिषजो भवन्ति । तस्माल्लोकशास्त्रोभयव्यवहारोपकारी विद्यालयस्यायं समुद्यमः । स च भगवतः प्रीत्यै विदुषामुपयोगाय च भूयादित्याशास्महे । अपरं च ये केचन व्यवसायान्तरव्यापृता जिज्ञासन्ते च मीमांसान्यायांस्तेऽप्येतत्सवार्तिकशाबरभाष्याध्ययनेनाऽऽपाततोऽवलोकनेनापि यथा सिद्धार्था भवेयुस्तथेयं योजना कृताऽस्तीति जानन्तु सुधियः ।

अद्य यावन्मीमांसाविद्यालयग्रन्थकार्यम् ।

यद्यपि प्रत्यक्षसमाचारे सामान्यतो मीमांसापेक्षया प्रयोगशास्त्रसिद्धान्तो बलीयांस्तथाऽपि विचारापेक्षं हि प्रयोगशास्त्रं स च मीमांसाशास्त्रगत एव पुनः शिष्टैरादृतः संगृहीतश्च । अतस्तत्रत्यः सर्वोऽपि न्यायकदम्बो महानुपयोगीति तद्घटितमीमांसाशास्त्रीयाकरग्रन्थानां प्रथितिर्भवत्विति प्रयतते मीमांसाविद्यालयः । प्रयत्नसातत्येनैतावताऽनेहसा जैमिनिसूत्राणां भगवच्छबराचार्यप्रणीतं भाष्यं भट्टकुमारिलप्रणीततन्त्रवार्तिकसहितमातृतीयाध्यायं संशोध्य टिप्पण्या च समलंकृत्य पुण्यपत्तनीयाऽऽनन्दाश्रमव्यवस्थापकेभ्यः समर्पितं तैश्च तत्समानन्दं स्वीकृत्य संमुद्र्य च प्रथितमपीति सशिरःकम्पं तेभ्यो ब्रूमो धन्यवादाननेकशः । अग्रेऽप्येवमेवेममाकरग्रन्थं विद्वद्व्यवहारोपयोगिनं संशोध्य स विद्यालयेन तेभ्यः समर्प्यते । तैश्च सोऽपि पूर्ववदेव प्रथयिष्यत इति सुनिश्चितम् ।

उपलब्धमुद्रितपुस्तकावेदनम् ।

भो मीमांसाविषयैकदत्तचित्ताः । किमपीदं कर्णे कुरुत, चतुर्थलक्षणमुपक्रम्य आद्वादशलक्षणं श्रीभट्टकुमारिलप्रणीतं व्याख्यानं टुप्टीकेतिसमाख्यातं सुप्रथितमस्ति । तच्च बहोः कालादारभ्यानुपलभ्यमानमासीत् । परं संस्कृतग्रन्थप्रथितौ कृतादरया काशीस्थया ' चौखम्बा सीरीज् ' इत्याख्यया संसदा तदङ्कयित्वा प्रकटीकृतमपि भूयःसु प्रदेशेषु पदशः, अक्षरतश्च, प्रभ्रष्टं सन्नाध्ययनाध्यापनायालमिति नैतावता किं तु तत्रत्यं यत्पङ्क्तिशः स्खलनं तद्विदुषामपि दुरूहं सम्भूतम् । प्रतीमो वयं तन्निदानं—संशोधकानवधानं वा तादृशपुस्तकानुपलब्धिर्वा समयाभावो वा आलस्यं वा मुद्रणदोषो वेति

निश्चेतुं न पारयामः । तत्रत्यं भूयसीनां पङ्क्तीनां तत्र तत्र स्खलनमुपलभमाना वयमध्ययनाध्यापनसंशोधनकार्येषु हताशाः संवृत्ता अभूम ।

संशोधनसामग्री ।

परं ' तूष्णींभावो न श्रेयसे ' इति न्यायमवलम्ब्य तत्र तत्र विद्वत्संसदि, विद्वदभिनिविष्टान्तःकरणसंस्थानभूमौ, टुप्टीकातद्व्याख्यानादिग्रन्थसंशोधनव्यापृतचित्ता अभूमेति नात्यक्षं तदवलोकयताम् । टुप्टीकाविषये भूयो लेखनीयमस्ति तत्तु, अन्तिमभागसंशोधनावसरे निर्देक्ष्यामः । ( १ ) एवं संशोधनव्यापृतचित्तैरस्माभिः पुस्तकोपलब्धौ संप्रार्थिताः श्री ६ पूज्यपादमहामहोपाध्यायचिद्रूपाक्षशास्त्रिणः । ते च पुनरस्मदीयाभ्यर्थनां स्वीकृत्य, अवगम्य चास्मदीयपुस्तकसंशोधनसमुद्यमं समीचीनमावश्यकं चैतत्कार्यमित्यवगत्य टुप्टीकाव्याख्यानं क्वाप्यनुपलभ्यमानं श्रामं श्रामं ' म्हैसूर ' राजकीयग्रन्थसंग्रहालयादेकं पुस्तकं ' तन्त्ररत्नाभिधं ' लेखयित्वा प्राहैषुः । यद्यपि तदपि भूयःसु स्थलेषु पङ्क्तिशो भ्रष्टं तथाऽपि सामान्यत उहोपयोगि समभूदिति तदुपकारभराक्रान्ता वयं वाढं नता एवेति सबहुमानं निवेदयामः । ( २ ) ' चौखम्बासीरीज् ' इत्यनया संस्थया काश्यां मुद्रितं द्वितीयम् । ( ३ ) काशीस्थराजकीयसंस्कृतग्रन्थसंग्रहालयात्त्रीणि पुस्तकानि' ओरिएण्टल भण्डारकर रिसर्च इन्स्टिट्यूट इत्याख्यसंस्थातः समुपलब्धानि । तत्रैकमतीवाशुद्धं समग्रम् । अपरं चतुर्थपञ्चमाध्यायस्वरूपम् । इतरदत्यन्तं सप्तमाध्यायप्रभृत्याद्वादशाध्यायं शुद्धमेवेति निवेदयितुं प्रसीदत्यन्तरङ्गमस्माकम् । संशोधकाश्च मीमांसाविद्यालयाध्यापका ' मीमांसाविद्वान ' इतिसुगृहीतमहीशूरराजकीयोपाधयो ब्रह्मश्रीसुब्बावधानिशास्त्रिणः । मुद्रापकाः प्रकाशकाश्च आनन्दाश्रमव्यवस्थापका ' आपटे ' कुलावतंसविनायकरायमहोदयाः । प्रेक्षावन्तः ' आपटे 'दत्तात्रेयशर्माणः । मुद्रणसमये हि भूयांस एव सर्वेषामनवधानाच्छास्त्रीयदोषाः समुद्भवन्ति । तथा च कीलकसंयोजकानां दोषा अपि भूयांसः संभवन्ति । तत्सर्वेषां निरसने बद्धपरिकराः पण्डितवर्या आनन्दाश्रमशास्त्रिणः । मीमांसाविद्यालयस्तु सुप्रथित एव भाष्यसंशोधने नितान्तमुद्यतोऽस्तीति ।

द्रव्यसंपादनम् ।

तदेतस्यां संशोधनमुद्रणप्रकाशनादिसामग्र्यां संपन्नायामपि संशोधनापेक्षितद्रव्याभावात्सति कुड्ये चित्रमिति न्यायेन सति द्रव्ये सर्वं सुसंपन्नमिति संवृत्तम् । अतो द्रव्यसंपादने व्यापृतकायाः पुनर्वयमितस्ततस्तान्स्पन्दत्तावधाना अवर्तिष्म । ततो

भूयसाऽनेहसा 'ग्वाल्हेर' इति सुप्रतिष्ठितपुरीमधिष्ठितं 'शितोळे' इति सुप्रथितकुलकमलभूषणं "श्रीमंतसरदार मालोजीरावसाहेब शितोळे" इत्याख्यं विद्वद्गोष्ठीसंवेशितान्तःकरणं याचकानां कल्पतरुं, 'ग्वाल्हेर सुधांशु' इत्याख्याबिरुदावलिभूषितविग्रहं 'बाळासाहेब' इति प्रथितं, ग्वाल्हेरनगराध्यक्ष-आयुर्वेदप्रचण्डमार्तण्ड—डॉ॰ वामन गोपाळ गोखले महाशयानां, तथा च राजकीयोद्यानमुख्याधिकारि 'टेंब्ये' महोदयानां सहायेन दृष्ट्वा तैः सह बहुकालं संभाष्य शाबरभाष्यसंशोधनार्थं संवत्सरपर्यंतमपेक्षितं द्रव्यं, प्रतिमासं शतमित्यनया रीत्या रूपकाणां शतद्वयाधिकसहस्रमिति तेषां पुरतो न्यवेदि । तैश्चैतदखिलं श्रावं श्रावं भूयो भूयो विचार्य, मीमांसाशास्त्रस्य इतरेषां शास्त्राणां च विसंवादिनं भागं कतममिति सर्वं श्रुत्वा सांप्रतिकं चास्य भाष्यस्याऽऽवश्यकतां च श्रुत्वा सानन्दं द्रव्यवितरणमुररीकृतम् । तदनु चाद्ययावदेतद्भाष्यसंशोधनपर्याप्तावसरे निर्दिष्टरीत्या मीमांसाविद्यालयाय द्रव्यं वितीर्य, ऋणीकृतः खलु विद्यालयो विद्वत्समुदायश्च । यद्येतद्द्रव्यं नालप्स्यत तर्हि संशोधनकार्यमपि नाभविष्यत् ! संशोधनाभावे मुद्रणमप्यवशिष्येत, तदभावे कथं नु भाष्यं प्रथितिमियात्! अप्रथितौ, बहोः कालादारभ्याध्ययनाध्यापनानवच्छिन्ना परम्परा या प्रवृत्ता सा दत्ततिलाञ्जलिर्भवेत् । दर्शनविचारप्रणालिका च लुप्तावसराऽवर्तिष्यत । तत्सर्वं 'बाळासाहेब शितोळे' इत्येतैर्द्रव्यवितरणेनाऽऽरादपसारितमिति भूयसीमाशिषस्तेभ्यो वितरामः । विज्ञप्तिः—अयं भागो यथा 'बडेशितोळे' इत्येतैर्द्रव्यं वितीर्य संशोधितस्तथाऽवशिष्टौ द्वौ भागौ धनिकैः संशोधयितव्याविति तेभ्यः साञ्जलिबन्धं विज्ञापयामः ।

एतद्भागसंशोधनादिषु भूयःसु कार्येषु, अलौकिकं सहायं यैराचरितं तेषामुपकारभरं न वयमाजीवितं विस्मरिष्यामो ब्रूमहे च तेभ्यः शतशो धन्यवादानित्यलं बहुलेखनेन । — उपकृतेरुल्लेखनम् ।

वैशा॰ शुद्ध १५
शके १८५४ पुण्यपत्तनीय
मीमांसाविद्यालयः ।

विद्वद्वशंवदः
किंजवडेकरोपाह्वो रामचन्द्रात्मजो वामनशास्त्री
मीमांसाविद्यालयचालकः ।

श्रीमंत सरदार बंडशितोळे मालोजीराव ( बाळासाहेब )
गवालीअर.



इत्येतैरेतत्पुस्तकसंशोधनाय रूपकाणां शतद्वयाधिकसहस्रं
समर्पितम् ।

[ चित्रशाळा प्रेस, पुणे

# मीमांसादर्शने तृतीयभागस्थभाष्यकारीयाधिकरणसूचीपत्रम् ।


| अधिकरणनामानि | पृष्ठसंख्या |
|---|---|
| अ. | |
| अग्निचिद्व्रतानां क्रत्वन्तेऽनुष्ठानाधिकरणम् | १३२८ |
| अग्निष्टोमस्य प्राथम्याधिकरणम् | १३३२-१३३३ |
| अग्निष्टोमविकाराणामग्निष्टोमोत्तरकालताधिकरणम् | १३३३-१३३४ |
| अग्निहोत्रादिकर्मणां विहितकालकर्तव्यत्वाधिकरणम् | १४०३-१४०४ |
| अग्निहोत्रादिकर्मणां निमित्तानुरोधेनाऽऽवृत्त्यधिकरणम् | १४०४ |
| अग्निहोत्रादिनाम्नां धर्मप्रदेशकत्वाधिकरणम् | १५४९-१५५१ |
| अग्नीषोमीयपशुयागे छागवत एवाधिकाराधिकरणम् | १५१७-१५२३ |
| अद्रव्यस्याप्यधिकाराधिकरणम् | १३८१-१३८२ |
| अर्धनिरुप्ते चन्द्राभ्युदये तूष्णीमवशिष्टनिर्वापाधिकरणम् | १४६५-१४६६ |
| अनारभ्याधीतग्रहेष्टकयोः क्रत्वशेषत्वाधिकरणम् | १३२५-१३२६ |
| अनिरुप्तेऽप्यभ्युदये वैकृतीष्य एव निर्वापाधिकरणम् | १४६४-१४६५ |
| अनिरुप्तेऽप्यभ्युदितेष्ट्यनुष्ठानाधिकरणम् | १४६३-१४६४ |
| अनुयाजादीनां कालविधानार्थताधिकरणम् | १२६४-१२६५ |
| अनेकप्रधानेषु संनिपातिनां पदार्थानुसमयाधिकरणम् | १२१०-१२११ |
| अनोवासःप्रभृतिशब्दानामाकृतिनिमित्तताधिकरणम् | १५६३-१५६४ |
| अपच्छेदयौगपद्येऽदाक्षिण्यसर्वस्वदाक्षिण्ययोर्विकल्पाधिकरणम् | १४७५-१४७६ |
| अपच्छेदपौर्वापर्ये परनिमित्तकप्रायश्चित्तानुष्ठानाधिकरणम् | १४७६-१४७८ |
| अपच्छेदयौगपद्येऽपि प्रायश्चित्तविधानाधिकरणम् | १४७९ |
| अपररात्रे व्रतस्यानित्यताधिकरणम् | १५१७ |
| अपशूद्राधिकरणम् | १३७६-१३८१ |
| अप्रतिसमाधेयाङ्गवैकल्यस्य कर्मानधिकाराधिकरणम् | १३८२-१३८३ |
| अभ्युदितेष्ट्यधिकरणम् | १४५७-१४६१ |
| अवघातादिसंस्कारविधेर्नियमविधित्वाधिकरणम् | १२४१ |
| अवभृथगमनस्य प्रतिपत्तिकर्मताधिकरणम् | १२३८-१२३९ |
| अवभृथनाम्नः सौमिकावभृथधर्मातिदेशकत्वाधिकरणम् | १५५४-१५५५ |
| अविहितेतिकर्तव्यताकेषु सौर्यादिष्वितिकर्तव्यताया अतिदेशाधिकरणम् | १५६९-१५७१ |

| अधिकरणनामानि | पृष्ठसंख्या |
|---|---|
| अहरात्रान्तर्गतेऽपि विश्वजिति सर्वस्वदानाधिकरणम् | १४९७–१४९८ |
| असंनयतोऽप्यभ्युदये प्रायश्चित्ताधिकरणम् | १४६६–१४६७ |
| अहर्गणे, उद्गातुरपच्छेदवदहर्गावृत्त्यधिकरणम् | १४७९ |
| आ. | |
| आतिथ्यादीनां बर्हिःसाधारणाधिकरणम् | १२४२–१२४४ |
| आर्षक्रमनियमाधिकरणम् | १२९० |
| आधाने, अपरिमितवाक्येन संख्यान्तरसाधनकदानविधानाधिकरणम् | १४९९–१५०० |
| आधाने सहस्राधिकस्यापरिमितत्वाधिकरणम् | १५००–१५०१ |
| आघारादीनामङ्गताधिकरणम् | १२८२–१२८४ |
| आमनहोमानां सांग्रहणीष्टयङ्गताधिकरणम् | १२७२–१२७३ |
| आमिक्षाया दध्यानयनप्रयोजकत्वाधिकरणम् | १२०८–१२११ |
| आश्रयिककर्मणामदृष्टार्थताधिकरणम् | १२०७–१२०८ |
| इ. | |
| इष्टिपूर्वत्वसोमपूर्वत्वयोर्विकल्पाधिकरणम् | १३३८–१३३९ |
| इषौ श्येनीयवैशेषिकधर्मातिदेशाधिकरणम् | १५३४–१५३७ |
| उ. | |
| उत्पन्नहविर्नाशे हविरन्तरोपादानाधिकरणम् | १४२९–१४३० |
| उद्वसानीयोत्कर्षेऽपि प्रतिहोमानुष्ठानाधिकरणम् | १४७३ |
| उपनयनाङ्गहोमानां लौकिकाग्नावनुष्ठानाधिकरणम् | १५१०–१५१२ |
| उपभृति चतुर्गृहीतद्वयविधानार्थताधिकरणम् | १२२२–१२२४ |
| उपशये यूपशब्दस्य संस्कारानतिदेशकत्वाधिकरणम् | १५१५–१५१६ |
| उद्गात्रपच्छेदस्य परत्वे तन्निमित्तकपुनःप्रयोगे सर्वस्वदानाधिकरणम् | १४७८–१४७९ |
| उपांशुयागस्य सोमोत्तरमनुत्कर्षाधिकरणम् | १३४२ |
| उपांशुयागेऽपि देवतापनयाधिकरणम् | १४६१–१४६३ |
| उभयाग्निनाशे पुनराधानरूपप्रायश्चित्ताधिकरणम् | १४४७–१४४८ |
| उभयोत्कर्षे षोडश्युत्कर्षाधिकरणम् | १३०९ |
| ए. | |
| एकदेवताकपशुगणे दैवतावदानादिनाऽनुसमयाधिकरणम् | १३१४–१३१५ |

| अधिकरणनामानि | पृष्ठसंख्या |
|---|---|
| एकदेशभेदनादावपि प्रायश्चित्ताधिकरणम् | १४३२–१४३६ |
| एकस्यैव पुरुषस्य स्त्रीसद्द्वितीयस्याऽऽधानेऽधिकाराधिकरणम् | १३६३–१३६९ |
| एकहायनीनयनस्याक्षाभ्यञ्जनाद्यप्रयुक्तताधिकरणम् | १२११–१२१२ |
| औ. | |
| औपदेशिकमुख्यक्रमापेक्षयाऽऽतिदेशिकपाठक्रमस्य बलवत्त्वाधिकरणम् | १२९९–१३०० |
| औपभृताज्यस्य प्रयाजानुयाजार्थताधिकरणम् | १२२०–१२२२ |
| क. | |
| कर्मसु दंपत्योः सहाधिकाराधिकरणम् | १३६१–१३६४ |
| कर्तृदेशकालविधीनां नियमविधानार्थताधिकरणम् | १२३९–१३४० |
| क्रत्वर्थनैमित्तिकानां निमित्तावृत्तावावृत्त्यधिकरणम् | १४०४ |
| क्रतुषु स्त्रिया अप्यधिकाराधिकरणम् | १३५७–१३६१ |
| क्रमस्य क्वचिदनियमाधिकरणम् | १२९०–१२९१ |
| काम्यानामनुष्ठाने पाठक्रमस्यानियामकत्वाधिकरणम् | १३३१–१३३२ |
| काम्येषु सर्वाङ्गोपसंहारसमर्थस्यैवाधिकाराधिकरणम् | १४१३ |
| कार्यासमर्थे मुख्यद्रव्ये प्रतिनिधेरेवोपादानाधिकरणम् | १४२७–१४२८ |
| कुलाययज्ञे भिन्नकल्पयोरप्यधिकाराधिकरणम् | १४८३–१४८९ |
| कृष्णविषाणाप्रासनस्य प्रतिपत्तिकर्मताधिकरणम् | १२३८ |
| ग. | |
| गुर्वनुगमनादीनां निमित्तावृत्तावावृत्त्यधिकरणम् | १४०४–१४०९ |
| गर्गत्रिरात्रे लौकिकाग्नेरुपनिधेयत्वाधिकरणम् | १५६४–१५६९ |
| गवामयनिकज्योतिरादिष्वैकाहकाण्डपठितज्योतिरादिधर्मानुष्ठानाधिकरणम् | १५७८–१५८२ |
| च. | |
| चतुर्होतृहोमेष्वनाहिताग्नेरेवाधिकाराधिकरणम् | १५०८–१५१० |
| चित्रिण्यादीनां मध्यमचितावुपधानाधिकरणम् | १३२१ |
| ज. | |
| ज्योतिष्टोमस्य दर्शपूर्णमासोत्तरकालत्वाधिकरणम् | १२६५–१२६६ |
| ज्योतिष्टोमस्य द्वादशदीक्षानियमाधिकरणम् | १४६८–१४७० |
| ज्योतिष्टोमादिषु पयोव्रतादीनामपि नित्यताधिकरणम् | १५१६–१५१७ |

| अधिकरणनामानि | पृष्ठसंख्या |
|---|---|


| अधिकरणनामानि | पृष्ठसंख्या |
|---|---|
| ज्योतिष्टोमादीनां त्रैवर्णिकस्य नित्यताधिकरणम् | १४०५–१४०६ |
| ज्योतिष्टोमे भृतिवननसोमक्रययोर्नित्यताधिकरणम् | १५१५–१५१६ |
| ज्योतिष्टोमोत्कर्षे प्रतिहोमाननुष्ठानाधिकरणम् | १४७२–१४७३ |
| त. | |
| तदाद्युत्कर्षतदन्तापकर्षाधिकरणम् | १५०२ |
| तिर्यगधिकरणम् | १३५५–१३५७ |
| तुषोपवापस्य पुरोडाशकपालाप्रयोजकत्वाधिकरणम् | १२१२–१२१३ |
| द. | |
| दविग्रहस्य नित्यत्वाधिकरणम् | १२७३–१२७५ |
| दध्यादेरुभयार्थताधिकरणम् | १२५०–१२५१ |
| दर्शपूर्णमासयोरवदानादिप्रदानान्तेनानुसमयाधिकरणम् | १३१२–१३१४ |
| दर्शपूर्णमासादीनां सर्वकामार्थताधिकरणम् | १२५९–१२६० |
| दर्शपूर्णमासयोरुभयार्थयस्यैवाधिकाराधिकरणम् | १३८३–१३८४ |
| दर्शपूर्णमासादीनां नियतैककर्तृकत्वाधिकरणम् | १३९०–१३९१ |
| दाक्षिणाग्निकहोमानपकर्षाधिकरणम् | १३०६–१३०७ |
| दीक्षणीयान्ते दीक्षितस्य स्वधर्मानुष्ठानाधिकरणम् | १३२९–१३३१ |
| दीक्षाकालोत्कर्षेऽग्निहोत्रादीनामुत्कर्षाधिकरणम् | १४७२ |
| दीक्षितसंस्काराणां हस्तप्रतिमोचनादिपूर्वभाविताधिकरणम् | १३१९–१३२० |
| देवताग्निशब्दक्रियाणामपचारे प्रतिनिध्यभावाधिकरणम् | १४१८–१४१९ |
| दैवकर्मणामुदगयनादिकालनियमाधिकरणम् | १५१४–१५१५ |
| द्रव्यभेदेऽपि यागाभेदाधिकरणम् | १४१३–१४१५ |
| द्रव्यसंस्कारकर्मणां फलप्रयुक्तत्वाभावाधिकरणम् | १२४४–१२४८ |
| द्रव्यसंस्कारविरोधे द्रव्यस्यैवोपादानाधिकरणम् | १४२७– |
| द्रव्यापचारे वैकल्पिकद्रव्यान्तरानुपादानाधिकरणम् | १४२४ |
| द्रव्येषु गुणश्रुतेर्नियमविधानार्थताधिकरणम् | १२४०–१२४१ |
| ध. | |
| धाय्याशब्दितानामेव समिध्यमानवतीसमिद्धवत्योरन्तरालनिवेशाधिकरणम् | १३२२–१३२३ |
| न. | |
| नानाबीजेषु कृष्णाजिनास्तरणादि–तण्डुलप्रक्षालननिनयनान्तेना- | |

| अधिकरणनामानि | पृष्ठसंख्या |
|---|---|
| नुसमयाधिकरणम् | १३१५–१३१६ |
| नारिष्ठहोमानामुपहोमपूर्वताधिकरणम् | १३१६–१३१८ |
| निर्मन्थ्यादिशब्दानां धर्मानतिदेशकत्वाधिकरणम् | १५५७ |
| नित्ये यथाशक्त्यङ्गानुष्ठातुरप्यधिकाराधिकरणम् | १४०६–१४१३ |
| निषादस्थपत्यधिकरणम् | १३८६–१३८७ |
| निषेधातिक्रमे पुरुषप्रत्यवायाधिकरणम् | १३९९–१४०२ |
| नैमित्तिकपञ्चशरावयागस्य दर्शाङ्गताधिकरणम् | १४४९–१४५१ |
| नैमित्तिकानां नित्यप्रयुक्तत्वाभावाधिकरणम् | १२४८–१२५० |
| प. | |
| पयोव्रतादीनां क्रत्वर्थताधिकरणम् | १२५१–१२५२ |
| परकृतिपुराकल्पानामर्थवादत्वाधिकरणम् | १५०१–१५०२ |
| पश्वेकत्वाधिकरणम् | १२०३–१२०६ |
| पाठक्रमनियमाधिकरणम् | १२९१–१२९३ |
| पाठक्रमापेक्षया श्रुत्यर्थक्रमयोर्बलीयस्त्वाधिकरणम् | १३३५–१३३६ |
| पाठक्रमस्य मुख्यक्रमापेक्षया बलीयस्त्वाधिकरणम् | १२९७-१२९८ |
| पवमानेष्ट्युत्तरकालमग्निहोत्राद्यनुष्ठानाधिकरणम् | १३२६–१३२८ |
| प्रणयनशब्दस्य सौमिकप्रणयनधर्मानतिदेशकत्वाधिकरणम् | १५५७–१५६० |
| प्रजापतिव्रतानां पुरुषार्थताधिकरणम् | ११९८–१२०० |
| प्रयाजादिगतैकादशसंख्यायाः सर्वसंपाद्यत्वाधिकरणम् | १३२०–१३२१ |
| प्रणीतानां संयवनप्रयुक्तताधिकरणम् | १२३५–१२३६ |
| प्रतिनिधिना कृते च कार्ये श्रुतद्रव्यलाभेऽपि तदनुपादानाधिकरणम् | १४२६–१४२७ |
| प्रतिसमाधेयाङ्गवैकल्यस्याधिकाराधिकरणम् | १३८२ |
| प्रतिनिध्यपचारे श्रुतद्रव्यसदृशस्यैव प्रतिनिधित्वाधिकरणम् | १४२५–१४२६ |
| प्रतिषिद्धमाषादेः प्रतिनिधित्वाभावाधिकरणम् | १४१९–१४२० |
| प्रतिहोमपक्षे सायमग्निहोत्रप्रभृत्यारम्भानुष्ठानाधिकरणम् | १४७३–१४७४ |
| प्रतिज्ञाधिकरणम् | ११९३ |
| प्रतिज्ञाधिकरणम् | १२०८ |
| प्रधानमात्रसमर्थमुख्यद्रव्यालाभे तस्यैवोपादानाधिकरणम् | १४२८–१४२९ |
| प्रधानविरोधे संनिपातिनां काण्डानुसमयाधिकरणम | १३११ |

| अधिकरणनामानि | पृष्ठसंख्या |
|---|---|
| प्रवृत्तिक्रमनियमाधिकरणम् | १२९५–१२९६ |
| प्रवृत्तिक्रमापेक्षया मुख्यक्रमस्य बलीयस्त्वाधिकरणम् | १३३६–१३३७ |
| प्रयाजादिधर्माणामुपदेशेन प्रकृतिमात्रार्थताधिकरणम् | १५२३–१५२४ |
| प्रयाजद्वयस्य समानयनादिप्रयोजकत्वाधिकरणम् | १२१८–१२२० |
| प्रयाजशेषाभिघारणाधिकरणम् | १२१६–१२१८ |
| प्रस्तरप्रहरणकाले शाखाप्रहरणाधिकरणम् | १४५५–१४५७ |
| पिण्डपितृयज्ञस्य दर्शेष्ट्यनङ्गत्वाधिकरणम् | १२७७–१२७९ |
| पिण्डकर्मणापरपक्षादिकालनियमाधिकरणम् | १५१९ |
| पुंस्त्वादिलिङ्गस्य विवक्षाधिकरणम् | १२०६–१२०७ |
| पृष्ठशब्दस्य ऋङ्मन्त्रवाचित्वाधिकरणम् | १५१६–१५१८ |
| पूतीकानां सोमप्रतिनिधित्वाधिकरणम् | १४२४–१४२५ |
| पौरोडाशिकानां प्रोक्षणादीनां सौमिकपदार्थपूर्वभावित्वाधिकरणम् | १३०२–१३०५ |
| प्राग्दोक्तं तृणायाश्चित्रिण्याद्युपधानाधिकरणम् | १३२६ |
| प्रायणीयनाम्नो धर्मानतिदेशकत्वाधिकरणम् | १५५१–१५५२ |
| प्रारब्धकाम्यकर्मणः समाप्तिनियमाधिकरणम् | १३९६–१३९८ |
| प्रारब्धलौकिककर्मसमाप्तेरनियमाधिकरणम् | १३९८–१३९९ |
| **ब.** | |
| बहिष्पवमाने आगन्तूनां पर्यायोत्तरकालताधिकरणम् | १३२३–१३२४ |
| ब्राह्मणपाठापेक्षया मन्त्रपाठस्य बलीयस्त्वाधिकरणम् | १२९८–१२९९ |
| ब्राह्मणस्यापि सोमपूर्वत्वेष्टिपूर्वत्वरूपकल्पद्वयाधिकरणम् | १३२९–१३४१ |
| **भ.** | |
| भेदनादिनिमित्तकहोमानां दर्शपूर्णमासमात्राङ्गताधिकरणम् | १४७४–१४७५ |
| **म.** | |
| मध्यमयोरेव पर्वणोः प्रणयननियमाधिकरणम् | १५६० |
| माघ्याः पौर्णमास्याः पुरस्ताच्चतुरहे गावामयनिकदीक्षाविधानाधिकरणम् | १४७०–१४७२ |
| माध्यंदिनार्भवपवमानयोरागन्तूनां साम्नां गायत्र्यादिष्वेव निवेशाधिकरणम् | १३२४–१३२५ |
| मुख्यक्रमनियमाधिकरणम् | १२९७ |
| मुख्यापचारे पुनर्मुख्यप्राप्तौ तस्यैवोपादानाधिकरणम् | १४२६ |

| अधिकरणनामानि | पृष्ठसंख्या |
|---|---|
| मुष्टिकपालादिषु चतुर्मुष्टिनिर्वापादिनाऽनुसमयाधिकरणम् | १३११–१३१२ |
| मैत्रावरुणाय दण्डदानस्यार्थकर्मत्वाधिकरणम् | १२३६–१२३८ |
| य. | |
| यज्ञायुधवाक्यानुवादताधिकरणम् | १२००–१२०१ |
| यागलक्षणाधिकरणम् | १२४१–१२४२ |
| याजमानमिति समाख्यातानां पत्नीकर्तृकत्वाभावाधिकरणम् | १३६९–१३७६ |
| यूपगणेऽञ्जनादिपरिव्याणान्तेनानुसमयाधिकरणम् | १३१३–१३१४ |
| यूपमात्रापकर्षाधिकरणम् | १३०९ |
| यागसिद्धयधिकरणम् | १२१०–१२११ |
| र. | |
| रथकाराधिकरणम् | १३८४–१३८६ |
| रथंतरादिशब्दानां गीतिविशेषवाचित्वाधिकरणम् | १५४१–१५४९ |
| रशनाया यूपाङ्गताधिकरणम् | १२७९–१२८० |
| राजसूयशब्दवाच्यानां यागानामेव फलार्थत्वाधिकरणम् | १२६९–१२७१ |
| रात्रिसत्रस्याऽऽर्थवादिकफलकत्वाधिकरणम् | १२९६–१२९८ |
| ल. | |
| लौकिकाग्नाववकीर्णिपशुयागानुष्ठानाधिकरणम् | १५१४ |
| व. | |
| वर्णकान्तरेण पुत्रवृष्टयादेः कर्मफलस्यैहिकामुष्मिकत्वप्रतिपादनम् | १२६१–१२६२ |
| वर्णकान्तरेण वैश्वानरेष्टेर्जातकर्मोत्तरकालत्वाधिकरणम् | १२६७–१२६८ |
| व्रतस्य वत्सापुवलक्षितकालविधानाधिकरणम् | १४५२–१४५४ |
| वारुणप्रघासिकपञ्चसंचरेषु वैश्वदेविकसार्थवादविधिकाण्डातिदेशाधिकरणम् | १५३७–१५३९ |
| वारुणप्रघासिकावभृथस्य तुषनिष्कासद्रव्यकत्वाधिकरणम् | १५५५–१५५६ |
| विकृतीनामैन्द्राग्नादीनां सद्यस्कालताधिकरणम् | १३४२–१३४३ |
| विश्वजिति भूमेरदेयत्वाधिकरणम् | १४९३–१४९४ |
| विश्वजिति विद्यमानस्यैव स्वत्ववतः सर्वस्य दानाधिकरणम् | १४९४–१४९५ |
| विश्वजिति अश्वादीनामदेयत्वाधिकरणम् | १४९४ |
| विश्वजिति दक्षिणार्थनिर्दिष्टभागस्यैव सर्वस्य देयताधिकरणम् | १४९६–१४९७ |

| अधिकरणनामानि | पृष्ठसंख्या |
|---|---|
| विश्वजिति दक्षिणादानकाले विद्यमानस्वत्ववतामेव देयताधिकरणम् | १४९५–१४९६ |
| विश्वजिति द्वादशशतन्यूनधनस्यानधिकाराधिकरणम् | १४९८–१४९९ |
| विश्वजिति धर्मार्थसेवकशूद्रस्यादेयत्वाधिकरणम् | १४९५ |
| विश्वजिति षाडहिकपट्पृष्ठातिदेशाधिकरणम् | १२९२–१२९४ |
| विश्वजिति सर्वस्वदाने पित्रादीनामदेयत्वाधिकरणम् | १४९२–१४९३ |
| विश्वजिदादीनां फलवत्त्वाधिकरणम् | १२९२–१२९५ |
| विश्वजिदादेरेकफलकत्वाधिकरणम् | १२९५–१२९६ |
| विश्वजिदादेः स्वर्गफलकत्वाधिकरणम् | १२९६ |
| विदेवनादीनां कृत्स्नराजसूयाङ्गताधिकरणम् | १२७१–१२७२ |
| विदेवनादीनामभिषेकपूर्वकालत्वाधिकरणम् | १३१८ |
| विश्वसृजामयने संवत्सरशब्दस्य दिवसपरत्वेन मनुष्याधिकाराधिकरणम् | १५०२–१५०८ |
| वैमृधस्य पौर्णमासीमात्राङ्गताधिकरणम् | १२६३–१२६४ |
| वैश्वानरेष्टेः पुत्रगतपूतत्वादिफलप्रयुक्तत्वाधिकरणम् | १२६१–१२६७ |
| वैश्वानरेष्टेर्नैमित्तिकत्वाधिकरणम् | १२७५–१२७६ |
| वैष्णवशब्दस्य सौमिकातिथ्येष्टिधर्मानतिदेशकत्वाधिकरणम् | १११६–१११७ |
| व्यापन्नशब्दार्थनिर्णयाधिकरणम् | १४७५ |
| श. | |
| शकुलोहितयोः पशुप्रयोजनकत्वाधिकरणम् | १२१३–१२१४ |
| शाखावादाधिकरणम् | १२२९–१२३० |
| शाखाप्रहरणस्य प्रतिपत्तिकर्मताधिकरणम् | १२३२–१२३५ |
| शाखायाश्छेदनादिप्रयोजकत्वाधिकरणम् | १२३०–१२३२ |
| श्रुतद्रव्यापचारे तत्सदृशस्यैव प्रतिनिधिनियमाधिकरणम् | १४२२–१४२४ |
| श्रुतद्रव्यापचारे नित्यकर्मणः प्रारब्धकाम्यकर्मणश्च प्रतिनिधिना समापनाधिकरणम् | १४१५–१४१८ |
| श्रुतप्रतिनिध्यपचारेऽपि मुख्यद्रव्यसदृशस्यैव प्रतिनिधित्वाधिकरणम् | १४२१ |
| श्रुतसादृश्यासु विकृतिषु वर्णत्रयाधिकरणम् | १४९१–१४९२ |
| शेषकार्यार्थमवत्तद्रव्यनाशे शेषकार्यलोपाधिकरणम् | १४३०–१४३१ |
| शेषभक्षणे ऋत्विङ्नियमाधिकरणम् | १४३१–१४३२ |
| श्रौतकर्मनियमाधिकरणम् | १२८७–१२९० |

अधिकरणनामानि | पृष्ठसंख्या

ष.

षष्ठ्याश्विनैमित्तिकत्वाधिकरणम् १२७६–१२७७
षोडशिसंस्थे प्रातरग्निहोत्रप्रभृति प्रतिहोमानुष्ठानाधिकरणम् १४७४

स.

सत्रसंकल्पानन्तरं सत्रमकुर्वतः सत्रफलार्थतया विश्वजिद्विधानाधिकरणम् १४११–१४१२
सत्राय प्रवृत्तमात्रस्य व्युत्थाने विश्वजिद्विधानाधिकरणम् १४१७–१४१८
सत्रे कस्यचित्स्वामिनो मरणे प्रतिनिध्युपादानाधिकरणम् १४२०–१४२१
सत्रे प्रतिनिहितस्य स्वामित्वाभावाधिकरणम् १४२१–१४२२
सत्रे प्रतिनिहितस्य स्वामिधर्मत्वाधिकरणम् १४२२
सत्रे प्रत्येकं कृत्स्नफलभोक्तृणामधिकाराधिकरणम् १३८०–१३९०
सत्रे वैश्वामित्रतत्समानकल्पानामेवाधिकाराधिकरणम् १४८८–१४८९
सत्रेषु ब्राह्मणानामेवाधिकाराधिकरणम् १४८५–१४८८
सत्रेषु समानकल्पानामेवाधिकाराधिकरणम् १४७९–१४८३
सत्रे साधारणपात्राणामधिकाराधिकरणम् १४९०–१४९१
सर्वपृष्ठाद्याक्षामे प्रायश्चित्ताधिकरणम् १४३६–१४३८
संस्थानविवृद्धयोपसत्संख्यासंपत्त्यधिकरणम् १३२१–१३२२
स्थपतीष्टेर्लौकिकाग्निष्वनुष्ठानाधिकरणम् १११२–१११४
स्वरसामादिष्वकृत्स्नानां धर्मातिदेशकत्वाधिकरणम् ११११–१११३
स्वरोऽश्छेदनाद्यप्रयोजकताधिकरणम् १२२४–१२२९
स्ववाक्यश्रुतफलकानां स्वर्गफलकत्वाभावाधिकरणम् १२९८–१२९९
स्वरोः पश्वङ्गत्वाधिकरणम् १२८०–१२८२
स्वर्गकामाधिकरणम् १३४५–१३५५
साकमेधीयैककपाले वारुणप्रघासिकैककपालधर्मातिदेशाधिकरणम् ११३९–११४०
साकमेधेऽनीकवत्यादीनां सद्यस्कालताधिकरणम् १३००–१३०२
सावित्रहोमादीनां दीक्षणीयापूर्वकालत्वाधिकरणम् १३१८–१३१९
स्थानक्रमनियमाधिकरणम् १२९५–१२९७
सारस्वतभिन्नसत्रेष्वाहिताग्नीनामेवाधिकाराधिकरणम् १४८९–१४९०
स्मार्तादीनामप्युपनयनोत्तरकालकर्तव्यत्वाधिकरणम् १४०२–१४०५
स्वामिनः प्रतिनिध्यभावाधिकरणम् १४२०

| अधिकरणनामानि | पृष्ठसंख्या |
|---|---|
| स्विष्टकृतः पुरोडाशाप्रयोजकत्वाधिकरणम् | १२१४-१२१६ |
| सोमपूर्वत्वकल्पे सोमस्य विहितकालबाधाधिकरणम् | १३०६ |
| सोमयागस्यैव प्राधान्याधिकरणम् | १२८४-१२८६ |
| सोमविकाराणां दर्शपूर्णमासोत्तरकालताधिकरणम् | १३४४-१३४५ |
| सौत्रामण्यादेः स्वकालकर्तव्यत्वाधिकरणम् | १२१८-१२१९ |
| सौत्रामण्यादेरध्ययनाद्यङ्गताधिकरणम् | १२१२-१२१३ |
| सौम्यादीनामुपसत्कालकत्वाधिकरणम् | १२७२ |
| सौर्यचर्वादौ वैदिक्या एवेतिकर्तव्यताया अतिदेशाधिकरणम् | १९७१-१९७७ |
| सांतपनीयोत्कर्षेऽप्यग्निहोत्रानुत्कर्षाधिकरणम् | १२०७-१३०९ |
| सान्नाय्याग्नीषोमीयविकाराणां सोमोत्तरकालत्वाधिकरणम् | १३४३-१३४४ |
| सान्नाय्येऽप्रवृत्तस्यापि व्रतनियमाधिकरणम् | १४९४-१४९९ |
| ह. | |
| हविरभिमर्शनान्तरस्यामावास्यायां पूर्वेद्युरपकर्षाधिकरणम् | १९०७ |
| हविरार्तौ कर्मान्तरविधानाधिकरणम् | १४४८-१४४९ |
| हविरार्त्यधिकरणम् | १४३८-१४४६ |
| होमलक्षणाधिकरणम् | १२४२ |
| होमाभिषवोपयकर्तृलक्षणाधिकरणम् | १४४६-१४४७ |


संपूर्णं तृतीयभागस्थभाष्यकारीयाधिकरणसूचीपत्रम् ।

ॐ तत्सद्ब्रह्मणे नमः ।

दुप्टीकासहितशाबरभाष्यसमेतं

# श्रीमज्जैमिनिप्रणीतं मीमांसादर्शनम् ।

---

## अथ चतुर्थाध्यायस्य प्रथमः पादः ।

( अथ प्रतिज्ञाधिकरणम् ॥ १ ॥ )

**[१]अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा ॥ १ ॥ प्र० सू०**

तृतीयेऽध्याये श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानैः शेषविनियोगलक्षणमुक्तम् । इहेदानीं क्रत्वर्थपुरुषार्थौ जिज्ञास्येते । कः क्रत्वर्थः, कः पुरुषार्थ इति । याऽपि प्रयोजकाप्रयोजककलविध्यर्थवादाङ्गप्रधानचिन्ता, साऽपि क्रत्वर्थपुरुषार्थजिज्ञासैव । कथम् । अङ्गं क्रत्वर्थः, प्रधानं पुरुषार्थः । फलविधिः पुरुषार्थः, अर्थवादः क्रत्वर्थः । प्रयोजकः कश्चित्पुरुषार्थोऽप्रयोजकः क्रत्वर्थः । तस्मात्क्रत्वर्थपुरुषार्थयोर्जिज्ञासेति सूत्रितम् । तत्र, अथातःशब्दौ प्रथम एवाध्याये प्रथमसूत्रे वर्णितौ । अथेति पूर्वप्रकृतं शेषविनियोगलक्षणमपेक्षते । अत इति क्रत्वर्थपुरुषार्थजिज्ञासाविशेषं प्रकुरुते । क्रतवे यः स क्रत्वर्थः । पुरुषाय यः स पुरुषार्थः । जिज्ञासाशब्दोऽपि तत्रैव समधिगतः, ज्ञातुमिच्छा जिज्ञासेति तदेतत्प्रतिज्ञासूत्रं क्रत्वर्थपुरुषार्थयोर्जिज्ञासेति ॥ १ ॥

( अथ क्रत्वर्थपुरुषार्थलक्षणाधिकरणम् ॥ २ ॥ )

**[२] यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात् ॥ २ ॥ सि०**

अथ किंलक्षणः क्रत्वर्थः, किंलक्षणः पुरुषार्थ इति लक्षणं वाच्यम् ।

---

तृतीयेनावधृते शेषत्वे कः क्रत्वर्थः कः पुरुषार्थ इति विशेषश्चिन्त्यते । पूर्वमवधृते सामान्ये । यथा सप्तमेन सामान्यातिदेशे सिद्धेऽष्टमेन विशेषातिदेशश्चिन्त्यते । एवंलक्षणभेदः । अथवा ‘ अर्थे समवैषम्यम् ’ इति प्रयोजकाप्रयोजकत्वं पदसाधारणं चिन्त्यते । भाष्यकारश्चेदमेवाभिप्रेत्याऽऽह—‘ अतिक्रान्तस्तृतीयविषयः ’ इति । पञ्चमे चासाधारण्येनैवं व्यपदेक्ष्यते—प्रयोजकाप्रयोजकलक्षणं वृत्तमिति ॥ १ ॥

---

१ ( अ० ४ पा० १ अ० ८ सू० ३१ )

तथा हि लघीयसी प्रतिपत्तिः, पृष्ठकोटेनोपदेशे[1] गरीयसी। तदुच्यते। यस्मिन् प्रीतिः पुरुषस्य, यस्मिन् कृते पदार्थे पुरुषस्य प्रीतिर्भवति स पुरुषार्थः पदार्थः[2]। कुतः। तस्य लिप्साऽर्थलक्षणा। तस्य लिप्साऽर्थेनैव भवति, न शास्त्रेण। क्रत्वर्थो हि शास्त्रादवगम्यते, नान्यथा। अविभक्तो हि पुरुषार्थः प्रीत्या। यो यः प्रीतिसाधनः स पुरुषार्थः। पुरुषार्थे लक्षिते तद्विपरीतः क्रत्वर्थ इति क्रत्वर्थस्य लक्षणं सिद्धम् ॥ २ ॥

( अथ वर्णकान्तरम् )

एवं वा सूत्रं वर्ण्यते—दर्शपूर्णमासयोराम्नायते। अनतिदृश्यं स्तृणाति, अनतिदृश्यमेवैनं प्रजया पशुभिः करोति, इति। तथा, आहार्यपुरीषां पशुकामस्य वेदिं कुर्यात्, वत्सजानुं पशुकामस्य वेदं कुर्यात्, गोदोहनेन पशुकामस्य प्रणयेत्, इत्येवमादीनि। तत्र संशयः। किमेवंजातीयकाः क्रत्वर्था उत पुरुषार्था इति। किं प्राप्तम्। क्रत्वर्था इति। कुतः। प्रत्यक्ष उपकारस्तेभ्यो दृश्यते क्रतोः, पुरीषहरणं वेदिस्तरणं

---

यस्मिन्कृते पदार्थे पुरुषस्य प्रीतिरुपजायते स पुरुषार्थपदार्थः[3]। तस्य लिप्साऽर्थलक्षणेति। किमुक्तं भवति। यदि लिप्साशब्देनानुष्ठानमुच्यते, तदयुक्तम्। न हि क्रत्वर्थेष्वपि विधिना बलात्पुरुषः प्रवर्त्यते। सत्यम्। क्रत्वर्थपुरुषार्थयोर्द्वयोरपि साध्यसाधनसंबन्धो वैदिकः, किं तु पुरुषार्थे करणमिच्छातो न नियोगतः, क्रत्वर्थे स्वानिच्छातो नियोगतः। तेन करणमभिप्रेत्योक्तं ' तस्य लिप्साऽर्थलक्षणा ' इति। दुःखाकरत्वात्कथं यागः पुरुषार्थः। साध्येनाविनाभावात्साधनस्य पुरुषार्थतोक्ता ॥ २ ॥

एवं वा। फलार्थवादत्वादनुदाहरणमनतिदृश्यमित्यादि। गोदोहनादीनि वाक्यात्पु-

---

१ पृष्ठकोटेनेति—यथैव धरणिगतानेकद्रव्यप्रत्येकनिरीक्षणे पृष्ठस्य कुटिलीकरणेन क्लेशस्तद्वत्प्रकृतेऽपि स्यादिति भावः। २ पदार्थ इति क्वचिन्नास्ति। ३ पुरुषार्थपदार्थ इति—तत्त्वं तु स्वयंप्रार्थितवृत्त्युद्देश्यतानिरूपितविधेयताशालित्वं पुरुषार्थत्वम्। स्वयंप्रार्थितत्वं च शास्त्राधीनेष्टसाधनताज्ञानाजन्येच्छाविषयत्वम्। यागादीनां हीष्टसाधनता शास्त्रगम्येति न ते स्वयंप्रार्थिताः। स्वर्गादयो हि यदि स्वर्गः सुखरूपस्तदा तदिच्छायाः सुतरामिष्टसाधनताज्ञानाजन्यत्वं, यदि देशविशेषस्तदाऽपि तदिच्छाया इष्टसाधनत्वप्रकारकज्ञानादेवोत्पत्तेर्न शास्त्राधीनेष्टसाधनताज्ञानजन्यत्वमिति भवन्ति स्वयंप्रार्थिताः। तदुद्देशेन विधीयमानयागादयः पुरुषार्थाः। स्वयंप्रार्थितभिन्नवृत्त्युद्देश्यतानिरूपितविधेयताशालित्वं क्रत्वर्थत्वमिति।

र्थं । तदुक्तं, द्रव्यगुणसंस्कारेषु बादरिरिति । तस्मात्क्रत्वर्था इत्येवं प्राप्तम् । एवं प्राप्ते ब्रूमः । यस्मिन् प्रीतिः पुरुषस्य स पुरुषार्थ एवेति । प्रीतिस्तेभ्यो निर्वर्तते । तस्मादेते पुरुषार्था इति । ननु प्रत्यक्ष उपकारः क्रतोर्दृश्यत इत्युक्तम् । उच्यते । सत्यं दृश्यते, न तु क्रतोरुपकाराय, यत एभ्यः संकीर्तितेभ्यः फलेभ्य एते श्रूयन्ते । न च य उपकरोति स शेषः । यस्तु यदर्थः श्रूयते स तस्य शेष इत्युक्तं, शेषः परार्थत्वा-दिति ॥ २ ॥

( अथ वर्णकान्तरम् )

एवं वा—द्रव्यार्जनमुदाहरणम् । इह द्रव्यार्जनं तैस्तैर्नियमैः श्रूयते । ब्राह्मणस्य प्रतिग्रहादिना, राजन्यस्य जयादिना, वैश्यस्य कृष्यादिना । तत्र संदेहः । किं क्रत्वर्थो द्रव्यपरिग्रह उत पुरुषार्थ इति । किं प्राप्तम् । क्रत्वर्थो, नियमात् । यद्येष पुरुषार्थः स्यान्नियमोऽनर्थको भवेत् । प्रत्यक्षेणैतदवगम्यते, नियमादनियमाच्चार्जितं द्रव्यं पुरुषं प्रीणयतीति । तस्मात्क्रत्वर्थः । कामश्रुतिभिश्चास्य सहैकवाक्यता दृष्टा । इतरथाऽनुमेयेन फलवाक्येन सहैकवाक्यता यायात् । लिङ्गं चापि भवति । अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्, यस्याऽऽहिताग्नेः सतोऽग्निर्गृहान् दहेत्, यस्य हिरण्यं नश्येदाग्नेयादीनि निर्वपेत्, इत्ये-वमादि । तद्धि द्रव्योपघाते चोद्यते । यदि द्रव्यपरिग्रहः कर्मार्थस्तत एतदपि सति संबन्धे कर्मार्थमित्युच्यते । इतरथाऽसति संबन्धे कर्मार्थ-मित्यनुमीयते । फलं चास्य कल्प्येत । तस्माद्यजतिश्रुतिगृहीतं द्रव्या-र्जनं येन विना यागो न निर्वर्तते, स यागस्य श्रुत्या परिगृहीत इति

---

र्थानि, प्रत्यक्षेण क्रतूपकारकाणि दृश्यन्ते । तस्मात्समुच्चयेन पूर्वः पक्षः । सिद्धान्त-स्त्ववधारणया । पुरुषार्थान्येव तादर्थ्यलक्षणेन शेषत्वेन । अस्माच्च ग्रन्थादनुमीयते बादरिमते पूर्वः पक्षस्तत्रेति ॥ २ ॥

एवं वा—द्रव्यार्जननियमः क्रत्वर्थः । तेन हि द्रव्यमाकाङ्क्षितं तादित्थमुपादेयं यथाऽवघातादयः । तस्मात्क्रतुना सहास्यैकवाक्यता । अपेक्षितत्वात् । इतरत्र क्षुत्प्रति-घातार्थमनियमेनाप्युपात्तं क्षुधं निहन्त्येव । तस्मात्तत्र नियमस्य फलश्रुतमप्यध्याहृत्य तेन सहैकवाक्यता कल्पनीया । इतरत्र श्रुतेनैकवाक्यता । हिरण्यादिनाशे च क्रत्वर्थ-

---

१ ( अ० ३ पा० १ अ० ३ सू० ३ ) । २ ( अ० ३ पा० १ अ० २ सू० २ )

गम्यते । तस्मात्क्रत्वर्थ इति । एवं प्राप्ते ब्रूमः । पुरुषार्थ इति । एत-स्मिन्कृते पदार्थे प्रीतिः पुरुषस्य भवति, तस्मादस्य लिप्साऽर्थलक्षणा शरीरधारणार्था । यस्य शरीरं ध्रियते, व्यक्तं तस्यास्ति द्रव्यम् । शरी-रिणश्च यागः श्रूयते । तस्माद्ध्रियमाणद्रव्यस्य विनियोग उच्यते, न द्रव्यार्जनं कामश्रुतिगृहीतं, विनाऽपि हि द्रव्यार्जनवचनत्वेन शब्दस्य यागो निर्वर्तत एव । तस्मात्पुरुषार्थो द्रव्यपरिग्रहः । अपि च, यदि साक्षात्कर्मार्थं द्रव्यार्जनं, तन्नान्यत्र विनियुज्येत तथाऽर्जितम् । तत्र सर्व-तन्त्रपरिलोपः स्यात् । अपि च, उपक्रान्तानि सर्वकर्माणि द्रव्यार्जनेन भवेयुः । तत्रैतन्नोपपद्यते । अप वा एष सुवर्गाल्लोकाच्छिद्यते, यो दर्शपूर्ण-मासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपातयेदिति । एवं च सति,

नाशात्क्रतुवैगुण्ये क्षामवत्यादीनां क्रतुप्रतिसमाधानार्थमुपदेशो युक्तः । इतरत्र तु वैगु-ण्याभावात्फलकल्पनैवेत्येवं प्राप्ते ब्रूमः ।

श्रुत्याद्यभावादनङ्गं क्रतोः । पुरुषस्य तु प्रीतिमुत्पादयन्ति कामश्रुतिनिरपेक्षाः । शरीरधारणार्थमेवासावुपादत्ते । अन्यथानुपपत्त्या कामश्रुतिमिराक्षिप्येत । तत्र पुरुषा-र्थेनोपार्जितमस्तीत्यन्यथानुपपत्तिः क्षीयते यथाऽऽधाने । अपि च क्रत्वर्थे द्रव्यार्जने क्रतु-विघातः स्यात् । देवतोद्देशेन च स्वद्रव्यपरित्यागे यागो भवति । क्रतुप्रयुक्तत्वे द्रव्या-भावात्परित्यागो नास्तीति । द्रव्यार्जने च प्रक्रान्ते सर्वक्रतूनां प्रक्रमात्, ' अप वा एष स्वर्गाल्लोकाच्छिद्यते ' इति यद्यारम्भविषयमतिपातनं ततो न घटते । तथाचाक्रारम्भेणैव प्रधानस्याऽऽरब्धत्वादतिपातनाभावः । यागाकरणादतिपातनमिति चेत्तदितरत्रापि घटत एव । क्रत्वर्थे तु सर्वक्रतूनां प्रक्रमादशक्नीयोऽर्थः स्यात् । क्रत्वर्थे च तथाऽर्जितस्यान्य-त्राविनियोगाच्छरीरनाशात्सर्वतन्त्रपरिलोपः स्यात् ।

न च द्वे द्रव्यार्जने, एकं क्रत्वर्थमपरं पुरुषार्थम् । किं तर्हि । एकमेवेदं द्रव्यमुपाददा-नस्यैते नियमा उपदिश्यन्ते पुरुषस्येति । एवं च सति प्रयोगकालाद्बहिरेतदङ्गं सद-नुपकारकं स्यादिति, अनन्तरेणातिपातनग्रन्थेन नायं ग्रन्थः संबध्यते । कथं तर्हि । सर्वतन्त्रपरिलोपः स्यादित्यस्य शेषः । अथवा प्रयोगवचनबहिर्भावा-न्नेदं फलवतोऽङ्गम् । श्रुत्याद्यभावात् । अङ्गत्वे चापनीतेऽनुपकारकं स्यादिति फले-नायं ग्रन्थः । अथवा प्रधानकालत्वादङ्गानामन्यस्मिन्काले क्रियमाणमनुपकारकं स्यादिति

१ श्रुतिगृहीतं क्रत्वर्थमिति पा० । २ आधान इति—इदं च विद्याया अप्युपलक्षणम् । ३ अथवेति पा० ।

प्रयोगकालाद्बहिरेतदङ्गं सदनुपकारकं स्यात् । न चाऽऽधानवद्भवितुमर्हति । तत्र हि वचनं, वसन्तेऽग्निमादधीत, इतिन चैतदङ्गम् ।

अथ यदुक्तं, नियमवचनमनर्थकं, पुरुषार्थे द्रव्यपरिग्रहे सतीति । उच्यते । नैतावता पुरुषार्थता व्यावर्तते । प्रत्यक्षा हि सा । त्वया च परोक्षं युक्तिबुद्ध्या व्यपादिश्यते । न च परोक्षं प्रत्यक्षस्य बाधकं भवति । तस्मान्नियमवचनात्काममपरमदृष्टं कल्प्येत, न तु दृष्टहानम् । तस्माद्यत्पुरुषस्य प्रयोजनं प्रीतिः, तदर्थं धनस्यार्जनमिति । एवं च सति व्रीहिणा यागः कर्तव्यः, प्रीत्यर्थमर्जितेन वा क्रत्वर्थमर्जितेन वा, नात्र कश्चिद्विशेषः । प्रीत्यर्थमुपार्जितोऽपि व्रीहिर्व्रीहिरेव, कर्मार्थमुपार्जितोऽपि व्रीहिर्व्रीहिरेव, तस्मान्न प्रयोगचोदनागृहीतं द्रव्यार्जनम् ।

अथ यदुक्तम्, अनुमेयेनाप्रकृतेन वा शब्देन युष्मत्पक्षे नियमस्यैकवाक्यता, अस्मत्पक्षे तु दृष्टेन प्रयोगवचनेनेति । नैष दोषः । अस्मत्पक्षेऽपि दृष्टेन भुजिना, न फलवचनेन । कथं तर्हि नियमाददृष्टं भवतीति गम्यते । यथैव भवदीये पक्षे । आह । अस्मत्पक्षे फलवतैकवाक्यभावात्फलवत उपकरोतीति गम्यते । उच्यते । अस्मत्पक्षेऽपि फलवतैवैकवाक्यभावः । एतावांस्तु विशेषः । तव श्रुतं फलं, मम तु दृष्टमिति ।

---

न चैतदाधानवद्भवितुमर्हतीति । यथाऽऽधानमन्यकालमपि प्रधानस्योपकारकं, नैवमिदं, कालविधेरभावात् । तस्मात्क्रत्वर्थं सदन्तस्तन्त्रमुत्पाद्यं स्यात्[1] । य एव क्रतुः प्रक्रान्तस्तमेवोररीकृत्य द्रव्यमुपादत्ते । एवं च द्रव्यार्जनेन न सर्वकर्माणि प्रक्रान्तानि भवेयुः । यथाऽवहन्तिः पौर्णमासे क्रियमाणो न सौर्यस्योपकरोत्येवमिहापि । तस्मात्प्रतिकर्म द्रव्यार्जनं न सर्वकर्मणां तन्त्रेणेति । न चाऽऽधानवद्भवितुमर्हति । यथाऽऽधानं न क्रत्वर्थं नापि पुरुषार्थमेवं कस्मान्न भवतीति । उच्यते । आधानस्य वाक्येनान्यर्थताऽवगता । अथ पुनरन्यार्थत्वे नास्ति प्रमाणम्[2] । प्रत्यक्षेण त्वस्य पुरुषार्थता । अथवाऽऽधानेनाग्नय उत्पाद्यन्ते न त्वेतेन व्रीह्यादयः । अथवा द्रव्यार्जननियमः फलवत्त्वात्पुरुषार्थः, आधानं तु न पुरुषार्थम् । अथवाऽऽधानशब्देनाऽऽहवनीयादयोऽभिधीयन्ते । यथा बहिःप्रयोगे श्रुता अङ्गत्वं प्रतिपद्यन्ते, एवं कस्मान्न भवतीति परिचोदिते, आह—न चाऽऽधानवद्भवितुमर्हतीति । न चैतदाहवनीयादिवद्भवितुमर्हतीत्यर्थः ।

---

१ अन्तस्तन्त्रमिति–प्रयोगमध्य इत्यर्थः । २ एवं कस्मादित्यारभ्य प्रत्यक्षेण त्वस्य पुरुषार्थतेत्यन्तो भागः क्वचिन्नोपलभ्यते ।

अथ यल्लिङ्गमुक्तं, गृहदाहादिषु कर्म श्रूयत इति । तत्रोच्यते । यद्यपि न क्रत्वर्थं द्रव्यार्जनं, तथाऽपि दाहे निमित्ते फलाय वा कर्माङ्गभावाय वा क्षामवत्यादीनां विधानमुपपद्यत एव । तस्मात्पुरुषार्थं द्रव्यार्जनं, प्रीत्या हि तदविभक्तमिति ॥ २ ॥

( अथ प्रजापतिव्रतानां पुरुषार्थताधिकरणम् ॥ ३ ॥ )

## [ ३ ] तदुत्सर्गे कर्माणि पुरुषार्थाय शास्त्रस्यानतिशङ्क्यत्वान्न च द्रव्यं चिकीर्ष्यते तेनार्थेनाभिसंबन्धात्क्रियायां पुरुषश्रुतिः ॥ ३ ॥ सि०

इह प्रजापतिव्रतान्युदाहरणम् । नोद्यन्तमादित्यमीक्षेत नास्तंयन्तमित्यादीनि । तत्र संदेहः । किं क्रत्वर्थानि प्रजापतिव्रतान्युत पुरुषार्थानीति । किं प्राप्तम् । क्रत्वर्थानीति । कुतः । एवं हि फलं न कल्पयितव्यं भविष्यतीति । ननु श्रूयत एवैतेषां फलम्, एतावता हैनसाऽयुक्तो भवति, इति । उच्यते । नैतत्फलपरं वचनं, वर्तमानापदेश एवैष शब्द इति । तेन यत्राऽऽदित्य ईक्षितव्यः प्राप्तस्तत्रायं प्रतिषेधः । उद्यतोऽस्तं यतश्च नियमो वा स्यात्कश्चित्कर्माङ्गभूतः । एवं प्राप्ते ब्रूमः । तदुत्सर्गे–प्रीत्युत्सर्गेऽपि, कर्माणि पुरुषार्थाय भवेयुरेवंजातीयकानि । कर्तुरेतान्युपदिश्यन्ते न कर्मणः । अर्थप्राप्तेन कर्त्रा संबन्धो यः

---

तत्र ह्याहवनीयादय उत्पन्नाः साकाङ्क्षाः सन्तो वाक्येनाङ्गतां प्रतिपद्यन्ते । इह तादृशं नास्ति वाक्यम् । गृहदाहेऽप्यङ्गत्वाय फलाय वेत्यङ्गत्वे नास्ति प्रमाणम् ॥ २ ॥

नोद्यन्तमादित्यमीक्षेतेति । नञुद्यदादित्येक्षातिधातवः कर्तव्यतावचनेन संबध्यन्ते । एवं श्रुतिवृत्तानि पदानि भवन्ति न लक्षणावृत्तानि । यदा तु नञ्धातुपदयोः संबन्धस्तदा स्वार्थं हित्वा वस्त्वन्तरं लक्षयन्ति । तस्मात्प्रतिषेधः । स च प्राप्तिपूर्वकः । प्राप्तिश्च दर्शपूर्णमासादिषु विद्यते, सा प्रतिषिध्यते । एवं च फलं न कल्पयितव्यम् । यद्यपि नैष प्रतिषेधस्तथाऽपि फलकल्पनाभयात्क्रत्वर्थो नियमः । 'एतावता हैनसाऽयुक्तो भवति ' इति फलार्थवादोऽयम् ।

एवं प्राप्ते ब्रूमः । नायं प्रतिषेधः । तस्य व्रतमिति हि प्रकृत्य नोद्यन्तमादित्यमीक्षेतेति । व्रतमिति च सामान्येन कर्मोच्यते । तद्विशेषमाकाङ्क्षमाणमनेन विशेष्यते तदिदं

---

१ आदिपदेन—' नेक्षेतोद्यन्तमादित्यं नास्तंयन्तं कदाचन । नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ' ॥ इत्यादीनां संग्रहः ।

स विधित्सितः । न कर्मसंबन्धोऽविद्यमान एव । शास्त्रं चानतिशङ्क्यं पितृमातृवचनादपि प्रमाणतरम् । स्वयं हि तेन मत्स्येति । इन्द्रियस्थानीयं हि तत् । न चैवमादिभिर्द्रव्यस्य कश्चिद्दृष्ट उपकारः साध्यते । तस्मात्तेन पुरुषार्थेनाभिसंयोगात्क्रियायामेवंजातीयकायां पुरुषः श्रूयते । अपि च पुरुषप्रयत्नः पदार्थविधिमात्रं लक्षयितुमुच्चार्येत । स्वयमविवक्षितः स्यात् ।

अथ यदुक्तं, यत्राऽऽदित्यस्येक्षणं प्राप्तं, तत्रोद्यतोऽस्तं यतश्च प्रतिषेध इति । सत्यं प्रतिषेधो न्याय्यः । तथा श्रुतिरनुगृह्येत, इतरथा नियमो लक्ष्येतेति । किं त्विह नियमः शब्देन श्रूयते, तस्य व्रतमिति, तेन नियम एषः—नोद्यन्तमादित्य ईक्षितव्य इति । अपि च, एतावता हैनसाऽयुक्तो भवतीति पुरुषसंबद्धो दोषः कीर्त्यते, न कर्मसंबद्धः । तस्मात्पुरुषार्थानि प्रजापतिव्रतानीति । गोलक्षणान्यप्येवमेव कर्तरीकर्णयोः कर्तव्या इत्येवमादीनि ॥ ३ ॥

कर्मेति । प्रतिषेधे, पूर्वं साकाङ्क्षमेवावतिष्ठेत । तेन चाश्रुतः कर्मविशेषो गृह्येत । एवं च वाक्यभेदाद्द्विरदृष्टं कल्प्येत । एवं प्रतिषेधे बह्वसमञ्जसम् । अतो विरोधान्न कर्तव्यतावचनेन संबध्यते । तस्मात्प्रच्युतोऽनन्तरेणेक्षतिना संबध्यते । अतो नियमोऽयम् । अर्थप्राप्तेन विपरिवर्तमानेनास्ति कर्त्रा संबन्धः । श्रुत्याद्यभावान्नास्ति क्रतुना । शास्त्रस्यानतिशङ्क्यत्वादिति क्रत्वर्थेऽपि तुल्यत्वात्कस्यचिदाशङ्का स्यादिति तन्निवृत्त्यर्थं न च द्रव्यं चिकीर्ष्यत इति । न च क्रत्वर्थं द्रव्यं संस्क्रियते विक्रियते वा । येन सामर्थ्यात्तत्संबन्धेन प्रणाड्या क्रत्वर्थता स्यात् । अतः पुरुषार्थान्येतानि फलार्थिना कार्याणीत्येवमर्थ उपदेश एषां नित्यत्वेन संध्योपासनादिवदिति । नन्वीक्षणाभावोऽनीक्षणमभावत्वात्कर्तव्यता न घटते । सत्यम् । प्रवृत्तौ निवृत्तौ वा मानसं व्यापारमङ्गीकृत्य प्रवर्तते निवर्तते वा । आदित्यस्यानीक्षणं कर्तव्यमिति मनसा संकल्पयति । अतोऽनीक्षणस्य मानसो व्यापारोऽविनाभूतः । तस्याविनाभावाच्छक्नोति लक्षयितुम् । यथाऽऽकृतिर्व्यक्तिम् । स्पर्शादीनामभावसंबद्धानामपि तदभावाविनाभावाभावान्न तेषां कर्तव्यता । क्रत्वर्थत्वे विधायकः कर्मोत्पत्तिमात्रनिष्ठ एव भवेत् । एवं च यदेवास्य तादर्थ्यप्रतिपादकत्वं तदेव हीयेत । प्रयोगवचनेन कृतत्वात् । तस्मात्स पक्षो ग्रहीतव्यो यत्र विधायकोऽर्थवान् ॥ ३ ॥ [ ४ ॥ १ ॥ ६ ॥ ]

१ तदविनाभावस्याभावादिति पा० ।

अविशेषात्तु शास्त्रस्य यथाश्रुति फलानि स्युः ॥ ४ ॥

उच्यते । यद्येवम्, इमान्यपि पुरुषार्थानि स्युः । समिधो यजति, तनूनपातं यजति, नानृतं वदेत्, इत्येवमादीनि । अत्रापि पुरुषप्रयत्नसंकीर्तनम्, अत्रापि न द्रव्यं चिकीर्ष्यत इति ॥ ४ ॥

अपि वा कारणाग्रहणे तदर्थमर्थस्यानभिसंबन्धात् ॥ ५ ॥

अपि वेति पक्षव्यावृत्तिः । नैतदस्ति, समिदादीन्यपि पुरुषार्थानि प्राप्नुवन्तीति । कारणाग्रहणे पुरुषार्थानि प्रजापतिव्रतानि भवेयुः । न तत्र श्रुत्यादिकं किंचित्कारणं गृह्यते, येन कर्मणामङ्गभूतानीति गम्यते । तस्मात्तानि पुरुषार्थानि । अर्थस्य कर्मणो नाभिसंबन्धः प्रजापतिव्रतैः । इह तु समिदादीनां प्रकरणं नाम कारणं गृह्यते । येन कर्मार्थानीति विज्ञायते । तस्माद्विषम उपन्यासः । पुरुषप्रयत्नश्चैवं सति अनुवादः ॥ ५ ॥

तथा च लोकभूतेषु ॥ ६ ॥

लोकेऽपि, निष्पन्नकार्यादिषु प्रयोजनवत्सु यदसंयुक्तं फलेन श्रूयते, तत्तदङ्गं विज्ञायत इति मन्यमाना उपवासं जपं वोपदिश्यैव कृतिनो मन्यन्ते, न क्रतवे, इदमस्य प्रयोजनवतोऽङ्गमिति । तथा चापरेऽपि मन्यमाना न दुरुक्तं मन्यन्ते । तस्मात्समिदादीनि कर्माङ्गाणि, न प्रजापतिव्रतानीति सिद्धम् ॥ ६ ॥

( अथ यज्ञायुधवाक्यानुवादताधिकरणम् ॥ ४ ॥ )

[४] द्रव्याणि त्वविशेषेणाऽऽनर्थक्यात्प्रदीयेरन् ॥ ७ ॥ पू०

स्तो दर्शपूर्णमासौ, तत्राऽऽम्नायते, स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानि, इति । तत्र संशयः । किमेतानि द्रव्याणि प्रदातव्यानि, उत स्वेन स्वेनार्थेन संबन्धनीयानि । तदेतत्सिद्ध्यर्थमिदं चिन्तनीयम् । किमेष विधिरुतानुवाद इति । विधौ सति प्रदानमनुवादे सति यथार्थसंबन्धः । किं प्राप्तम् । विधिरिति । तथा हि

प्रदेयत्व इह निराकृते तृतीये चिन्ता । 'एतानि वै दश यज्ञायुधानि' इति विधिरयं, स्वार्थत्वात् । इतरथा परार्थता स्यात्; यद्येतानि प्रदीयमानानि यागं निर्वर्तयन्ति

१ श्रूयते, इति पा० । २ ( अ० ३ पा० १ अ० ५ ) इत्यत्रेति शेषः ।

प्रवृत्तो विशेषः, इतरथा वादमात्रमनर्थकम् । प्रदाने चैषां यज्ञायुधशब्दोऽनुगृहीतः । यज्ञस्याऽऽयुधानि यज्ञस्य साधनानीति । इतरथा, उद्धननादीनामायुधानि भवेयुः श्रवणेन, लक्षणया यज्ञस्य । संख्या चैवमवकल्पते । यागेनैकेन संबन्धात् । इतरथा नानार्थसंबन्धाद्दशेति संख्या नावकल्पते । तस्मात्प्रदीयेरन् । अविशेषेण विहितं प्रकरणेन प्रधानस्य भवितुमर्हति ॥ ७ ॥

**स्वेन त्वर्थेन संबन्धो द्रव्याणां पृथगर्थत्वात्तस्मा-
यथाश्रुति स्युः ॥ ८ ॥ सि०**

न चैतदस्ति विधिः, प्रदेयानीति । अनुवादः । प्राप्तत्वात् । स्फयेनोद्धन्ति, कपालेषु श्रपयन्ति, अग्निहोत्रहवण्या निर्वपति, शूर्पेण विविनक्ति, कृष्णाजिनमुलूखलस्याधस्तादवस्तृणाति, शम्यायां दृषदमुपदधाति, प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति, प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टि, इत्येवं स्वेन स्वेन वाक्येनोद्धननादिषु प्राप्नुवन्ति । प्राप्तानां वचनमनुवादः । प्रकरणमपि वाक्येन बाध्यते, यज्ञायुधशब्दश्चानुवादपक्षे न्याय्यो, न विधिपक्षे । गौणो हि स आयुधशब्दः स्फयादिषु । संख्याऽपि पाठाभिप्राया भविष्यति । विस्पष्टं चैतदुद्धनना-

---

ततो भवन्ति यज्ञसाधनानि । साधनवचनोऽयं तत्र यज्ञायुधशब्दो मुख्यः । इतरथा प्रणाड्या गौणः स्यात् । यागविशेषेऽपि प्रधानयागसाधनान्येव । कथं 'एतानि वै दश यज्ञायुधानि' इति दर्शपूर्णमासयोराम्नानात्प्रधानस्यैवाङ्गं साकाङ्क्षाणि प्रकरणेनैकवाक्यतां यान्ति । अतो नैषां प्रयाजादिभिः संबन्धः ।

अथवा 'एतानि वै दश यज्ञायुधानि' इति दर्शपूर्णमासयोराम्नानात्प्रधानस्यैवाङ्गं न प्रयाजादीनाम् । यद्धविष्यासादयतीत्यर्थप्राप्तमासादनमनूद्य वेदिर्नियम्यते । अङ्गप्रधानहविरासादनमर्थप्राप्तम् । तस्मात्तत्र वाक्यादङ्गप्रधानार्थता । 'एतानि वै दश यज्ञायुधानि' इति न किंचिदनूद्यते । न खलु समासान्तर्गतयोरेकमुद्देशकामितराद्विधायकं भवितुमर्हति । संख्या चैकक्रियायोगादुपपत्स्यते ॥ ७ ॥

करणविभक्त्या ह्यनेन किमपि कर्तव्यमिति[1]पदान्तरेणोद्धनने दत्ते निराकाङ्क्षत्वान्नान्यप्रयोजनमाकाङ्क्षति । वाक्यादेषामुद्धननादि प्रयोजनम् । प्रकरणेन क्रतुसंबन्धो भवेद्वा न वा । आयुधशब्दोऽप्यायुधेष्वेव प्रसिद्धो लक्षणया स्फयादिषु वर्तते तान्यपि

---

१ एकप्रसरताभङ्गापत्तेरिति शेषः।

दिभिः स्फ्यादीनि प्रयुक्तानीति । भवति हि तत्र विधिः, स्फ्येनोद्धन्ति, इत्येवमादिः । न तु यज्ञायुधानि कर्तव्यानीति । तस्मादुद्धननादिषु वाक्येन प्राप्तानामनुवाद इति ॥ ८ ॥

चोद्यन्ते चार्थकर्मसु ॥ ९ ॥

अर्थकर्मसु चोद्यन्ते पुरोडाशादीनि, तान्यपि विकल्पेरन् । तत्र पक्षे बाधो, न समुच्चयः। पुरोडाशादीनां निरपेक्षाणां यजिसंबन्धात्, स्फ्यादीनां च । एवं वा चोद्यन्ते चार्थकर्मसु, चोद्यन्ते परिधानीये कर्मणि, आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च, इति । यदि मदीयैरस्तत्र न भवेयुः । तस्मादपि न प्रदातव्यानीति ॥ ९ ॥

---

साधनान्येतान्यपीति । न च विद्यमाने विधौ लक्षणा न्याय्या । अतः स्तुतित्वादनुवादोऽयम् । संख्या चाऽऽसादनाभिप्राया ॥ ८ ॥

अयुक्तोऽयं विकल्पो विषमशिष्टत्वात् । द्वितीयेऽपि वर्णके ' मध्यात्पूर्वार्धाच्चावद्यति ' इति तावन्मात्रस्य होमाच्छिद्दं स्फ्यादीनां वर्तते । तेन यजमानो धक्ष्यते । नैतदेवं, मरणस्यानित्यत्वात्कदाचिदाकारविनाशः स्यात् , बहुद्व्यवदानोद्धरणात् । तत्र यज्ञपात्रता नोपपद्यते ।

अथवा देवतोद्देशेन द्रव्यपरित्यागान्निरिष्टकानि । तस्मात्प्रतिप्रयोगमुत्पाद्येरन् , तत्रान्तरे क्रियमाणो न तैर्दह्येत । निरिष्टकान्यप्युपादातुमशक्तो निरिष्टकत्वादेव । अथवा व्यवदाने उद्धृतं यादृशं सत्पूर्वं यज्ञसाधनममून्मरणवेलायां न तादृगिति यज्ञपात्रता नोपपद्यते । उद्धननाद्यर्थत्वे तु न किंचिद्विरुद्धम् । चतुर्दश त्रयोदशेत्युभयत्र तुल्यम् । न द्रव्यभेदादाहुतिभेदः । एकदेवतत्वात्सर्वैरेकैवाऽऽहुतिः ।

तत्र केचिदाहुः । उत्पत्तिवाक्यशिष्टेन द्रव्येण बाधितत्वात्कर्मान्तरमापततीति दर्शनमिदं नोपपद्यते । न हि द्रव्यसंयोगमात्रेण कर्मान्तरं भवति । तस्मादन्यथा वर्ण्यते । ' चतुरवत्तं जुहोति ' इति प्राकरणिकेषु सर्वहोमेषु चतुरवत्तम् । तत्रेमानि दश द्रव्याणीतरेतरयुक्तानि होमसाधनानि । तत्रैषां प्रतिद्रव्यं द्व्यवदाने गृह्यमाणे बहूनि चतुरवत्तानि भवन्ति । होमे चैकं चतुरवत्तं श्रुतम् । तद्यद्येकस्माद्गृह्येत, इतरेषां साधनत्वं हीयेत । तस्मात्तत्संपत्तयेऽभ्यस्येत यागः एकैकेन चतुरवत्तेन ।

ननु बहूनि गृहीत्वा सकृद्धोष्यन्ते, देवतैक्यात् । यथा स्विष्टकृत्ये द्वे चतुरवत्ते । उच्यते । तत्र कर्मभेदादन्येन सह प्रदाने सकृत्क्रियमाणे, इतरदप्यात्मीयं चतुरवत्तं विवेकेन गृह्णातीतरदपि विवेकेन । तत्र चतुरवत्तविघातो नास्ति, इह त्वेकत्वात्कर्मणः

लिङ्गदर्शनाच्च ॥ १० ॥

लिङ्गदर्शनेन च, चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायाम्, इति । तस्मादप्यनुवाद इति ॥ १० ॥

( पश्वेकत्वाधिकरणम् ॥ ५ ॥ )

[ ५ ] तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात् ॥ ११ ॥ पू०

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयो, यो दीक्षितो यदग्नीषोमीयं पशुमालभते, इति । तथा, अनड्वाहौ युनक्ति, इति । तथाऽश्वमेधे, वसन्ताय कपिञ्जलानालभते, इति । तत्र संदेहः । किं विवक्षितमेकत्वं द्वित्वं बहुत्वं च, उताविवक्षितमिति । तत्रैकत्वमयज्ञाङ्गभूतं, न विवक्षितमित्यर्थः । अर्थस्य गुणभूतत्वात् । नाऽऽलम्भस्य गुणभूता संख्या नियोजनस्य वा । कस्य तर्हि । पशोरनडुहोः कपिञ्जलानां च । विभक्तिर्हि श्रुत्या प्रातिपदिकार्थगतं संख्यार्थं ब्रूते । वाक्येन सा यज्ञाङ्गं ब्रूयात् । वाक्याच्च श्रुतिर्बलीयसी । तस्मान्न यज्ञाङ्गं विवक्षितमिति । आह । मा भूद्यज्ञाङ्गम् । पश्वादीनामङ्गं विवक्षितं तथाऽपीति । उच्यते । न पश्वादीनामङ्गेनोक्तेनानुक्तेन वा किंचित्प्रयोजनमस्ति, यज्ञाङ्गेन ह्यविपन्नेन प्रयोजनम् । विपन्नेऽपि हि पश्वाद्यङ्गेऽविगुण एव क्रतुर्भवति । यज्ञाच्च फलं, न पश्वादेः । तस्मात्पश्वादेर्गुणेनाज्ञातेन ज्ञातेन वा न किंचित्प्रयोजनमस्तीति न तद्विवक्षितम् । यद्धि प्रयोजनवत्तद्विवक्षितमित्युच्यते ॥ ११ ॥

---

सह क्रियमाणे चतुरवत्तविघातभयादभ्यस्यते सोमयागवत् । तत्राऽऽहुतिबहुत्वाद्दर्शनं नोपपद्यते ॥ ९ ॥ [ ॥ १० ॥ ]

अरुणो गुणः पदान्तरोपात्तत्वाद्भवति क्रियार्थः । एकत्वस्य विभक्तिश्रुत्या प्रातिपदिकार्थत्वान्न क्रियार्थता । क्रियार्थता वाक्येन स्यात् । पश्वादीनामङ्गं विवक्षितं तथाऽपीति—अन्तर्णीताभिसंबन्धे सकृदुच्चरिताभिप्रायः परिचोदयति । अङ्गस्य यदुपकारकं भवति प्रणाड्याऽपि तत्क्रियाया अप्युपकारकम् । न पश्वादीनामङ्गेनोक्तेनानुक्तेन वा किंचिदस्ति प्रयोजनमिति—कोऽभिप्रायः । पशुसंख्ययोः संबन्धेऽस्मिन्विवक्ष्यमाणे क्रियापश्वोः संबन्धो नास्ति । क्रियापशुसंबन्धोत्तरकालं पशुसंख्ययोः संबन्धे शुद्ध एव पशुः संबध्येत । तन्त्रसंबन्धे सकृदुच्चरितत्वात्पशोः स्वार्थपरार्थता स्यात् । श्रुत्यादिदोषस्तदवस्थ एव । तस्मान्न क्रियाङ्गं संख्येति । अत आह—यज्ञा-

---

१ अद्रव्यस्य वाक्येनाङ्गं स्यादिति पा० ।

## एकश्रुतित्वाच्च ॥ १२ ॥

भवति च किंचिद्वचनं, येन विज्ञायते न तद्विवक्षितमिति । यदि सोममपहरेयुरेकां गां दक्षिणां दद्यात्, इति । यदि हि विवक्षितं भवे-दैकामिति ब्रूयात् । गामित्येकवचनस्य विवक्षितत्वात् । तथा, अवी द्वे, धेनू द्वे इत्यत्रापि द्वे इति वचनं ज्ञापकम् । अविवक्षितम्, अवी इति द्वित्वमिति । त्रीन् ललामानित्यत्रापि त्रीनिति वचनं लिङ्गं, ललामा-निति बहुवचनमविवक्षितमिति ॥ १२ ॥

## प्रतीयत इति चेत् ॥ १३ ॥

एवं चेत्पश्यसि, अविवक्षिता संख्येति । तन्न । प्रतीयते हि संख्या-ऽऽख्यातवचनस्याङ्गभूता । यथा पशुमानयेत्युक्ते, एक एवाऽऽनीयते । पशू इति द्वौ । पशूनिति बहव आनीयन्ते । यश्च प्रतीयते स शब्दार्थः । तस्माद्यज्ञस्याङ्गभूता संख्येति शब्दाद्गम्यते । न च शब्दाद्गम्यमानमृते कारणादविवक्षितं भवति ॥ १३ ॥

## नाशब्दं तत्प्रमाणत्वात्पूर्ववत् ॥ १४ ॥

नैतदेवं, सत्यं प्रतीयते, न त्वयं शब्दार्थो, व्यामोहादेषा प्रतीतिः । कुत एतत् ; वाक्याद्धि यज्ञाङ्गमित्यवगम्यते । वाक्यं च श्रुत्या बाध्यते । तस्मादशब्दार्थोऽयं यज्ञ एकत्वादीति । अशब्दार्थोऽपि हि प्रतीयते । यथा, पूर्वो धावतीति । स पूर्व इत्युच्यते, यस्यापरोऽस्ति । तेन पूर्व इत्युक्तेऽपरो गम्यते । न त्वपरो धावतीति श्रवणात्प्रतीयते । एवमिहापि पशुमित्येकत्वं गम्यते, न तु यज्ञे । यथैव हि पूर्व इत्युक्तेऽ-परो गम्यत एव केवलं, न तु स विधीयते कस्मिंश्चिदर्थे । एवमिहापि संख्या प्रतीयत एव केवलं, न तु कर्तव्यतया यज्ञे विधीयते न पशौ । कथं न पशौ विधीयत इति चेत् । विधायकस्याभावात् । आख्यात-शब्दो विधायको भविष्यतीति । एतदपि नोपपद्यते, द्रव्यदेवतासंब-न्धस्य स विधायकः सन्नालभत इति न संख्यासंख्येयसंबन्धं विधा-तुमर्हतीति । भिद्येत हि तथा वाक्यम् । तस्मादविवक्षिता संख्येति ॥ १४ ॥

---

ङ्गेन ह्यविपन्नेन प्रयोजनम् । विपन्नेऽपि पश्वाद्यङ्गेऽविगुणो भवति क्रतुः ॥ ११ ॥ [ ॥ १२ ॥ १३ ॥ १४ ॥ ]

---

१ एकत्वादि भवतीति पा० ।

शब्दवत्तूपलभ्यते तदागमे हि तद्दृश्यते तस्य ज्ञानं यथाऽन्येषाम्॥ १५ ॥ सि०

तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति, न यज्ञे संख्या शब्देन श्रूयत इति । आख्यातवाच्ये ह्यर्थे, उपलभ्यते । लोके पशुमानयेत्येकवचने सति, एकपशुविशिष्टमानयनं प्रतीयते । पशू आनयेति द्वित्वविशिष्टं गम्यते । तत्र ह्येकत्वमपैति, द्वित्वमुपजायते । यस्य चाऽऽगमे यदुपजायते, स तस्यार्थ इति गम्यते । तस्य ज्ञानं, यथाऽऽन्येषां शब्दानाम् । अश्वमानयेत्युक्तेऽश्वानयनं प्रतीयते । गामानयेति गवानयनम् । तत्राश्वोऽपैति गौश्चोपजायते। तेन ज्ञायते, अश्वशब्दस्याश्वोऽर्थो गोशब्दस्य गौरिति । यदुक्तं, श्रुत्या वाक्यार्थो बाध्यत इति । उच्यते । न श्रुतिर्ब्रूते वाक्यार्थो नास्तीति । केवलं तु प्रातिपदिकार्थगतां संख्यामाह । तादृशी संख्या वाक्येन यज्ञे विधीयते । प्रातिपदिकार्थो ह्याख्यातवाच्येन संबध्यते, विभक्त्यर्थोऽपि । तथा हि । तद्विशेषणविशिष्ट आलम्भो गम्यते । तत्रैकार्थत्वादेकवाक्यमवकल्पते । पशौ हि संख्यायां विधीयमानायामेक आख्यातशब्दो न शक्नुयादाख्यातार्थं विधातुं संख्यासंख्येयसंबन्धं च । तस्माद्यज्ञे विवक्षिता संख्येति ॥ १५ ॥

तद्वच्च लिङ्गदर्शनम् ॥ १६ ॥

किमिति । कर्णा याम्याः, अवलिप्ता रौद्राः, नभोरूपाः पार्जन्याः । तेषामैन्द्राग्नो दशम इति । यदि त्रित्वं विवक्षितं तदैन्द्राग्नो दशमो भवति । तथा, कृष्णा भौमाः, धूम्रा आन्तरिक्षाः, बृहन्तो दिव्याः, शबला वैद्युताः, सिध्मास्तारका इति प्रकृत्याऽऽह, अर्धमासानां वैतद्रूपं यत्पञ्चदशिन इति । तस्मादपि पश्यामो विवक्षिता संख्येति । यदुक्तम् । एकां गामित्यविवक्षां दर्शयतीति । अत्रोच्यते । गोसं-

---

विभक्तिर्हि लिङ्गसंख्याप्रातिपदिकार्थानां श्रुत्यैव क्रियार्थतामाह । क्रिया साध्या साधनं तत्परिच्छेदकानि च लिङ्गसंख्यादीनपेक्षते । अतः सर्वविशेषणविशिष्टा क्रियैव विधीयते । तत्र प्रत्ययः पूर्वं विशेषणे व्याप्रियतेऽन्यथानुपपत्त्या, न ह्यगृहीतविशेषणा विशिष्टे बुद्धिरिति । पश्वेकत्वयोरुपश्लेषलक्षणया श्रुत्या विशेषणविशेष्यभाव एवावगम्यते, न तु तादर्थ्यम् । अत एकविषयोपनिपाताभावादविरोधः । तस्मादाह— न श्रुतिर्ब्रूते वाक्यार्थो नास्तीति । गोसंख्यासंबन्धं विधातुमेतदुच्यते । इतरथा

ख्यासंबन्धं विधातुमेतदुच्यते। इतरथा हि गोदक्षिणासंबन्धो विहितो गम्येत। तस्माद्विवक्षितेऽपि वाच्यमेतत्। अवी द्वे धेनू द्वे त्रीन् ललामानिति चानुवादाः॥ १६॥

( पुंस्त्वादिलिङ्गस्य विवक्षाधिकरणम्॥ ९॥ )

## [ ६ ] तथा च लिङ्गम्॥ १७॥ सि०

एवं च कृत्वा समानश्रुतिकं लिङ्गमपि विवक्षितं भविष्यति। तत्रेदं दर्शनमुपपद्यते। वसन्ते प्रातराग्नेयीं कृष्णग्रीवामालभते, ग्रीष्मे माध्यंदिने संहितामैन्द्रीं, शरद्यपराह्णे श्वेतां बार्हस्पत्याम्, इति। तत्र श्रूयते। गर्भिण्यो भवन्तीति। गर्भः स्त्रीणां गुणः। तेन स्त्रियो दर्शयतीति भविष्यति। तथा, अश्व ऋषभो वृष्णिर्बस्तः पुरुष इति, ते प्राजापत्या इति। तत्र श्रूयते। मुष्करा भवन्ति सेन्द्रियत्वाय, इति। मुष्करत्वं पुंसां गुणः। तेन पुंप्राप्तिं दर्शयतीति।

अधिकरणान्तरं वा। तथा च लिङ्गमिति। संख्याधिकरणं लिङ्गाधिकरणेऽतिदिश्यते। लिङ्गमविवक्षितम्। श्रुत्या वाक्यस्य बाधितत्वात्। न च विवक्षितमिव श्रूयत इति भवति लिङ्गम्। स्त्री गौः सोमक्रयणीति स्त्रीवचनात्सोमक्रयणीत्यविवक्षितमेव लिङ्गं प्रती-

---

गोदक्षिणासंबन्धो विहितो गम्येत, गां दक्षिणां दद्यादिति तादृच्छ्रूयेत। अश्वादीनां परिसंख्या स्यात्। संख्यैव विधीयते, न तु गौरिति चेत्। तन्न। संख्याविधाने हि सति गोसंख्ययोः संबन्धो विधातव्यः। तद्विधाने च क्रियायामननुप्रवेशः, तत्रात्यन्तं वाक्यं स्यात्। तस्माद्यद्दक्षिणां दद्यात्तद्गामितीयं वचनव्यक्तिर्गृह्यते श्रुत्यनुग्रहाय। इतरत्र तु गामुद्दिश्य संख्याविधिरिति गृह्यते। एतदपि यद्वा तद्वा। कस्मात्क्रियायामेव संख्या न विधीयते, येन गोसंख्ययोः संबन्धः। उच्यते। संख्या हि विधीयमाना संख्येयद्वारेण साधनं भवति। तत्र बहूनि संख्येयानि, सा न ज्ञायते कस्य परिच्छेदिकेति। अश्वादीनामुत्पत्तौ संख्या विद्यते। तत्र न निवेक्ष्यते। गवां तु न विद्यते। गवामपि द्वादशशतं विद्यते चोदकेनेति चेत्। इतरेषामपि चोदकेनैव। तेषामेकत्वयुक्तानामनर्थिकेति चेत्। उच्यते। इयं प्रत्यक्षत्वाच्छीघ्रं प्राप्स्यति। साऽनुवादः, अथवा गौरेव केवला प्राप्नोति तदा गोविधानमयुक्तम्। प्राप्नुवन्ति ह्यन्यान्यपि, तस्मान्नास्तीदं गौर्न विधीयते संख्यैव विधीयत इति। अतो नियमात्परिसंख्या स्यात्। अन्येषां तन्निवृत्त्यर्थमाह—एकां गामिति॥ १९॥ १६॥ [॥ १७॥]

---

१ श्वेतेति क्वचिन्नास्ति। २ श्वेतेति पा०।

यते। ननु कथं मृगीमानयेति न मृग आनीयते। नैवम्। अंशाब्दं तु तत्, पूर्वो धावतीति यथा। लिङ्गं विवक्षितं, वाक्यार्थस्य श्रुत्याऽप्रतिषिद्धत्वात्। तथा च लिङ्गं, गर्भिण्यो भवन्तीति। तथा च, मुष्करा भवन्तीति। यदुक्तं, स्त्री गौः सोमक्रयणीति। तत्र स्त्रीत्यविवक्षितम्। तथा, प्रजापतये पुरुषान् हस्तिन आलभते, इति पुरुषग्रहणमविवक्षितम्। विस्पष्टो हि न्याय उक्तो लिङ्गविवक्षायाम्। तस्माद्विवक्षितं लिङ्गमिति ॥ १७ ॥

( आश्रयिकर्मणामदृष्टार्थताधिकरणम् ॥ ७ ॥ )

[ ७ ] आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत ॥ १८ ॥ सि०

अत्राऽऽश्रयिणः पदार्था उदाहरणम्। उत्तमः प्रयाजः, पशुपुरोडाशः, स्विष्टकृदित्येते यागा उदाहरणम्। एषु संदेहः। किं यजिमात्रं संस्कारो देवताया उत यजिनाऽदृष्टं देवतायां क्रियत इति। किं प्राप्तम्। आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत। आश्रयिष्वेवंजातीयकेष्वपूर्वस्य भावोऽर्थः प्रत्येतव्योऽविशेषादन्यैराख्यातशब्दैः, यजति ददाति जुहोतीति। उक्तमेतद्भूतं भव्यायोपदिश्यत इति ॥ १८ ॥

---

अनुदाहरणं स्विष्टकृत्। मन्त्रस्तावदिष्टदेवतासंकीर्तनादृष्टार्थः। आकीर्णकरस्य द्रव्यस्यानियमेन प्रतिपादने प्राप्ते यागेन प्रतिपाद्यते। योऽसौ प्रक्षेपः सोऽपि दृष्टार्थ एव। अतो यागेन द्रव्यस्य संस्क्रियमाणत्वान्नेतरैरदृष्यता। समिदादयोऽपि नोदाहरणम्। तेषु द्रव्यदेवतस्य गुणभूतत्वात्क्रियैव प्रधानभूता। पशुपुरोडाशयागो देवतासंस्कारद्वारेणैवोपकरोति। वपायागस्य तु यागान्तरत्वे नास्ति प्रमाणम्। तस्मादेषोऽप्यनुदाहरणम्। यत्राकृतार्थं द्रव्यं, देवता त्विष्टा वक्ष्यमाणा वा कीर्त्यते यागान्तरं च तदुदाहरणम्। पशुपुरोडाशस्य देवतोद्देशेन यः प्रक्षेपस्तस्यादृष्टादृते नान्यत्प्रयोजनमस्ति। तस्माददृष्टार्था एते। अत आहुः, आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत।

यागादपूर्वं चोद्येतेत्यर्थः। 'भूतं भव्यायोपदिश्यते' इति भूतं द्रव्यं भव्यां क्रियां निर्वर्तयतीति क्रियातोऽदृष्टम्। अथवा, यद्यपि यागो देवतां संस्कुर्वन्नुपकरोति तथाऽपि साधनतां प्रतिपद्यमान आश्रयो भवति नान्यथा। अतो भूतं भव्यायोपदिश्यत इति ॥ १८ ॥

---

१ अशब्दमिति पा०।

चोदनायां त्वनारम्भो विभक्तत्वान्न ह्यन्येन विधीयते ॥ १९ ॥

अस्यां तु चोदनायामनारम्भोऽपूर्वस्य । विभक्तोऽयमाख्यातशब्दो, यो दृष्टार्थस्ततो नापूर्वम् । यः खल्वदृष्टार्थस्ततोऽपूर्वमिति । दृष्टार्थश्चायम् । अस्मिन् हि यागे क्रियमाणे देवता स्मर्यते, स्विष्टकृत्यपि द्रव्यं प्रतिपाद्यते । न चान्येन शब्देनात्रापूर्वं विधीयते । तस्माद्यजिमात्रं संस्कार इति ॥ १९ ॥

स्याद्वा द्रव्यचिकीर्षायां भावोऽर्थे च गुणभूतताऽऽश्रयाद्धि गुणीभावः ॥ २० ॥

स्याद्वाऽपूर्वमतः, सत्यामपि देवताचिकीर्षायां, तस्मिन्देवतासंस्कारार्थे गुणभूतता यागस्य द्रव्यप्रतिपादनेन च । मन्त्रेण तत्र देवता स्मर्यते । तस्मिन्मन्त्रेण दृष्टेऽर्थे क्रियमाणे त्यागोऽपरोऽदृष्टार्थः श्रूयते । तस्य न किंचिद्दृष्टमस्ति । देवताश्रयात्तु देवतागतं तदपूर्वमिति गम्यते ॥२०॥

( प्रतिज्ञाधिकरणम् ॥ ८ ॥ )

[८] अर्थे समवैषम्यमतो द्रव्यकर्मणाम् ॥२१॥ प्र० सू०

अतिक्रान्तस्तृतीयविषयः । अतः प्रभृति द्रव्याणां कर्मणां चार्थे प्रयोजने समवैषम्यं वक्ष्यते । क्वचित्साम्यं, क्वचिद्वैषम्यम् । आमिक्षावाजिनयोर्वैषम्यम्, क्रयपासूनां वैषम्यं, दण्डस्य मैत्रावरुणधारणे यजमानधारणे च साम्यम् । एवं तत्र तत्र द्रष्टव्यं साम्यं वैषम्यं चेति ॥ २१ ॥

( आमिक्षाया दध्यानयनप्रयोजकत्वाधिकरणम् ॥ ९ ॥ )

[९] एकनिष्पत्तेः सर्वं समं स्यात् ॥ २२ ॥ पू०

चातुर्मास्येषु वैश्वदेवे श्रूयते, तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्, इति । तत्र संदेहः । किं तप्ते पयसि दध्यानयनमामिक्षा प्रयोजयति, न वाजिनमुतोभयमिति । किं प्राप्तम् ।

---

यत्र द्रव्यदेवते गुणभूते अन्व्याख्यातस्य तत्रापूर्वम् । यत्र पुनर्द्रव्यं देवता वा प्रधानं तत्र तदर्थत्वादाख्यातार्थस्य नापूर्वम् । यद्देवतासंकीर्तनं मन्त्रेण तद्दृष्टार्थाय, स्मरणस्यापेक्षितत्वात् । त्यागस्त्वदृष्टाय । तस्मात्तत्रापूर्वम् ॥ १९ ॥ [ २० ॥ २१ ॥ ]

सर्वशब्दो वक्ष्यमाणपूर्वपक्षालोचनया द्रष्टव्यः । यत्प्रयोजनवत्तत्प्रयोजकम् । आमि-

उभयमिति। कुतः। यस्मिन्कृते यन्निष्पद्यते प्रयोजनवत्, तत्तस्य प्रयोजकमिति गम्यते। दध्यानयने च कृत उभयं निष्पद्यते। आमिक्षाऽपि, तत एव वाजिनमपि। तत्रान्यतरार्थे क्रियेत, यदि विनिगमनायां हेतुर्भवेत्। अगम्यमाने विशेष उभयार्थमानयनमिति गम्यते। तस्मादेकाऽसावुभाभ्यामपि प्रयोजिता निष्पत्तिरिति॥ २२॥

**संसर्गरसनिष्पत्तेरामिक्षा वा प्रधानं स्यात्॥ २३॥ सि०**

नैतदस्ति, उभयं प्रयोजकमिति। आमिक्षा प्रयोक्त्री। कुतः। नात्र यद्दधिपयोभ्यां निर्वर्त्यते तद्धविः। यदि तद्धविः स्यादुभयं ताभ्या-

---

क्षावाजिने च प्रयोजनवती। अतो दध्यानयनमुभयप्रयुक्तं तच्चोभयनिष्पादनसमर्थम्॥ २२॥

यत्सर्वनाम्ना प्रतिनिर्दिश्यते तद्देवतासंबन्धि। तेन चानन्तरनिर्दिष्टं प्रधानभूतं प्रतिनिर्दिश्यते। तच्च प्रयोजकम्। आनयतिः संस्कारकत्वादन्यत्र शेषभूतत्वादनन्तरोऽपि न प्रतिनिर्दिश्यते। देवतासंबन्धेऽयोग्यत्वाच्च। दधि त्वानयतौ प्रधानं, द्वितीयानिर्दिष्टत्वात्। सप्तमीनिर्देशात्पयोऽपि तच्छेषः। तस्मात्सप्तपयआनयतिविशिष्टं द्वितीयान्तं दधि प्रधानभूतम्। तत्सर्वनाम्ना प्रतिनिर्दिश्यते। तद्देवतासंबन्धि।

एतदपि नास्ति। आनयतिरयं द्विकर्मकः। तत्रैकं कर्म क्रियया व्याप्यमानमपि गुणत्वं प्रतिपद्यत इतरत्प्रति। यथा, अजां ग्रामं नयतीति। तत्र विवक्षातः प्राधान्यम्। यद्यजा संस्कार्या ततः सा प्रधानं, ग्रामस्तदर्थः। अथ ग्रामस्य केनचित्कारणेन प्राधान्यं तत आनयतिविशिष्टाऽजा तदर्था। तत्र द्वयोर्द्वितीयान्तयोर्न शब्दतो निर्णयः। किं तर्हि। वस्तुतः। यत्र तु द्वे अपि प्रयोजनवती द्वितीयान्ते च तत्र नास्त्येव निर्णयः। यत्र तु सप्तम्या निर्दिष्टमेकमाधारभूतं तत्रेतरदाधेयत्वात्तत्प्रति नीयते। तेन व्याप्यमानत्वादितरदेव तत्र प्रधानम्। अधिकरणभावो नान्तरीयकत्वादनूद्यते। तच्छेदमात्रं क्रियते। इह तु पयः प्रधानकर्म। कथं, सप्तमी व्यंशा। अधिकरणत्वाद्गुणभूता आधेयेन व्याप्यमानत्वात्प्रधानभूता। तत्र द्वितीयस्य कर्मणोऽपेक्षितत्वाद्यो व्याप्यमानोऽर्थः स गृह्यते। न तु गुणभूतः[1]। तस्मादानयतिविशिष्टेन दध्ना पयो व्याप्यमानं प्रधानकर्म। तत्रावश्यं सामर्थ्यादेव दधि शेषभूतम्। अतः सर्वनाम्ना पयः प्रतिनिर्दिश्यते। तद्देवतासंबन्धि। मन्त्रवर्णश्च पयस एव देवतासंबन्धं दर्शयति 'जुषतां युज्यं पयः' इति। यदि चात्र पयो देवतासंबन्धि ततो विशेषातिदेशः सिध्यति 'पयो वा तत्प्रधा-

---

१ गुणभाव इति पा०। २ (अ० ८ पा० २ अ० ४ सू० २२)।

मेव निष्पद्यत इति न गम्येत विशेषः । किं तर्हि हविरिति । पयो दधिसंसृष्टम् । कुत एतत् । सा वैश्वदेव्यीत्युच्यते, न ततो यन्निष्पद्यत इति । ननु स्त्रीलिङ्गनिर्देशादामिक्षा हविः । सा च ततो निष्पद्यते । वाजिनं च हविः । तदपि निष्पद्यत इति । नेत्युच्यते । तदेव हि पयस्तप्तं दधिसंयुक्तमामिक्षा भवति । तस्मात्स्त्रीलिङ्गमदोषः । आह । यदि पयो दधिसंसृष्टं हविः किं तर्ह्युच्यत आमिक्षा प्रयोजिकेति । उच्यते । आमिक्षायां दधिपयसी विद्येते न वाजिने । कथमवगम्यते । संसर्गरसनिष्पत्तेः। तत्र हि दधिपयसोः संसृष्टयो रस उपलभ्यते, तेन तत्र दधिपयसी इत्यनुमानं भवति । वाजिने तिक्तकटुको रसः । आह । तप्ते पयसि दध्न्यानीयमान उभयं भवति । दध्ना च पयः संसृज्यते, वाजिनाच्च विविच्यते । तत्र संसर्गश्चिकीर्षितो, न विवेक इति । कुत एतत् । उच्यते । शाब्दः संसर्गो दध्ना, आशब्दो वाजिनेन विवेकः पयस इति । सर्वनाम च पूर्वोक्तेन शब्देनैकवाक्यतां याति । इतरस्मिन्पक्षे पयसि दध्यानयनं वाजिनविवेकलक्षणार्थं स्यात् । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या । तस्मादामिक्षार्थं दध्यानयनम् । आमिक्षाशब्दश्चात्रानुवादः । आमिक्षैव सा भवति यत्र तप्ते पयसि दध्यानीयते । तस्मादामिक्षा प्रयोक्त्री, वाजिनमप्रयोजकमिति ॥ २३ ॥

## मुख्यशब्दाभिसंस्तवाच्च ॥ २४ ॥

न चोभयं प्रयोजकं न्याय्यम् । नात्र वचनमस्ति । इदं प्रयोजकमिदं नेति । असति प्रयोजकेऽनर्थकं भवतीति प्रयोजकं कल्प्यते ।

नत्वात्' इति । दधिप्राधान्ये तु नैतन्सिध्यतीति न तत्संस्क्रियते । पयसि दध्नि निक्षिप्ते आमिक्षाशब्दं प्रयुञ्जते । अत एव स्त्रीलिङ्गं तदस्यामवस्थायां प्राप्तत्वादनूद्यते । आमिक्षायां च पयसो रस उपलभ्यते । संस्कारकस्य च दध्नः । उभौ रसौ वाजिने न स्तः। अनेनाभिप्रायेणाऽऽह—नाऽऽमिक्षा नाम पयसोऽर्थान्तरं हविरिति, किं तर्हि हविरिति । **पयो दधिसंसृष्टम्** । पयो दधिसंस्कृतमित्यर्थः । पयसश्च संस्कार्यता शब्देनैव दधि प्रति, तच्च संस्कारकं संसर्गादृते न भवति । तस्मादनेन द्वारेण संसर्गश्चिकीर्षित इत्यत आह, शाब्दः संसर्ग इति । **इतरस्मिन्पक्षे पयसि दध्यानयनं वाजिनविवेकलक्षणार्थं स्यात्** । पयः प्रति संस्कारकत्वं शब्देनावगम्यते । तद्धित्वाऽन्यस्याश्रुतस्य वाजिनस्य शेषभूतं क्रियते । अतोऽश्रुतेन संबन्धाल्लक्षणा ॥ २३ ॥

तत्रैकस्मिन्नपि प्रयोजके सिद्धेऽर्थवत्युपदेशे नान्यदपि प्रयोजकं भवितुमर्हति । न च न गम्यते विशेषः । कथं गम्यते । मुख्यशब्दाभिसंस्तवात् । मुख्यशब्दः संस्तोतुं न्याय्य इति । प्राथम्यात्तु तस्य तावत्प्रयोजकत्वं ज्ञातम् । तस्मिन्सति प्रयोजके परिहृतत्वादानर्थक्यस्य, न द्वितीयमपि प्रयोजकम् । प्रथमा चाऽऽमिक्षा, द्वितीयं वाजिनम् । तस्मादामिक्षा प्रयोक्त्री । अपि च मुख्यशब्देन चाऽऽमिक्षा स्तूयते । मिथुनं वै दधि च शृतं च । अथ यत्संसृष्टं मण्डमिव मस्तिवच्च परिदृश्यते गर्भ एव स इति, गर्भसंस्तुताऽऽमिक्षा । मिथुनस्य च गर्भः प्रयोजको, न गर्भोदकम् । तस्मादप्यामिक्षा प्रयोजिकेति मन्यामहे । किं भवति प्रयोजनम् । यद्युभयं प्रयोजकं, वाजिने नष्टे पुनस्तप्ते पयसि दध्यानेतव्यम् । अथ वाजिनमप्रयोजकं, नष्टे वाजिने लोपो दध्यानयनस्य ॥ २४ ॥

( एकहायनीनयनस्याक्षाभ्यञ्जनाद्यप्रयुक्तताधिकरणम् ॥ १० ॥ )

[१०] पदकर्माप्रयोजकं नयनस्य परार्थत्वात् ॥ २५ ॥ सि०

ज्योतिष्टोमे श्रूयते । अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति, इति । तत्रेदमपरं श्रूयते, षट् पदान्यनुनिष्क्रामति, इति । तथा, सप्तमं पदं गृह्णाति, इति । इदमपरं, यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्यात्, इति । तत्र संदेहः । किं सोमक्रयण्यानयनं पदपांस्वर्थमुत क्रयप्रयुक्तमिति । किं प्राप्तम् । नयनादुभयं निष्पद्यते, क्रयः पदं च । तस्मादुभयं प्रयोजकम् । न हि गम्यते विशेष इति । तदुक्तम् । एकनिष्पत्तेः सर्वं समं स्यादिति । एवं प्राप्ते ब्रूमः । पदकर्माप्रयोजकमिति । कुतः । यस्मान्नयनं क्रयार्थम् । न हि नयनमन्तरेण

---

तापविशिष्टं दध्यानयनं प्रयोजकेन यावन्न संबध्यते तावत्साकाङ्क्षमनर्थकम् । तस्मादानर्थक्यपरिहारार्थमामिक्षा प्रयोक्त्री । आमिक्षया चाऽऽनर्थक्ये परिहृते नास्ति वाजिनेन संबन्धः ॥ २४ ॥

अनेन न्यायेन पदकर्म पांसून्प्रयुङ्क्ते । ते चाक्षाभ्यञ्जने विनियुक्तास्तेन प्रयुज्यन्ते । अतस्तेऽप्यात्मसिद्ध्यर्थं नयनं प्रयुञ्जते । क्रयोऽप्यात्मसिद्ध्यर्थमेकहायनीनयनं प्रयुङ्क्ते ।

---

१ प्रयोजकत्वज्ञानमिति पा० । २ परि च ददृशे, इति पा० । ३ सप्तमपदपांस्वर्थमिति पा० । ४ ( अ० ३ पा० ८ अ० ९ सू० २२ ) ।

विशिष्टे देशे क्रय उपपद्यते । तस्मात्क्रयेण तावन्नयनं प्रयुक्तमिति गम्यते । क्रयप्रयुक्तं चेन्न पदप्रयुक्तमपि भवितुमर्हति ।

अपि चैकहायन्याः पदपांसवो ग्रहीतव्या इति नास्ति शब्दः । ननु प्रकृतैकहायनी पदपांसुग्रहणवाक्येन संभन्त्स्यते । नेति ब्रूमः । एकहायन्या क्रीणाति, इति विशिष्टेन वाक्येन क्रये, उपदिष्टैकहायनी प्रकृतत्वात्पदपांसुवाक्येन संबध्यते, प्रकरणाच्च वाक्यं बलीयः । अथेदानीमेकहायनी क्रयणार्थं संकीर्तिता सती संनिहितत्वात्प्रसङ्गमुपजीवता पदपांसुवाक्येन संबध्येत । याऽसौ परार्था, एतस्याः पदं ग्राह्यमिति । तस्मात्क्रयप्रयुक्तं नयनम्, अप्रयोजकं पदमिति । किं पुनश्चिन्तायाः प्रयोजनम् । यद्युभयमेकहायनीनयनस्य प्रयोजकं, यदैकहायन्याः सप्तमं पदं ग्रावणि निधीयते, तदा पुनरेकहायनी नीयेत सप्तमाय पदाय । यदा पदं न प्रयोजकं, तदा नैकहायनी पुनः षट् पदान्यनुनिष्क्रामयितव्येति ॥ २५ ॥

( तुपोपवापस्य पुरोडाशकपालाप्रयोजकत्वाधिकरणम् ॥ ११ ॥ )

[ ११ ] अर्थाभिधानकर्म च भविष्यता संयोगस्य तन्निमित्तत्वात्तदर्थो हि विधीयते ॥ २६ ॥ सि०

दर्शपूर्णमासयोः श्रूयते, कपालेषु पुरोडाशं श्रपयति, इति । तथा, पुरोडाशकपालेन तुषानुपवपति, इति । तत्र संदेहः । किमुभयं कपालानि प्रयोजयति पुरोडाशश्रपणं तुषोपवापश्च, उत श्रपणं प्रयोजकं, न तुपोपवाप इति । किं प्राप्तम् । विनिगमनायां हेतोरभावादुभयमिति प्राप्ते । उच्यते । अर्थाभिधानं प्रयोजनसंबद्धमभिधानं यस्य, यथा पुरोडाश-

'पशोर्विनालम्भात्' इत्यत्राप्ययमेव पूर्वपक्षः । एवं प्राप्त आह—क्रये स्ववाक्येनैव द्रव्यविशेषो निर्दिश्यते । इतरत्र स्ववाक्येन द्रव्यविशेषानिर्देशात्प्रकृतं गृहीत्वा वाक्यसंबन्धः । प्रयोजकत्वे विरोधात्प्रत्यक्षेण काल्पनिकं बाध्यते । तत आह— प्रकरणाच्च वाक्यं बलीयः । तस्मात्क्रयप्रयुक्ता सती प्रसङ्गात्पदपांस्वर्थाऽपीति । अक्षाभ्यञ्जनं यद्यपि पांसूनां प्रयोजकं, तथाऽपि यत्किंचिद्द्रव्यमुपादायाक्षमभ्यञ्ज्यात्, पांसून्वाऽपीत्ययमेव सिद्धान्तो न्याय्यः ॥ २६ ॥

स्वप्रयोजनसंयोगेन पुरोडाशकपालं निर्दिश्यते, पुरोडाशकपालमिति । वर्तमानसं-

१ ( अ० ४ पा० १ अ० १२ सू० २७ )।

कपालमिति, पुरोडाशार्थं कपालं पुरोडाशकपालम् । कथमेतदवगम्यते । पुरोडाशस्तावत्तस्मिन् काले नास्ति, येन वर्तमानः संबन्धः कपालेन स्यात् । तेनैव हेतुना न भूतः । स एष कपालस्य पुरोडाशेन भविष्यता संबन्धः । भविष्यता संबन्धश्च तन्निमित्तस्य भवति । तस्मात्पुरोडाशेन प्रयुक्तं यत्कपालं, तेन तुषा उपवप्तव्या इति । एवं च सति चरौ पुरोडाशाभावे यदा तुषानुपवप्तुं कपालमुपादीयते, न तत्पुरोडाशकपालं स्यात् । न चेन्न तेन तुषा उपवप्तव्या भवन्ति । तस्मान्न तुषोपवापः कपालानां प्रयोजकः । प्रयोजकं तु श्रपणमिति ॥ २६ ॥

( शकृल्लोहितयोः पश्वप्रयोजकत्वाधिकरणम् ॥ १२ ॥ )

[१२] पशावनालम्भाल्लोहितशकृतोरकर्मत्वम् ॥ २७ ॥ सि०

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः । तत्र श्रूयते । हृदयस्याग्रेऽवद्यत्यथ जिह्वाया इत्येवमादि । तथा, लोहितं निरस्यति, शकृत्संप्रविध्यति, स्थविमतो बर्हिरङ्क्त्वाऽपास्यतीति । तत्र संदेहः । किं हृदयादिभिरवदानैरिज्या पशोः प्रयोक्त्री, उत शकृत्संप्रव्याधो लोहितनिरसनं च तदपि प्रयोजकमिति । किं प्राप्तम् । एकनिष्पत्तेः सर्वं समं स्यात् । उभयं प्रयोजकमिति । एवं प्राप्ते ब्रूमः पशौ शकृल्लोहितयोरप्रयोजकत्वम् । न हि तदर्थः पशोरालम्भः । शकृत्संप्रविध्यति, लोहितमपास्यतीत्युच्यते । न पशोरन्यस्य वेति । पशुरग्नीषोमीयो वाक्येन, यो दीक्षितो यदग्नीषोमीयं पशुमालभते, इति । शकृल्लोहिते पशोः प्रकरणेन भवेतां, प्रकरणं च वाक्येन बाध्यते । नन्वेते शकृल्लोहिते प्रतिपाद्येते, तेन यागार्थस्य पशोर्नान्यस्येति निश्चयः । एवं चेदप्रयोजके शकृल्लो-

---

योगे पुरोडाशकपालं मुख्यम् । भूतभविष्यतोर्भूते लक्षणा । आसीदन्यस्मिन्काले । भविष्यति नास्ति लक्षणा । पात्रासादनकाले प्रयोजनमुररीकृत्य तानि साद्यन्ते । तस्माद्वर्तत एव तेषां प्रयोजनम् । तस्माद्भविष्यतैव संयोगेन यन्निर्दिश्यान्यत्रोपदिश्यते, तदप्रयोजकम् । परकीयत्वाद्द्रव्यस्य । अवघातकाले[2] यत्तुषानिरसनं तदिहोदाहरणम् ॥ २९ ॥ [ २७ ॥ २८ ॥ ]

---

१ संबन्धश्च निमित्तस्य भविष्यति, इति पा° । २ अवघातकाले यत्तुषनिरसनमिति । अनेन च प्रणीतानिनयनकालीनतुषोपवापोऽनुदाहरणमित्युक्तं भवति । स तु प्रधानयागोत्तरं वाजसनेयिनामाम्नातः । सोऽपि च कपालधारणस्यैव प्रयोजको न तूपादानस्येति ध्येयम् ।

हिते इति । किं भवति प्रयोजनम् । साम्ये सति शकृल्लोहिताभावेऽन्यः पशुरालम्भनीयः, शकृल्लोहितयोरप्रयोजकत्वे लोपः ॥ २७ ॥

( स्विष्टकृतः पुरोडाशाप्रयोजकत्वाधिकरणम् ॥ १३ ॥ )

[१३] एकदेशद्रव्यं चोत्पत्तौ विद्यमानसंयोगात् ॥२८॥ सि०

दर्शपूर्णमासयोः श्रूयते, उत्तरार्धात्स्विष्टकृते समवद्यति, इति । तत्र संदेहः । किं [१]पुरोडाशस्याऽऽग्नेययागः प्रयोजकः, स्विष्टकृदप्रयोजक उतोभयमिति । किं प्राप्तम् । एकनिष्पत्तेः सर्वं समं स्यादिति । एवं प्राप्ते ब्रूमः । एकदेशद्रव्यं चैवंजातीयकोऽप्रयोजको भवेत् । कुतः । विद्यमानसंयोगात् । नैकदेशकर्मावयविनं प्रयुङ्क्ते । विद्यमानस्यावयविन एकदेश उपादातव्य इति तत्रार्थो भवति नावयविनमुपाददीतेति । यथेक्षुखण्डमस्मै प्रयच्छ, मोदकशकलमस्मै प्रयच्छेति, नेक्षुमुपाददीतेति गम्यते । सत इक्षोः खण्डमुपाददीत, सतो मोदकाच्छकलमुपाददीतेति । तस्मादन्यार्थं द्रव्यं, तस्योत्तरार्धादवदेयम् । अस्ति चाग्न्यर्थः पुरोडाशः । तस्मात्स्विष्टकृदप्रयोजक इति ॥ २८ ॥

निर्देशात्तस्यान्यदर्थादिति चेत् ॥ २९ ॥

इति चेत्पश्यसि, अप्रयोजकः पुरोडाशस्य स्विष्टकृदिति । नैतदेवम् । अग्निं प्रति निर्देशात्तस्य पुरोडाशस्य स्विष्टकृदर्थमन्यः पुरोडाश उत्पादयितव्यो यस्योत्तरार्धात्स्विष्टकृदिज्येत । तस्याग्नये संकल्पितस्य नेष्टे यजमानः । कथमसौ तदन्यस्यै देवतायै दद्यात् । कथमग्निं प्रति निर्देश इति । इदं श्रूयते, अङ्गिरसो वा इत उत्तमाः सुवर्गं लोकमायंस्ते यज्ञवास्त्वभ्यायंस्ते पुरोडाशं कूर्मं भूत्वा सर्पन्तमपश्यंस्तमब्रुवन्, इन्द्राय ध्रियस्व बृहस्पतये ध्रियस्व, आदित्याय ध्रियस्व स नाध्रियत तमब्रुवन् अग्नये ध्रियस्वेति सोऽध्रियत । यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति, इति । तस्मात्तेन स्विष्टकृतो न संबन्धः । एवं चेत्तस्मादन्यद्द्रव्यमर्थादुत्पादयितव्यम् । न ह्यनुत्पन्नस्य द्रव्यस्योत्तरार्धो भवतीति ॥ २९ ॥

---

अ[२]ग्नये सकलस्य निर्देशात्तस्योत्तरार्धः कथमन्येन युज्यते । तस्मादर्थादन्यद्द्रव्यमुत्पाद्यम् । तस्योत्तरार्धात्स्विष्टकृदिज्या ॥ २९ ॥

---

१ किं पुरोडाशस्याऽऽग्नेयादियागः प्रयोजकः, स्विष्टकृद्यागश्च, उत स्विष्टकृदिज्याऽप्रयोजिकेतीति पा० ।
२ आग्नेय इति । इति पा० ।

न शेषसंनिधानात् ॥ ३० ॥

नैतदेवं, संनिहितो हि शेषः । यस्मिन्ननुत्पाद्यमानेऽर्थो न सिध्यति, सोऽर्थादुत्पाद्यते । संनिहिते च शेषे सति सिध्यत्युत्तरार्धाद्ग्रहणम् । तस्मान्नार्थाद्द्रव्यमुत्पादयितव्यं, यदेवान्यार्थं द्रव्यं संनिहितं तस्यैवोत्तरार्धाद्ग्रहीतव्यम् । उत्तरार्धमात्रं हि स्विष्टकृते श्रूयते, नामुष्य द्रव्यस्येति । न चैतावता व्यवहारो भवति । सर्वो हि कस्यचिदुत्तरार्धः । स एष संनिहितमपेक्षते । संनिहितं च परार्थम् । तस्मात्परार्थाद्द्रव्यात्स्विष्टकृदिज्या । अतश्चाप्रयोजिकेति । यदुक्तम् । अनीशानेन न शक्यं दातुमिति । तदुच्यते । वाचनिक एष शेषप्रतिपादनार्थ उत्सर्गः । स शक्यः कर्तुम् । दानं ह्युत्सर्गपूर्वकः परस्य स्वत्वसंबन्धः । स न शक्योऽनीशानेन ॥ ३० ॥

कर्मकार्यात् ॥ ३१ ॥

कर्मनिमित्तश्च स्विष्टकृतो भाग इति श्रूयते । कथम् । देवा वै स्विष्टकृतमब्रुवन् हव्यं नो वहेति । सोऽब्रवीद्वरं वृणै भागो मेऽस्त्विति । वृणीष्वेत्यब्रुवन् । सोऽब्रवीदुत्तरार्धादेव मह्यं सकृत्सकृदवद्यात्, इति । कर्म कुर्वतो भागोऽयमुत्तरार्धादिति स्तुतिर्भवति । यद्याग्नेयस्योत्तरार्धादित्युच्यते, ततोऽस्ति कर्मार्थेन भागेन सादृश्यमिदं, तदाग्नेयं हव्यं यत्किल वहसीति । तत्र सति सादृश्ये स्तुतिरुपपद्यते । प्रयोजकत्वे चासति सादृश्ये स्तुतिसामञ्जस्यं न स्यात् । तस्मादप्रयोजकः पुरोडाशस्य स्विष्टकृद्याग इति ॥ ३१ ॥

लिङ्गदर्शनाच्च ॥ ३२ ॥

लिङ्गमपि भवति, तद् यत्सर्वेभ्यो हविर्भ्यः समवद्यति । तस्मादिदमुदरे विश्वरूपमन्नं समवधीयते, इति । यदि परार्थाद्द्रव्यात्संनिहितादिज्यते तदा तत्संनिधानाविशेषात्सर्वेभ्योऽवदीयत इत्युपपद्यते । प्रयोजकत्वे त्वेकस्मादेवावदीयेत । तस्मादप्यप्रयोजकः । तथेदमपरं लिङ्गं, शेषादिडामवद्यति, शेषात्स्विष्टकृतं यजति, इति । नन्वयं विधिः स्यात् । नेति ब्रूमः । नात्र विधिविभक्तिः । वर्तमानापदेशो ह्ययमिति॥३२॥

---

उत्तरार्धादिति शेषश्रुत्यन्यथानुपपत्त्या शेषिणं प्रयुङ्क्ते । स चाग्निप्रयुक्तः शेषोऽस्ति । न चैवं श्रूयते पुरोडाशस्योत्तरार्धादिति । तस्मात्परप्रयुक्तद्रव्यनिष्पाद्यत्वात्पुरोडाशोत्तरार्धयोरप्रयोजकः ॥ ३० ॥ [ ॥ ३१ ॥ ३२ ॥ ३३ ॥ ]

( प्रयाजशेषाभिघारणाधिकरणम् ॥ १४ ॥ )

[१४] अभिघारणे विप्रकर्षादनुयाजवत्पात्रभेदः स्यात् ॥३३॥ पू०

अस्ति वाजपेयो, वाजपेयेन स्वाराज्यकामो यजेत, इति। तत्र श्रूयते, सप्तदश प्राजापत्यान्पशूनालभते, सप्तदशो वै प्रजापतिः प्रजापतेराप्त्यै, इति। प्राजापत्यानां क्रतुपशूनां च समुच्चयो वक्ष्यते, प्राजापत्येषु चाऽऽम्नानादिति। अस्ति तु प्रकृतौ, प्रयाजशेषेण हवींष्यभिघारयति, इति। तत्र संदेहः। किं प्राजापत्यानां वपा अभिघारयितुं प्रयाजशेषस्य धारणार्थं पात्रमपरमुत्पादयितव्यं, ततस्तेन प्राजापत्यानां वपा अभिघारयितव्या उत न शेषो धारयितव्यः, नैव ततः प्राजापत्यानां वपा अभिघारणीया इति। किं प्राप्तम्। अभिघारणे प्रयाजशेषधारणार्थं पात्रमुत्पाद्यते। प्रातःसवने च प्रयाजशेषः, विप्रकृष्टे काले माध्यंदिने सवने ब्रह्मसामकाले प्राजापत्यानामालम्भः श्रूयते, तान्पर्यग्निकृतानुत्सृजन्ति। ब्रह्मसाम्न्यालभते, इति। व्यापृता च जुहूर्भवति। तस्मात्पात्रान्तरमुत्पादनीयमिति। यथाऽनुयाजेषु पृषदाज्यधारणार्थं पात्रमुत्पाद्यते, पृषदाज्येनानुयाजान्यजति, इति वचनात्। एवमत्रापीति ॥ ३३ ॥

न वाऽपात्रत्वादपात्रत्वं त्वेकदेशत्वात् ॥ ३४ ॥ सि०

न वा प्राजापत्यानां वपा अभिघार्याः। कुतः। शेषाभावात्। कथं शेषाभाव इति चेत्। अपात्रत्वात्। कथमपात्रता। एकदेशत्वात्। प्रयाजार्थस्य हि गृहीतस्याऽऽज्यस्य स एकदेशः शेषः। किमतो यद्येवम्। एकदेशव्यापारः श्रूयमाणो नावयविनमुपादेयत्वेन चोदयति। आह। उत्पत्तिं न चोदयेत्। धारणमुत्पन्नस्यार्थाद्भविष्यतीति। उच्यते।

---

प्रकृतावपि संभवति विचारे विकृतिरुदाहृता। तद्विषयाणि लिङ्गदर्शनान्युपात्तानि सूत्रकारेण। प्रयाजशेषेणेत्युच्चार्यमाणमेवान्यत्र शेषत्वेनोपयुक्तं दर्शयति। तस्मादीदृशं नान्येन प्रयुज्यते। यथोत्तरार्धः स्विष्टकृता। कृतार्थं चेद् द्रव्यं प्रतिपत्तिमपेक्षते। तत्सर्वहविःष्वेव प्रतिपाद्यते। ततो नियमादृष्टमात्रम्। अनुपादीयमानत्वाद्धविषां संख्याऽविव-

---

१ ( अ० १० पा० ४ अ० ४ सू० ६ )। २ अपात्रतैकदेशत्वादिति पा०।

एकदेशत्वादभिघारणं द्रव्यमेव न प्रयुङ्क्त इत्युच्यते । कृतार्थस्य द्रव्यस्यायमेकदेशः प्रतिपाद्यते, नाभिघारणमर्थकर्म । ननु हविषां द्वितीयानिर्देशात्प्राधान्यं स्यात् । नेत्युच्यते । अदृष्टो हि हविषामुपकारः कल्प्येत । आज्यप्राधान्ये पुनर्जुह्वा रिक्तत्वं दृष्टं प्रयोजनम् । आज्यभागार्थेनाऽऽज्येनासंसर्गो जुह्वा रिक्तया प्रयोजनं, नाभिघृतेन हविषा । तस्मात्प्राजापत्यानामभिघारिताभिर्वपाभिः प्रयोजनमेव नास्ति, किमर्थं शेषो धार्येत इति ॥ ३४ ॥

## हेतुत्वाच्च सहप्रयोगस्य ॥ ३५ ॥

हेतुत्वाच्चाभिघारणस्य, सहाऽऽलभते, इति स्तुतिर्भवति । तीर्थं वै प्रातःसवनं, यत्प्रातःसवने पशव आलभ्यन्ते, तीर्थ एवैतानालभते, सयोनित्वायाथो वपानामभिघृतत्वाय, इत्यर्थान्तरेण वपाभिघारणमनुगृह्णन्नेहास्तीति दर्शयति ॥ ३५ ॥

## अभावदर्शनाच्च ॥ ३६ ॥

अभावं खल्वप्यभिघारणस्य दर्शयति, सव्या वा एतर्हि वपा यर्हि अनभिघृता, ब्रह्म वै ब्रह्मसाम, यद्ब्रह्मसाम्न्यालभते तेनासव्याः, तेनाभिघृता इति । सव्यशब्दो रूक्षे भाष्यते । सव्या वपा, इत्यनभिघृततां दर्शयति ॥ ३६ ॥

## सति सव्यवचनम् ॥ ३७ ॥

आह—नैतद्दर्शनं, सत्येव ह्यभिघारणे भवत्येतत्सव्यवचनम् । अस्ति हि वपाया [1]अन्यदभिघारणम् । उपस्तृणात्याज्यं, हिरण्यशकलं, वपा, हिरण्यशकलं, ततोऽभिघारयति, इति । तस्मिन्सति कथं सव्या भवेयुः । श्रूयते च । तस्मान्नैतच्छक्यमवगन्तुं, रूक्षास्ता वपा दृश्यन्त इति । तेन नूनमभिघारणं प्रयाजशेषेणास्तीति । सति अस्मिन्नभिघारणे प्रत्यक्षमरूक्षास्ताः । अतो रूक्षावचनं व्यामोह इति ॥ ३७ ॥

## न तस्येति चेत् ॥ ३८ ॥

एवं चेद् दृश्यते, सत्यभिघारणे सव्या इति वचनमलिङ्गमिति ।

क्षिता । जुह्वा च रिक्तया प्रयोजनम् । यत्तया होष्यते, तत्कथमसंसृष्टं स्यात् । तस्मात्प्रतिपत्तिरपेक्षिता । हविःसंस्कारस्य त्वनपेक्षितत्वाददृष्टं कल्प्यम् । ततो हवींष्यप्रयोजकानि । अधिकरणत्वमेव त्वत्र विवक्षितं न तु व्याप्यमानत्वम् ॥ ३४ ॥ [ ३९ ॥

१ मूले चेति पा० । २ प्रत्यक्षे रूक्षास्ता इति दर्शनं व्यामोह इति पा० ।

नालिङ्गं, तस्यैतद्वचनं यत्स्नेहनं करोति । कतमत्तत् । यत्प्रथमम् । प्रथमं हि स्नेहनं करोति, न द्वितीयम् । स्निग्धस्य तद्भवति । न च स्निग्धस्य स्नेहनं क्रियते, यथा भवति लोके वादो, यदस्माभिः कान्ताराभ्निर्गतैर्देवदत्तस्य गृहे स्निग्धमन्नं भुक्तं, तेन वयमरूक्षाः कृता इति, सत्स्वप्यन्येषु स्निग्धेष्वेव भोजनेषु । एवं तस्यारूक्षाकरणस्याभिघारणस्याभावाद्रूक्षा इति वचनमुपपद्यते, अस्मिंस्तु सति नोपपद्यते । तस्मादपि प्रयाजशेषेणाभिघारणं प्राजापत्यानां नास्तीति ॥ ३८ ॥

स्यात्तस्य मुख्यत्वात् ॥ ३९ ॥

इदं पदोत्तरं सूत्रम् । यदि प्रथमस्याभावात्, सव्या इति वचनं भवत्यनुपपन्नं, तर्ह्यन्यस्य प्रथमस्य विद्यमानत्वात् । कतमत्तत् । यच्छ्रप्यमाणाया अपरमुद्वासितायाः । अत्रोच्यते । स्यात्तस्य मुख्यत्वात् । यत्प्रयाजशेषेणाभिघारणं तस्यैवाभावादेतदुपपद्यते, सत्यपि श्रप्यमाणाया अभिघारण उद्वासितायाश्च । यत्तावच्छ्रप्यमाणायास्तदग्नेरर्चींषि दहन्ति, यदुद्वासितायास्तदग्न्यवयवा ऊष्मावयवाश्च नाशयन्ति । सैषा रूक्षैव । इदं तु प्रयाजशेषेण शीतायाः क्रियते । तत् स्नेहयाति । तेन स्निग्धायाः प्रदानकालमभिघारणं यत्, तन्न स्नेहयाति । तदिदं स्नेहनस्याभिघारणस्याभावात्सव्यतावचनमुपपद्यत इत्युक्तम् । तस्मान्न प्रयाजशेषो धार्यत इति ॥ ३९ ॥

( प्रयाजद्रव्यस्य समानयनादिप्रयोजकत्वाधिकरणम् ॥ १९ ॥ )

[ १५ ] समानयनं तु मुख्यं स्याल्लिङ्गदर्शनात् ॥ ४० ॥ सि०

दर्शपूर्णमासयोः श्रूयते, अतिहायेडो बर्हिः प्रति समानयतीति । तत्र संदेहः । किं समानयनमाज्यस्य धर्माणां च प्रयोजकमुताप्रयोजकमिति । किं प्राप्तम् । अप्रयोजकमिति । कुतः । प्रयाजानुयाजार्थस्याऽऽज्यस्यायमेकदेशः समानीयत इति पूर्वेण न्यायेनाप्रयोजकता प्राप्ता । तदुच्यते । मुख्यं समानयनं, लिङ्गदर्शनात् । किं लिङ्गम् ।

---

३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ]

अप्रयोजकं समानयनम् । प्रयाजानुयाजार्थस्यायमेकदेशः समानीयत इति पूर्वेण न्यायेनाप्रयोजकतेत्ययुक्तो ग्रन्थः । यदि प्रयाजानुयाजार्थमेतत्, प्रयाजा आत्मीयं द्रव्यं प्रयुञ्जत एव, कथमप्रयोजकता । अतः पूर्वेणोत्तरं न संबध्यते ।

चतुर्गृहीतान्याज्यानि भवन्ति । न ह्यत्रानुयाजान् यक्ष्यन् भवति, इत्यातिथ्यायां श्रूयते । यदि प्रयाजार्थं समानयनं, ततस्तत्रैकं चतुर्गृहीतं समानीयते । एकमप्यनुयाजानां भवति । ततश्चाऽऽतिथ्येडान्ता संतिष्ठत इत्यनुयाजाभावे, उपभृति समानयनार्थमेकं चतुर्गृहीतं ग्राह्यं, न त्वनुयाजार्थम् । तत्र बहूनां चतुर्गृहीतानां दर्शनमुपपद्यते । इतरथा ह्यनुयाजाभावे नैवोपभृति चतुर्गृह्येत । तत्र चतुर्गृहीतानीति बहुवचनं नोपपद्यते । तस्मात्प्रयोजकं समानयनमिति । ननु लिङ्गमुपदिश्यते । का प्राप्तिः । उच्यते । दृष्टं तत्र प्रयोजनम् । प्रयाजौ द्वौ यष्टव्यौ । तत्र

तत्र कैश्चित्प्रयाजशब्दं त्यक्त्वाऽनुयाजार्थस्यायमेकदेशः समानीयत इत्येवं ग्रन्थो नीतः । अपरैः प्रयाजानुयाजार्थस्यायमेकदेशः समानीयत इति । अन्यैस्तु ‘ यदुपभृति गृह्णात्यनूयाजेभ्यस्तद्गृह्णाति ’ इत्यनेन पूर्वपक्षेणात्र पूर्वपक्षः कृतः । त्रीण्यप्येतान्ययुक्तानि । एकैर्ग्रन्थः परित्यक्तः, अपरैरधिकरणत्वमसंभवि प्रयाजानां निर्दिष्टम्, अन्येषां ग्रन्थपरित्यागस्तदवस्थ एव, असिद्धेन चासिद्धं साध्यते । तस्मादुत्तरग्रन्थानुरोधेनान्यथा वर्ण्यते ।

उपभृति द्वे चतुर्गृहीते प्रयाजानुयाजार्थे । प्रयाजानुयाजेभ्यस्तद्गृह्णातीति समासोऽयम् । तत्र प्रयाजप्रातिपदिके विभक्तिर्न श्रूयते । भवितव्यं च तया । तदुत्तरपदे या विभक्तिः सा तन्त्रेण द्रष्टव्या, श्रुतत्वात्तस्याः । अन्यस्यामानीयमानायां श्रुतहानमश्रुतकल्पना च । तस्मात्प्रयाजेभ्य इति बहुवचनसामर्थ्यात्सर्वप्रयाजानामौपभृतं जौहवं च । ‘ जुह्वा जुहोति ’ इति यस्मिन्नेव काले प्रयाजाञ्जुहोति तस्मिन्नेव काले यदौपभृतं प्रयाजार्थं तज्जुह्वामानयति । अत उत्पत्त्यपेक्षायां यदुपभृति प्रयाजानुयाजार्थं च द्रव्यं गृहीतमासीत्तदस्मिन्कालेऽतिहाय्येडो बर्हिः प्रति समानयतीति । आदावेव प्रयाजार्थस्य समानीतत्वान्न विद्यत इत्यनुयाजार्थं केवलमास्ते, तत्समानीयमानं परकीयत्वादप्रयोजकमदृष्टार्थं च ।

सिद्धान्तस्तु, यदौपभृतं समानयते जुह्वां तदतिहायेडो बर्हिरिति—अस्मिन्काल इति कालनियमो विधीयते । तस्मात्प्रयाजत्रयस्य जौहवं, द्वयोरौपभृतं, अतिहायेडो बर्हिः

१ सूत्रे भाष्ये च समानयनपदं समानयनकालीनप्रयाजद्रव्यपरं विज्ञेयम् । इतरथाऽऽज्यसंस्कारकस्य समानयनस्याऽऽज्यप्रयोजकत्वानुपपत्तेः । २ अतिहायेडो बर्हिः प्रतीति—इडप्रयाजोत्तरं बर्हिः प्रयाजोपक्रमकाले, इत्यर्थः ।

जुह्वामाज्येन प्रयोजनं, नोपभृति रिक्तायाम् । उपभृतो रेचनमदृष्टार्थं, जुह्वां निधानं दृष्टार्थमेव । तेन प्रयाजहोमार्थमाज्यसमानयनमौपभृतमाज्यं प्रयोजयति । तदपि हि प्रयाजार्थमनुयाजार्थं चेति वक्ष्यते । ४० ॥

वचने हि हेत्वसामर्थ्यं ॥ ४१ ॥

अथ कस्मान्न वचनमेतत्, चतुर्गृहीतान्याज्यानीति । उच्यते । वचने हि हेतुरसमर्थितः स्यात्, न ह्यत्रानुयाजान्यक्ष्यन् भवति, इति । यदा समानयनं न प्रयाजार्थमिति गम्यते, तदा वचनम् । यदा वचनं, तदा नानुयाजाभावो हेतुः । असति हेतौ, न ह्यत्रानुयाजान्यक्ष्यन् भवतीति हेतुवन्निगदो नोपपद्येत । तस्मात्प्रयाजार्थं समानयनं प्रयोजकमौपभृतस्याऽऽज्यस्य । किं भवति प्रयोजनम् । प्रयाजार्थे समानयने यावत्प्रयाजार्थं, तावत्सर्वं समानेयमर्धमौपभृतस्य । अप्रयोजकत्वे न नियोगतोऽर्धं यावत्तावद्वा ॥ ४१ ॥

( औपभृताज्यस्य प्रयाजानुयाजार्थताधिकरणम् ॥ ११ ॥ )

[ १६ ]तत्रोत्पत्तिरविभक्ता स्यात् ॥ ४२ ॥ पू०

दर्शपूर्णमासयोः श्रूयते, चतुर्जुह्वां गृह्णाति, अष्टावुपभृति गृह्णाति, इति । तत्र संदेहः । किं जौहवमौपभृतं चोभयमुभयार्थं—प्रयाजेभ्यश्चानुयाजेभ्यश्च, उत जौहवं प्रयाजेभ्यः, औपभृतमनुयाजेभ्यः । अथवा, औपभृतं प्रयाजेभ्योऽनुयाजेभ्यश्चेति । किं प्राप्तम् । उभयमुभयार्थम् । कुतः । यद्यदाज्येन क्रियते, तस्मै तस्मै भवितुमर्हत्यविशेषात् ॥ ४२ ॥

तत्र जौहवमनुयाजप्रतिषेधार्थम् ॥ ४३ ॥ सि०

नैवम् । उभयमुभयार्थमिति । जौहवं प्रयाजार्थम्, औपभृतमुभयार्थम् । कथम् । यज्जुह्वां गृह्णाति, ऋतुभ्यस्तद्गृह्णाति, ऋतवो वै प्रयाजा

---

प्रति समानयतीति । सत्यपि तुल्यकार्यत्वे नास्ति विकल्पो, भिन्नविषयत्वात् । समासेऽपि द्वयोरौपभृतस्य प्रमाणान्तरावगतत्वाद्विरोधान्न श्रुता विभक्तिर्ग्रहीतव्या । द्विवचनमध्याह्रियते प्रयाजाभ्यामिति । तस्मात्प्रयोजकम्[१] ॥ ४० ॥ [ ४१ ] ॥

प्रसङ्गानुप्रसङ्गेनाऽऽरभ्यते । तस्याऽऽज्यप्रयोजकत्वे स्थिते चास्मिन्पूर्वाधिकरणारम्भः । असंयुक्तोत्पन्नानि प्रकरणिना गृह्यन्ते । तस्माद्यद्यदाज्यसाध्यं तत्र तत्रैतानि । ४२॥

'चतुर्जुह्वां गृह्णाति' इत्युत्पद्यमानं जौहवमभिलषति किं मया कर्तव्यमिति । प्रयाजा·

---

१ प्रयोजकमिति—प्रयाजद्वयं समानयनस्य तत्संस्कृताज्यस्य चेति शेषः ।

इति जौहववचनमनुयाजप्रतिषेधार्थं प्रयाजान् संकीर्तयति । आह । ननु नास्त्यत्रानुयाजप्रतिषेधार्थं वचनम् । यदेतत्प्रयाजेभ्यस्तद्गृह्णातीति, प्रयाजेषूपदेशकमेतत् । नास्त्यस्यानुयाजप्रतिषेधे सामर्थ्यमिति । उच्यते । न ब्रूमः प्रतिषेधकमेतदिति । किं तूत्पत्तिवाक्य आज्यानां नैव प्रयोजनाभिसंबन्धः । अनेन वचनेन प्रयाजप्रयोजनता क्रियते जौहवस्य । अनुयाजप्रयोजनताऽस्य वचनाभावादेव न गम्यत इति, अनुयाजप्रतिषेधार्थं वचनमित्युच्यते ॥ ४३ ॥

## औपभृतं तथेति चेत् ॥ ४४ ॥

इति चेद् दृश्यते, जौहवमनुयाजेभ्यः प्रतिषिध्यते, औपभृतमुभयार्थमिति । भवतु जौहवं प्रयाजार्थं, न त्वौपभृतमुभयार्थम् । तदपि तथा स्यात्, यथा जौहवम् । कथम् । एतदप्यनुयाजार्थमेव श्रूयते, यदुपभृति गृह्णात्यनुयाजेभ्यस्तद्गृह्णाति । छन्दांसि ह्यनुयाजा इति, अनुयाजार्थताऽस्येति ॥ ४४ ॥

## स्याज्जुहूप्रतिषेधान्नित्यानुवादः ॥ ४५ ॥

नैतदेवम् । उभयार्थं ह्यौपभृतम् । एवं हि श्रूयते । यदष्टावुपभृति गृह्णाति प्रयाजानुयाजेभ्यस्तद्गृह्णातीति । ननूक्तमनुयाजेभ्यस्तद्गृह्णातीत्यनुयाजार्थताऽस्येति । उच्यते । जुहूप्रतिषेधान्नित्यानुवादः । उभयस्मिन्नौपभृते जौहवे चोभयार्थे प्राप्ते जौहवमनुयाजेभ्यः प्रतिषिद्धं, नौपभृतम् । तदौपभृतस्योभयार्थतायां सत्यामनुयाजार्थतावचनं नित्यानुवादो भवितुमर्हति, न शक्नोति प्रयाजार्थतां प्रतिषेद्धुम् । प्रत्यक्षश्रुता हि सा । तस्मादौपभृतमुभयार्थम् । समानयनं च ततो जुह्वां श्रूयते । तस्मादपि प्रयजार्थता न शक्या बाधितुम् ॥ ४५ ॥

---

श्चोत्पद्यमाना एव द्रव्याभिलाषिणः । तयोः श्रुतेन वाक्येन संबन्धे द्वयोरपि परस्परनियमादन्यत्र प्रसङ्ग एव नास्ति । एवं ध्रौवोपभृतयोः । एवं चेत्प्रतिषेधफलत्वात्प्रतिषेध उक्तः ॥ ४३ ॥

यदि श्रुतेन नैराकाङ्क्ष्यान्नान्यार्थत्वम्, औभृतमनुयाजार्थत्वेन निराकाङ्क्षीकृतत्वान्न प्रयाजार्थं स्यात् ॥ ४४ ॥

प्रयाजानुयाजार्थत्वेऽवधृते ज्ञायत एवैतदनुयाजार्थमिति । यदि त्वनुयाजार्थमेवैतत्ततः प्रयाजार्थमित्यशक्यं वक्तुम् । तस्मादयमनुवादोऽपि न घटते । तस्मात् 'प्रयाजानुयाजेभ्यस्तद्गृह्णाति' इत्यस्यान्यथाऽऽनर्थक्यादितरोऽनुवादः ॥ ४५ ॥

( उपभृति चतुर्गृहीतद्वयविधानार्थताधिकरणम् ॥ १७ ॥ )

## [१७] तदष्टसंख्यं श्रवणात् ॥ ४६ ॥ पू०

अष्टावुपभृति गृह्णाति, इति श्रूयते। तत्र संदेहः। किं तदौपभृतमाज्यमष्टसंख्येन ग्रहणेन संस्क्रियते, उत चतुःसंख्या गुणभूता द्वयोर्ग्रहणयोरिति। किं तावत्प्राप्तम्। अष्टसंख्या गुणभूता, न चतुःसंख्ये द्वे इति। कुतः। श्रवणात्। अष्टसंख्या श्रूयते। चतुःसंख्ये द्वे अष्टसंख्यया लक्ष्येते। श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, तस्मादष्टसंख्यं ग्रहणमेतदिति ॥ ४६ ॥

## अनुग्रहाच्च जौहवस्य ॥ ४७ ॥

अनुग्रहवादश्च भवति। चतुर्गृहीतं वा एतदभूत्तस्याऽऽघारमाघार्य त्रीनितः प्राचीनान् प्रयाजान् यजति, समानयते चतुर्गृहीतत्वायेति चतुर्गृहीतानुग्रहः कथं स्यादिति। किं चतुर्गृहीतं भवति समानयनेन। नेति ब्रूमः। चतुर्गृहीतं प्रथममेव तत्। आघारेऽप्याघारिते, यदवशिष्टं चतुःसंख्यमेव तस्य ग्रहणमासीत्। किं तर्हि, चतुर्गृहीतत्वायेति। चतुर्गृहीतस्यानुग्रहार्थम्। अल्पं हि चतुर्गृहीतं होमायापर्याप्तं तत्पर्याप्तं कथं स्यादिति। एवं चतुर्गृहीतशब्देनाल्पमिति लक्ष्यते। अल्पत्वं च बहुत्वं कस्यचिदपेक्ष्य भवति। यदि ह्यौपभृतमष्टसंख्यमेवं चतुर्गृहीतमल्पं भवति। तत्र चतुर्गृहीतशब्देनाल्पता शक्यते लक्षयितुम्। तस्मादपि पश्याम औपभृतेऽष्टसंख्या गुणभूतेति ॥ ४७ ॥

---

अष्टसंख्याविशिष्टं ग्रहणमुत्पद्यते। तत्र यथा कश्चिच्चत्वारि चतुर्गृहीतानि न सन्ति। एवं द्वे चतुर्गृहीते न स्त एव। लक्षणया तु गम्येते। श्रुतिसंभवे त्वयुक्ता सा। तस्मादष्टगृहीतं प्रयाजानुयाजार्थमिति। एवं चेदनुयाजाभावेऽप्यष्टसंख्यापरिच्छिन्नमेव साधनम्। प्रयाजानुयाजार्थयोश्चतुर्गृहीतयोरुपभृदाधार इति चेत्। तन्न। अष्टसंख्याधारविशिष्टमेवात्र ग्रहणमुत्पद्यते। अतोऽष्टसंख्या विधीयमानत्वान्नानूद्यते। अनुवादासंभवाच्च न शक्यते द्वे चतुर्गृहीते लक्षयितुम् ॥ ४६ ॥

न तावत्समानयनेन चतुर्गृहीतत्वं भवति। पूर्वमेव तस्य चतुःसंख्यापरिच्छिन्नत्वात्। इतरस्य च चतुःसंख्यत्वे कीदृशे अल्पत्वमहत्त्वे। यदि त्वष्टसंख्यापरिच्छिन्नमौपभृतं तत इतरस्याल्पत्वान्महत्त्वानुग्रहः क्रियते समानयनेन। तस्मादष्टगृहीतं चतुर्गृहीतापेक्षया महत्। तेनाष्टगृहीतत्वं ज्ञापयति ॥ ४७ ॥

द्वयोस्तु हेतुसामर्थ्यं श्रवणं च समानयने ॥ ४८ ॥ सि०

तुशब्दः पक्षं व्यावर्तयति। द्वे एते चतुर्गृहीते। एवं हेतुः समर्थितो भवति। आतिथ्यायां, चतुर्गृहीतान्याज्यानि भवन्ति। न ह्यत्रानुयाजान्यक्ष्यन् भवति, इति। असत्स्वप्यनुयाजेष्वेतदष्टगृहीतमेवौपभृतं भवेत्। यदाऽष्टसंख्या गुणभूता, न तदा द्वयोश्चतुर्गृहीतयोः सतोश्चतुर्गृहीतान्याज्यानीति बहुवचनमाज्येषूपपद्यते। तस्माच्चतुर्गृहीते द्वे इति। आह। लिङ्गमेतत्। प्राप्तिरुच्यतामिति। तदभिधीयते। अनारभ्योच्यते, चतुर्गृहीतं जुहोतीति सर्वहोमेषु। तेन प्रयाजानुयाजेष्वपि न तदष्टगृहीतेन शक्यते बाधितुम्। नानाविषयत्वात्। अष्टगृहीतं हि ग्रहणे, चतुर्गृहीतं हि होमे। अस्ति हि संभवो यदष्टगृहीतं गृह्येत, चतुर्गृहीतं हूयेत। तदेतदिहाष्टत्वं ग्रहणे भवति। कथं द्वे चतुर्गृहीते होमे स्याताम्। तस्माद्द्वे एते चतुर्गृहीते अष्टगृहीते गृह्यमाणे गृह्येते। न हि द्वे चतुर्गृहीते अगृहीत्वाऽष्टगृहीतं कश्चित्संपादयेत्। तस्माद्द्वे एते चतुर्गृहीते इति। अथ यदुक्तमष्टगृहीतं श्रूयते। श्रुतिश्च लक्षणाया गरीयसीति। उच्यते। उक्तमस्माभिरष्टसंख्यायाः प्रयोजनं, कथं द्वे चतु-

---

द्वे एव चतुर्गृहीते। कुतः। अनारभ्यविधानाद्धोममात्रे चतुर्गृहीतम्। तत्र चतुःसंख्यापरिच्छिन्नं किमपि साधनमाकाङ्क्षति न संख्याम्। 'अष्टावुपभृति गृह्णाति' इत्यस्य साकाङ्क्षत्वम्। प्रयाजानुयाजाश्च प्रयोजनं दीयते। तस्माद्यद्यप्यौपभृते संख्याऽस्ति तथाऽपि चतुर्गृहीतसंख्याया अस्तित्वाद्द्रव्यं गृह्यते। अष्टसंख्या श्रुतिवृत्ता न संबध्यते होमेन, संख्यान्तरावरुद्धत्वात्। तस्मादष्टसंख्या द्वे चतुःसंख्ये लक्षयति, न चतुःसंख्याऽष्टसंख्यां लक्षयितुं समर्था, व्याप्त्यभावात्। अथवा, किमत्रानारभ्यविधिना। न्यायादेवायमर्थो लभ्यते। अष्टसंख्याग्रहणं यदा प्रयाजानुयाजेभ्यो वाक्येन दीयते तदा न्यायादेकत्रार्धमितरत्रार्धमिति। यथा शतमाभ्यां दीयतामित्युक्ते समर्पणवेलायां पञ्चाशत्संख्यावच्छिन्नमर्पयतीति न तत्परिच्छिन्नं होमसाधनम्। अनारभ्यवादेनापि योऽर्थो न्यायादेव प्राप्यमाणः स एव प्राप्यते।

नन्वेवमनारभ्यविधिरनुवादः स्यात्। उच्यते। विवक्षाभेदेऽनुवादो दोषो भवति। नत्विह विवक्षाभेदः। य एवार्थो विधौ, सोऽनुवादेऽपि। अथवा यत्प्रयाजानुयाजयोश्चतुर्गृहीतं गृह्णाति तदष्टावुपभृतीति, नैव ग्रहणं विधीयते। ग्रहणे त्वर्थप्राप्ते एकपात्रता विधीयते। अष्टसंख्याश्रवणाद्भिन्नकालता नानापात्रता चोभयं निवर्त्यते। अत

गृहीते स्यातामिति । अपि चाष्टावुपभृति गृह्णातीत्युपभृति समानीते द्वे चतुर्गृहीते कथं स्यातामिति । इतरथाऽसत्यष्टशब्दे नानापात्रयोर्गृह्येयाताम् । तस्मादष्टशब्दश्रवणमदोषः । साध्वेतत्, द्वे चतुर्गृहीते उपभृतीति । प्रयोजनं, द्वयोश्चतुर्गृहीतयोः सतोः समानयनेऽर्धं समानेतव्यं भवति । अष्टगृहीते सति न नियोगतोऽर्धम् । तथा यत्रानुयाजार्थं न ग्रहणं तत्राप्यष्टगृहीतं यथा पूर्वः पक्षः । यथा च सिद्धान्तस्तथा चातुर्मास्येषु चतुर्गृहीतमुपभृति भवतीति ॥ ४८ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये चतुर्थस्याध्यायस्य प्रथमः पादः ॥ १ ॥

====

## अथ चतुर्थाध्याये द्वितीयः पादः ॥

( स्वरोश्छेदनाद्यप्रयोजकताधिकरणम् ॥ १ ॥ )

**[ १ ] स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् ॥ १ ॥ पू०**

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयो, यो दीक्षितो यदग्नीषोमीयं पशुमालभते, इति । तत्रेदमाम्नातम् । खादिरे बध्नाति, पालाशे बध्नाति, रौहितके बध्नाति, इति । तत्संनिधाविदमपरमाम्नायते । स्वरुणा पशुमनक्ति, यूपस्य स्वरुं करोति, इति ।

अथेदानीमिदं संदिह्यते, किं भेदेन यूपात्स्वरुरुत्पादयितव्य उत

---

आह—उपभृति समानीते द्वे चतुर्गृहीते कथं स्यातामिति । असत्यष्टशब्दे नानापात्रयोर्गृह्येयाताम् । अथवोपभृदष्टसंख्याग्रहणानि सर्वाण्यत्र विधीयन्ते । तस्यार्धं होमे विधीयते । तस्माच्चतुःसंख्या होमे, अष्टसंख्या ग्रहणे । द्वयोरपि भिन्नविषयत्वान्न विरोध इति नाष्टत्वेन चतुष्ट्वं बाधितुं शक्यते । न च होमार्थत्वात्तुल्यार्थतां प्राप्य बाधः, अङ्गगुणेन प्रधानगुणबाधस्यान्याय्यत्वात् । तेन ग्रहणगताऽष्टसंख्या चतुष्टद्वयनिष्पादकत्वेन होमाङ्गं भवति । तस्माच्चतुःसंख्याकं ग्रहणद्वयमेतदिति । न नियोगतोऽर्धमित्ययुक्तम् । न्यायादर्धमेव प्राप्नोति । एवमपरितुष्टो द्वितीयं प्रयोजनमाह ॥ ४८ ॥

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां चतुर्थाध्याये प्रथमः पादः ॥ १ ॥

---

'यूपस्य स्वरुं करोति' इत्यत्र करोतिरभूतप्रादुर्भाववचनः । तस्य किं कर्मेत्याकाङ्क्षायां स्वरुमिति । तस्मात्स्वरुर्भाव्यमानः । तस्य च करणेतिकर्तव्यताकाङ्क्षायां यूपशब्दो

यूपं क्रियमाणमनुनिष्पन्नः शकलो ग्रहीतव्य इति। तत्रेदं तावन्नः परीक्ष्यं, किं छेदनाद्युत्पत्तेः प्रयोजकः स्वरुः, उताप्रयोजक इति। प्रयोजकश्चेच्छेदेन यूपाक्षिप्याद्येत। न चेत्प्रयोजको, यूपं निष्पाद्यमानमनुनिष्पन्नः शकलो ग्रहीष्यत इति। स कथं प्रयोजकः स्यात्कथं वा न प्रयोजक इति। यद्येषा वचनव्यक्तिः, स्वरुशब्दवाच्यं भाव्यते। कथम्। जोपणादिना-इतिकर्तव्यताविशेषेणेति। ततः, स्वरुणा पशुमनक्ति, इति स स्वरुरित्यवगतो ग्रहीष्यते। ततः प्रयोजकः। अथैवं विज्ञायते, स्वरुणा पशुमनक्तीति, अनवगतः स्वरुः। एतावदवश्यं विज्ञायतेऽञ्जनं तेन क्रियत इति। इदमपि, यूपस्य स्वरुं करोति, इति यूपैकदेशं स्वरुकार्येऽञ्जने विनियुङ्क्त इति, ततोऽप्रयोजकः। किं तावत्प्राप्तम्। स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात्। स्वरुर्न यूपेनैकनिष्पत्तिः स्यात्। यूपमनपेक्षमाणस्य स्वरोर्जोषणादिनोत्पत्तिः। कुतः। स्वकर्मशब्दत्वात्। स्वो ह्यस्य कर्मशब्दः, स्वरुताया विधायको भवति, स्वरुं करोतीति। एवं च यूपकाष्ठावयवस्य स्वरुत्वं क्रियत इति। यूपस्य स्वरुं करोति, इति लक्षणया यूपशब्दः, खदिराद्यवयवस्येत्यर्थः। कुतः। स्वरुत्वभावना हि श्रुत्या गम्यते, स्वरुं करोतीति, स्वरुमुत्पादयतीति। यूपावयवोपादानं वाक्येन। वाक्याच्च श्रुतिर्बलीयसीति। तस्मादेवं सति न नियोगतो यूपकाष्ठादेव स्वरुरुत्पादयितव्यः। निरपेक्षादन्यस्मादपि वृक्षात्कर्तव्यो भेदेनेति॥ १॥

जोषणादिकामितिकर्तव्यतां लक्षयति, खदिरादि च काष्ठं करणम्। सा च ' यूपं तक्षति ' इतीतिकर्तव्यताऽस्यापि वाक्येन। यदि च यूपशब्द इतिकर्तव्यतां न लक्षयेदनर्थकमेवास्योच्चारणं भवेत्। यत्स्वरुं करोति तद्यूपादिति चेत्। तन्न। एवं वाक्यार्थः स्यात्। स्वरुं भावयेदिति तु श्रुत्यर्थः। करोतिभावयत्यादीनां सामान्यधातूनां यद्द्वितीयान्तं तद्धातुस्थानीयं भवति द्रव्यं क्रिया वा। तस्माच्च कर्तव्यतां प्रतिपद्यते। तेन चोत्पन्नः ' स्वरुणा पशुमनक्ति ' इत्यनेन विनियुज्यते। तस्मात्प्रयोजक इतिकर्तव्यतायाः। यद्यपि यूपेन सहैकवाक्यतेतिकर्तव्यतायास्तथाऽपि स्वरोः साकाङ्क्षत्वात्तदीयेतिकर्तव्यताया निराकाङ्क्षता। संनिधानाविशेषात्। याऽपि वाक्यसंयुक्ता साऽपि शक्याऽनुषक्तुम्। स्वरुशब्दानर्थक्यभयात्। एवं चेत्तत्रापि यूपशब्दे भवतीतिकर्तव्यतासंबन्धः॥ १॥

१ क्रियमाणामिति पा०।

## जात्यन्तराच्च शङ्कते ॥ २ ॥

इतश्च निरपेक्षस्य स्वरोरुत्पत्तिरिति गम्यते । कुतः । जात्यन्तरादप्याशङ्का भवति, वृक्षान्तरात् । कथम् । नान्यस्य स्वरुं कुर्यात्, यद्यन्यस्य वृक्षस्य स्वरुं कुर्यादन्येऽस्य लोकमन्वारोहेयुः, यूपस्य स्वरुं करोति, इति । न हि यूपमनुनिष्पन्नस्य ग्रहणे जात्यन्तराशङ्काऽवकल्पते । यूपशकलो हि स्वरुकार्ये तदानीं विनियुज्येत । तस्मादपि भेदेन यूपात्स्वरुरुत्पादयितव्य इति ॥ २ ॥

## तदेकदेशो वा स्वरुत्वस्य तन्निमित्तत्वात् ॥ ३ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । यूपैकदेशो हि यूपमनुनिष्पन्नः शकलो ग्रहीतव्य इति । कस्मात् । एवमाम्नायते । यद्यन्यस्य वृक्षस्य स्वरुं कुर्यादन्येऽस्य लोकमन्वारोहेयुः, यूपस्य स्वरुं करोति, इति । न चात्रायमर्थो विधीयते, स्वरुमुत्पादयतीति । किं तर्हि । स्वरुकार्यं कर्तुं यमुपादत्ते, तं यूपादिति । कुतः । स्वरुत्वस्य तन्निमित्तत्वात् । स्वरुत्वमत्र श्रूयते स्वरोः, यूपस्य स्वरुं करोतीति । कस्याऽऽत्मीयम् । यूपस्येति । आत्मीयश्च समुदायस्यैकदेशो भवति । एकदेशश्चाप्रयोजक इति । तस्मादिदमुच्यते । अप्राणिनः षष्ठी पञ्चम्यर्थे भवति । यथा शाकस्य देहि, शाकाद्देहीति । तथा क्वचित्तृतीयार्थे—घृतस्य यजति, घृतेन यजति । पञ्चम्यर्थे-घृताद्यजति, घृतस्य यजतीति । द्वितीयार्थे वा—सोमस्य

---

'नान्यस्य वृक्षस्य स्वरुं कुर्यात्' इत्यनुनिष्पन्नपक्षे वृक्षान्तराशङ्काऽपि नास्ति, नतरां जात्यन्तरशङ्का । प्रयोजकत्वादिनस्तु भवति जात्यन्तराशङ्का । तत्र सजातीयो विधीयते ॥ २ ॥

'स्वरुणा पशुमनक्ति' इत्युच्चरितेऽञ्जनसमर्थं द्रव्यं प्रतीयते । तत्कुत उपादातव्यमित्याकाङ्क्षिते यूपादिति निराकाङ्क्षीक्रियते । यूपस्येत्यवयवलक्षणार्था षष्ठी । विद्यमाने चावयविन्यवयवा भवन्ति । तस्माच्छेदनादीनामप्रयोजकः स्वरुः । अलौकिकत्वाद्धाव्यत इति चेत् । नैवायमलौकिकः । रथंतरादितुल्यः । यद्यप्यत्र प्रातिपदिकमात्रान्न ज्ञायते, तथाऽपि पूर्वपदोत्तरपदवाक्यान्तरैः शक्योऽवधारयितुम् । यथा लोके । अवधृते चाञ्जनकार्येऽर्थादुत्पत्तिर्भविष्यति । सोऽयं स्वरुं करोतीत्यनूद्यते । स्वरुं करोतीत्युपश्लेषलक्षणया श्रुत्या स्वरोः कर्तव्यतेति ।

---

१ एकदेशश्चाप्रयोजक इतीति पाठः क्वचिन्नाति । २ पाणिनेरिति पा° ।

पिबति, सोमं पिबति, सोमात्पिबतीति । ननूक्तं, यूपावयवोऽत्र वाक्येन विधीयते, श्रुत्या स्वरोरुत्पत्तिः, श्रुतिश्च वाक्याद्बलीयसीति । उच्यते । सत्यमेवम् । यूपस्येति तु शब्दोऽविवक्षितार्थो भवति । तत्र श्रुतिरपि बाध्यते, वाक्यमपि । न त्वस्मत्पक्षे किंचिदविवक्षितार्थं, स्वरुं करोतीति स्वार्थ एवानुवादो भविष्यतीति । यूपशकलो विधायिष्यते । स्वरुशब्दश्चाञ्जनार्थेन शकले उपचरित इति गम्यते । अवयवप्रसिद्धिश्चैतमर्थं गमयिष्यति । भवति हि ब्राह्मणम्— अथ कस्मात्स्वरुर्नाम । एतस्माद्धि योऽवच्छिद्यते । तदस्यैतत्स्वमिवारुर्भवति । तस्मात्स्वरुर्नामेति ॥ ३ ॥

## शकलश्रुतेश्च ॥ ४ ॥

इतश्च यूपमनुनिष्पन्नस्य ग्रहणम् । कुतः । शकलश्रुतेः । शकलश्रुतिर्भवति स्वरोः । यः प्रथमः शकलः परापतेत्स स्वरुः कार्य इति । शकलश्चैकदेशः । एकदेशश्चाप्रयोजकः । संबन्धिशब्दत्वात् । तावता च व्यवहारात्समुदायापेक्षिणः । तत्र प्रकरणादन्यार्थेन खादिरादिना जोषणादिकर्मविशिष्टेन यागार्थेन प्रकृतेनास्यैकवाक्यता । यूपाय खदिरादि जोषयते, छिनत्ति, तक्षति च । तत्र यः शकलः प्रथमः परापतेत्तं[1] च स्वरुमञ्जनार्थं करोतीति । स्वरुशब्दं च तत्रानुवदन्नेवोपचरति । तस्मान्नैतदस्ति पृथङ्निष्पत्तिः स्वरुरिति । येनान्यस्मादपि वृक्षाद्दाति शङ्क्यते । तस्माज्जात्यन्तराशङ्कावचनं नित्यानुवादो यूपशकलस्तुत्यर्थः ॥ ४ ॥

## प्रतियूपं च दर्शनात् ॥ ५ ॥

इतश्च न पृथङ्निष्पत्तिः स्वरुः । कुतः । एकादशिन्यां, प्रतियूपं च दर्शनात् । यथाऽऽनुपूर्व्यं स्वरुभिः पशून् समञ्ज्य मध्यमे रशनागुणे स्वं[2] स्वं यूपशकलमुपगूहति, इति स्वरुबहुत्वं दर्शयति । यदि

---

उच्यते । त्वत्पक्षे सुतरां श्रुतिबाधः । शब्दस्य धर्म्यर्थः । शब्दोऽपि क्रमस्य धर्मी, शब्दधर्ममनुजिघृक्षता तस्य धर्मी बाध्यते । स एषोऽङ्गाङ्गेन प्रधानबाधः । तस्माद्यूपशब्दस्य लक्षणाभयादितरा वचनव्यक्तिः, यत्स्वरुं करोति तद्यूपस्येति । अनेनाभिप्रायेणाऽऽह—श्रुतिरपि बाध्यते वाक्यमपीति ॥ ३ ॥ [ ४ ॥ ५ ॥ ६ ॥ ]

---

१ परापतितस्तं चेति पा० । २ स्वे स्वे स्वं स्वमिति पा० ।

च स्वरुः पृथङ्निष्पत्तिः स्यादेक एवैकादशिन्यां तन्त्रेण कार्यं साधयेत्। यूपमनुनिष्पन्नस्य तु ग्रहणे प्रकृतौ स्वयूपशकलेनाञ्जनं कृतमित्येकादशिन्यामपि चोदकः स्वयूपशकलमेव प्रापयतीति बहुत्वमुपपन्नं भवति। स्वयूपशकलग्रहणं च प्राकृतस्य ग्रहणादध्यवसीयते। यादृशोऽसौ प्राकृतस्तादृशोऽसौ ग्रहीतव्यो, न विशिष्ट इति। तस्मात्स्वरुरुत्पत्तेर्न प्रयोजक इति ॥ ५ ॥

आदाने करोतिशब्दः ॥ ६ ॥

अथ यदुक्तमुत्पत्तिरस्य शब्देनोच्यते, स्वरुं करोतीति। एवं च करोतिशब्दोऽवकल्पिष्यत इति। उच्यते। आदाने करोतिशब्दो भविष्यति। स्वरुं करोति, स्वरुमादत्त इति। यथा काष्ठानि करोति, गोमयानि करोतीति, आदाने करोतिशब्दो भवति, एवमिहापि द्रष्टव्यम् ॥ ६ ॥

[2]स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् ॥ १ ॥

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः। तत्र श्रूयते, स्वरुणा पशुमनक्तीति। अथैष संदेहः। किं स्वरुरुत्पत्तिं प्रयोजयति, उत यूपमनुनिष्पन्नस्य ग्रहणमिति। किं प्राप्तम्। स्वरुस्त्वनेकनिष्पत्तिः स्यात्। प्रयोजयत्युत्पत्तिमिति। कुतः। स्वोऽस्य कर्मशब्दो भवति। स्वरुं करोतीति। स्वरुमुत्पादयतीत्यर्थः। एवं चेदुत्पत्तिरस्य शब्दवती। तस्मान्नैकया निष्पत्त्या यूपश्च स्वरुश्च निष्पाद्यत इति ॥ १ ॥

जात्यन्तराच्च शङ्कते ॥ २ ॥

यदि यूपमनुनिष्पन्नस्य ग्रहणं भवेत्, यूपकाष्ठस्यैव स्वरुः स्यात्। अन्यवृक्षाशङ्का नोपपद्येत, भवति च यद्यन्यस्य वृक्षस्य स्वरुं कुर्यादन्येऽस्य लोकमन्वारोहेयुर्यूपस्य स्वरुं करोतीति। तस्मादपि पश्यामः प्रयोजकः स्वरुरिति ॥ २ ॥

तदेकदेशो वा स्वरुत्वात्तस्य तन्निमित्तत्वात् ॥ ३ ॥

यूपमनुनिष्पन्नो वा गृह्येत स्वरुः, तदेकदेशो ह्येषः। षष्ठीनिर्देशात्,

---

१ कर्मशब्द इति पा०। २ 'स्वरुस्त्वनेकनिष्पत्तिः' इत्यारभ्य 'आदाने करोतिशब्दः' इत्यन्तानां ६०११ सूत्राणामानुपूर्वीवैलक्षण्यमात्रेणैकार्थप्रतिपादनपरं भाष्यं कस्मिंश्चिल्लिखितपुस्तक उपलभ्यते नान्यस्मिन्।

यूपस्य स्वरुं करोतीति । यदि हि छेदनमुभयार्थं स्यान्न स्वरुयूपयोः कश्चित्संबन्धो भवेत् । तत्र षष्ठी नोपपद्येत । अस्ति तु षष्ठी । तस्माद्यूपैकदेशः स्वरुः, अवयवो यूपस्य । स्वरुर्नामैकदेशः कर्तव्यः, यथा पुरोडाशशकलमिति ॥ ३ ॥

शकलश्रुतेश्च ॥ ४ ॥

शकलश्रुतिश्च भवति, यः प्रथमः शकलः परापतेत्स स्वरुः कार्य इति । एकदेशाश्चाप्रयोजका भवन्ति । नैकदेशे श्रूयमाणेऽवयवी कर्तव्य इति शब्दो भवति । विद्यमानस्यावयविन एकदेशो गृह्यते । तस्मादप्यप्रयोजकः ॥ ४ ॥

प्रतियूपं च दर्शनात् ॥ ५ ॥

प्रतियूपं च खल्वपि स्वरवो दृश्यन्त एकादशिन्यां, यथाऽऽनुपूर्व्यं स्वरुभिः पशून्समज्य मध्यमे रशनागुणे स्वे स्वे स्वं स्वं यूपशकलमुपगूहतीति । स यदि स्वरुमान्यूपः कार्य इत्ययमर्थः, स्वरुं करोतीति, ततो बहूनां स्वरूणां दर्शनमुपपद्यते । प्रयोजकत्वे स्वरोः, एक एव समञ्जनार्थं स्वरुरुत्पाद्यते । तस्मादप्रयोजक इति ॥ ५ ॥

आदाने करोतिशब्दः ॥ ६ ॥

अथ यदुक्तम्, उत्पत्तिरस्य शब्देनाभिधीयते, स्वरुं करोतीति । करोतिशब्दश्चावकल्पिष्यत इति । उच्यते । आदाने करोतिशब्दो भविष्यति, स्वरुं करोतीति स्वरुमादत्त इति । यथा काष्ठानि करोति, गोमयानि करोतीत्यादाने करोतिशब्दो भवत्येवमिहापि द्रष्टव्यम् ॥ ६ ॥

( शाखावादाधिकरणम् ॥ २ ॥ )

[ २ ] शाखायां तत्प्रधानत्वात् ॥ ७ ॥ सि०

दर्शपूर्णमासयोः श्रूयते शाखामधिकृत्य, प्राचीमाहरत्युदीचीमाहरति प्रागुदीचीमाहरति, इति । तत्र संदेहः । किमयं दिग्वाद उत शाखावाद इति । दिग्वाद इति प्राप्तम् । तथा श्रुतिशब्दः, शाखावादे लक्षणेति । तस्माद्दिग्वाद इति । एवं प्राप्ते ब्रूमः । शाखावाद इति । कुतः । यदि तावदयमर्थः, प्राची दिगाहर्तव्येति, ततोऽशक्योऽर्थः । अथ प्राचीं

---

प्राची तावद्दिगाहर्तुमशक्या, अशक्यत्वात्प्राचीदिशं प्रत्याहरतीति । तथाऽपि वाक्य आहियमाणस्याश्रवणात्साकाङ्क्षं वाक्यम् । प्रतिशब्दश्चाश्रुतोऽध्याहर्तव्यः । अथोच्येत,

दिशं प्रत्याहरणीयेति, ततः काऽऽहर्तव्येति, वाक्ये शाखाशब्दस्याभावादनुपपन्नोऽयं संबन्धः। अथ प्रकृता शाखेति, ततः प्राचीशब्देन तस्या एवाभिसंबन्धो न्याय्यः। कुतः। प्रत्यक्षा हि प्राचीशब्देन हरतेरेकवाक्यता। प्रकरणाच्छाखाशब्देन भवेत्। उभयथाऽत्र प्राचीशब्दो लक्षणया प्रकृतां वा शाखां लक्षयेत्, दिशो वाऽनीप्सितत्वाद्विहारदेशमीप्सिततमं युक्तम्। अपि च, प्राचीति संबन्धिशब्दोऽयम्। संबन्धिशब्दाश्च सर्वे सापेक्षा विना पदान्तरेण न परिपूर्णमर्थमभिवदन्ति। सामान्यपदार्थसंबन्धे च संव्यवहारानुपपत्तिः। सर्वस्यैव देशस्य कुतश्चित्प्राग्भावात्। तथा शाखाशब्दोऽपि संबन्धिशब्दो, वृक्षस्येत्येतदपेक्षते। यदा वृक्षस्येत्येतदपेक्षते, तदा वृक्षस्य शाखा प्राची, उदीची प्रागुदीची वेति भवति संबन्धः। तथा च संव्यवहारोऽवकल्पते। यत्तु शाखावादे लक्षणेति। उच्यते। भवति लक्षणयाऽपि शब्दार्थः। तस्माच्छाखावाद इति॥ ७॥

(शाखायाश्छेदनादिप्रयोजकत्वाधिकरणम्॥ ३॥)

[३] शाखायां तत्प्रधानत्वादुपवेषेण विभागः स्याद्वैषम्यं तत्॥ ८॥ सि०

दर्शपूर्णमासयोः समाम्नायते, मूलतः शाखां परिवास्योपवेषं करोति, इति। तत्रायमर्थः सांशयिकः। किं शाखाच्छेदनस्योभयं प्रयोजकं-शाखा, उपवेषश्च, उत शाखा प्रयोजिका, उपवेषोऽनुनिष्पादीति।

---

प्राग्देशं आहरतीति द्वितीयास्थाने सप्तमी, एवमश्रुतो देशोऽनीप्सितश्च। आहर्तव्यस्य चानीप्सितत्वात्साकाङ्क्षत्वम्। तस्मादियमपि कल्पना दुःश्लिष्टा।

किं च प्राक्शब्दोऽयं संबन्धिशब्दत्वादवधिमपेक्षते, कस्य प्राचीमिति। न चावधिर्निर्दिश्यते। तस्मात्प्राचीमित्यनेन यदीप्सितं तदुच्यते। तच्चाऽऽहरतेः कर्म पूर्वप्रकृतां शाखां शक्नोति वदितुम्। तस्मात्प्राचीं शाखामाहरतीति। कस्य वृक्षस्येत्यवधिमात्रमपेक्षणीयं न किंचिदन्यत्। तस्माच्छाखावादः। प्रकृतां वा शाखां लक्षयेद्दिशो वाऽनीप्सितत्वाद्विहारदेशमीप्सिततमं युक्तम्। दिशो वाऽनीप्सितत्वादित्ययं हेतुः। यस्माद्दिगनीप्सिता तस्माद्विहारदेशं वा लक्षयेच्छाखां वा॥ ७॥

उभयमपि न प्रयोजकम्। कथं, 'मूलतः शाखां परिवास्योपवेषं करोति' इति

---

१ ईप्सितमयुक्तम्। ईप्सिततमं संयुक्तम्। इति च पा०।

किं प्राप्तम् । उभयं छेदनान्निष्पद्यते । शाखा शाखामूलं चोभयं च प्रयोजनवत् । अग्रेण वत्सापाकरणादि करिष्यते, मूलत उपवेषः । तेन विशेषाभावादुभयं प्रयोजकमिति प्राप्ते, उच्यते । शाखायां ब्रूमः । तत्प्रधानत्वात् । शाखाप्रधानत्वादुपवेषेण विभागो भवेत् । शाखामनुनिष्पन्नो गृह्येत । कथं तत्प्राधान्यम् । शाखां परिवास्येति द्वितीयानिर्देशात् । ननु, उपवेषं करोति, इत्यपि द्वितीया । उच्यते । नासौ परिवासयतेः कर्म । कस्य तर्हि । करोतेः । आह । कस्मादेवमभिसंबन्धो न भवति, शाखां परिवास्य मूलत उपवेषं करोतीति । शाखाशब्दश्च यथैवाग्रे तथा मूलेऽपि । तत्रायमर्थः । छेदनेनाग्रमूले विभजेत् । किं प्रयोजनम् । विभज्य मूलमुपवेषं करोतीति । उच्यते । नैवम् । व्यवहितकल्पना ह्येवं भवेत् । अव्यवधानेन शाखार्थं परिवासनम् । वृत्ते तस्मिन्नुपवेषकरणम् । ननु प्रकृतत्वान्मूलमुपवेषशब्देन संबध्यते । उच्यते । उभयसंबन्धे विरोधः । विरोधेच प्रकरणाद्वाक्यं बलीयः । अथ संनिहितेन संबध्यते, तथाऽपि शाखाप्रयुक्तेने-

---

परिवासयतेः प्रधानभूता शाखा, द्वितीयासंयोगात् । अतो मूलाधिकरणं छेदनं शाखार्थम् । उपवेषमिति या द्वितीया, सा करोतेः, न परिवासयतेः । तस्मान्नोपवेषार्थं छेदनम् । आह । उपवेषे करोतेः कर्मतया प्रतिपाद्यमाने, इतरदुपवेषं निवर्तयति । कथमिति- छेदनादिकेतिकर्तव्यता गृह्यते । यथा 'स्वरुं करोति' इति पूर्वपक्षे जोषणादीनां प्रकृतानां ग्रहणमुक्तम् । तत्र कारणान्तरेण स्वरोर्भावनां निषिध्योपादानार्थः करोतिरित्युक्तम् । इह तन्नास्ति, येनोपवेषभावना निषिध्येत । तस्मादुभयं प्रयोजकम् ।

उच्यते । स्ववाक्योच्चरितेन यूपशब्देन येतिकर्तव्यता लक्ष्यते, सा वाक्येनैव स्वरोरपि संबन्धिनीत्येवं पूर्वपक्षस्तत्र शङ्कितः । इह स्ववाक्ये नास्ति यूपस्थानीयं पदं, यदितिकर्तव्यतां लक्षयेत् । 'मूलतः शाखां परिवास्य' इति, समाप्तमिदं वाक्यम् । 'उपवेषं करोति' इत्यपि समाप्तम् । कथम् । तस्मिन् मूलाधिकरणेन छेदनेन शाखां निष्पाद्यान्यदपि क्रियान्तरं करोतीत्येतद्गम्यते । अतो भिन्ने एते वाक्ये । मूलाधिकरणकं छेदनं वाक्येन शाखार्थम् । उपवेषस्य स्ववाक्ये छेदनादिकाया इतिकर्तव्यताया अश्रवणात्प्रकृता स्यात् । तत्र शाखाया वाक्येनोपवेषस्य प्रकरणेन । प्रकरणं च दुर्बलं वाक्यात् । अत आह—उभयसंबन्धे विरोधः । विरोधे च वाक्यं प्रकरणाद्बलीयः । अथान्येन प्रयुक्तं मूलं ग्रहीष्यते, तथा सति परकीयत्वादप्रयोजकम् ।

त्यापतति । अतः सिद्ध एवोपवेषो न प्रयोजयति छेदनमिति । एतदत्र वैषम्यम् ॥ ८ ॥

श्रुत्यपायाच्च ॥ ९ ॥

शाखया वत्सानपाकरोति, शाखया गाः प्रापयति, शाखया दोहयति, इत्येवमादिषु शाखाग्रहणेषु नोपवेषस्य व्यापारस्ततः शाखाशब्दोऽपैति । न हि तन्मूलं शाखेत्याचक्षते । किमतो यद्येवं, यत्र शाखाशब्दस्तदर्थं छेदनम् । द्वितीयानिर्देशात् । अथापि मूले शाखाशब्दो भवेत्, एवमपि शाखाशब्दोपदिष्टेषु न मूलम् । अमूलपरिवासितत्वात् । यच्चैवं संस्कृतया शाखया क्रियते, तदर्थं छेदनम् । न चोपधानं मूलपरिवासितया क्रियते । तस्मान्न तदर्थं छेदनम् । किं भवति प्रयोजनम् । पौर्णमास्यामपि शाखोत्पाद्या, यथा पूर्वः पक्षः । यथा सिद्धान्तः, तथा नोत्पादयितव्येति ॥ ९ ॥

( शाखाप्रहरणस्य प्रतिपत्तिकर्मताधिकरणम् ॥ ४ ॥ )

[ ४ ] हरणे तु जुहोतिर्योगसामान्याद्द्रव्याणां चार्थशेषत्वात् ॥ १० ॥ पू०

दर्शपूर्णमासयोरामनन्ति, सह शाखया प्रस्तरं प्रहरति, इति । तत्र संदेहः । किं शाखाप्रहरणं प्रतिपत्तिकर्म, उतार्थकर्मेति । किं प्राप्तम् । हरणे तु जुहोतिः स्यात् । अर्थकर्मेत्यर्थः । कुतः । योगसामान्यात् । योगोऽस्याः समानः प्रस्तरेण, सह शाखया प्रस्तरं प्रहरति, इति ।

---

शाखां परिवास्य मूलादुपवेषोऽग्रं वत्सापाकरणार्थं, एतदपि न घटते, व्यवहितकल्पनयाऽश्रुतवाक्यकरणमवैदिकम् । अतो वाक्यसामर्थ्याच्छाखार्थमेव छेदनम् । शाखाशब्दश्च यावदच्छिन्ना तावत्समूलायां वर्तते । छिन्ना चेदग्रे वर्तते मूलादपैति । तस्माच्छाखाप्रयुक्तं छेदनम् ॥ ८ ॥

यद्यपि मूलं शाखाशब्देनोच्यते, तथाऽपि मूलपरिवासनेन संस्कृता शाखा कार्ययोग्या । न तन्मूलं शाखा भवति । अमूलपरिवासितत्वात्—मूलेऽच्छिन्नत्वादित्यर्थः । अत आह—श्रुत्यपायाच्च । शाखाश्रुतिर्मूलादपैतीत्यर्थः । तस्माच्छाखार्थेषु न मूलं परिग्रहीतव्यमिति ॥ ९ ॥

त्रिःप्रकारः सहभावः । एकस्तावदुभावपि प्रधानभूतौ । अपरो द्वावपि गुणभूतौ । अन्य एकः प्रधानभूत इतरो गुणभूत इति । 'सूक्तवाकेन प्रस्तरं प्रहरति' इति सूक्तवाको

सहयोगे यत्र तृतीया तस्य गुणभावो, यत्र द्वितीया तस्य प्राधान्यम् । प्रस्तरे च विस्पष्टो यजिः । शाखाऽपि तस्मिन्नेव यजौ प्रस्तरस्य विशेषणं, समानयोगित्वात् । आह । ननु तत्र तत्र गुणभूता शाखा, तस्याः प्रतिपत्तिर्न्याय्या । इतरथाऽनेकगुणभावः । प्रसज्येतेति । उच्यते । द्रव्याणां चार्थशेषत्वात् । उत्पत्त्या चिकीर्षितस्य शेषभूतान्येव द्रव्याण्युपदिश्यन्ते भूतं भव्यायोपदिश्यत इति । तस्मादनेकगुणतैव द्रव्याणां न्याय्येति ॥ १० ॥

## प्रतिपत्तिर्वा शब्दस्य तत्प्रधानत्वात् ॥ ११ ॥ सि०

प्रतिपत्तिर्वा शाखाप्रहरणम् । शब्दस्य तत्प्रधानत्वात् । शब्दोऽत्र शाखाप्रधानः । कथम् । द्वितीयाश्रवणात् । नन्वन्यत्रैव सा द्वितीया, प्रस्तरे, न शाखायाम् । उच्यते । प्रस्तरे द्वितीयार्थः शाखायामपि । कथम् । तुल्ययोगात्, सह शाखया, एवं प्रस्तरः प्रहृतो भवति, यदि

न प्रस्तरं प्रकाशयति । नापि प्रहरणक्रियाम् । तृतीयानिर्देशाच्चावश्यमुच्चारयितव्यो मन्त्रः प्रकाशकत्वेनोपकरोति । तस्माद्यदनेन प्रकाश्यते, तत्क्रियया संबध्यते । तेन चाऽऽयुरादीनि फलानि प्रकाश्यन्ते, इष्टाश्च देवताः । अत आयुरादीनि फलान्येतस्या अग्न्यादयश्च देवताः । न च द्रव्योद्देशमन्तरेण देवता भवन्ति । न चाऽऽयुरादीनि यागमन्तरेण फलानि भवन्ति । तस्मात्प्रस्तरः प्रतिपाद्यमानोऽपि द्रव्यतां प्रतिपद्यते । तस्माद्द्रव्यदेवतासंबन्धेन यजिधातुरनुमीयते फलवान् । हरतिस्तु श्रुतोऽप्यविवक्षितो निर्वपतिवत्[1] । इह सहभावे श्रुते यत्तृतीयानिर्दिष्टं तत्साधकतमत्वेनैव संबध्यते । प्रमाणान्तरेण प्रधानत्वानवगमात् । यस्य हि प्रमाणान्तरेण प्राधान्यमवगतं तत्क्रियां निर्वर्तयदात्मार्थमेव निर्वर्तयति । क्रियानिर्वृत्तौ च सहभाव उपपद्यते । यदि तृतीया न श्रूयेत, ततः सहभावो नास्तीति यागं निष्पादयन्त्यपि प्रतिपत्त्यर्थं स्यात्प्रस्तरवत् । अत आह—**सहयोगे यत्र तृतीया तस्य गुणभावो, यत्र द्वितीया तस्य प्राधान्यमिति ।** कृतार्था सती प्रतिपाद्यत इति चेत् । तन्न । दर्शपूर्णमासयोः प्रकरणे श्रवणात्पौर्णमास्यां न प्रतिपत्तिः । प्रस्तरस्तूभयत्र कृतार्थः । तस्माद्यत्र तृतीया साऽत्यन्तसाधनभूता । न चैकत्र प्रधानभूताऽपरत्र गुणभूता, विवक्षाभेदात् । तस्माद्गुणभूतैव शाखा ॥ १० ॥

प्रहरतौ यद्युभावपि तुल्यौ ततः सहभाव उपपद्यते, प्रस्तरस्य च प्रतिपत्तिः, शाखाया अपि । तत्रानियतकाले प्रहरणे प्राप्ते सह प्रहरतीति विधीयते । एवमपेक्षि-

१ निर्वपतिवदिति—'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इत्यादाविति शेषः ।

शाखाऽपि प्रह्रियते । तेन तुल्ययोगे सहशब्दोऽयम् । यदि प्रस्तरः प्रहरणे प्रधानं, शाखाऽपि प्रस्तरविशेषणं, न तर्हि तुल्ययोगः । तस्माद्यः प्रस्तरे द्वितीयार्थः, स शाखायामपि । अतः शाखा प्रधानम् । अपि च तत्र तत्र शाखा गुणभूता । तस्यामन्यत्रोपदिश्यमानायामनेकगुणभावः स्यात् । तत्र को दोषः । दृष्टं कार्यं हित्वाऽदृष्टं कल्प्येत । कृतप्रयोजनायाः शाखाया अपनयनेन वेदिविवेचनात्सुखप्रचारो दृष्टं कार्यं, न तु प्रहरणे किंचित्सूक्ष्ममपि दृष्टमस्ति । तस्मात्प्रतिपत्तिर्न्याय्या । आह । ननु तृतीयाश्रवणात्परार्थेन शाखोच्चारणेन भवितुं न्याय्यम् । उच्यते । भवेदेतन्न्याय्यं, यदि निर्ज्ञातकाला शाखा स्यात् । ततः प्रस्तरस्य कालपरिच्छेदाय कीर्त्यमाना परार्था, उच्चार्येत । इह पुनरेतद्विपरीतम् । निर्ज्ञातकालः प्रस्तरोऽनिर्ज्ञातकाला शाखा । तस्मात्सत्यपि तृतीयाश्रवणे प्रस्तर एव शाखायाः कालं परिच्छेत्स्यति । यथा द्वितीयानिर्दिष्टा तथा शाखा द्रष्टव्या । यथा तृतीयानिर्दिष्टस्तथा प्रस्तरः । सामर्थ्यं हि बलवत्तरमिति ॥ ११ ॥

## अर्थेऽपीति चेत् ॥ १२ ॥

आह । ननु गुणभावेऽपि द्वितीया भवति । यथा सक्तुपाकनैककपालेषु ॥ १२ ॥

## न तस्यानधिकारादर्थस्य च कृतत्वात् ॥ १३ ॥

नैतत्सक्त्वादिभिस्तुल्यम् । तस्य सक्त्वादेरन्यत्रानधिकारात् । इह च शाखयाऽन्यस्यार्थस्य कृतत्वाद्वत्सापाकरणादेः । आह । ननु पुनरुक्तमेतत्—सक्त्वादीनां प्रदर्शनं समाधिश्चेति । उच्यते । न पुनरुक्तता महान्दोषः । बहुकृत्वोऽपि पथ्यं वदितव्यं भवति । ग्रन्थगौरवभयेन

---

तत्वं, नादृष्टकल्पना च । अतोऽविवक्षिता तृतीया । तस्मादनया द्वितीया लक्ष्यते । द्वितीयाऽपि तृतीयालक्षणार्थैव । प्रह्रियमाणयोश्च यन्निर्ज्ञातकालं तादितरस्य कालं प्रयच्छद्वस्तु तो गुणभूतं, क्रियायास्तुल्यत्वात् । प्रस्तरश्च निर्ज्ञातकालः । अनयोश्च प्रहरण एव साहित्यं, न तु मिते यागे । शाखायास्तत्राश्रवणात् । प्रत्यक्षेण प्रदीयमानेऽपि यथा मैत्रावरुणे, पयः प्रत्यक्षेण हूयमानमपि न यागसाधनमेवं शाखा प्रहरतिना संबध्यमानाऽपि न यागसाधिकेति सिद्धम् ॥ ११ ॥ [ १२ ॥ १३ ॥ ]

१ नेतीत क्वचिन्नास्ति ।

पुनरुक्तं नेच्छन्ति । अर्थाग्रहणाद्धि भवेत्पुनः पुनरभिधीयमानं बहु मन्यन्त एव । किं चिन्तायाः प्रयोजनम् । यद्यर्थकर्म पौर्णमास्यामपि शाखोत्पाद्या, अथ प्रतिपत्तिर्नोत्पादयितव्येति ॥ १३ ॥

( प्रणीतानां संयवनप्रयुक्तताधिकरणम् ॥ ९ ॥ )

[ ९ ] उत्पत्त्यसंयोगात्प्रणीतानामाज्यवद्विभागः स्यात् ॥ १४ ॥ पू०

दर्शपूर्णमासयोराम्नायते, अपः प्रणयत्यापो वै श्रद्धा श्रद्धामेवाऽऽलभ्य यजते, इति । उभयत्र च प्रणीतानामुत्पन्नानां व्यापारः श्रूयते, प्रणीताभिर्हवींषि संयौति, इति । तथा, अन्तर्वेदि प्रणीता निनयति, इति । तत्र संदेहः । किमुभयमासां प्रयोजकं संयवनं निनयनं चोत संयवनार्थानां निनयनं प्रतिपत्तिरिति । किं प्राप्तम् । उत्पत्तिसंयोगो नासां केनचित्प्रयोजनेन । उभाभ्यामुत्पन्नानां संयोगः । तस्मान्न गम्यते विशेषः । अगम्यमाने विशेषे, उभयार्थानां विभागोऽयं, काश्चिद्विभागः संयवने, काश्चिन्निनयन इति । आज्यवत् । यथा, सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्, इति ॥ १४ ॥

संयवनार्थानां वा प्रतिपत्तिरितरासां तत्प्रधानत्वात् ॥ १५ ॥ सि०

संयवनार्थाः प्रणीताः । कुतः । तृतीयानिर्देशात् । संयवनेऽपां गुण-

---

शुद्धाः प्रणीता उत्पन्नाः कैमर्थ्याभिलाषिण्यो वाक्यद्वयेन संयवननिनयनप्रयोजने प्रति नीयन्ते । तेनोभयप्रयुक्ता इति । ननु संयवने तृतीयानिर्देशाद्गुणभावः । निनयने द्वितीयानिर्देशात्प्राधान्यम् । उच्यते । वचनान्तरेण शेषभावेऽवगतेऽन्यत्र संयोगे भवति प्रतिपत्तिः, यथा स्विष्टकृत् । संयवनार्थानां च तावतीनामेव ग्रहणं प्राप्नोति, यावतीभिः संयवनं निष्पाद्यते, कुतोऽन्यत्र प्रसङ्गः । उभयप्रयुक्ताभिस्तूभयं निर्वर्तयितव्यम् । सर्वार्था इति पक्षो न कृतो, निष्प्रमाणकत्वात् । श्रुतवाक्येन संबन्धविशेषेऽवगते प्रकरणादश्रुतं सर्वाङ्गत्वं कल्प्यम् । कल्प्यमानेऽपि प्रकरणसंबन्धात्तत्र वाऽन्यत्र प्राप्ताः पुनर्वचनात्परिसंख्यायेरन् । तस्मात्सर्वार्थपक्षो दुःश्लिष्टः ॥ १४ ॥

तृतीयासामर्थ्यात्संयवनार्थैव । न तावन्मात्रं शक्यमुपकल्पयितुम् । सूक्ष्ममिदं द्रव्यमतिरिच्यते । तस्मादतिरिक्तस्य प्रतिपत्तिर्न [illegible]त्वातिरेचितव्यमिति शास्त्रमस्ति ।

---

१ अर्थाग्रहणात्तु बिभ्यन्त· पुनः पुनरिति पा° ।

भावो, द्वितीयानिर्देशाच्च निनयने प्राधान्यम् । चिन्तायाः प्रयोजनं पुरोडाशाभावे प्रणीतानामभावो, यथा पयस्यायाम् ॥ १५ ॥

( मैत्रावरुणाय दण्डदानस्यार्थकर्मत्वाधिकरणम् ॥ ६ ॥ )

[ ६ ] प्रासनवन्मैत्रावरुणाय दण्डप्रदानं कृतार्थत्वात् ॥ १६ ॥ पू०

ज्योतिष्टोमे श्रूयते, वाग्वै देवेभ्योऽपाक्रामत् । यज्ञायातिष्ठमाना सा वनस्पतीन् प्राविशत् । सैषा वाग् वनस्पतिषु वदति । या दुंदुभौ या तूणवे या वीणायाम् । यद्दीक्षितदण्डं प्रयच्छति वाचमेवावरुन्धे, इति । तथा, क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति, इति । मैत्रावरुणाय दण्डं प्रयच्छति, इत्येतदुदाहरणम् । तत्र संशयः । किं दीक्षितधारणे शेषभूतस्य दण्डस्य मैत्रावरुणधारणं प्रतिपत्तिरथवाऽर्थकर्मेति । किं प्राप्तम् । मैत्रावरुणाय दण्डदानं प्रतिपत्तिः । कुतः । दीक्षितधारणे कृतार्थत्वात् । दण्डेन दीक्षयति, इति शेषभूतस्यान्यत्र व्यापारे प्रतिपत्तिर्न्याय्या । यथा, चात्वाले कृष्णविषाणां प्रास्यति, इति कण्डूयने शेषभूतायाः प्रासनं प्रतिपत्तिः । एवमत्रापि द्रष्टव्यम् । द्वितीया च दण्डे विभक्तिः । तस्मात्प्राधान्यमिति ॥ १६ ॥

अर्थकर्म वा कर्तृसंयोगात्स्रग्वत ॥ १७ ॥ सि०

अर्थकर्म वा स्यात् । कुतः । कर्तृसंयोगात् । कर्तृसंयोगो भवति । मैत्रावरुणाय दण्डमिति । तस्मिंश्च दण्डो गुणभूतः । पुरुषः प्रधानभूतः ।

---

अतिरेकश्चावश्यंभावी । कल्पे हि गृह्यमाणे संयवनस्य कृतत्वात्पुनः प्रणीतासंस्कारः कर्तव्य इति गौरवमापद्येत । क्रमान्यत्वेन प्रायश्चित्तम् ॥ १५ ॥

न दानस्य मैत्रावरुणः प्रयोजकः । कृष्णविषाणा चात्वाले प्रतिपाद्येति प्रतिपत्तिः । प्रसङ्गेनोपारितनी चिन्ता । 'देशार्थोऽवभृथश्रुतिः' इति देशसंबन्धादन्योऽपि देशो विपारिवर्तमानाश्चिन्त्यते । किमनूद्यते नियम्यत इति नियमप्रसङ्गेन तथोत्तरे अधिकरणे अवतरतः, गुणसंस्कारयोरपि नियम एवेति । करणद्रव्यं संस्कुर्वतेन संबध्यते तस्य रूपमाख्यायते । कीदृशेन व्यापारेण करणमनुष्ठितं भवतीत्यनेन प्रसङ्गेन यागनिरूपणमायातम् । एवं जुहोतावपि ॥ १६ ॥

दण्डो व्याप्यमानः क्रियया, शब्देनैव मैत्रावरुणार्थ उपदिश्यते । या च द्वितीया

---

१ तै० सं० ( ६–१–४ )। २ दण्डमितीत्येतदनन्तरं, कर्तृदण्डसंयोगो भवति, इत्येवं क्वचिदधिकः पाठः । ३ ( अ० ४ पा० २ अ० ८ सू० २२ )।

पुरुषं हि स प्रचरितुं समर्थं करोति। कथम्। यथापूर्वं तमोऽवगाहतेऽपः प्रविशति, गां च सर्पं च वारयति, अवलम्बनं च भवति। अतः पुरुषप्राधान्याच्च प्रतिपत्तिः। स्रग्वच्च द्रष्टव्यम्। यथा, स्रजमुद्गात्रे ददाति, इत्यसत्यप्युपकारे पुरुषस्य प्रयोजनवत्त्वात्स्रिष्प्रयोजनत्वाच्च स्रजो भवति पुरुषप्राधान्यम्। एवमिहापि द्रष्टव्यम्। तस्माच्च प्रतिपत्तिरिति। अथ यदुक्तं, द्वितीयाश्रवणाद्दण्डप्राधान्यमिति। उच्यते। तथायुक्तं चानीप्सितम्, इति द्वितीया द्रष्टव्या। कुतः। मैत्रावरुणे चतुर्थीनिर्देशात्। संप्रदाने हि चतुर्थी भवति। संप्रदानं च कर्मणाऽभिप्रेयते। तत्र दण्डादभिप्रेततरो मैत्रावरुण इति गम्यते ॥ १७ ॥

## कर्मयुक्ते च दर्शनात् ॥ १८ ॥

दण्डी प्रैषानन्वाह, इत्यनूद्यते। तेन प्रचरतो दण्डं प्रदर्शयति। तदर्थकर्मणि सत्युपपद्यते। प्रतिपत्तौ तु दण्डो मैत्रावरुणाय दत्तस्ततोऽपवृज्येत। तत्कर्म कर्तव्यं च कृतमिति न तेन प्रयोजनमिति न धार्येत। तत्रैतद्दर्शनं नोपपद्यते। तथा, अहिस्त्वा दशतीति मैत्रावरुणं ब्रूयात्, अहिरिव ह्येष द्रष्टव्य इति। तथा, मुशलयन्वाहेति। मुशलशब्दश्च दण्डे प्रसिद्धः। यथा, कथं नु खलु मुशलिनो माणवका गङ्गां नावतरेयुरिति।

दण्डमिति, साऽपि न प्राधान्येनेप्सितार्था, किं तर्हि, व्याप्यमानतया। मैत्रावरुणो हि तत्र प्रधानभूतः। अत आह—'तथायुक्तं चानीप्सितम्' इति द्वितीया भविष्यतीति। तस्मान्न दण्डः प्रधानभूतः। न च दण्डदानमदृष्टाय। तमोवगाहनादिषु दृष्टायैव ॥ १७ ॥

'दण्डी प्रैषानन्वाह' इत्यनूद्यते। तेन प्रचरतो दण्डं दर्शयति। प्रतिपत्तित्वे न तस्य धारणं भवेत्। अथार्थकर्म ततो ध्रियमाणस्य प्रकरणाविशेषाद्यत्कुर्यात्तत्तद्दण्डसंयुक्तेनेति। तस्मात्सर्वत्र दण्डभावादनुवाददर्शनमुपपद्यते। नन्वरुणाधिकरणे दण्डविधानमुक्तमुपसर्जनार्थो विधीयत इति। उच्यते। प्रकरणात्सर्वार्थे प्राप्ते प्रैषानुवचनयोर्निर्दिश्यते। एवं नास्ति विरोधः। दण्डानुवादोऽपि घटते। नियमविधानादुपसर्जनार्थ-

१ पा० सू० ( १–४–५० )। २ चतुर्थी भवतीति–'चतुर्थी संप्रदाने' पा० सू० ( २–३–१३ ) इत्यनया स्मृत्येति शेषः। ३ कर्मणेति—'कर्मणा यमभिप्रैति स संप्रदानम्' पा० सू० ( १–४–३२) इतीमां स्मृतिमनुरुध्येति शेषः। ४ यथा, क नु खलु मुशलिनो माणवका गङ्गामवतरेयुरिति पा०। ५ ( अ० ३ पा० १ अ० ६ )। ६ उक्तमिति–अरुणाधिकरणे भाष्यकारेणेति शेषः।

तस्मादर्थ्यर्थकर्म ॥ १८ ॥

( कृष्णविषाणाप्रासनस्य प्रतिपत्तिकर्मताधिकरणम् ॥ ७ ॥ )

[७] उत्पत्तौ येन संयुक्तं तदर्थं तच्छ्रुतिहेतुत्वात्तस्यार्थान्तर-गमने शेषत्वात्प्रतिपत्तिः स्यात् ॥ १९ ॥ सि०

यदुक्तं, यथा कृष्णविषाणाप्रासनमिति । तत्रोच्यते । युक्तं तत्रोत्पद्यमानं यद्येन प्रयोजनेन संबद्धमुत्पद्यते, तत्तदर्थमेव न्याय्यम् । तस्यान्यत्र गमने प्रतिपत्तिरित्येतदुपपद्यते, यदि न दृष्टं प्रयोजनं भवति । इह तु दृष्टं प्रयोजनं मैत्रावरुणस्य धारणम् । तस्माद्विषममेतत् ।

अथवा—अधिकरणान्तरं, विषाणायाः कण्डूयनं प्रासनं चोभयमपि प्रयोजकमिति पूर्वः पक्षः । एकनिष्पत्तेः सर्वं समं स्यादिति । उत्तरः पक्षः, कण्डूयने तृतीयानिर्देशाद्विषाणाया गुणभावः । प्रासने च द्वितीयानिर्देशादन्यत्र च कृतार्थत्वात्प्राधान्यमिति ॥ १९ ॥

( अवभृथगमनस्य प्रतिपत्तिकर्मताधिकरणम् ॥ ८ ॥ )

[ ८ ] सौमिके च कृतार्थत्वात् ॥ २० ॥ सि०

अस्ति ज्योतिष्टोमेऽवभृथो, वारुणेनैककपालेनावभृथमभ्यवयन्ति, इति । तत्राऽऽम्नायते, वरुणगृहीतं वा एतद्यज्ञस्य यदृजीषं यद्ग्रावाण यदौदुम्बरी यदभिषवणफलके, तस्माद्यत्किंचित्सोमलिप्तं द्रव्यं तेनावभृथं यन्ति, इति । तत्र संशयः । किं सोमलिप्तानां द्रव्याणामवभृथगमनं प्रतिपत्तिरथवाऽर्थकर्मेति । किं तावत्प्राप्तम् । प्रतिपत्तिरिति । कुतः । कृतार्थत्वात् । कृतार्थान्येतानि द्रव्याणि तत्र तत्र, तेषामवभृथगमनं प्रतिपत्तिर्न्याय्या ॥ २० ॥

अर्थकर्म वाऽभिधानसंयोगात् ॥ २१ ॥

अर्थकर्म वा, अभिधानेन संयोगात् । तेनावभृथं यन्तीति । तेन, अवभृथसंज्ञकं निष्पादयन्तीति । तृतीया तेनेति, द्वितीयाऽवभृथमिति । तस्मात्सोमलिप्तं गुणभूतमवभृथः प्रधानभूत इति ॥ २१ ॥

प्रतिपत्तिर्वा तन्न्यायत्वाद्देशार्थाऽवभृथश्रुतिः ॥ २२ ॥

प्रतिपत्तिर्वा । कुतः । तन्न्यायत्वादेव । एष हि न्यायो, यदन्यत्र

---

विधानमपि ॥ १८ ॥ [ १९ ॥ २० ॥ २१ ॥ ]

'तेनावभृथं यन्ति' इत्यनेन सोमलिप्तावभृथयोः संबन्धो विधीयते । तत्र सोम-

कृतार्थमन्यत्र प्रतिपाद्यते । तदिह यदि सोमलिप्तं द्रव्यमवभृथे करणं विधीयते ततोऽर्थकर्म । अथ सोमलिप्तेन यानं विधीयते ततः प्रतिपत्तिः । न ह्यत्र सोमलिप्तं विधीयतेऽवभृथे । तथा सत्यवभृथसोमलिप्तसंबन्धोऽभ्यवयन्तीत्यनेनाऽऽख्यातेन विधीयेत । तत्र वाक्येन विधानं स्यान्न तु श्रुत्या । याने पुनर्विधीयमाने श्रुत्या विधानम् । तत्परिगृहीतं भवति । श्रुतिश्च वाक्याद्बलीयसी । तस्मात्प्रतिपत्तिः । अथ यदुक्तम्, अर्थकर्माभिधानेन संयोगादिति । तत्र ब्रूमः । एवं सति देशार्थोऽवभृथश्रुतिः । अवभृथं यन्तीत्यवभृथेन देशं लक्षयति । यस्मिन्देशेऽवभृथस्तं देशं यन्तीति । तस्मात्प्रतिपत्तिरिति ॥ २२ ॥

( कर्तृदेशकालविधीनां नियमविधानार्थताधिकरणम् ॥ ९ ॥ )

## [ ९ ] कर्तृदेशकालानामचोदनं प्रयोगे नित्यसमवायात् ॥ २३ ॥ पू०

इदं श्रूयते, पशुबन्धस्य यज्ञक्रतोः षड् ऋत्विजः, दर्शपूर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विजः, चातुर्मास्यानां यज्ञक्रतूनां पञ्च ऋत्विजः, अग्निहोत्रस्य यज्ञक्रतोरेक ऋत्विक्, सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदश ऋत्विजः । तथा, समे दर्शपूर्णमासाभ्यां यजेत, प्राचीनप्रवणे वैश्वदेवेन यजेत, पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेत, इति । तत्र संदेहः । किं कर्तृदेशकाला विधीयन्त उता-

---

लिप्तं वाऽवभृथार्थमवभृथो वा सोमलिप्तार्थः । द्वयमप्येतन्न घटते । यदि तत्साधनत्वेन सोमलिप्तं, तत्रोत्पत्तिवाक्यशिष्टेनैककपालेन बाध्यते । अथ सोमलिप्तं संस्कर्तव्यमवभृथः संस्कारकः, तथाऽपि यागं निर्वर्तयद्द्रव्यं संस्कार्यतां प्रतिपद्यते । निर्वर्तनवेलायां चैककपालः श्रुतिप्राप्तो विद्यत एव । किं च पुरोडाशेन क्रियमाणो निर्वर्त्यः प्रधानभूतः । सोमलिप्तं तु संस्कुर्वाणो गुणभूतः । न चैकस्य कर्मणो गुणत्वप्राधान्ये युक्ते । सोमलिप्तावभृथसंबन्धे चात्यन्तं वाक्यम् । तस्मादियं वचनव्यक्तिर्न घटते । याने सोमलिप्तविधानमिति चेत्, न शक्यं सोमलिप्तेन गन्तुमश्वादिनेव । अदृष्टकल्पना च । अतः सोमलिप्तगमनं विधीयते । शक्नोति गमनं देशान्तरप्राप्त्या सोमलिप्तं संस्कर्तुं, कियन्तं देशं नेयमिति, तत्रावभृथशब्देन देशः परिच्छिद्यते । अतो गमनेन प्रतिपाद्यमानत्वाद्दृष्टार्थता । श्रुत्यनुग्रहश्च धात्वर्थविधानादत्रेति ॥ २२ ॥

कर्तृसंख्या समादयश्च प्रयोगवचनेनाऽऽक्षिप्तत्वान्न विधीयन्ते । तस्मादनुवादः । न च

नूद्यन्त इति । किं तावत्प्राप्तम् । कर्तृदेशकालानामचोदनम्, अनुवादः । कुतः । प्रयोगे नित्यसमवायात् । प्रयोगे नित्यसमवेता एत इति । न ऋते कर्तृदेशकालेभ्यः प्रयोगः सिध्यति । तेन प्रयोगचोदनयैव प्राप्ता- नामनुवादः । ननु विषमादिप्रतिषेधार्थमेतद्वचनं भविष्यति । नेति ब्रूमः । उपदेशकमेवंजातीयकं वचनं, न प्रतिषेधकम् । तस्मादनुवाद इति ॥ २३ ॥

नियमार्था वा श्रुतिः ॥ २४ ॥ सि०

उच्यते, न चैतदस्त्यनुवाद इति । अनुवादमात्रमनर्थकम् । यदि विधिः, एवमपूर्वमर्थं प्रकरिष्यति । तस्माद्विधिरिति । ननु प्रयोगाङ्ग- त्वात्प्राप्ता एवेति । उच्यते । नियमार्था श्रुतिर्भविष्यति । कोऽयं नियमः । अनियतस्य नियतता । प्रयोगाङ्गतया सर्वे देशाः प्राप्नुवन्ति, न तु समुच्चयेन । यदा समो, न तदा विषमः । यदा विषमो, न तदा समः । स एष समः प्राप्तश्चाप्राप्तश्च । यदा न प्राप्तः, स पक्षो विधिं प्रयोजयति । अतो विषमचिकीर्षायामपि समो विधीयते । तस्माद्विषमस्याप्राप्ति- र्विधौ सति भवतीति समो विधीयते । एवमितरेष्वपि । तस्माद्विधि- रिति ॥ २४ ॥

( द्रव्येषु गुणश्रुतेर्नियमविधानार्थताधिकरणम् ॥ १० ॥ )

[१०] तथा द्रव्येषु गुणश्रुतिरुत्पत्तिसंयोगात् ॥२५॥ सि०

अधिकरणातिदेशोऽयम् । इदमामनन्ति । वायव्यं श्वेतमालभेत भूतिकामः । तथा, सोमारौद्रं घृते चरुं निर्वपेच्छुक्लानां व्रीहीणां ब्रह्म- वर्चसकामः, तथा, नैर्ऋतं चरुं निर्वपेत्कृष्णानां व्रीहीणाम्, इति । तत्र

---

समादिग्रहणं विषमादिनिवर्तकं, प्रतिषेधवचनस्याभावात् । न चेतरनिवृत्तिः । एवका- राभावात् । न च विधिः, प्राप्तत्वात् । अनेनाभिप्रायेणाऽऽह—उपदेशकमेवंजाती- यकं वचनं न प्रतिषेधकमिति ॥ २३ ॥

'व्रीहिभिर्यजेत' इति दर्शपूर्णमासयोः श्रवणाद्यावदाक्षेपादङ्गभावस्तावद्देशादि नियतम् । दर्शपूर्णमासापूर्वमेषां निमित्तं प्रयोजकं चेति । अतो नियतनिमित्तत्वान्नियम इत्युच्यते । प्रयाजादीनामपीति चेत् । तन्न । यत्पक्षे विधिमन्तरेण प्राप्नोति तच्छ्रूयमा- णमनियतांशे प्रविशन्नियमोऽभिधीयते । न चानुवादः शक्यो वक्तुम् । सर्वदा यत्प्रा- प्नोति तदनूद्यते । अत आह—अनियतस्य नियततेति ॥ २४ ॥ [ २५ ॥ २६ ॥ ]

संदेहः । किं श्वेतादिवर्णो विधीयत उतानूद्यत इति । किं प्राप्तम् । अनूद्यते । द्रव्यश्रुतिगृहीतत्वात् । विधिर्वा, पक्षे प्राप्तस्य वर्णस्य नियमार्थ इति । पक्षोक्तं प्रयोजनमुभयोरप्यधिकरणयोः ॥ २५ ॥

( अवघातादिसंस्कारविधेर्नियमविधित्वाधिकरणम् ॥ ११ ॥ )

## [११] संस्कारे च तत्प्रधानत्वात् ॥ २६ ॥ सि०

अयमप्यधिकरणातिदेशः । दर्शपूर्णमासयोः श्रूयते । व्रीहीनवहन्ति, तण्डुलान्पिनष्टि, इति । तत्किमिमौ विधी, उतानुवादाविति संशयेऽर्थप्राप्तत्वादनुवादाविति प्राप्ते, नियमार्थत्वाद्विधी इति ॥ २६ ॥

( यागलक्षणाधिकरणम् ॥ १२ ॥ )

## [१२] यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् ॥ २७ ॥ सि०

शेषविनियोग उक्तः । प्रधानलक्षणमुच्यते, किं तत्प्रधानं, यस्यैते शेषा इति । उच्यते । यजति ददाति जुहोतीत्येवंलक्षणम् । अथ किंलक्षणको यजतिर्जुहोतिर्ददातिश्चेति । यजतिचोदना तावद्द्रव्यदेवताक्रियम् । [1]द्रव्यं देवतामुद्दिश्य त्यज्यते, तस्य च क्रिया, यया क्रियया तयोः संबन्धो भवति । समुदाये—समुदितेष्वेषु यजतिशब्दो भवति । लोके इष्टोऽनेन पशुपतिरिति । तेन मन्यामहे, द्रव्यदेवताक्रियस्यार्थस्य यजतिशब्देन प्रत्यायनं क्रियत इति । लक्षणकर्मणि प्रयोजनं न वक्त-

---

समुदाये कृतार्थत्वादित्ययुक्तोऽयं ग्रन्थः । न हि यागशब्दो द्रव्यदेवताक्रियं त्रितयमपि ब्रवीति, किंतर्हि, यजतिधातुवाच्यम् । समुदाये वाच्य एकस्य बहु वाच्यमित्यदृष्टकल्पना । समुदायश्च वाच्यत्वेनाप्रसिद्धः । जुहोतिरासेचनाधिक इत्येतदप्ययुक्तम् । पुरोडाशद्रव्यकेष्वपि जुहोतेर्विद्यमानत्वात् । मरुताञ्जुहोत्येककपालाञ्जुहोतीति ।

उच्यते । न पदार्थलक्षणमिदं, किं तर्हि, 'यजेत स्वर्गकामः' इति साधनत्वेन यागस्य चोद्यमानस्य प्रयोगः कथ्यते । यो देवतोद्देशेन द्रव्यं त्यजति तेन यागोऽनुष्ठितो भवति न त्यागमात्रेण यागः कृतो भवतीति । तस्मात्प्रयोगकथनमेवैतत् । सूत्रकारश्च यजतिचोदनेत्याह । चोदनेति हि वाक्यमुच्यते । जुहोतिशब्दस्यापि फले चोदितस्य प्रयोगानुष्ठानमेव कथ्यते । आसेचनाधिक्यं च तत्र प्रायिकम् । ददातेरप्यनुष्ठानकथन-

---

[1] द्रव्यं देवता च, तस्य क्रिया, यया तयोः संबन्धो भवति, इति पा० ।

न्यम् । ज्ञानमेवात्र प्रयोजनमिति ॥ २७ ॥

( होमलक्षणाधिकरणम् ॥ १३ ॥ )

[ १३ ] तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात् ॥ २८ ॥ सि०

अथ किंलक्षणको जुहोतिरिति । तदुक्ते—यजत्युक्तेऽर्थे जुहोतिः श्रूयते, आसेचनाधिके । तस्माद्यजतिरेवाऽऽसेचनाधिको जुहोतिः । हुतमनेनेत्येवंजातीयके वक्तारो भवन्ति लोके । वेदेऽपि यजतिचोदितं जुहोतिनाऽनुवदति । संग्रामिणं चतुर्होत्रा याजयेत्, चतुर्गृहीतमाज्यं कृत्वा चतुर्होतारं व्याचक्षीत, पूर्वेण ग्रहेणार्धं जुहुयादुत्तरेणार्धम्, इति । अथ ददातिः किंलक्षणक इति । आत्मनः स्वत्वव्यावृत्तिः, परस्य स्वत्वेन संबन्धः । यजतिददातिजुहोतिषु सर्वेषूत्सर्गः समानः । तत्र यजतिर्देवतामुद्दिश्योत्सर्गमात्रं, जुहोतिरासेचनाधिकः, ददातिरुत्सर्गपूर्वकः परस्वत्वेन संबन्ध इत्येष एषां विशेष इति ॥ २८ ॥

( आतिथ्यादीनां बर्हिःसाधारण्याधिकरणम् ॥ १४ ॥ )

[ १४ ] विधेः कर्मापवर्गित्वादर्थान्तरे विधिप्रदेशः स्यात् ॥ २९ ॥ पू०

ज्योतिष्टोमे श्रूयते, यदातिथ्यायां बर्हिस्तदुपसदां, तदग्नीषोमीयस्य, इति । तत्र संदेहः । किं परद्रव्यस्योपदेश उत निरिष्टकस्य, अथवा धर्मविधिप्रदेशः, अथवा बर्हिः साधारणमिति । किं प्राप्तम् । परद्रव्यस्योपदेशः । कुतः । परद्रव्यस्योपदेशसदृशः शब्दो, यदातिथ्यायां तदुपसदामिति । यथा, यो देवदत्तस्य गौः स विष्णुमित्रस्य कर्तव्य इति देवदत्तादाच्छिद्य विष्णुमित्राय दीयत इति । अतः परद्रव्यस्योपदेश इति । न चैतदस्ति । तथा सत्यातिथ्यायां तस्य विधानं यत्पूर्वं तदनर्थकं स्यात् । एवं तर्हि निरिष्टकस्योपदेशः । तेनाऽऽतिथ्यायां

---

मेवेति ॥ २७ ॥ [ २८ ॥ ]

यदि परद्रव्योपदेश उपसदामग्नीषोमीयस्य च, तथा सति ' यदातिथ्यायां बर्हिः ' इत्युपदेशोऽनर्थकः स्यात् । कतरद्बर्हिरातिथ्यायाः संबन्धि, यदन्यस्योपदिश्येत । गोस्तु देवदत्तसंबन्धे प्रथममवगते तदुत्तरकालं युक्त उपदेशः । इह तु स्वस्वामिसंबन्धानवगमाद्यदातिथ्याबर्हिस्तदुपसदामिति न घटते । ननु यदातिथ्यार्थमुपात्तं तदुपसदादेर्घटत एव । तथाऽपि सति तस्याऽऽतिथ्यायां विधानमनर्थकम् । निरिष्टकोपदेशोऽप्यन्याय्यः

१ यद्भवेदिति पा० ।

यद्विहितम्, आतिथ्यायां यदुपात्तमिति । तथा सत्यर्थवदातिथ्यायां तद्वचनम् । निरिष्टकेन तूपसदः कर्तव्या भवन्तीति । न चैष शिष्टानामाचारः । न च सर्वे चोदकप्राप्ता धर्मा भवेयुः । अतो ब्रूमः, विधेः कर्मापवर्गित्वादर्थान्तरे विधिप्रदेशः स्यात् । तद्बर्हिः परिसमाप्तायामातिथ्यायामपवृक्तमासीत्, पूर्वं तदातिथ्यायामासीत्, उपसत्काले आतिथ्यासंबन्धस्तस्य नास्ति । भूतपूर्वेणाऽऽतिथ्याकर्मणा लक्ष्येत । लक्षणाशब्दश्च न न्याय्यः । तस्मादातिथ्याबर्हिष आङ्गस्याभावाद्यद्धर्मकमातिथ्याबर्हिस्तद्धर्मकमुपसदामग्नीषोमीयस्य चेति न्याय्यम् ॥ २९ ॥

अपि वोत्पत्तिसंयोगादर्थसंबन्धोऽविशिष्टानां प्रयोगैकत्वहेतुः स्यात् ॥ ३० ॥ सि०

अपि वेति पक्षो व्यावर्तते । उत्पत्तिसंयोग एवैषोऽस्य बर्हिषः । यदि ह्युत्पन्नमातिथ्यायां बर्हिर्विशिष्टं स्यात्, तस्य धर्मा औपसदे बर्हिष्यतिदिश्येरन्, न तु तदस्ति केनचिद्वाक्येन । यदातिथ्यायामित्येवं प्रकृत्य, बर्हिषो विशेषो वक्ष्यते । आश्ववालः प्रस्तरः, ऐक्षवी वैधृती इति । तेन, न परविहितं बर्हिरुच्यते, न निरिष्टकं, न कुतश्चिद्धर्मा अतिदिश्यन्ते । किं तर्हि । साधारणममीषां बर्हिरुच्यते । यदातिथ्यायां विधीयते, तदेवोपसदाम्, अग्नीषोमीयस्य च विधीयत इति, अविशिष्टानां बर्हिषा संयोग एकेन सर्वेषाम् । यदादौ बर्हिर्लूयते, तल्लवनं सर्वेषामर्थेन, साधारणो बर्हिषः प्रयोगः । एवं श्रुतिः शब्दस्य परि-

---

सत्यां गतौ । अस्ति च गतिर्यद्धर्मकमातिथ्याबर्हिस्तद्धर्मकमुपसदामपीति । नन्वपूर्वत्वादुपसदां बर्हिषोऽभावः । उच्यते । पूर्वाघारोऽत्र विद्यते । बर्हिश्चाङ्गप्रधानार्थम् । तस्मात्प्राप्नोति ॥ २९ ॥

' यदातिथ्यायां बर्हिः ' इत्यनेन बर्हिषः साधारण्यं प्रतिपाद्यते । एतद्वाक्योत्तरकालं चाऽऽश्ववालादयो धर्माः पठ्यमानाः साधारण्यं प्रतिपद्यन्ते । सत्यप्यातिथ्याप्रकरणे बर्हिषः साधारणत्वात् । यदि वाक्यान्तरेणाऽऽतिथ्यासंबन्धिनो धर्मा अवगताः

---

१ अपवृक्तं पूर्वं तदातिथ्यायां, उपसत्काले आतिथ्यासंबन्धस्तस्य नास्तीति पा० । २ अपूर्वत्वादिति—उपसत्प्रकरणे ' स्रुवेणाऽऽघारमाघारयति ' इत्येवं फलोपकारकप्राकृताघारपुनःश्रवणेन गृहमेधीयवदुपसदामपि तावन्मात्रेण नैराकाङ्क्ष्यादतिदेशाकल्पनेन प्रकृतिराहित्यरूपापूर्वत्वाद्गतेरिति भावः ।

गृहीता भविष्यति । इतरथा धर्मलक्षणा भवेत् । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या न लक्षणा । तस्मात्त्रयाणां साधारणं बर्हिरिति । पक्षोक्तं प्रयोजनम् ॥ ३० ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये चतुर्थस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

---

अथ चतुर्थाध्याये तृतीयः पादः ।

( द्रव्यसंस्कारकर्मणां फलप्रयुक्तत्वाभावाधिकरणम् ॥ १ ॥ )

[ १ ] द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात् ॥ १ ॥ सि०

यस्य खादिरः स्रुवो भवति स छन्दसामेव रसेनावद्यति सरसा अस्याऽऽहुतयो भवन्ति । यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोति, इति । यस्याऽऽश्वत्थ्युपभृद्भवति ब्रह्मणैवास्यान्नमवरुन्धे । यस्य वैकङ्कती ध्रुवा भवति प्रत्येवास्याऽऽहुतयस्तिष्ठन्ति । अथो प्रैव जायते । यस्यैवंरूपाः स्रुचो भवन्ति । सर्वाण्येवैनं रूपाणि पशूनामुपतिष्ठन्ते, नास्यापरूपमात्मञ्जायते, इति । तथा ज्योतिष्टोमे संस्कारे फलश्रुतिः । यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते । तथा, केशश्मश्रु वपते, दतो धावते, नखानि निकृन्तते, स्नाति, मृता वा एषा त्वगमेध्यं वाऽस्यैतदात्मनि शमलं तदेवोपहते मेध्य एव मेधमेवमुपैति । कर्मणि फलं श्रूयते । अभीषू वा एतौ यज्ञस्य यदाघारौ, चक्षुषी वा एतौ यज्ञस्य यदाज्यभागौ, यत्प्रयाजानुयाजा इज्यन्ते, वर्म वा एतद्यज्ञस्य क्रियते, वर्म यजमानस्य भ्रातृव्यस्याभिभूत्यै, इति । अत्र संदेहः । किमिमे फलविधय उतार्थवादा इति । किं प्राप्तम् । फलविधयः । प्रवृत्तिविशेष·

---

स्युस्ततोऽन्यत्रैतदेव वाक्यं स्याद्धर्मातिदेशकम् । ते तु प्रकरणावगताः । तस्माद्धर्मसाधारण्यम् । एवं च लक्षणा न भवतीति सिद्धम् ॥ ३० ॥

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां चतुर्थाध्याये द्वितीयः पादः ।

---

अपापश्लोकार्थिन उपायमन्विच्छतः पर्णमयीत्वमुपायत्वेन विधीयते । जुह्वाश्च

करत्वात्फलविधेः । यथा खादिरं वीर्यकामस्य यूपं कुर्यात् , पालाशं ब्रह्मवर्चसकामस्य, बैल्वमन्नाद्यकामस्य, इति । यथैते फलविधय एवमिहापि द्रष्टव्यम् ।

एवं प्राप्ते ब्रूमः । फलार्थवादा इति । कुतः । परार्थत्वात् । क्रत्वर्थान्येतानि । जुहूः प्रदाने गुणभूता, उपभृदुपधारणे, ध्रुवाऽऽज्यधारणे, अञ्जनवपनादि च यजमाने, आघारावाज्यभागौ प्रयाजानुयाजाश्चाऽऽग्नेयादिषु । यदि फलेऽपि गुणभावः स्यात्, अन्यत्रोपदिष्टानामन्यत्र पुनर्गुणभाव उपदिष्ट इति प्रतिज्ञायेत । न चैतन्न्याय्यम् । परार्थता हि गुणभावः । क्रत्वर्थता चैषां शब्देन, जुह्वा जुहोति—जुह्वा होममभिनिर्वर्तयतीति । एवं सर्वत्र । तस्मान्नैते पुरुषार्थाः ॥ १ ॥

उत्पत्तेश्चातत्प्रधानत्वात् ॥ २ ॥

अथोच्येत । पुरुषमपि प्रति गुणभाव उपदिष्टो, यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति, इत्येवमादिभिर्वाक्यैरिति । तन्न । कस्मात् । उत्पत्तेरतत्प्रधानत्वात् । न तत्र, पर्णमय्यां जुह्वाऽपापश्लोक-

जात्याकाङ्क्षायां पर्णमयीत्वं परिच्छेदकत्वेन विधीयते । तदुभे अपि निराकाङ्क्षीकर्तुं शक्नोतीत्युभाभ्यां संभन्त्स्यते । 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इत्यनारम्भणीया जातिविशेषाः क्रत्वर्थाः पुरुषार्थाश्च, यथा खादिरतादयः । अथवा 'जुह्वा जुहोति' इति प्रकरणे जुहूर्विहिता 'न स पापं श्लोकं शृणोति' इत्यनेन पुरुषार्थतया विधीयते । सा च साध्यसाधनत्वादृते नोपपद्यत इति वर्तमानापदेशस्यापि विधायिका शक्तिः कल्प्यते । 'यदाङ्क्ते' इत्येवमादिष्वप्येवं योज्यम् ।

एवं प्राप्ते ब्रूमः । जुह्वां क्रत्वर्थतया विधीयमानायां यदिदं तत्फलमेषोऽर्थवादः स्तावकत्वेन । विश्वजिद्वत्फलमशक्यं कल्पयितुम् । यथा प्रणयनं तथा जातितो गुणकामनाऽपि नास्ति । आश्रयस्याविपरिवर्तमानत्वात् । जुहूराश्रय इति चेन्न । द्रव्यत्वात् । औदासीन्यव्यावर्तको ह्याश्रयः । क्रिया च तथा, न द्रव्यम् । दीयमानोऽपि वाक्येन दीयते, तत्र वाक्यभेदः । सा चाऽऽश्रयान्तरमपेक्षते । न चाऽऽश्रयो विपरिवर्तते । तस्मादवगतक्रत्वर्थायां जुह्वां जातिमपेक्षमाणायां जातिर्विधीयते । तस्यां विधीयमानायां फलश्रुतिरर्थवादः ॥ १ ॥

उत्पत्तेश्चातत्प्रधानत्वात्—इत्यनेन साध्यसाधनसंबन्धं निराकरोति । न जातिर्नापि जुहू

१ पालाश्या, इति पा० । २ (अ० ४ पा० १ अ० ३ सू० ५)। ३ लेढ्व्यपरिकल्पनयेति शेषः ।

श्रवणं क्रियत इति कश्चिच्छब्द आह । एतावच्छ्रूयते, यस्यासौ भवति, न स पापं श्लोकं शृणोतीति । एतावदत्र शब्देन गम्यते, यस्यैवंलक्षणा जुहूस्तस्यापापश्लोकश्रवणमिति । तत्र जुह्वा तत्क्रियते, जुहूर्वा तदर्थेति नैतच्छब्द आह । नन्वनुमानादेतद्गम्यते । ध्रुवं पालाश्या जुह्वा तत्क्रियते, यतस्तस्यां सत्यां तद्भवतीति । अत्रोच्यते । नैवंजातीयकं कार्यकारणत्वेऽनुमानं भवति । कार्यकारणसंबन्धो नाम स भवति, यस्मिन्सति यद्भवति, यस्मिंश्चासति यन्न भवति, तत्रैव कार्यकारणसंबन्धः । इह तु तद्भावे भावो ज्ञातो, नाभावेऽभावः । यस्य पालाशी न भवति तस्यापापश्लोकश्रवणं नास्तीति नैवंजातीयकः शब्दोऽस्ति । तेन न नियोगतोऽवगम्यते, तेनेदं क्रियत इति । लक्षणमेतत्पुरुषस्य गम्यते । तस्मान्नानुमानम् ।

अपि च । यस्यापि जुहूः पालाशी भवति, तस्यापि पापश्लोकश्रवणं भवति । कथमवगम्यते । प्रत्यक्षतः । नन्वेवं सत्यग्निहोत्रेणापि फलं न साध्येत । न हुतमात्रेण फलं दृश्यत इति । नैष दोषः । न हि तत्रोच्यते तावत्येव फलं भवतीति । इह तु वर्तमानायां जुहूसत्तायां वर्तमानस्य पापश्लोकश्रवणस्य प्रतिषेधः । तस्मान्न तत्रानुमानम्, इदं कार्यमिदं कारणमिति । अग्निहोत्रादिषु तु शब्देनैव कार्यकारणसंबन्ध उच्यते । तस्मात्तत्र तत्कालेऽदृश्यमानेऽपि फले, कालान्तरे फलं भविष्यतीति गम्यते, न त्वेवंजातीयकेषु । तस्मान्नैवंजातीयकेभ्यः फलमस्तीति ।

ननु यस्य पालाशी जुहूर्भवति, न स पापं श्लोकं शृणोतीत्येवमुक्ते तत एव तत्फलं भवतीति गम्यते । तस्मादिहापि कालान्तरे फलं भविष्यतीति । उच्यते । सत्यं गम्यते । प्रमाणं तत्र किमिति विचारयामः । न तावत्प्रत्यक्षं, नानुमानं, नेतरदृदृष्टविषयमुपमानादि । नो

---

र्विधीयते साधनतया[1] । कुतः । शब्दाभावात् । अर्थवादो विधायक इति चेदेवं साध्याभावः । उभयपरत्वे वाक्यभेदापत्तेः । तदुक्तं ' विधौ च वाक्यभेदः स्यात् '[2] इति । रात्रिसत्रवदिति चेत् । उच्यते । तत्रार्थान्तराभावाद्युक्तम् । इह त्वर्थान्तरमस्ति क्रतूपकारः । जुह्वा अपापश्लोकश्रवणं क्रियत इति शब्दात्तावत्संबन्धो नास्ति । यस्य पर्णमयी जुहूस्तस्यापापश्लोकश्रवणमिति, न चैतत्प्रत्यक्षेण गम्यते । व्यभिचरितत्वान्नानुमानम् ।

---

१ साधनतया—फलसाधनतयेत्यर्थः । २ ( अ० १ पा० २ अ० २ सू० २५ ) ।

खल्वपि शब्द इत्येतदुक्तम् । वाक्यार्थोऽपि पदार्थोपजनितो भवति, नान्यथा। तदुक्तं, तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वादिति । तस्मादप्रमाणमूलत्वान्मिथ्याविज्ञानमेतत् । लौकिकेषु तु वाक्येष्वेवं गम्यते । तानि हि विज्ञातेऽर्थे प्रयुज्यमानान्यध्याहार्यपदानि गौणानि विपरिणतव्यवहितार्थानि च प्रयुज्यन्ते। तस्मात्तत्साहश्याद्वचनावगम्येष्वप्यर्थेषु भवति तत्त्वरूपो मिथ्याप्रत्ययः । यथा मृगतृष्णादिषु । अपि च वर्तमानापदेशोऽयम् । न चायमर्थो वर्तमानः । तस्मान्न खादिरस्रुवादिसद्भावे तत्फलं भवेत् । तदेवमापतति । खादिरादौ सति भवति तत्फलं, नापि भवति । असत्यपि भवति वा न वेति । नैवं विज्ञायते, कुतस्तत्फलमिति ।

तस्मादेवंजातीयकेषूच्चरितेषु न कचित्प्रवृत्तिर्न कुतश्चिन्निवृत्तिरित्यानर्थक्यमक्रियार्थत्वात् । अर्थवादे तु सति भवति प्रयोजनं, खादिरादेः स्रुवादिषु कर्मार्थेषु प्रयोजनवत्सु । यद्येषां क्रतुं प्रति प्रयोजनवत्ता न स्यात्तत एतदेव फलं कयाचिच्छब्दवृत्त्या भवेद्वा न वेति विचार्येत । सति तु पारार्थ्ये नैव काचिच्छब्दप्रवृत्तिराश्रयितुं शक्यते । कैमर्थ्ये हि सा कल्प्येत । तस्मादेवंजातीयका अर्थवादाः । अर्थवादत्वे चावर्तमाने लक्षणया वर्तमानः शब्दः प्रशंसार्थ उपपत्स्यते ॥ २ ॥

## फलं तु तत्प्रधानायाम् ॥ ३ ॥

अथ यदुक्तं, यथा— खादिरं वीर्यकामस्य यूपं कुर्यात्, बैल्वमन्नाद्यकामस्य, पालाशं ब्रह्मवर्चसकामस्य, इति । युक्तं तेषु । त्रिविभक्तिः कुर्यादिति वीर्यखादिरसंबन्धस्य विधात्री । न च वर्तमानापदेशिनी । तस्मात्तत्राविरोध इति । एवं हि पदवाक्यार्थन्यायविदः श्लोकमामनन्ति—

कुर्यात्क्रियेत कर्तव्यं भवेत्स्यादिति पञ्चमम् ।
एतत्स्यात्सर्ववेदेषु नियतं विधिलक्षणम् ॥ इति ।

विधिविभक्तिं हि विधायिकां लिङ्गं मन्यमानास्त एवं समामनन्ति । अस्ति चात्र विधिविभक्तिः । तस्मादनुपवर्णनमेतादिति ॥ ३ ॥

तस्मात्क्रतुसंबन्धान्न पुरुषार्थता । खादिरादीनां तूभयसंयोगयुक्तोभयार्थता ॥२[॥३॥]

१ ( अ० १ पा० १ अ० ७ सू० २५ )। २ वर्तमानशब्द इति पा० ।

( नैमित्तिकानां नित्यप्रयुक्तत्वाभावाधिकरणम् ॥ २ ॥ )

[२] नैमित्तिके विकारत्वात्क्रतुप्रधानमन्यत्स्यात् ॥४॥सि०

अस्ति ज्योतिष्टोमे नैमित्तिकं—बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य, इति। तथाऽग्नौ नैमित्तिकं—साहस्रं प्रथमं चिन्वानश्चिन्वीत, द्विसाहस्रं द्वितीयं, त्रिसाहस्रं तृतीयम्, इति। तथा दर्शपूर्णमासयोः श्रूयते—गोदोहनेन पशुकामस्य प्रणयेत्, कांस्येन ब्रह्मवर्चसकामस्य, मार्तिकेन प्रतिष्ठाकामस्य, इत्येतानि नैमित्तिकानि। तेषु संदेहः। किमेतान्येव नैमित्तिकानि नित्यार्थे, उतान्यत्तत्र नित्यार्थे, इति।

किं प्राप्तम्। एतान्येवेति। कुतः। अत्र ब्रह्मसामादिभिरवश्यं भवितव्यम्। चोदितानि हि तानि संनिहितानि साधनान्याकाङ्क्षन्ति। न चैषां सन्ति विहितानि साधनानि। समीपतश्च नैमित्तिकान्युपनिपतन्ति। तैः प्रकृतैः संनिहितैरेतानि निराकाङ्क्षी क्रियन्त इत्येतन्न्याय्यम्। कथम्। नैमित्तिकं हि संनिहितं वाक्यादवगम्यते, नान्यच्छ्रूयते। यावांश्च श्रुतस्योत्सर्गे दोषस्तावानेवाश्रुतकल्पनायाम्। आह। ननु निमित्तार्थानि तानि प्रकृतानि। उच्यते। नैष दोषः। अन्यार्थमपि प्रकृतमन्येन संबध्यते। यथा, शाल्यर्थं कुल्याः प्रणीयन्ते। ताभ्यश्च पानीयं पीयते। उपस्पृश्यते च। एवमिहापि द्रष्टव्यम्। अथवाऽस्त्येवात्रावान्तरवाक्यम्। यथा, गोदोहनेन प्रणयेत्, इति। तद्कामसंबद्धं गोदोहनेन प्रणयनं प्रापयति। न च शक्यं श्रुतमुत्स्रष्टुम्। योऽप्ययं पशुकामस्येति शब्दः, स पशुकामसंबन्धं शक्नुयात्कर्तुं, नावान्तरवाक्यस्यार्थं निवारयितुम्। न च गम्यमानं, विना कारणेनाविवक्षितमिति शक्यं वदितुम्। भवन्ति च द्विष्ठानि वाक्यानि। यथा, श्वेतो धावति, अलम्बुसानां यातेति। तस्मान्नैमित्तिकान्येव नित्यार्थे भवितुमर्हन्तीति।

---

क्रत्वर्थानि चमसादीन्यदृष्ट्वा पूर्वः पक्षः। केचित्त्वाहुः, वचनमनालोच्य पूर्वः पक्षः। यद्यपि गोदोहनादीनि फलार्थानि तथाऽपि विपरिवर्तमानानि तान्येव क्रत्वर्थान्यपि। अथवा प्रकरणेन गृह्यन्ते। 'अथवा गोदोहनेन प्रणयेत्' इति गोदोहनेन पशुकामस्येति वाक्याद्द्व्यावर्थौ गृह्येते क्रत्वर्थता पुरुषार्थता च। अथवा पशुकामपदाविवक्षया गोदोहनेन प्रणयेदिति श्रुत्यनुग्रहेण पूर्वः पक्षः।

एवं प्राप्ते ब्रूमः । नैमित्तिके श्रूयमाणे क्रत्वर्थमन्यत्स्यादिति । कुतः । विकारत्वात् । विशेषे श्रुतत्वादित्यर्थः । विशेषे हि तत्र नैमित्तिकं श्रूयते । तदसति तस्मिन् विशेषे न भवितुमर्हति । यदुक्तमवश्यकर्तव्यानीति । नैष दोषः । अवश्यं कर्तव्यत्वात्करिष्यन्ते । यत्तु नान्यदेषां विहितं साधनमिति । सामान्यविहितं भविष्यतीति न दोषः । किं तत् । अभीवर्तो ब्रह्मसाम, अष्टादशमन्त्रगतोऽग्निः, वारणं प्रणयनपात्रम् । अथ यदुक्तं, संनिहितैः प्रकृतैर्नैमित्तिकैर्ब्रह्मसामादीनि संभंत्स्यन्त इति । नेति ब्रूमः । न हि बार्हद्गिरादीनां प्रकरणम् । अथोच्येत, प्रकृतैः स्तोत्रादिभिः संबध्यन्त इति । एतदपि नोपपद्यते । यद्यपि प्रकृतानि नित्यानि स्तोत्रादीनि, तथाऽपि वाक्येन निमित्तसंयोगे श्रूयन्ते बार्हद्गिरादीनि । वाक्यं च प्रकरणाद्बलीयः ।

यदुक्तं संनिधानाद्वाक्याद्वगतोऽयमर्थ इति । नैवंजातीयको वाक्यार्थः सामान्यपदार्थं बाधितुमर्हति । निमित्तसंयोगे हि बार्हद्गिरादीनामर्थवत्ता । तस्मात्तत्र तत्रान्यन्नैमित्तिकाश्रित्य इति । अथ यदुक्तम्–अवान्तरवाक्येन गोदोहनमपि प्राप्तिं न शक्यमुत्स्रष्टुम्, ऋते कारणादविवक्षितं कल्पयितुम् । द्विष्ठं हि तद्भवतीति ।

उच्यते । कारणादविवक्षितम् । किं कारणम् । न हीदं युगपद्भवति, परिपूर्णेन चार्थाभिधानमवान्तरवाक्येन चेति । कथम् । प्रणयतीति प्रपूर्वे नयतौ विधिविभक्तिः स्वपदगतमर्थं श्रुत्या विदधाति । प्रणयनादिसंबन्धमपि गोदोहनादि श्रुत्या, वाक्येन च । यस्तु फलस्य गोदोहनादेश्च संबन्धः, स हित्वा श्रुत्यर्थं केवलेन वाक्येन । अथ प्रणयनस्य

एवं प्राप्ते ब्रूमः । नैमित्तिके विकारत्वादिति । यद्यस्मिन्विशेषे श्रूयते ततस्तस्मिन्नसति भवितुमर्हति । अतो विना फलेन न युज्यते । सन्ति च चमसादीन्यसंयुक्तानि भविष्यन्ति । कामपदत्यागाच्छ्रुत्यर्थो गृह्यते । न परमार्थतः श्रुत्यर्थः । नैवंजातीयको **वाक्यार्थः सामान्यपदार्थं बाधितुमर्हतीति** । 'अपः प्रणयति' इत्यनेन सामान्येन या पात्राकाङ्क्षा तां गोदोहनवाक्यमसमर्थं निवर्तयितुम् । कथं, फलसाधनत्वेन निराकाङ्क्षं गोदोहनं कथं तस्य पात्राकाङ्क्षां निवर्तयेत् । तस्मात्सामान्याकाङ्क्षायामबाध्यमानायां चमसेन सह संपत्स्यते । न च द्विष्ठानि वाक्यानि । एक एवार्थो वाक्यस्य । यत्रापि

१ बाधितुर्मिति पा० ।

गोदोहनादिसंबन्धं, गोदोहनादेश्च फलेन संबन्धं विदधातीत्युच्यते। तन्न। द्व्यर्थाभिधानाद्भिद्येत नितरां वाक्यम्। न चैतन्न्याय्यम्। यत्तु, श्वेतो धावतीत्येवमादि, भवेत्तत्र विशेषानवगमादुभयार्थावगतिः। इह तु गम्यते विशेषः कमिपदोच्चारणम्। स इह श्रौतो मन्येत। यदि गोदोहनादेः क्रियासंबन्धो विवक्ष्यते, कमिपदं प्रमादो भवेत्। न चायं प्रमादः। न चावान्तरवाक्यार्थे विवक्षिते कमिपदसंबन्धोऽवकल्पते। तस्मान्न द्विष्ठं वाक्यम्। गोदोहनादिकमिसंबन्ध एवात्राभिधीयते, न नित्यकार्ये भवितुमर्हतीति। एवं सर्वत्र ॥ ४ ॥

( दध्यादेरुभयार्थताधिकरणम् ॥ ३ ॥ )

[ ३ ] एकस्य तूभयत्वे संयोगपृथक्त्वम् ॥ ५ ॥ सि०

अग्निहोत्रे श्रूयते, दध्ना जुहोति, इति। पुनश्च, दध्नेन्द्रियकामस्य जुहुयात्, इति। तथाऽग्नीषोमीये पशावाम्नायते, खादिरे बध्नाति, इति। पुनश्च, खादिरं वीर्यकामस्य यूपं कुर्यात्, इति। तत्र संदेहः। किमत्राप्यन्यान्नित्यार्थमुत नैमित्तिकमेवेति। किं प्राप्तम्। पूर्वेण न्यायेनान्यदिति। एवं प्राप्ते ब्रूमः। एकस्योभयत्वे—नित्यत्वे नैमित्तिकत्वे च संयोगपृथक्त्वं कारणम्। तदिह संयोगपृथक्त्वमस्ति। एकः संयोगो दध्ना जुहोतीति, एको दध्नेन्द्रियकामस्येति। तथैकः खादिरे बध्नातीति, अपरः खादिरं वीर्यकामस्येति। तस्मान्नित्यार्थे कामाय च दधिखादिरादीति ॥ ५ ॥

शेष इति चेत् ॥ ६ ॥

इति चेत्पश्यसि, कस्मान्न पूर्वस्यायमपि शेषो भवति। यदेतदुक्तं— दध्ना जुहोति, खादिरे बध्नातीति। तस्यैव तु दध्नः फलमिन्द्रियं, तथा खादिरस्य वीर्यम्। तच्चेदं चैकं वाक्यमिति ॥ ६ ॥

द्विष्ठत्वं तत्रापि पूर्णेनैवार्थद्वयाभिधानादेवं नास्ति। एतावांस्तु वाक्यान्तरेऽल्पो विशेषः। तेष्वेकैव विवक्षा। वक्तृतो भेदस्तु श्वेतादौ। एकस्य विवक्षा श्वेतगुणो धावतीति, अपरस्य विवक्षा श्वा, इतो धावतीति। बार्हद्गिरादीनि द्वादशाहिकानीहोदाहरणम् ॥ ४ ॥ [ ९ ] ॥

यथा प्रणयनमनूद्य चमसेऽप्येकवाक्यत्वम्, एवं यद्दध्ना जुहोति तदिन्द्रियकामस्येति ॥ ६ ॥

## नार्थपृथक्त्वात् ॥ ७ ॥

नैतदेवं, पृथगेतावर्थौ—यश्च दधिहोमसंयोगो यश्च दधीन्द्रियसंयोगः । तथा खादिरस्य बध्नातिना संयोगो वीर्येण च । द्वावेतावर्थौ, द्वावपि च विधित्सितौ । अर्थैकत्वाच्चैकं वाक्यं समधिगतम् । इहार्थद्वयेन भिद्येत वाक्यम् । कथम् । जुहोतिसमभिव्याहृता विधिविभक्तिरसंभवे श्रौतहोमविधानस्य, गुणं समभिव्याहृतं विधातुमर्हति । तदसंभवे गुणफलसंबन्धम् । तत्र कल्प्यन्ता श्रुतिरुत्सृष्टा वाक्यानुरोधेन स्यात् । न च युगपत्संभवासंभवौ संभवतः । तस्माद्यदेव नैमित्तिकं तदेव नित्यार्थमिति ॥ ७ ॥

( पयोव्रतादीनां क्रत्वर्थताधिकरणम् ॥ ४ ॥ )

## [ ४ ] द्रव्याणां तु क्रियार्थानां संस्कारः क्रतुधर्मः स्यात् ॥ ८ ॥ सि०

ज्योतिष्टोमे समामनन्ति—पयोव्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य, इति । तत्र संदेहः । किमयं पुरुषधर्म उत क्रतोरिति । प्रकरणं बाधित्वा वाक्येन विनियुक्तः पुरुषस्येति । एवं प्राप्ते ब्रूमः । पुरुषाणां क्रियार्थानां शरीरधारणार्थो बलकरणार्थश्चायं संस्कारो व्रतं नाम । स क्रतुधर्मो भवितुमर्हति, प्रकरणानुग्रहाय । ननु वाक्यात्पुरुषधर्म इति । नेति ब्रूमः । तथा सति फलं कल्प्यं, क्लृप्तमितरत्र । प्रयोगवचनेनोपसंहृतं हि तत्प्रधानस्य । तस्मात्क्रतुधर्मः ॥ ८ ॥

## पृथक्त्वाद्व्यवतिष्ठेत ॥ ९ ॥

अथ पुरुषसंयोगः किमर्थः । व्यवस्थापनार्थ इति ब्रूमः । पयोव्रतं

---

प्रणयनं विधीयमानमेव पात्राकाङ्क्षं सन्निधीयते । तत्र यत्प्रणयति केनापि पात्रेण तच्चमसेनेति तस्याऽऽकाङ्क्षां निवर्तयति । अतश्चमसस्य युक्तैकवाक्यता, प्रयोजनैक्यात् । इह तु 'दध्ना जुहोति' इति होमप्रयोजनेनैव निराकाङ्क्षत्वान्नान्यत्प्रयोजनमपेक्षते । एतदपीन्द्रियेण साध्येन निराकाङ्क्षीकृतम् । तस्माद्द्वयोरपि भिन्नसाध्ययोः परस्परसंबन्धो नास्ति, अर्थे भेदात् ॥ ७ ॥

उत्तरस्मिन्नधिकरणे पूर्वाधिकरणसिद्धान्तेन पूर्वः पक्षः ॥ ८ ॥

ब्राह्मणकर्तृकस्य ज्योतिष्टोमस्य पयोव्रतता । सत्यपि क्रत्वर्थत्वे पुरुषप्रधानत्वान्नि-

---

१ ( अ० २ पा० १ अ० १४ ) इत्यत्रेति शेषः ।

ज्योतिष्टोमस्य भवति । तत्तु ब्राह्मणकर्तृकस्यैव, नान्यकर्तृकस्येति । एवं सर्वत्र ॥ ९ ॥

( विश्वजिदादीनां फलवत्त्वाधिकरणम् ॥ ९ ॥ )

## [ ५ ] चोदनायां फलाश्रुतेः कर्ममात्रं विधीयेत न ह्यशब्दं प्रतीयते ॥ १० ॥ पू०

इदमामनन्ति—तस्मात्पितृभ्यः पूर्वेद्युः करोति, इति । तथा, सर्वेभ्यो वा एष देवेभ्यः सर्वेभ्यश्छन्दोभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानमागुरते, यः सत्रायाऽऽगुरते, स विश्वजिताऽतिरात्रेण सर्वपृष्ठेन सर्वस्तोमेन सर्ववेदसदक्षिणेन यजेत, इत्येवंलक्षणके श्रुते भवति संदेहः । किं निष्फलमेतत्कर्ममात्रमुत सफलमिति । किं प्राप्तम् । निष्फलमिति । कुतः । फलाश्रुतेः, शब्दप्रमाणके कर्मण्येवंजातीयके । न ह्यशब्दं प्रतीयते । ननु वैदिकानि कर्माणि फलवन्ति भवन्तीत्येवमुक्तम् । उच्यते । फलदर्शनात्तानि फलवन्तीत्युक्तम् । न वैदिकत्वात् । एवं तर्हि कर्तव्यतावगमात्फलवन्तीत्यध्यवस्यामः । सुखफलं हि कर्तव्यं भवतीति । उच्यते । प्रत्यक्षविरुद्धमेवंजातीयकस्य कर्तव्यत्वम् । साक्षाद्धि तद्दुःखफलमवगच्छामः । न चैवंजातीयकं प्रत्यक्षविरुद्धं वचनं प्रमाणं भवति । यथाऽम्बुनि मज्जन्त्यलाबूनि, शिलाः प्लवन्ते, पावकः शीत इति ।

अपि चानुमानादत्र सुखफलता । यस्मात्कर्तव्यमतः सुखफलमिति । प्रत्यक्षं चानुमानाद्बलीयः । तस्मान्निष्फलमेवंजातीयकमिति । एवं ह्यत्र फलं कल्प्येत । यद्येतत्फलवत्, एवमुपदेशोऽर्थवान् भवतीति । उच्यते । कामं वाक्यमनर्थकमिति न्याय्यं वचनं भवेत् । भवन्ति ह्यनर्थकान्यपि वचनानि, दश दाडिमानि षडपूपा इत्येवंजातीयकानि । ननु विश्वजिद्व्यापारः सुखफल इति । सुखफलं हि भवत्यपूर्वं, न

---

देशस्य पुरुषद्वारेण कृतावनुप्रवेशः । अतोऽब्राह्मणकर्तृकस्य नास्ति पयोव्रतता ॥ ९ ॥

विश्वजित्साधनं ( फलाभावात् ) फलाश्रवणात् । कर्तव्यतावचनस्तस्य कर्तव्यताविनाभूतो न फलेन । तस्मादविनाभावात्, यस्मात्परः प्रत्ययस्तस्य कर्तव्यतां बोधयति । एवं श्रुत्यनुग्रहो भवति । अथोच्येत, फलेन विना यागे न प्रवर्तते । तस्मात्कर्तव्यत्वान्नूनं सुखदोऽयमित्यवसायः । उच्यते । अनुमानात्सुखं कल्प्यते । प्रत्यक्षेण तु दुःखम् ।

व्यापारः । नचायमपूर्वस्य कर्तव्यतामाह । फलकर्तव्यतायां हि सत्यां तदवगम्यते । वाक्यार्थश्च फलस्य कर्तव्यतामाह, न पदार्थः । न चात्र फलसंबद्धं वाक्यमस्ति । तस्मान्नायमपूर्वस्य विधायकः शब्दः । व्यापारमात्रमेव विदधाति । स च व्यापारो न तदा स्वे सुखफलो, नाऽप्यायत्याम् । भङ्गित्वात् । तत्रापूर्वं कल्पयित्वा फलमवगम्येत । फलं च कल्पयित्वाऽपूर्वम् । एवमितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते । तस्मान्निष्फलमेवंजातीयमिति ।

आह । अध्याहरिष्यामहे फलवचनम् । उच्यते । न शक्यं परिपूर्णे वाक्येऽध्याहर्तुम् । परिपूर्णं हीदं वाक्यं, विश्वजिद्यागः कर्तव्य इति । न किंचित्पदमस्ति साकाङ्क्षं, येनाध्याहृत्य फलं संबध्येत । यथाऽक्षेमेऽपि पथि भवति विप्रलम्भकोपदेशः । क्षेमोऽयं, यथा गच्छतु भवाननेनेति । परिपूर्णमेवेदं वाक्यं, नाध्याहारमर्हति विप्रलम्भकर्तृत्वेऽपि । एवमिदमपि परिपूर्णं वाक्यं नाध्याहारमर्हति । अपि चाध्याह्रियमाणे नैवेदं वाक्यं संबध्येत । विश्वजिद्यागः कर्तव्यः, इदं च फलं भवतीति, द्वाविमावर्थौ । एकार्थं च वाक्यं समधिगतम् । तस्मादनर्थकमेवंजातीयकं कर्मेति ॥ १० ॥

अपि वाऽऽम्नानसामर्थ्याच्चोदनाऽर्थेन गम्येतार्थानां ह्यर्थवत्त्वेन वचनानि प्रतीयन्तेऽर्थतो ह्यसमर्थानामानन्तर्येऽप्यसंबन्धस्तस्माच्छ्रुत्येकदेशः सः ॥ ११ ॥ सि०

अपि वेति पक्षव्यावृत्तिः । न चैतदस्ति, अफलमिति । फलचोदना, अर्थेन गम्येत । कतमेनार्थेन । कर्तव्यतावचनेन । आह । ननु

अध्याहृतेन फलेनैकवाक्यतेति चेत् । उच्यते । यजेतेति निराकाङ्क्षत्वादस्य कुतोऽध्याहारः । अध्याहृतेनापि साध्यसाधनसंबन्धस्यानवगमान्नास्ति संबन्धः । यजेत स्वर्गमिति कुतः संबन्धः । तस्मात्सति साध्यसाधनसंबन्धे भवति फलार्थताऽपूर्वद्वारेण । यत्र पुनर्यजेतेति केवलः पदार्थस्तत्र साध्यसाधनसंबन्धो नास्ति । तदभावेऽपूर्वाभावोऽपूर्वाभावे फलाभावः ॥ १० ॥

कर्तव्यतावचनो भावनायां पुरुषं प्रवर्तयति । तस्याश्च प्रयोज्येन भाव्यम् । स च पुरुषार्थः प्रयोज्यतां प्रतिपद्यते । तस्मात्पुरुषार्थो भाव्यमानः । अतः सर्वाख्यातेषु पुरु-

१ विप्रलम्भककर्तृकमिति पा० ।

व्यापारस्य प्रत्यक्षविरुद्धा कर्तव्यता । न व्यापारस्योच्यते । कस्य तर्हि । व्यापारेणान्यस्य कस्यचिदिति । भवति तेनेदानीं वाक्यं साकाङ्क्षम् । तत्राध्याहारोऽवकल्पते । भवति चाध्याहारेणापि कल्पना । यथा, द्वारं द्वारमित्युक्ते, संव्रियतामपाव्रियतामिति वा । कथं पुनरवगम्यत इहाध्याहारेण कल्पयितव्यमिति । आम्नानसामर्थ्यात् । एवमिदमाम्नानमर्थवद्भविष्यति । शक्नोति चार्थमवगमयितुम् । तस्मान्नानर्थकम् ।

ननु यत्पदमध्याह्रियते तत्पौरुषेयम् । तेनावगतं चाप्रमाणम् । उच्यते । नापूर्वमध्याहरिष्यामः । वैदिकेनैवास्य सहान्यत्र समाम्नातेनैकवाक्यतामध्यवस्यामः । आह । नैवं शक्यम् । अन्तिकादुपनिपतितं हि पदं वाक्यार्थमुपजनयितुमलं भवति, न दूरादवतिष्ठमानम् । अत्रोच्यते । व्यवहितमपि हि पराणुद्य व्यवधायकमानन्तर्येण मनसि विपरिवर्तमानमलमेव भवति विशेषमुपजनयितुम् । यथा—

इतः पश्यसि धावन्तं दूरे जातं वनस्पतिम् ।
त्वां ब्रवीमि विशालाक्षि या पिनक्षि जरद्गवम् ॥ इति ।

अत्र, इतः पश्यसीति शब्दो बुद्धौ भवति । सः, दूरे जातं वनस्पतिमित्येतैः पदैर्व्यवहितेन जरद्गवमित्यनेन शब्देन व्यवधायकान्पोह्य संबध्यमानः संबध्यते । अर्थानां ह्यर्थवत्त्वेन हेतुना व्यवहितान्यपि वचनानि संबध्यन्ते । यानि पुनरर्थतो ह्यसमर्थानि तान्यानन्तर्येऽपि सति न परस्परेण संबन्धमर्हन्ति । यथा, या पिनक्षि जरद्गवमित्येवमादीनि । तस्मान्न पौरुषेयता भविष्यति । आह । नन्वत्राप्यपेक्षा पौरुषेयी । उच्यते । नापेक्षा वेदे । वेदार्थप्रतिपत्तावभ्युपाय एष भवति । अनन्तरापेक्षायामसंभवन्त्यामाम्नानसामर्थ्यादितरापेक्षावृत्तिराश्रीयते ।

---

षार्थोऽविनाभूतः, प्रयाजादिषु द्वारेण, दर्शपूर्णमासादिषु साक्षात् । विश्वजिदादयोऽप्यनङ्गत्वात्साक्षात्पुरुषार्थस्य साधकाः । विश्वजितेति च यागनामधेयं करणविभक्तिसंयुक्तम् । तत्र यदि यागोऽपि करणं, ततः सामानाधिकरण्येन नामधेयत्वमुपपद्यते । कर्मीभूते पुनः सामानाधिकरण्याभावान्नामधेयाभावः । न च विश्वजिद्द्रव्यम् । अप्रसिद्धत्वात् । **आपि वाऽऽम्नानसामर्थ्यात्**— भावनासामर्थ्यादित्यर्थः । एकाहकाण्डप-

१ एकाहकाण्डपठितेति—अनेन च 'यः सत्रायाऽऽगुरते स विश्वजिता यजेत' इत्यादिनैमित्तिकानामनुदाहरणत्वं सूचितम् ।

तस्माच्छ्रुत्येकदेशः सः । फलकामपदं दूरेऽपि सत्तस्य वाक्यस्यैकदेशभूतमित्यर्थः ॥ ११ ॥

वाक्यार्थश्च गुणार्थवत् ॥ १२ ॥

इन्द्राय राज्ञे सूकर इति यथा वाक्यान्तरस्थेन विधिशब्देन गुणविधानं भवति, एवं फलविधानमपि भवितुमर्हतीति । यथा, वरुणो वा एतं गृह्णाति, इति व्यवधारणकल्पनायामपि प्रामाण्यमेवमिदमपि द्रष्टव्यम् ॥ १२ ॥

( विश्वजिदादेरेकफलकत्वाधिकरणम् ॥ ६ ॥ )

[ ६ ] तत्सर्वार्थमनादेशात् ॥ १३ ॥ पू०

तस्मात्पितृभ्यः पूर्वेद्युः करोतीति । विश्वजिता यजतेति फलवदेवंविधं कर्मेत्येतत्समधिगतम् । इदं तु संदिह्यते । किं सर्वफलमेतत्कर्म, उतैकफलमिति । किं प्राप्तम् । तत्सर्वार्थमिति । कुतः । अनादेशात् । न किंचिदिहादिश्यत इदं नाम फलमिति । अस्ति चेद्विज्ञायेत । तस्मात्सर्वार्थमविशेषात् ॥ १३ ॥

एकं वा चोदनैकत्वात् ॥ १४ ॥ सि०

एकफलं स्यात्, न वा सर्वार्थम् । कुतः । चोदनैकत्वात् । साकाङ्क्षत्वादेतदर्थिपदेन संबध्यत इत्युक्तम् । यच्चानेकेनापि संबद्धुं शक्नोति, तदेकेन संबध्यते । एकेन संबद्धं सन्निराकाङ्क्षं भवति । न तदपरेणापि संबन्धमर्हति । तस्मादेकैव कर्तव्यचोदना न्याय्या । तस्मादेकफलेति ॥ १४ ॥

---

ठितो विश्वजिदिहोदाहरणम् ॥ ११ ॥ [ १२ ॥ ]

अनादेशाद्यद्यत्कामयते फलमनियमेन तस्य तस्योपायत्वेन विधीयमानत्वात्सर्वार्थता ॥ १३ ॥

यजेतेत्यस्य फलमाकाङ्क्षतः फलमध्याहियते । यस्यैव करणतां गतस्तेन विशेषेण निराकाङ्क्षः, कुतोऽनियमप्रसङ्गः । तस्मान्नियतमेकं फलं साधयतीति ॥ १४ ॥

---

१ वरुणो वा एतमग्रे प्रत्यगृह्णादिति व्यवधारणकल्पना, एवमिदमपीति पा° । २ गृह्णातीतिइत्यारभ्य श्रूयमाणे 'यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणाश्चतुष्कपालान्निर्वपेत्' इत्यस्मिन्वाक्ये दातृपक्रमानुरोधेन प्रतिगृह्णीयादित्यस्य प्रतिग्राहयेदित्येवं वाक्यान्यथात्वकरणरूपव्यवधारणकल्पनाऽऽश्रिता, तद्वदिहापीति दृष्टान्तभावाशयः ।

( विश्वजिदादेः स्वर्गफलकत्वाधिकरणम् ॥ ७ ॥ )

**[ ७ ] स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात् ॥ १५ ॥ सि०**

एवंजातीयकेष्वेवोदाहरणेष्वेतत्समधिगतमेकं फलमिति । इदमिदानीं संदिह्यते । किं यत्किंचिदुत स्वर्ग इति । यत्किंचिदिति प्राप्तम् । विशेषानभिधानात् । तत उच्यते । स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात् । सर्वे हि पुरुषाः स्वर्गकामाः । कुत एतत् । प्रीतिर्हि स्वर्गः । सर्वश्च प्रीतिं प्रार्थयते । किमतो यद्येवम् । अविशेषवचनः शब्दो न विशेषे व्यवस्थापितो भविष्यति । यजेत कुर्यादिति । तस्मात्स्वर्गफलमेवंजातीयकमिति ॥ १५ ॥

**प्रत्ययाच्च ॥ १६ ॥**

भवति चानादिष्टफले कर्मणि स्वर्गः फलमिति प्रत्ययो लोके । एवमुच्यते । आरामकृद्देवदत्तः, नियतोऽस्य स्वर्गः । तडागकृद्देवदत्तः, नियतोऽस्य स्वर्ग इति । किमतो यद्येवम् । इत्थमनेन न्यायेन स्वर्गे संप्रत्ययो भवति । यस्मात्स्वर्गफलेषु कर्मसु कर्तव्येषु फलवचनं नैवोच्चारयन्ति, गम्यत एवेति । तस्मादप्यवगच्छाम एवंजातीयकेषु स्वर्गः फलमिति ॥ १६ ॥

( रात्रिसत्रस्याऽऽर्थवादिकफलकत्वाधिकरणम् ॥ ८ ॥ )

**[ ८ ] क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः ॥ १७ ॥ पू०**

रात्रीः प्रकृत्य श्रूयते, प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति । ब्रह्मवर्चस्विनोऽन्नादा भवन्ति, य एता उपयन्ति, इति । तत्र संदेहः । किं ते फलार्थवादा उत फलविधय इति । किं प्राप्तम् । फलार्थवादा इति कार्ष्णाजिनिर्मेने । कुतः । फलार्थवादसरूपा एते शब्दा इति । किं सारूप्यम् । विधिविभक्तेरभावः । अङ्गवत् । यथा, यस्य खादिरः स्रुवो भवति स छन्दसामेव रसेनावद्यति, इत्येवमादिषु ॥ १७ ॥

[ १५ ॥ १६ ॥ ]

रात्रीणां विधीयमानानामर्थवादोऽयं, भवितव्यं च कर्मणः फलेन, तस्मात्स्वर्गः फलमिति । विधिविभक्तेरभाव इति–कामशब्दाभाव इत्यर्थः । अथवा साध्यसाधनसंबन्धाभाव इति ॥ १७ ॥

**फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात् ॥ १८ ॥ सि०**

आत्रेयः पुनराचार्य एवंजातीयकेभ्यः फलमस्तीति मेने, न फलार्थवाद इति। कुतः। अश्रुतफलत्वेऽप्यमीषां फलचोदनया वाक्यशेषभूतया भवितव्यम्। तस्मादन्या व्यवहिता सती, अव्यवहिता कल्पनीया। इयं त्वव्यवहिता क्लृप्तैव। प्रतिष्ठया ब्रह्मवर्चसत्तया च समभिव्याहार आसां प्रत्यक्षः। विधिविभक्तिमात्रमन्यतोऽपेक्ष्यम्। आह। कथं केवलं विधिविभक्तिमात्रमन्यतो भविष्यति। यदनेन प्रतिष्ठादिना धात्वर्थेन संभन्त्स्यत इति। उच्यते। सह धात्वर्थेन भविष्यति, न केवलम्। तस्माददोषः। अथवा रात्रीणां या विधायिका विभक्तिः, सा इममपि प्रतिष्ठादिविशेषं विधास्यति प्रयोगवचनेन। स्तुतिर्वा सह प्रतिष्ठादिभिर्विधात्री भविष्यतीति ॥ १८ ॥

**अङ्गेषु स्तुतिः परार्थत्वात् ॥ १९ ॥**

कर्मणः फलेन भवितव्यम्। तत्र किं स्वर्गपदमध्याहृत्य तेन सहैकवाक्यता, उत प्रतिष्ठापदैकदेशं विपरिणम्य प्रतिष्ठादेः फलत्वम्। संनिधानस्य क्लृप्तत्वात्प्रतिष्ठादेरेवैकवाक्यता कल्प्या। स्वर्गाध्याहारे हि संनिधानमेकवाक्यता चोभयं कल्प्यम्। तत्र गौरवम्। विधिविभक्तिमात्रमन्यतोऽपेक्ष्यमिति— साधनसङ्गतय एवमादिग्रन्थः। पूर्वेण प्रतिष्ठादि साधितं साध्यम्। उत्तरेण तूपयन्तीति वर्तमानापदेशाल्लिङध्याह्रियते साधनत्वप्रतिपत्तये। आह—कथं केवलं विधिविभक्तिमात्रमन्यतो भविष्यति, यदनेन प्रतिष्ठादिना धात्वर्थेन संभन्त्स्यत इति। प्रतिष्ठादीत्यनेनोपयन्तीत्ययं धात्वर्थो लक्ष्यते। एवं परिचोदित आह—यत्साध्यसाधनसंबन्धं समर्थं कर्तुं तत्सहैव धातुनाऽध्याहरिष्याम, उपेयुरिति। अथवा रात्रीणां य उत्पत्तिप्रयोगवचनः स यथेतिकर्तव्यतासंबन्धमपेक्षते तथा स एव साध्यसाधनसंबन्धं करिष्यति। यथा 'एकस्मै कामायान्ये यज्ञक्रतव आह्रियन्ते। सर्वेभ्यो ज्योतिष्टोमः' इत्येतस्माद्वाक्याल्लिङोऽभावेऽपि ज्योतिष्टोमः सर्वकामानां साधनं भवति। तथा हि। उत्पत्तौ या लिङ् सा साधनत्वेन ज्योतिष्टोमं विधास्यति, एवमिहापि। अथवाऽर्थवादोऽविनाभावाद्विधिं लक्षयति। स लक्षितः साध्यसाधनसंबन्धं प्रतिपादयिष्यति। तस्मादर्थवादेभ्यो विधिः। विपरिवर्तमानाश्च त एव फलतां प्रतिपत्स्यन्ते। तस्मात् 'सः स्वर्गः स्यात्' इत्यस्यायमपवादः ॥ १८ ॥ [ १९ ॥ ]

---

१ ( अ० ४ पा० ३ अ० ७ सू० १५ )।

अथ यदुक्तं यथा, यस्य खादिरः स्रुवो भवतीत्येवमादिषु फलश्रुतिरर्थवादो भवति, एवमिहापि स्यादिति । युक्तं तत्र फलार्थवादः । फलविध्यसंभवात्, फलार्थवादसंभवाच्च । तदुक्तं, द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यादिति ॥ १९ ॥

( स्ववाक्यश्रुतफलकानां स्वर्गफलकत्वाभावाधिकरणम् ॥ ९ ॥ )

[ ९ ] काम्ये कर्मणि नित्यः स्वर्गो यथा यज्ञाङ्गे क्रत्वर्थः ॥ २० ॥ सि०

काम्यानि कर्माण्युदाहरणं, सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इत्येवमादीनि । तत्र संदेहः । किमेषां स्वर्गः फलं कामश्च, उत काम एवेति । किं प्राप्तम् । काम्ये कर्मणि नित्यः स्वर्गः स्यात् । कथम् । सर्वपुरुषार्थाभिधायी सामान्यवचनः शब्दो न विशेषेऽवस्थापितो भवति । शक्यते ह्यस्य दूरस्थेनापि स्वर्गकामशब्देन संबन्धः । आह । ननु विशेषकः शब्दः श्रूयते, ब्रह्मवर्चसकाम इति । नैष विशेषकः । उपाधिकर एषः । यथा काष्ठान्याहर्तुं प्रस्थित उच्यते, भवता शाकमप्याहर्तव्यमिति । काष्ठाहरणे शाकाहरणमुपाधिः क्रियत इति । किमिदमुपाधिः क्रियत इति । काष्ठाहरणाधिकारसमीपे द्वितीयं कर्मोपधीयते । सति काष्ठाहरणे, इदमपरं कर्तव्यमिति । एवमिहापि स्वर्गफले फलमपरमुपधीयते, ब्रह्मवर्चसकामो यागेन स्वर्गमभिनिर्वर्तयेदिति । न हि तत्र ब्रह्मवर्चसफलवचनं स्वर्गफलस्य प्रतिषेधकम् । यथा यज्ञाङ्गे क्रत्वर्थः । गोदोहनेन पशुकामस्य प्रणयेदिति । यः पशुकामः स गोदोहनेन प्रणयनमभिनिर्वर्तयेदिति ॥ २० ॥

वीते च कारणे नियमात् ॥ २१ ॥

वीते च कारणे, वीतायां फलेच्छायामवाप्ते वा फले समाप्तिनियमो दृश्यते । वृष्टिकामेष्ट्यां, यदि वर्षेत्तावत्येव जुहुयात्, यदि न वर्षेत् श्वोभूते जुहुयादिति । यदि न स्वर्गः, किमर्थः समाप्तिनियमो भवेत् । तस्मान्नित्यः स्वर्ग इति ॥ २१ ॥

---

निर्वपेदित्ययं विधिः पुरुषमात्रं प्रवर्तयति । तत्र यदि स्वर्गः फलमिष्यते, पुरुषप्रयत्नवचनस्य न बाधः । प्रीतिमात्रं हि सर्व एवेच्छन्ति । तस्मात्स्वर्गः फलम् ॥२०॥

---

१ ( अ० ४ पा० ३ अ० १ )। २ गम्यते, इति पा० ।

## कामो वा तत्संयोगेन चोद्यते ॥ २२ ॥ सि०

कामो वा फलं भवेन्न स्वर्गः । तत्संयोगेनास्य चोदना भवति, न स्वर्गकामसंयोगेन । आनुमानिकोऽस्य स्वर्गकामेनैकवाक्यभावः । प्रत्यक्षस्तु कामवचनेन । प्रत्यक्षं चानुमानाद्बलीयः । तस्मात्काम एव फलमिति ॥ २२ ॥

## अङ्गे गुणत्वात् ॥ २३ ॥

अथ यदुक्तं, यथा यज्ञाङ्ग इति । युक्तम्, अङ्गे गुणत्वात् । प्रत्यक्षस्तत्र क्रतुना संयोगः, कामेन च । यः पशुकामः स्यात्स गोदोहनेन प्रणयनमभिनिर्वर्तयेदिति । न त्वत्र प्रत्यक्षः शब्दोऽस्ति । यो ब्रह्मवर्चसकामः स्यात्, स यागेन स्वर्गमभिनिर्वर्तयेदिति । कथं तर्हि । यो ब्रह्मवर्चसकामः स्यात्, स तद्यागेन निर्वर्तयेदिति । तस्मान्नाङ्गवद्भवितुमर्हतीति ॥ २३ ॥

## वीते च नियमस्तदर्थम् ॥ २४ ॥

अथ यदुक्तं, वीतायां फलेच्छायामवाप्ते वा फले समाप्तिनियमो दृश्यत इति । तत्र ब्रूमः । वीते नियमस्तदर्थम् । वीते नियमो भवति, तस्मै प्रयोजनाय । कस्मै । शिष्टाविगर्हणाय । उपक्रम्यापरिसमापयतस्तदनन्तरमेवैनं शिष्टा विगर्हयेयुः, प्राकामिकोऽयं कापुरुष इति वदन्तः। ये हि देवेभ्यः संकल्प्य हविः, न यागमभिनिर्वर्तयन्ति, तान्शिष्टा विगर्हन्ते । तस्मादवश्यं समापयितव्यम् । तत्रैतद्दर्शनं युक्तं भविष्यति, यदि वर्षेत्तावत्येव जुहुयादिति । तस्मात्काम्यानां काम एव फलमिति ॥ २४ ॥

( दर्शपूर्णमासादीनां सर्वकामार्थताधिकरणम् ॥ १० ॥ )

## [ १० ] सार्वकाम्यमङ्गकामैः प्रकरणात् ॥ २५ ॥ पू०

इदमाम्नायते—एकस्मै वाऽन्या इष्टयः कामायाऽऽह्रियन्ते, सर्वेभ्यो दर्शपूर्णमासौ, एकस्मै वाऽन्ये क्रतवः कामायाऽऽह्रियन्ते सर्वेभ्यो ज्योतिष्टोम इति । तत्र संदेहः । किमङ्गकामैरङ्गाङ्गकामैश्च सहास्यानुवादः, अथवा विधिरिति । किं प्राप्तम् । अनुवाद इति । यदेतत्सार्व-

---

[ २१ ॥ २२ ॥ २३ ॥ २४ ॥ ]

' सर्वेभ्यो ज्योतिष्टोमः ' इति विधायकाभावात्सानन्त्वाभावः । तस्मादङ्गा-

काम्यं, तदनूद्यते । अङ्गकामैश्चाङ्गाङ्गकामैश्च सह । सन्ति ह्यङ्गकामाश्चाङ्गाङ्गकामाश्च । यथा, आहार्यपुरीषां पशुकामस्य वेदिं कुर्यात्, खननपुरीषां प्रतिष्ठाकामस्य, इत्येवमादयः । तथा, यदि कामयेत वर्षेत्पर्जन्य इति नीचैः सदो मिनुयात्, इति । तद्विहितमेवेदमाभिधीयत इत्यनुवादं न्याय्यं मन्यामहे ॥ २५ ॥

## फलोपदेशो वा प्रधानशब्दसंप्रयोगात् ॥ २६ ॥ सि०

फलविधिर्वा । कुतः । प्रधानशब्देनफलसंयोगो भवति । सर्वेभ्यो दर्शपूर्णमासौ, सर्वेभ्यो ज्योतिष्टोम इति च । प्रधानाभिधानेन च प्रधानस्य सर्वफलवत्ता विहिता । तस्मान्नानुवादः । अथाङ्गकामानङ्गाङ्गकामांश्चापेक्षते, तथा लक्षणाशब्दः स्यात् । श्रुतिश्च लक्षणाया गरीयसी । तस्मात्प्रयोगवचनेन विधिरिति ॥ २६ ॥

( योगसिद्ध्यधिकरणम् ॥ ११ ॥ )

## [ ११ ] तत्र सर्वेऽविशेषात् ॥ २७ ॥ पू०

एवंजातीयकेष्वेवोदाहरणेष्वेतदुक्तं, प्रधाने सर्वकामानां विधिरिति । इदमिदानीं संदिह्यते । किं सकृत्प्रयोगे सर्वे कामा उत पर्यायेणेति । किं प्राप्तम् । सकृत्प्रयोगे सर्वे कामा इति । कथम् । सर्वेषां कामानां दर्शपूर्णमासौ निमित्तं, ज्योतिष्टोमश्चेति । निमित्तं चेत्सर्वेषां कामानां, कोऽत्र खलु कामो न भविष्यतीति । तस्माद्यौगपद्येन सर्वे कामा इति ॥२७॥

---

कामानपेक्ष्य सर्वेभ्यो ज्योतिष्टोम इत्यनुवादः ॥ २५ ॥

प्रधानेभ्यः फलं श्रुतम् । अङ्गान्यङ्गाङ्गानि च लक्षणया गम्येरन् । श्रुतिश्च बलीयसी । न चायं कस्यचिद्विधेः शेषः, येनार्थवादत्वादनूद्येत । तस्मादत्रोत्पत्तिप्रयोगवचनार्थवादाध्याहाराणामन्यतरतो विधिः ।

किं कर्मसाध्यान्कामानपेक्ष्य सर्वकामता, उत यावन्तः केचन कामा इति । अविशेषाद्यावन्तः कामा इति । अन्ये क्रवत एकफलसाधनकाः, अयं तु क्रतुः सर्वाणीति क्रतुगतानि फलान्यपेक्ष्य सर्वतेति चेत् । तन्न । ज्योतिष्टोमस्य सर्वफलेभ्यो विधीयमानस्यार्थवादोऽयम् । तस्मान्नियतफलताया नास्ति प्रमाणम् । उच्यते । यत्र यत्र कामशब्दो हिरण्यकामः पुत्रकाम इति तेष्वेवास्य साधनता । कुतः । तेषु हि कामशब्दमुच्चारयन्ति नेतरत्र । उपलब्धपूर्वे हि प्रियं भवतीति । सर्वज्ञता च न कदाचिदुपलब्धा । तस्मात्तत्र कामस्याप्रवृत्तिः । तेन य एव वेदे कामशब्दा उच्चारितास्तेऽनुपज्यन्ते । ॥ २६ ॥ [ २७ ॥ ]

योगसिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगित्वात् ॥ २८ ॥ सि०

न चैतदस्ति सर्वे युगपत्कामा इति । पर्यायो योगसिद्धिः । पर्यायेण भवेयुः कामा इति । कुतः । अर्थस्योत्पत्त्यसंयोगित्वात् । अर्था इमे कामा नाम, न सर्व एव युगपदुत्पद्यन्ते । असंभवो युगपदुत्पत्तेः सर्वेषां, विरोधात् । अथवा, उत्पत्त्यसंयोगित्वादिति । न कामानामेतदुत्पत्तिवचनम् । उत्पन्नानां लक्षणत्वेन वचनम् । ये सर्वे कामास्तेभ्यो दर्शपूर्णमासौ ज्योतिष्टोमश्चेति । न सर्वे कामाः कर्मणः श्रूयन्ते, ये सर्वे कामास्तेभ्यो हि कर्म विधीयते । तस्मान्न कामानां साहित्यं गम्यत इति ॥ २८ ॥

( वर्णकान्तरेण पुत्रवृष्ट्यादेः कर्मफलस्यैहिकामुष्मिकत्वप्रतिपादनम् )

॥ एवं वा ॥ काम्यानि कर्माण्युदाहरणम् । सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः, ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः, चित्रया यजेत पशुकामः, वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकाम इति । तेषु संदेहः । किमिह लोके कामाः, उतामुष्मिँल्लोक इति । किं प्राप्तम् । तत्रामुष्मिँल्लोके कामाः । अविशेषात् । यथा स्वर्गः, एवमिमेऽपि । न ह्यनन्तरं निर्वृत्ते कर्मणि फलमुपलभ्यते पश्वादि । यच्चानन्तरमुपलभ्यते, तत्तत इति विज्ञायते । यथा यत्कालं मर्दनं, तत्कालं मर्दनसुखम् । यच्च कालान्तर उपलभ्यते, तस्यान्यदेव कारणमस्ति प्रत्यक्षम् । शरीरग्रहणस्य तु नादृष्टादन्यत् किंचित्कारणमस्ति । तस्माद्विशिष्टेन्द्रियशरीरादि फलं पशुसंबन्धसमर्थं पशुफलात्कर्मणो भवतीत्येवं बोद्धव्यम् । तद्धि दर्शयति । कैकयो यज्ञं विवित्सन् दाल्भ्यमुवाच । अनया स्वाराष्ट्रप्रतिपादनीययेष्ट्या[1] याजयेति । सोऽब्रवीत् । न वै सौम्य राष्ट्रप्रतिपादनं वेत्थ, अमुष्मै कामाय यज्ञा आह्रियन्ते, इति जन्मान्तरफलतां दर्शयति । तस्माज्जन्मान्तरफलानि काम्यानीति ॥ २७ ॥

कामानामुद्दिश्यमानत्वादितरेतरयोगाविवक्षा । तदुद्देशेन ज्योतिष्टोमो विधीयमान एकमेव फलमेकस्मिन्प्रयोगे साधयति । न तु यौगपद्येन सर्वाणि, अनुपादेयत्वात्तेषाम् । न चागृह्यमाणविशेषत्वम् । कामनया विशेषावगमात् । यदाऽपि कामनाऽनेकविषयोत्पन्ना तदाऽप्येकमेवोद्दिश्य कर्मानुष्ठातव्यं, कर्मणस्तथा सामर्थ्यात् । अथवा कामोत्पत्तौ निमित्ते ज्योतिष्टोमो विधीयते । कामाश्च भेदेनैवोत्पद्यन्ते । अतो निमित्तभेदान्नैमित्तिकस्याप्यावृत्तिः ॥ २८ ॥

१ राष्ट्रप्रतिपादनीयामिति पा० ।

इहैवैषां सिद्धिर्योगस्य । उत्पत्त्या योगो न संभवति । यः पशून् कामयते स एतेन यागेन कुर्यादिति नात्रैतद्गम्यते, इह जन्मनि न संभवतीति । यच्चानन्तरं नोपलभ्यत इति । तन्न । प्रत्यक्षानुमानाभ्यां न गम्यते । शब्देन त्वस्त्यवगतिः । यत्तु कालान्तरेऽन्यत्कारणमिति । नैष दोषः । अन्यदपि भविष्यति, एतदपि । यच्चामुष्मै कामाय यज्ञा आह्रियन्त इति । अत्रोच्यते । एवमस्य ऋषेर्मतम् । इह यस्य फलं तेन त्वां न याजयामि, यस्यामुत्र फलं तेन च याजयिष्यामीति । तस्मादेतत्परिहृतमिति ॥ २८ ॥

( सौत्रामण्यादेश्चयनाद्यङ्गताधिकरणम् ॥१२ ॥ )

## [ १२ ] समवाये चोदनासंयोगस्यार्थवत्त्वात् ॥ २९ ॥ सि०

अग्निं चित्वा सौत्रामण्या यजेत, वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत, इति । तत्र संदेहः । किमङ्गप्रयोजनसंबन्ध एव उत कालार्थः संयोग इति । अङ्गप्रयोजनसंबन्ध इति ब्रूमः । एवं हि श्रुतिविनियुक्तोऽर्थः । इतरथा कालो लक्ष्येत । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या न लक्षणा । तस्मादग्न्यङ्गं सौत्रामणी, वाजपेयाङ्गं बृहस्पतिसव इति ॥ २९ ॥

---

एवं वा । योगसिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगित्वात् । पुत्रवृष्ट्यादीनि, इह वाऽमुत्र वेत्यनियमः । कुतः । पुत्रादीनि कामयमानस्योपायो विधीयते । उपाये च कृते नियतमुपेयेन भवितव्यम् । तत्र कदाचित्पूर्वजन्मन्यशुभं कृतम् । तच्चानुभाव्यं, तस्मात्पूर्वजन्मकृतमनुभूयते । तत्र यदि जन्मान्तरकृतोऽधर्मः प्रक्षीणस्तत इहैव जन्मनि फलम् । अथाक्षीणस्ततस्तेन बद्धसाधकं फलमुत्कृष्यते । फलं भवतीत्येतावति विधिशब्दोऽस्ति । न त्वनन्तरत्वे । तस्मादनियमः । स्वर्गस्तु जन्मान्तर एव । स हि निरतिशया प्रीतिः कर्मानुरूपा चेति न शक्येह जन्मन्यनुभवितुम् । यतोऽस्मिँल्लोके क्षणे क्षणे सुखदुःखे अनुभवन्ति । न च प्रीतिमात्रं ज्योतिष्टोमफलम् । प्राणिमात्रस्य च सा विद्यते । न च प्राणिमात्रं ज्योतिष्टोमं करोति । तस्मात्स्वाभाविक्यसौ । देहान्तरं तु निरतिशयप्रीत्यनुभवनायान्यथानुपपत्त्या कल्प्यते । तच्चामृतस्य न भवतीत्यतो जन्मान्तरे स्वर्गः ॥ २८ ॥

यदि वाजपेयः पारार्थ्येनोच्चार्येत, त्रिःप्रकारयाऽपि श्रुत्या हीयेत । तस्मादङ्गत्वायोच्चार्यमाणः स्वार्थः, तेनाङ्गाङ्गिसंबन्धः ॥ २९ ॥

---

१ देशान्तरमिति पा० ।

## कालश्रुतौ काल इति चेत् ॥ ३० ॥

एवं चेत्पश्यसि, अङ्गप्रयोजनसंबन्ध इति । अथ कालविधानं कस्मान्न भवति । कालविधिरूपो हि शब्दः, चित्वा चयनेऽभिनिर्वृत्त इति ॥ ३० ॥

## नासमवायात्प्रयोजनेन स्यात् ॥ ३१ ॥

नैतदेवम् । असमवायात् । शब्दप्रयोजनेन शब्दार्थेनेत्यर्थः । शब्दार्थश्चयनम् । तेनासमवायः स्यात्सौत्रामण्याः, वाजपेयेन च बृहस्पतिसवस्य । प्रकरणं च बाध्येत । अग्निप्रकरणे श्रूयमाणोऽग्नेर्धर्मो गम्यते यागः । वाजपेयप्रकरणे च वाजपेयस्य । इतरथा तयोः प्रकरणेऽन्यस्य धर्मः कालो गम्येत । तस्मादङ्गप्रयोजनसंबन्ध इति ॥ ३१ ॥

( वैमृधस्य पौर्णमासीमात्राङ्गताधिकरणम् ॥ १३ ॥ )

## [ १३ ] उभयार्थमिति चेत् ॥ ३२ ॥ पू०

दर्शपूर्णमासयोरामनन्ति, संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति, इति । तत्र संदेहः । किमुभयाङ्गं वैमृधः, कालार्थः पौर्णमासीसंयोग उताङ्गप्रयोजनसंबन्ध इति । किं प्राप्तम् । एवं चेदुभयार्थो वैमृधः । कुतः । प्रकरण उभयोराम्नानसामर्थ्यात् । कालविधिसारूप्याच्च संस्थाप्येति ॥ ३२ ॥

## न शब्दैकत्वात् ॥ ३३ ॥ सि०

एकः शब्दः, अनुनिर्वपतीति । एकस्मिन्नेव वाक्ये न द्वौ संबन्धौ

---

अङ्गाङ्गित्वे हि बृहस्पतिसवः कर्मान्तरं, तस्यापूर्वान्तरं, धर्मलक्षकत्वं च । तस्मादेवमादिदोषपरिहारार्थ निर्ज्ञातस्य बृहस्पतिसवस्य वाजपेयेन कालो लक्ष्यते । इष्ट्वेति च कालाभिधाने समर्थः शब्दः ॥ ३० ॥

प्रकरणान्तरस्त्वादविपरिवृत्तिः । अविपरिवृत्तिश्चेत्कथं कालोऽस्य विधीयते । यदि 'बृहस्पतिसवेन यजेत' इत्यनेन विपरिवृत्तिः, ततस्तत्रैव क्षीणत्वान्न कालविधिः । अथ कालविधिः, न विपरिवृत्तिः । तस्मात्प्रकरणान्तरे श्रुतं कर्मान्तरं विधीयते । तच्च वाजपेयाङ्गम् । तत्र प्रधानकालत्वादङ्गानां प्रधानकालत्वे प्राप्ते वचनाद्वाजपेयेन साङ्गेन बृहस्पतिसववर्जितेनापूर्वं कृत्वा तत इदं कर्तव्यमिति ॥ ३१ ॥ [३२॥३३ ॥ ३४ ॥]

---

१ कालश्रुतेरिति पा० ।

शक्नोति विधातुम् । वैमृधस्य दर्शपूर्णमासाभ्यां पूर्णमासीकालेन च । एकार्थत्वाद्ध्येकं वाक्यं समधिगतम् ॥ ३३ ॥

**प्रकरणादिति चेत् ॥ ३४ ॥**

प्रकरणादिति यदुक्तं, तत्परिहर्तव्यम् ॥ ३४ ॥

**नोत्पत्तिसंयोगात् ॥ ३५ ॥**

नैतदेवम्, एतदेव वैमृधस्योत्पत्तिवाक्यम् । तद्दर्शपूर्णमासाभ्यां वा प्रकरणादेकवाक्यभावमियात् । प्रत्यक्षं वा पौर्णमास्या । तत्र प्रत्यक्षसंयोगः प्रकरणाद्बलवान् । प्रत्यक्षश्च पौर्णमास्या संयोगः, परोक्षः कालेन । तस्मात्पौर्णमास्यङ्गं वैमृध इति ॥ ३५ ॥

( अनुयाजादीनां कालविधानार्थताधिकरणम् ॥ १४ ॥ )

**[ १४ ] अनुत्पत्तौ तु कालः स्यात्प्रयोजनेन संबन्धात् ॥ ३६ ॥ ॥**

ज्योतिष्टोमे श्रूयते—आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति, प्रहृत्य परिधीञ्जुहोति हारियोजनम्, इति । तत्र संदेहः । किमङ्गं विधीयते, उत काल इति । अङ्गविधाने श्रुतिः, कालविधाने लक्षणा । तस्मादङ्गविधानमिति प्राप्ते, ब्रूमः । अनुत्पत्तिवाक्ये कालः स्यात् । आग्निमारुतं सोमाङ्गम्, अनुयाजाः पश्वङ्गम् । तत्र न तयोः परस्परेण संबन्धः । तथा परिधयः पश्वङ्गं, हारियोजनमन्यदेव प्रधानम् । अनुयाजा आग्निमारुतं च प्राप्तम् । आनन्तर्यमेव तयोर्न प्राप्तम् । तद्विधीयते । तथा, हारियोजनस्य परिधिप्रहरणस्य च । एवं च सति न हारियोजनस्य परिधिप्रहरणेन कश्चिदुपकारः क्रियते, हारियोजनेन वा परिधिप्रहरणस्य । ननु परिधिप्रहरणस्योपरिष्टाद्भावेन तस्योपक्रियेतेति । उच्यते । न ह्युपरिभावार्थं परिधिप्रहरणमनुष्ठेयम् । विद्यत एवैतत्पश्वर्थम् । तस्मिंश्च सति तस्योपरिभावो विद्यत एवेति । तस्मात्कालार्थः संबन्ध इति ॥ ३६ ॥

---

'संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति' इत्यनेन वैमृध एव पौर्णमास्यङ्गत्वेन विधीयते । नान्यद्वाक्यान्तरमस्ति दर्शपूर्णमासाङ्गत्वावगमकम् । येनानेन कालसंयोगः क्रियेत ॥ ३५ ॥ [ ३६ ॥ ]

---

१ ( अ० २ पा० १ अ० १४ ) इत्यत्रेति शेषः ।

( ज्योतिष्टोमस्य दर्शपूर्णमासोत्तरकालत्वाधिकरणम् ॥ १५ ॥ )

## [ १५ ] उत्पत्तिकालविशये कालः स्याद्वाक्यस्य तत्प्रधानत्वात् ॥ ३७ ॥ सि०

इदमाम्नायते, दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत, इति। तत्र संदेहः। किमेतदङ्गस्य विधानमुत कालस्येति। किं प्राप्तम्। श्रुतेरङ्गस्येति प्राप्ते, उच्यते। अस्मिन् कालाङ्गविधानसंशये कालः स्यात्। वाक्यस्य तत्प्रधानत्वात्। कालप्रधानं ह्येतद्वाक्यं, न यागविधानपरम्। कथमतत्परताऽस्य। रूपावचनात्। कथं रूपावचनम्। देवताभावात्। कथमभावः। अश्रुतत्वात्। या हि यस्य श्रूयते, सा तस्य देवता भवति। श्रुत्या हि देवता गम्यते, न प्रत्यक्षादिभिः। तस्मान्नापूर्वस्य यागस्य विधानम्। कालार्थेऽनुवादे नायं दोषः। विहितदेवताको ह्यनूद्यते। तस्मादत्र कालार्थः संबन्ध इति। तच्च दर्शयति—एष वै देवरथो यद्दर्शपूर्णमासौ; यद्दर्शपूर्णमासाविष्ट्वा सोमेन यजते, रथस्पष्ट एवावसाने वरे देवानामवस्यतीति। प्रदर्शिते मार्गे रथेन यातुः सुखं भवति। एवं दर्शपूर्णमासाविष्ट्वा सोमेन यष्टुः सुखं भवति। दर्शपूर्णमासप्रकृतीनि तस्य दीक्षणीयादीनि स्वभ्यस्तानि भवन्ति। एवमर्थवादोऽर्थवान्भवति ॥ ३७ ॥

---

कथं रूपावचनम्। देवताभावादित्ययुक्तमिदम्। 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन[१] यजेत' इति सत्यामपि पूर्वकालताया न कालार्थः संयोगः, किं तर्हि। अङ्गाङ्गिसंबन्धः। अविपरिवर्तमानत्वान्न शक्यते वाक्यान्तरेण यो बृहस्पतिसवोऽवगतः स एव काले विधीयत इति। तस्मात्प्रकरणान्तरे श्रूयमाणं कर्मान्तरत्वं प्रतिपद्यते बृहस्पतिसवधर्मकम्। एवमिहापि प्रकरणान्तरे श्रूयमाणं कर्मान्तरम्। यथा सोमोद्भिदादय ऐन्द्रवायवादिभी रूपवन्त एवं रूपवान्भविष्यति। तस्मादन्यथा वर्ण्यते। ज्योतिष्टोमप्रकरण इदमाम्नातम्। ननु तत्रापि प्रकरणान्तरत्वाद्दर्शपूर्णमासयोरङ्गता। उच्यते। दर्शपूर्णमासाभ्यामिष्ट्वेति नामधेयमिदमाख्यातामावात्स्वतन्त्रम्। स्वातन्त्र्याच्च यत्पूर्वं विज्ञातं तदभिधत्ते। आख्याते हि सति तदनुसार्येतत्। यद्याख्यातं प्रकृते वर्तते ततः प्रकृते। अथाप्रकृते ततस्तदप्यप्रकृते। तस्माद्दर्शपूर्णमासोत्तरकालः सोमः कर्तव्य इत्येतद्विधीयते। स च विपरिवर्तमानत्वान्न कर्मान्तरम्। दर्शपूर्णमासौ नैव विधीयेते। अतस्तयोः कर्मान्तरशङ्कैव नास्ति ॥ ३७ ॥

---

१ कथं वाक्यरूपावचनादिति पा०।

( वैश्वानरेष्टेः पुत्रगतपूतत्वादिफलप्रयुक्तत्वाधिकरणम् ॥ १६ ॥ )

[ १६ ] फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वात् ॥ ३८ ॥ सि०

वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते, इति विधायाऽऽम्नायते, यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति, इति। तत्र संदेहः। किमात्मनिःश्रेयसाय, उत पुत्रनिःश्रेयसायेति। आत्मनिःश्रेयसायेति ब्रूमः। नेमानि फलदानि परस्य भवन्ति कर्माणि। कुतः। आधान आत्मनेपदनिर्देशात्। यथा, यद्येकं कपालं नश्येदेको मासः संवत्सरस्यापेतः स्यात्। अथ यजमानः प्रमीयेत, द्यावापृथिवीयमेककपालं निर्वपेत्। यदि द्वे नश्येयातां द्वौ मासौ संवत्सरस्यापेतौ स्याताम्। अथ यजमानः प्रमीयेत, आश्विनं द्विकपालं निर्वपेत्। संख्यायोद्वासयति यजमानस्य गोपीथायेति कपालनाशे निमित्त आत्मनिःश्रेयसफलं कर्म दर्शयति। एवमिहापि द्रष्टव्यम्। तस्मादात्मनिःश्रेयसार्थमिति। एवं प्राप्ते ब्रूमः। फलसंयोगो न स्यात्पितुः। फलवचनं शेषभूतं पुत्रस्य न पितुः। कथम्। एवं श्रूयते, वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते। यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति। यन्नवकपालो भवति त्रिवृतैवास्मिन्स्तेजो दधाति। यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति। यद् द्वादशकपालो जगत्यैवास्मिन्पशून्दधाति। यस्मिञ्जात एतामिष्टिं निर्वपति, पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान्भवति, इति। यो जातस्तत्र फलं श्रूयते। नास्ति वचनस्यातिभारः। तस्मात्पुत्रस्य फलमिति। यदुक्तं न परस्य फलदान्येतानि कर्माणीति। तदुच्यते। यत्पुत्रस्य फलम्, आत्मनः सा प्रीतिः। तस्मादात्मनेपदं न विरुध्यते। एतामेवाऽऽत्मनः प्रीतिमभिप्रेत्य भवति वचनम्, आत्मा वै पुत्र इति।

---

अर्थवादो रात्रिसत्रन्यायेन फलप्रतिपत्त्यर्थ इति स्थिते, किं पुत्रजन्मनिमित्तं पितुः फलमुत पुत्रस्येति। पुत्रस्यैव। कुतः। 'यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव सः' इति सर्वनाम्ना पुत्रस्य फलं प्रतिपाद्यते, पूत एव सः। कः। यो जात इति। अतो वचनसामर्थ्यात्पुत्रस्यैव फलम्। पवनादिसंयुक्तः पुत्र इष्यत एवेत्यात्मनेपदमवि-

---

१ तै० सं० ( २–२–५ )। २ ( अ० ४ पा० ३ अ० ८ ) अन्नत्येनेति शेषः।

अङ्गादङ्गात्संभवसि हृदयादभिजायसे ।
आत्मा वै पुत्रनामाऽसि स जीव शरदः शतम् ॥ इति । ॥ ३८ ॥

अङ्गानां तूपघातसंयोगो निमित्तार्थः ॥ ३९ ॥

अथ यदुक्तं, यद्येकं कपालं नश्येदित्येवमादि । तत्रोच्यते । अङ्गानामुपघातसंयोगो निमित्तार्थ उपपद्यते, नान्यथा । न हि कपाले नष्टे तदन्वेषणार्था, इष्टिर्युक्ता । न हि काकिन्यां नष्टायां तदन्वेषणं कार्षापणेन क्रियते ॥ ३९ ॥

( वर्णकान्तरेण वैश्वानरेष्टेर्जातकर्मोत्तरकालत्वाधिकरणम् )

एवं वा । वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते, इति । तत्र संदेहः । किं जातमात्रे, उत कृते जातकर्मणीति । जातमात्र इति ब्रूमः । संप्राप्ते हि निमित्ते नैमित्तिकेन भवितव्यम् । एवं प्राप्ते ब्रूमः । कृते जातकर्मणीति । कुतः । सामर्थ्यात् । कृते हि जातकर्मणि प्राशनं तस्य विधीयते । यदि प्राग् जातकर्मण इष्टिः क्रियते, प्राशनकालो विप्रकृष्येत । तत्रास्य शरीरधारणं न स्यात् । अथ यदुक्तं, संप्राप्ते निमित्ते हि नैमित्तिकेन भवितव्यमिति । उच्यते । अङ्गानामुपघातसंयोगो निमित्तार्थः । उपघातः पुत्रजन्म, तद्भूतं निमित्तम् । न तत्कालोऽङ्गम् । तच्च निमित्तम् । कृतेऽपि जातकर्मणि नापैति । इतरस्मिन्पक्षे कालोऽपेयात् । लक्षणा चास्मिन्पक्षे स्यात् । तस्मात्कृते जातकर्मणीति । अथ किमन्तर्दशाहे यस्मिन्कस्मिन्वाऽहनि, उत स्वकाल इति । किं प्राप्तम् । यस्मिन्कस्मिन्वाऽहनीत्येवमनियमः प्राप्तः । कुतः । नियामकाभावादिति । अत्रोच्यते । पौर्णमास्याममावास्यायां वा । कुतः । श्रुतेः । एवं हि श्रूयते । य इष्ट्या पशुना सोमेन वा यजेत, स पौर्णमास्याममावास्यायां वा यजेत, इति । नातिभारो वचनस्य । इतरस्मिन्पक्षे कालोऽपेयात् । लक्षणाऽप्यस्मिन्पक्षे स्यात् ।

---

रुद्धम् ॥ ३८ ॥ [ ३९ ॥ ]

एवं वा । इतरस्मिन्पक्षे कालोऽपेयात्, लक्षणा च स्यात् । निष्ठा हि भूतसामान्य उत्पद्यते, तस्या यः श्रुत्यर्थः स च कृतेऽपि जातकर्मणि विद्यत एव । जातानन्तरता निमित्तमिति यो ब्रवीति तेन सामान्यवचनो विशेषे लक्षणया स्थापितः । जातानन्तरं त्रुटिर्न शक्यते संभावयितुम् । क्षणिकी हि सा । अत आह—कालोऽपेया-

अन्यस्यां तिथावन्तर्दशाहे वा कुर्वन्सर्वाण्यङ्गान्युपसंहर्तुं न शक्नुयात्। कालं शौचं च नोपसंगृह्णीयात्। तस्मादतीते दशाहे पौर्णमास्याममावास्यायां वा कुर्यादिति ॥ ३९ ॥

( सौत्रामण्यादेः स्वकालकर्तव्यत्वाधिकरणम् ॥ १७ ॥ )

## [ १७ ] प्रधानेनाभिसंयोगादङ्गानां मुख्यकालत्वम् ॥ ४० ॥ पू०

अग्निं चित्वा सौत्रामण्या यजेत, वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत, इति। अङ्गप्रयोजनसंबन्ध इत्युक्तम्। एतदिदानीं संदिह्यते। किं चितमात्रे तन्त्रमध्य एव कर्तव्यमुत स्वकाले कर्तव्यमिति। तथा वाजपेये किं बृहस्पतिसव उत स्वकाल इति। मुख्यकालत्वमनयोः स्यात्। कुतः। प्रधानकालत्वादङ्गानाम्। एको हि कालः प्रधानानामङ्गानां चेति वक्ष्यते। अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरन्निति। अग्निचयनं कृत्वा न तावत्येव स्थातव्यं, सौत्रामणीसंज्ञकोऽपरो यागः कर्तव्य इति। तथा वाजपेयमभिनिर्वर्त्य नैतावता कृती स्यात्, बृहस्पतिसवसंज्ञकं यागमभिनिर्वर्तयेदिति ॥ ४० ॥

## अपवृत्ते तु चोदना तत्सामान्यात्स्वकाले स्यात् ॥ ४१ ॥ सि०

अपवृत्ते यागे चोद्यते यागान्तरमिदम्। अपवृत्तिश्च सर्वेषु यागाङ्गेष्वकृतेषु न भवति। न यथा भवान्मन्यते यागमात्रे निर्वृत्त इति। कुतः। करणविभक्त्या संयोगात्। वाजपेयेनेष्ट्वा—वाजपेयेन फलस्य व्यापारं कृत्वा, साङ्गेन च व्यापारो गम्यते, न निरङ्गेन। भवेत्तन्त्रमध्ये प्रयोगो यदि वाजपेयमभिनिर्वर्त्येतीप्सितभावो वाजपेयस्य स्यात्ततः प्रधानमात्रं वाजपेयसंज्ञकमभिनिर्वर्त्येति गम्येत, न त्वेवमस्ति। तस्माद्यथोक्तानि सर्वाण्यङ्गानि कृत्वेत्यर्थः। एवं चेन्निर्वृत्ते प्रयोगेऽतिक्रान्ते वाजपेयकाले यागः प्रयुज्यते। तस्य चोदनासामान्याज्ज्योति-

दिति। अन्तर्दशाहेऽपि न क्रियेत, आशौचस्यापरिसमाप्तत्वात्। तस्माद्दशाहोत्तरकालायां पौर्णमास्याममावास्यायां वा कर्तव्या। 'भिन्ने जुहोति' इत्यनन्तरमेव क्रियते। नैमित्तिको हि पाठक्रम इतरं पाठक्रमं बाधित्वा निविशत इति ॥ १२ ॥ [ ४० ॥

१ ( अ० ११ पा० २ अ० १ सू० ८ )।

ष्टोमिके विधयन्ते प्राप्ते स्वेन चोदकप्राप्तेन कालेन भवितव्यम्। सौत्रामण्याश्चोदनासामान्याद्दर्शपूर्णमासकालेनेति। आह। वाजपेये वावादिष्टेति वचनाद्यागमभिनिर्वर्त्येति गम्यते। अग्नौ तु नोपपद्यते। तत्र चित्वेति वचनाच्चयनमभिनिर्वर्त्येत्यर्थः स्यात्। उच्यते। नैतदेवम्। अग्निं चित्वेति हि श्रूयते। अग्निं चयनेन संस्कृत्येत्यर्थः। अग्निरिति ज्वलनोऽभिधीयते। न तस्य स्थलस्थापनमात्रमुपकारः। यदि स्थलस्थिते यागो भवति, ततश्चयनेनाग्नेरुपकारोऽस्ति। तमभिनिर्वर्त्येति स्थलस्थितेऽग्नौ यागमभिनिर्वर्त्येति गम्यते। यावत्स्थलस्थितेऽग्नौ यागो न भवति। न तावदग्निश्चयनेनोपक्रियते। येनाग्निर्यजमानस्योपकरोति, सोऽग्नेरुपकारो न स्थलस्थापनमात्रम्। तस्मात्तत्रापि यागमभिनिर्वर्त्येति गम्यते॥ ४१॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये चतुर्थस्याध्यायस्य तृतीयः पादः॥

---

अथ चतुर्थेऽध्याये चतुर्थः पादः।

(राजसूयशब्दवाच्यानां यागानामेव फलार्थत्वाधिकरणम्॥ १॥)

## [ १ ] प्रकरणशब्दसामान्याच्चोदनानामनङ्गत्वम्॥ १॥ पू०

सन्त्यनुमत्यादीन्यैष्टिकानि कर्माणि। महल्लादयः पशवः, पवित्रादयः सोमाः, वल्मीकवपायां होम इत्येवमादीनि दार्विहोमिकानि। तथा, पष्ठौहीं दीव्यति, राजन्यं जिनाति, शौनःशेपमाख्यापयति, अभिषिच्यते, इति। एतेषां संनिधौ श्रूयते, राजसूयेन स्वाराज्यकामो यजेत, इति। स एष रूपवतां संनिधावरूपः शब्दः श्रूयमाणः समुदायवाचकः समधिगतः। तत्र संदेहः। किं सर्वेषामनुमत्यादीनां समु-

---

॥ ४१॥]

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां चतुर्थाध्याये तृतीयः पादः॥

---

प्रकरणे 'पष्ठौहीं दीव्यति' इत्येवमाद्य उत्पद्यमाना एव वैमर्थ्याभिलाषिणः,

दायस्य राजसूयशब्दो वाचक उत केषांचिद्वाचकः केषांचिन्नेति । किं प्राप्तम् । सर्वेषां वाचक इति । कुतः । प्रकरणशब्दसामान्यात् । प्रकरणशब्दः सर्वेषां समानो राजसूयेनेति । राजा तत्र सूयते तस्माद्राजसूयः । राज्ञो वा यज्ञो राजसूयः । तत्प्रकरणसंनिधाने सति, विशेषाभावे च सर्वेषां वाचको भवितुमर्हति । यश्च राजसूयशब्दितस्ततः फलं भवति । तस्मात्सर्वाणि प्रधानानीति ॥ १ ॥

अपि वाऽङ्गमनिज्याः स्युस्ततो विशिष्टत्वात् ॥ २॥ सि०

अपि वेति पक्षव्यावृत्तिः । या अनिज्यास्ता अङ्गं, यथा विदेवनादयः । राजसूयसंज्ञकेन यागेन स्वाराज्यं कुर्यादित्युच्यमाने यागेनैव स्वाराज्यं साध्यते, नायागेन । अयागाश्च विदेवनादयः । तस्मादङ्गं भवेयुरिज्यानां फलवतीनां श्रूयमाणा इति ॥ २ ॥

---

तेषां रूपवतां संनिधावरूपः शिष्यमाणो राजसूयशब्दः प्रकृताभिधेयकः । प्रकृतत्वाविशेषाच्च नावगम्यते विशेष इमे उपात्ता नेम इति । तस्माद्ये तदभिधेयास्तेषामनेन स्वाराज्यं फलं कल्प्यते, न त्वप्राप्तमुत्पत्तौ फलं विधीयते। किं तर्हि । प्राप्तमेव नियम्यते।

ननु यागसामानाधिकरण्याद्यागेभ्य एव फलम् । उच्यते। राजसूयशब्दः प्रकृतमात्राभिधायी विशेषे स्थाप्यमानो बाध्यते । यागशब्दस्य तु नैव बाधः । मुख्यश्च राजसूयशब्दो जघन्यो यजिः । अनेन तावत्तृतीयान्तेन फलकरणमुच्यते । प्रकृताश्च फलाकाङ्क्षिण इति तदभिधायित्वम् । तस्माद्राजसूयशब्दवाच्यं फले विधीयते । यागशब्दोऽनुवादः प्रत्ययार्थत्वेन चावश्यमुच्चारयितव्यः । आनन्तर्याच्च राजसूयस्वाराज्ययोरेव संबन्धो युक्तः । राजसूयशब्दो राज्ञः सव इत्येवमङ्गीकृत्य प्रवृत्त । राजा चास्मिन्प्रकरणे श्रूयते । तस्मात्सूयतिरपि छत्रिन्यायेन सर्वत्र प्रवर्तते । अथाव्युत्पन्नोऽश्वकर्णन्यायेन नतरां विशेषे ॥ १ ॥

यजेतेति भावनावचनो यस्य परः श्रुतस्तस्यैव श्रुत्या करणतामाह । इतरस्य वाक्येन ब्रूयात् । नामपदं चाऽऽख्यातानुसारित्वाद्यत्राऽऽख्यातं तत्र वर्तते । आख्यातं यागं ब्रवीति । तस्मात्प्रकृता यागाः फले विधीयन्ते । इतरेषां कैमर्थ्याभिलाषित्वं क्रतूपकारेण निवर्त्स्यतीति ॥ २ ॥

---

१ समानो राजसूयविधिः, राजा राजसूयेनेति पा° । २ अवश्यमिति—न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्यय इति निषेधानुसारादिति शेषः । ३ ब्रूयात्— फलकरणतामिति शेषः ।

( विदेवनादीनां कृत्स्नराजसूयाङ्गताधिकरणम् ॥ २ ॥ )

[ २ ] मध्यस्थं यस्य तन्मध्ये ॥ ३ ॥ पू०

राजसूयेऽभिषेचनीयमध्ये, पष्ठौहीं दीव्यति, इति विदेवनादयः समाम्नाताः । ते किमभिषेचनीयस्याङ्गमुत कृत्स्नस्य राजसूयस्येति संशयः । उच्यते । मध्याम्नानादभिषेचनीयस्येति । तथा, आनन्तर्यमनुग्रहीष्यत इति ॥ ३ ॥

सर्वासां वा समत्वाच्चोदनातः स्यान्न हि तस्य प्रकरणं देशार्थमुच्यते मध्ये ॥ ४ ॥ सि०

सर्वासां चानुमत्यादीनां चोदनानामङ्गं विदेवनादि स्यात् । कुतः । चोदनातः समत्वात् । समाना एता अनुमत्याद्याश्चोदनाः । ताः सर्वाः फलवत्यश्च प्रधानभूताः । सर्वासामासां प्रकरणम् । न ह्यभिषेचनीयस्य केवलस्य । कामादभिषेचनीयस्य केवलस्य । कामादभिषेचनीयस्य प्राप्नुवन्ति । प्रकरणात्सर्वासाम् । प्रकरणं च क्रमाद्बलीयः । तस्मान्नाभिषेचनीयस्य केवलस्येति । अभिषेचनीयस्य तु मध्ये स्थानं विदेवनादीनां, तत्र क्रियमाणाः सर्वासामुपकुर्वन्तीति ॥ ४ ॥

---

विदेवनादयोऽभिषेचनीयादूर्ध्वं समाम्नायमानाः क्रमादभिषेचनीयाङ्गम् । विरोधे च प्रकरणं बलीय इत्युक्तम्[1] । तस्मान्निर्णीतत्वादनारम्भम् । उच्यते । प्राकृताङ्गसंबन्धेन श्रूयमाणाः कथंभावाकाङ्क्षायामव्यावृत्तायां ये पदार्था उपनिपतन्ति ते संबन्धिव्यवायेन गृह्यन्ते । एते च माहेन्द्रस्तोत्रकालत्वादुपनिपतन्ति प्राकृताङ्गमध्ये । तस्मादवान्तरप्रकरणादभिषेचनीयाङ्गम् । महाप्रकरणाद्राजसूयाङ्गम् । तच्च दुर्बलम् । तस्मादभिषेचनीयाङ्गत्वाद्विदेवनादयस्तत्प्रयुक्ता इति ॥ ३ ॥

यत्रैवोत्पद्यन्ते तत्रैव प्रयोजनमपेक्षमाणा राजसूयप्रकरणगृहीता निराकाङ्क्षा भवन्ति । तस्मादन्यत्रोत्पन्नानां प्रकरणात्सर्वार्थानां तत्रैवोत्पत्तिदेशे करणे प्राप्ते ' माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यते ' इति वचनादभिषेचनीयमध्ये क्रियन्ते । न चावान्तरप्रकरणेन गृह्यन्ते, संयुक्तत्वाद्राजसूयेन । तस्माद्राजसूयप्रयुक्ता विदेवनादयः । अत्रावान्तरप्रकरणे निराकृते तृतीये चिन्ता ॥ ४ ॥

---

१ ( अ० ३ पा० ३ अ० ७ ) इत्यत्र क्रमप्रकरणयोर्विरोधे बलाबलविवेकावसर इति शेषः ।

( सौम्यादीनामुपसत्कालकत्वाधिकरणम् ॥ ३ ॥ )

[ ३ ] प्रकरणाविभागे च विप्रतिषिद्धं ह्युभयम् ॥ ५ ॥ पू०

राजसूय उपसदः प्रकृत्य श्रूयते, पुरस्तादुपसदां सौम्येन प्रचरन्ति, अन्तरा त्वाष्ट्रेण, उपरिष्टाद्वैष्णवेन, इति। तत्र संदेहः। किमुपसदङ्गं सौम्यादय उत उपसत्काला इति। उपसदङ्गमिति ब्रूमः। कुतः। उपसत्संयोगस्य श्रुतत्वात्। कालविधौ सति लक्षणा स्यात्। तस्मादुपसदङ्गमिति। ननु कालवदङ्गं भविष्यति। तथा सत्युभयमनुगृह्येत। उपसत्संयोगश्च। पुरस्तादिति च कालाभिधानम्। उपसच्छब्दसंयोगादुपसदङ्गता भविष्यति। पुरस्ताच्छब्दसामर्थ्याच्च पूर्वादिषु प्रयोग इति। उच्यते। विप्रतिषिद्धं ह्युभयं, न शक्नोत्युपसदामित्येष शब्दः सौम्यादींश्च विशेष्टुमेकस्मिन्वाक्ये, पूर्वादींश्च। भिद्येत हि तथा वाक्यम्। तस्मान्न कालवदङ्गम् ॥ ५ ॥

अपि वा कालमात्रं स्याददर्शनाद्विशेषस्य ॥ ६ ॥ सि०

अपि वेति पक्षव्यावृत्तिः। कालमात्रं स्यात्। नाङ्गप्रयोजनसंबन्धः। कुतः। अदर्शनाद्विशेषस्य। नान्यैः कालाभिधानैरस्य कश्चिद्विशेषो लक्ष्यते, आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति, इत्येवमादिभिः। अत्रापि हि सौम्यादयो विहिताः, उपसदोऽपि। इदमानुपूर्व्यमविहितं तद्विधीयते। तस्मात्कालमात्रमिति ॥ ६ ॥

( आमनहोमानां सांग्रहणीष्टयङ्गताधिकरणम् ॥ ४ ॥ )

[ ४ ] फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यात् ॥ ७ ॥ सि०

वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकाम इति। तत्राऽऽमनहोमाः

---

सौम्येनेति तृतीयानिर्देशादुपसदामपि षष्ठ्यन्तत्वात्प्राधान्यमेव गम्यते सौम्यं प्रति। तस्मादङ्गाङ्गिसंबन्धः। कालवदङ्गं भविष्यतीति—अन्तर्णीताभिप्रायश्चोदयति। यथैवोपसदः श्रुतास्तथैव पुरस्ताच्छब्दः कालं प्रतिपादयति। तस्मात्तेन प्रतिपादिते काले कालार्थः संबन्धः। अङ्गाङ्गिसंबन्धस्य प्रयोजनवत्त्वादितरोऽर्थप्राप्तत्वादनुवादः ॥ ५ ॥

उत्पद्यमानान्येवैतान्यवगतपारार्थ्यानि। यत्पुनरुच्चारणं तत्कालार्थमितरस्यावगतत्वात् ॥ ६ ॥

विकृतिर्ह्युपकाराकाङ्क्षिणी क्लृप्तोपकारान्पदार्थानु[१]मितलक्षितप्रापणेन गृह्णाति।

---

१ अनुमितलक्षितप्रापणेन गृह्णाति, इति क्वचिदुपलभ्यते।

श्रूयन्ते, आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति, इति । अत्र संदेहः । किं समप्रधानभूता आमनहोमाः सांग्रहणीष्ट्या, उताङ्गं तस्या इति । किं प्राप्तम् । समप्रधानभूता इति । कुतः । तुल्यहेतुत्वादितरस्य । तुल्यं हि यजिमत्त्वम् । नन्वफला होमाः । उच्यते । ग्रामकाम इत्येवानुषज्यते । तस्मात्समप्रधानभूता इति । एवं प्राप्ते ब्रूमः । फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यात् । न चैतदस्ति, समप्रधानभूता होमा इष्ट्येति । फलवद्ध्यफलस्य प्रधानम् । फलवती चेष्टिः । अफला होमाः । ननूक्तमनुषङ्गो भविष्यतीति । उच्यते । नानुषङ्गः प्राप्नोति । कुतः । व्यवायात् । तदुक्तं, व्यवायान्नानुषज्येतेति । केन व्यवायः । परिधिमन्त्रैः–उग्रोऽस्युग्रस्त्वं देवेष्वध्युग्रोऽहं सजातेषु भूयासं प्रियः सजातानामुग्रश्चेत्ता वसुवित्, इत्येवमादिभिः । एताननुक्रम्य, आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोतीत्यामनन्ति । तस्मात्सांग्रहण्या अङ्गमामनहोमा इति ॥ ७ ॥

( दधिग्रहस्य नित्यत्वाधिकरणम् ॥ ५ ॥ )

[ ५ ] दधिग्रहो नैमित्तिकः श्रुतिसंयोगात् ॥ ८ ॥ पू०

ज्योतिष्टोमे श्रूयते–यां वै कांचिदध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्या आवृश्चेते, यत्प्राजापत्यं दधिग्रहं गृह्णाति, शमयत्येवैनामिति । तत्र संदेहः । किं नित्यो दधिग्रह उत नैमित्तिक इति । किं प्राप्तम् ।

---

तस्मान्निराकाङ्क्षीभूता सत्यपि स्वसंनिधाने नाकाङ्क्षोपकारानामनहोमान् गृह्णाति । अतस्ते पृथक्फला इति । किं समप्रधानभूता आमनहोमा इति, किं फलवन्त इत्यर्थः । यथाऽऽग्नेयादीनामेकप्रयोगवचनग्रहणात्समप्रधानता नैवमेषाम् । तुल्यं हि यजिमत्त्वं, यदि संस्कारकर्म स्यात्ततः फलं न कल्प्येतापि । यागास्त्वेते । तस्मादेतेभ्यः फलं कल्प्यते ।

एवं प्राप्ते ब्रूमः । प्राकृतैरङ्गैर्यदपूर्वं समभिव्याह्रियते, तदपूर्वमपि संबध्यत एवाऽऽकाङ्क्षायामव्यावृत्तायामसंबद्धैः पदैर्व्यवहितमपि । आमनहोमानां च विद्यते प्राकृतैः संबन्धः । 'यत्प्रयाजानां पुरस्ताज्जुहुयात्, बहिरात्मानं सजातानां दध्यात्, यदनुयाजानामुपरिष्टात्स्वर्गं लोकमपक्रामेत्' इत्येवं परामृष्यमाणाः संबन्धिपदव्यवायेन ग्रहीष्यन्ते ॥ ७ ॥ [ ८ ॥ ९ ॥ १० ॥ ]

---

१ ( अ० २ पा० १ अ० १३ सू० ४९ ) ।

दधिग्रहो नैमित्तिकः स्यात् । श्रुतिसंयोगात् । देवतान्तराये निमित्ते श्रूयते । न च नित्योऽन्तरायः । तस्मान्नैमित्तिक इति ॥ ८ ॥

नित्यश्च ज्येष्ठशब्दात् ॥ ९ ॥

यदुक्तं, नैमित्तिक इति तद्गृह्यते, किंतु नित्यश्च । कुतः । ज्येष्ठशब्दात् । ज्येष्ठशब्दो भवति, ज्येष्ठो वा एष ग्रहाणां यस्यैष गृह्यते, ज्यैष्ठ्यमेव गच्छतीति । ज्येष्ठशब्दश्च प्राधान्ये प्राथम्ये वा स्यात् । नैष प्रथमो न प्रधानम् । यदि नित्यः, एवं प्रशस्यत्वादुपपद्यते । न जातु चलाचलं प्रशंसन्ति । तस्मान्नित्यश्च नैमित्तिकश्चेति विनाऽपि निमित्तेन ग्रहीतव्यो निमित्तेनापि पुनरिति ॥ ९ ॥

सार्वरूप्याच्च ॥ १० ॥

सर्वरूपता च श्रूयते । सर्वेषां वैतद्देवानां रूपं यदेष ग्रहो यस्यैष गृह्यते सर्वाण्येवैनं रूपाणि पशूनामुपतिष्ठन्ते, इति । न हि देवतारूपमस्माकं किंचिदन्यत्प्रत्यक्षम्, अन्यदतो नित्यत्वात्, तस्मादपि नित्यश्च नैमित्तिकश्चेति ॥ १० ॥

नित्यो वा स्यादर्थवादस्तयोः कर्मण्यसंबन्धा-द्भङ्गित्वाच्चान्तरायस्य ॥ ११ ॥ सि०

यदुक्तं नित्यो नैमित्तिकश्चेति । तत्र नित्य एव स्यात् । ज्येष्ठशब्दात्सार्वरूप्याच्च । यदुक्तं, देवतान्तराये निमित्ते श्रूयत इति । न देवतान्तरायो निमित्तत्वेन गम्यते । तयोरध्वर्युयजमानयोः कर्मण्यन्तरायेण संबन्धात् । न ह्येतच्छ्रूयतेऽध्वर्युणा देवताऽन्तरितव्या यजमानेन वेति । अनित्यो हि अन्तरायः । न चैवंशब्दोऽस्ति, अन्तराये सति दधिग्रहो ग्रहीतव्य इति । विनैव संयोगेन दधिग्रहस्य ग्रहणं, अन्तरायसमाधानं त्वस्य प्रयोजनमिति । तदेतन्नित्यवद्ग्रहणम्, अनित्यं प्रयोजनम् । नित्यं गृह्णीयादनित्यमन्तरायं समाधातुमिति नावकल्पते । तत्र प्रयोजनेऽनित्यत्वाद्ग्रहणे नित्यवच्छ्रुतिर्बाध्येत । अर्थवादत्वे तु न

नित्य एव स्यात् । कुतः । निमित्तसंयोगाभावात् । सप्तम्या हि निमित्तमुच्यते । यद्वृत्तेन वा यदिशब्देन वा । इह त्वेषामश्रवणम् । अत आह—न चैवंशब्दोऽस्ति यो निमित्तं प्रतिपादयतीति । निमित्तं ज्योतिष्टोमापूर्वमेव । अतो यदा ज्योतिष्टोमस्तदा

१ यद्दधिग्रह इति भाट्टदीपिकायां पाठः । २ असंबन्धादिति पा० ।

बाध्यते । न हि तदन्तरायं समाधातुं गृह्यते । अन्यदेव प्रयोजनमस्यास्तीति प्रशंसितुमभिधीयते दधिग्रहस्य तु सोमाङ्गतैव प्रयोजनमिति । भक्तित्वाच्चान्तरायस्य । भक्ती चान्तरायः—अनित्यो नित्यप्रशंसार्थं संकीर्त्यते । तस्मान्नैष दोषः । नित्य एव दधिग्रह इति ॥ ११ ॥

( वैश्वानरेष्टेर्नैमित्तिकत्वाधिकरणम् ॥ ६ ॥ )

[ ६ ] वैश्वानरश्च नित्यः स्यान्नित्यैः समानसंख्यत्वात् ॥ १२ ॥ पू०

अस्त्यग्निः, य एवं विद्वानग्निं चिनुते, इति । तत्र श्रूयते, यो वै संवत्सरमुख्यमभृत्वाऽग्निं चिनुते, यथा सामिगर्भो विपद्यते तादृगेव तदार्तिमार्च्छेत् । वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेत् । संवत्सरो वाऽग्निर्वैश्वानरो यथा संवत्सरमाप्त्वा काल आगते हि जायते । एवमेव संवत्सरमाप्त्वा काल आगतेऽग्निं चिनुते । नाऽऽर्तिमार्च्छेदिति । एषा वाऽग्नेः प्रिया तनूर्यद्वैश्वानरः । प्रियामेवास्य तनूमवरुन्धे, इति । तत्र संदेहः । किं नित्यो वैश्वानरोऽथ नैमित्तिक इति । किं प्राप्तम् । अत्रापि नित्य एव, अर्थवाद उख्यस्य संवत्सराभरणेन कृतो दोषो वैश्वानरेण विहन्यत इति । नित्यैश्चास्य समानसंख्यत्वं भवति । त्रीण्येतानि हवींषि भवन्ति । त्रय इमे लोका एषां लोकानामारोहायेति, लोकानां हविषां सामान्यं नास्ति । यदि यथा लोका नित्यास्त्रय एवमिमानि हवींषि नित्यानि त्रीणि । एवं लोकैः संस्तवो घटते । तस्मान्नित्यो वैश्वानर इति ॥ १२ ॥

पक्षे वोत्पन्नसंयोगात् ॥ १३ ॥ सि०

उत्पन्नस्य निमित्त उख्याभरणे, निर्घातेन संयोगः । नासंयुक्तस्योत्पन्नस्य दोषनिर्घातप्रयोजनता । तस्मादिह न दधिग्रहवद्विरोधोऽस्ति । तेन नार्थवादो, नैमित्तिक इति । अथ यदुक्तं, लोकैः समानसंख्यत्वं नित्यत्व उपपद्यते, नान्यथेति । तत्र ब्रूमः । त्रित्वाल्लोकानां हविषां च सामान्यादर्थवादो भविष्यतीति ॥ १३ ॥

---

निमित्तस्य विद्यमानत्वाद्ग्रहणम् । अनित्यस्य चान्तरायस्यार्थेनेति पूर्वमुत्तरेण न संबध्यते । न चेदृग्वचनमस्ति, अन्तरायः कार्य इति । येन कर्म गृह्येत, तच्चोभयमपि नास्तीत्युक्तमेव ॥ ११ ॥ [ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ ]

( षष्ठ्याश्चितेर्नैमित्तिकत्वाधिकरणम् ॥ ७ ॥ )

[ ७ ] षट्चितिः पूर्ववत्त्वात् ॥ १४ ॥ पू०

अस्त्यग्निः, य एवं विद्वानग्निं चिनुते, इति । तत्र श्रूयते, संवत्सरो वा एनं प्रतिष्ठायै नुदति योऽग्निं चित्वा न प्रतितिष्ठति । पञ्च पूर्वाश्चितयो भवन्ति । अथ षष्ठीं चितिं चिनुते, इति । तत्र संदेहः । किं योऽयं नित्य एवाग्निः स एवायं षट्चितिक उच्यते, उतैकचितिको नैमित्तिक इति । किं प्राप्तम् । तस्मिन्नेव नित्येऽग्नौ षष्ठी चितिरेषा विधीयते । नित्यायामेव षष्ठ्यामेषोऽर्थवादः । योऽपि न प्रतिष्ठार्हः, सोऽप्यनया षष्ठ्या चित्या प्रतिष्ठातुमर्हतीति चितिप्रशंसा । किमर्थमेवं वर्ण्यते । षष्ठीशब्दश्रवणात् । षण्णां हि पूरणी षष्ठी । एकस्यां हि चितौ षष्ठीशब्दो न सामञ्जस्येन स्यात् । तस्मात् षट्चितिकोऽग्निर्नित्य इति ॥ १४ ॥

ताभिश्च तुल्यसंख्यानात् ॥ १५ ॥

ताभिश्च—पूर्वाभिरस्यास्तुल्यवत्प्रसंख्यानं भवति । कथम् । इयं वाव प्रथमा चितिः, ओषधयः पुरीषम् । अन्तरीक्षं वाव द्वितीया चितिः, वयांसि पुरीषम् । असौ वाव तृतीया चितिः, नक्षत्राणि पुरीषम् । यज्ञो वाव चतुर्थी चितिः, दक्षिणा पुरीषम् । यजमानो वाव पञ्चमी चितिः, प्रजाः पुरीषम् । संवत्सरो वाव षष्ठी चितिः, ऋतवः पुरीषमिति । तुल्यानां च तुल्यवदनुक्रमणं भवति । यथा, देवा ऋषयो गन्धर्वास्तेऽन्यत आसन् । असुरा रक्षांसि पिशाचाः, तेऽन्यत आसन्निति । तुल्यवच्चामूषां चितीनामनुक्रमणमनया षष्ठ्या । तस्मादेतया तत्तुल्यया भवितव्यम् । यदि च यस्मिन्नेव क्रतौ तास्तस्मिन्नेवैषा, तत एताभिस्तुल्या । तस्मादपि स एव नित्योऽग्निः षट्चितिक इति ॥ १५ ॥

अर्थवादोपपत्तेश्च ॥ १६ ॥

अर्थवादश्च भवति, षट्चितयो भवन्ति, षट् पुरीषाणि, तानि द्वादश संपद्यन्ते, द्वादश मासाः संवत्सरः, संवत्सर एव प्रतितिष्ठतीति । तदेकचितिकेऽग्नौ न सामञ्जस्येन वचनं भवति । तस्मान्नित्य एव षट्चितिकः ॥ १६ ॥

एकचितिर्वा स्यादपवृक्ते हि चोद्यते निमित्तेन ॥१७॥ सि०

एकचितिर्वा नैमित्तिकः स्यात् । कुतः । अपवृक्ते हि यागे चोद्यते, अप्रतिष्ठया निमित्तेन । यो न प्रतितिष्ठति तस्यैषा चितिरुच्यते नैमित्तिकी । सा न नित्या भवितुमर्हति । अपि चापवृक्ते यागे चोद्यते सा, न वर्तमाने भवितुमर्हति । ननु चित्वेति चयने निर्वृत्ते, न यागे । उच्यते । नैतत्पदार्थे निर्वृत्ते चित्वेति । किं तर्हि । वाक्यार्थे । अग्निं चित्वेति, अनेनाश्चयनेनार्थमभिनिर्वर्त्येति । कृते च यागे चयनेनाग्नेरर्थो निर्वर्तितो भवति, नान्यथा । षष्ठीशब्दश्च, पञ्च पूर्वाश्चितय उक्तास्ता अपेक्ष्यावकल्पिष्यते । तस्मान्निर्वृत्ते याग इत्युच्यते । तस्माद्वचनादेकाचितिराशिः ॥ १७ ॥

विप्रतिषेधात्ताभिः समानसंख्यत्वम् ॥ १८ ॥

द्वयोः सूत्रयोरिदमुत्तरं, ताभिश्च तुल्यसंख्यानात्, अर्थवादोपपत्तेश्चेति । ताभिर्नित्याभिः समानसंख्यत्वं भविष्यति । अर्थवादश्चोपपत्स्यते । पञ्च पूर्वाश्चितयो भवन्ति, याभिरसौ चितिभिर्न प्रतितिष्ठति, अथेयं षष्ठी प्रतिष्ठार्थमिति । ताश्च सपुरीषा अपेक्ष्य द्वादशत्वेन संस्तवो भविष्यति । विप्रतिषेधादेकस्य षट्संख्याया द्वादशसंख्यायाश्चेति । अतुल्यानामपि तुल्यवदनुक्रमणं भवति । यथा, देवा मनुष्याः पितरस्तेऽन्यत आसन्निति ॥ १८ ॥

( पिण्डपितृयज्ञस्य दर्शेष्ट्यनङ्गत्वाधिकरणम् ॥ ८ ॥ )

[८] पितृयज्ञः स्वकालत्वादनङ्गं स्यात् ॥ १९ ॥ सि०

अस्ति, आमावास्ये कर्मणि पितृयज्ञः । अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति, इति । तत्र संशयः । किमामावास्यस्य कर्मणः पिण्डपितृयज्ञोऽङ्गमुतानङ्गमिति । किं प्राप्तम् । अङ्गं, फलवत्संनिधानान्निष्क्रयवचनाच्च । आह । ननु फलवत्संनिधावफलं तदङ्गं भवति । फलवच्चेदं कल्प्येत स्वर्गेणेति । उच्यते । सत्यम् । अमावास्ययैकवाक्यत्वान्न शक्यः स्वर्गः कल्पयितुमिति । आह । कालवचनत्वान्न

---

'अमावास्यायामपराह्णे इति' सामानाधिकरण्यं तत्कालवचनत्व उपपद्यते । इतरथाऽमावास्याशब्देनाऽऽग्नेयादीन्युच्येरन् । तेषामङ्गत्वेन पिण्डपितृयज्ञो विधीयते । तस्यापराह्णकाल इत्यनेन द्वारेण सामानाधिकरण्यं कीदृशमपि स्यात् । क्लिष्टा चेयं कल्पना ।

कर्पणैकवाक्यत्वं संभवतीति । उच्यते । लक्षणयाऽपि तावत्कर्मैकवाक्यता संभवति। स्वर्गे कल्प्ये न लक्षणा, न श्रुतिः। एवं चाऽऽमनन्ति, यत्पितृभ्यः पूर्वेद्युः करोति, पितृभ्य एतद्यज्ञं निष्क्रीय यजमानो देवेभ्यः प्रतनुते, इति। अमावास्यां प्रति निष्क्रेतुं प्रतनितुं च श्रूयते। तस्मात्तदङ्गभूतमिति।

एवं प्राप्ते ब्रूमः। पितृयज्ञः स्वकालत्वादनङ्गं स्यात्। अनङ्गभूतः पिण्डपितृयज्ञः। कस्मात्। स्वकालत्वात्। स्वशब्दाभिहितेन कालेनास्य संबन्धो, न कर्मणा लक्षितेनेति। यथा दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति। यथा, पुरस्तादुपसदां सौम्येन चरन्तीति। अत्र काल एवायं मुख्यः शब्दो न कर्मणि। कर्मणि लक्षणा। श्रुतिश्च लक्षणाया बलीयसी। यच्चोक्तं लक्षणया कर्मैकवाक्यता भविष्यतीति। तच्च न। कस्मात्। अनुवादे हि लक्षणा न्याय्या, न विधौ। विधिश्चायम्। तस्मान्नामावास्याकर्मणा संबन्धः। एकस्मिन्काले द्वे कर्मणी परस्परेणासंबद्धे इति ॥ १९ ॥

## तुल्यवच्च प्रसंख्यानात् ॥ २० ॥

तुल्यवच्चान्यैः प्रधानैः प्रसंख्यायते। चत्वारो वै महायज्ञाः— अग्निहोत्रं, दर्शपूर्णमासौ, ज्योतिष्टोमः, पिण्डपितृयज्ञ इति। महायज्ञैस्तुल्यवत्प्रसंख्यायते। काऽस्य महायज्ञता स्यादन्यतः फलवत्तायाः। तस्मादनङ्गम् ॥ २० ॥

## प्रतिषिद्धे च दर्शनात् ॥ २१ ॥

इतश्चानङ्गम्। प्रतिषिद्धे ह्यामावास्ये पिण्डपितृयज्ञं दर्शयति। पौर्णमासीमेव यजेत भ्रातृव्यवान्, नामावास्यां, हत्वा भ्रातृव्यममावास्यया यजेत, पिण्डपितृयज्ञेनैवामावास्यायां प्रीणाति, इति। असत्याममावास्यायां पिण्डपितृयज्ञं दर्शयति। तदनङ्गत्व उपपद्यते। तस्मादपि नाङ्गं पिण्डपितृयज्ञ इति।

किं प्रयोजनं चिन्तायाः। यदि पौर्णमास्यामाधानं, ततोऽनन्तरायाममावास्यायां न क्रियते, यथा पूर्वपक्षः। यथा तर्हि सिद्धान्तस्तथा कर्तव्यः। इदमपरं प्रयोजनम्। कुण्डपायिनामयने, मासमग्निहोत्रं जुहोति, मासं दर्शपूर्णमासाभ्यां यजेतेति, यथा पूर्वः पक्षस्तथा कर्तव्यः पिण्ड-

---

तस्मादमावास्यायां निमित्ते फलाय कर्म विधीयते ॥ १९ ॥ [ २० ॥ २१ ॥ ]

पितृयज्ञः । यथा सिद्धान्तस्तथा न कर्तव्य इति । श्लोकमप्युदाहरन्ति—
आधानं पौर्णमास्यां चेद्वृत्ते दर्शे करिष्यते ।
अनङ्गं पितृयज्ञश्चेत्सत्रे च न करिष्यते, इति ॥ २१ ॥

( रशनाया यूपाङ्गताधिकरणम् ॥ ९ ॥ )

[ ९ ] पश्वङ्गं रशना स्यात्तदागमे विधानात् ॥ २२ ॥ पू०

ज्योतिष्टोमे श्रूयते, आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाऽऽग्नेयं सवनीयं पशुमुपाकरोति, इति । तत्र संशयः । किं पश्वङ्गं रशना, उत यूपाङ्गमिति । किं प्राप्तम् । पश्वङ्गम् । कुतः । तदागमे विधानात् । पश्वागमे हि विधीयते । पशुनाऽस्याः संबन्ध उत्पत्तिवाक्ये श्रूयते, परिव्याणं कृत्वोपाकरोति पशुं नान्यथेति । एवं श्रुतिर्भवति । कालवचने लक्षणा स्यात् । परिव्याणेन कालो लक्ष्येतेति ॥ २२ ॥

'त्रिवृता यूपं परिवीय' इत्यनेन परिव्याणं विधीयते, [२]वाक्यान्तरेण प्राप्तत्वात् । परिव्याणमाग्नेयस्य काललक्षणार्थमुच्चार्यत इति चेत् । तन्न । लक्षणाभयादेव । किं तर्हि । आग्नेयरशनयोः संबन्धोऽनेन क्रियते, तत्र च प्रयोजनवत्त्वात् । आग्नेयस्य रशना तदर्था । तस्य हि साऽनपक्रमणद्वारेणोपकरोति । ननु पशोरन्याऽनपक्रमणार्थे विद्यत एव । उच्यते । यथा यूपार्थाया रशनाया भवति समुच्चय एवमिहापीति । ननु द्वितीयानिर्दिष्टत्वाद्यूपस्य रशना तदर्थेति । उच्यते । इतरत्राप्याग्नेयमिति द्वितीया विद्यत एव । अथवा परिव्याणस्य यूपमिति द्वितीया तादर्थ्यमाह न रशनायाः । आह । परिव्याणार्थत्वाद्रशनाऽपि यूपार्था । उच्यते । रशनायाः पश्वनपक्रमणेन प्रयोजनवत्त्वात्परिव्याणं भाव्यमानमपि तदर्थं, सामर्थ्यं परिव्याणेन जन्यते रशनायाः । ननु परिव्याणमपि यूप तादर्थ्येनार्थवत्—रशना तदर्थेति । उच्यते । संप्रधार्यमेतत् । यदि वा परिव्याणार्था रशना यूपार्था । अथवा विपरीतं तादर्थ्यम् । परिव्याणं पश्वर्थं, यूपश्च परिव्याणस्याऽऽधारतां प्रतिपद्यमानः पश्वर्थः । तत्र किं युक्तमिति । रशना पश्वनपक्रमणेन प्रयोजनवती । परिव्याणमपि तदर्थम् । यूपोऽप्याधारतां प्रतिपद्यमानो रशनार्थतां प्रतिपत्स्यते । असौ यूपे या द्वितीया सा सप्तम्यर्थं लक्षयिष्यति । आधारतां च प्रतिपद्यमानस्य तादर्थ्यं प्रसङ्गाद्भविष्यति ॥ २२ ॥

१ वृत्ते दर्शे—दर्शेष्टिसस्थ एवेत्यर्थः । एवं च पौर्णमास्यामाधाने द्वादशरात्रिषु पवमानेष्टिनिर्वापपक्षे चाग्निमामावास्यायां पूर्णमासोपक्रमिकाया दर्शेष्टेरभावान्न पिण्डपितृयज्ञानुष्ठानं पूर्वपक्षे, इति भावः । २ वाक्यान्तरेणेति—' आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययति ' इति सवनीयसंनिधिपठितेनत्यर्थः ।

## यूपाङ्गं वा तत्संस्कारात् ॥ २३ ॥ सि०

ज्योतिष्टोमे प्रत्यक्षो हि यूपस्य संस्कारः । रशना हि या च यावतीं च द्रढिम्नो मात्रां यूपस्य संजनयति, द्रढिम्ना च प्रयोजनं यूपस्य । तस्माद्यूपस्यैव द्रढिम्ने रशना स्यात् । द्वितीया च विभक्तिस्तत्प्राधान्य एव भवति । रशनायां च तृतीया । तृतीया च गुणत्वे तस्याः । तस्माद्यूपाङ्गम् । यत्तु—तदागमे विधानादित्युक्तं, तत्परिहर्तव्यम् । उच्यते । तदागमे विधानं वाक्यात्, द्वितीया च विभक्तिः श्रुतिः प्रत्यक्षं च, वाक्यं बाधेयातामिति । यत्तु लक्षणेति । श्रुत्यसंभवे लक्षणाऽपि न्याय्यैव ॥ २३ ॥

## अर्थवादश्च तदर्थवत् ॥ २४ ॥

एवं च मन्त्रार्थवादोऽर्थवान् भविष्यति ।

युवा सुवासाः परिवीत आगात्स उ श्रेयान्भवति जायमानः ।
तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥ इति ।

तस्माद्यूपाङ्गं रशनेति । किं प्रयोजनं चिन्तायाः । अग्नौ श्रूयते, एकयूप एकादश पशवो नियोज्या इति । प्रतिपशु रशना कार्या यदि पूर्वः पक्षः । सिद्धान्ते द्वैरशन्यमेव । श्लोकमप्युदाहरन्ति—

पश्वङ्गं रशना चेद्यद्येकस्मिन्बहून् नियुञ्जीत ।
प्रतिपशु रशना कार्या यूपे चेद्द्वैरशन्यं स्यात् । इति ॥ २४ ॥

( स्वरोः पश्वङ्गत्वाधिकरणम् १० ॥ )

## [ १० ] स्वरुश्चाप्येकदेशत्वात् ॥ २५ ॥ पू०

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः सोमाङ्गभूतो, यो दीक्षितो यद-

---

'त्रिवृता यूपं परिवीय' इतीप्सिततमत्वाद्यूपस्य तदर्था रशना । ननु परिव्याणस्य यूपपरा द्वितीया । तच्चानूद्यते । पशावपि द्वितीया, उपाकरणस्य न रशनायाः । न चार्थाक्षिप्तोपकरणेन रशना, परिव्याणेन तु रशनाऽऽक्षिप्यते । तत्र यदि वाऽनेन विहितं तदनूद्यते तेन वेदं, नात्राभिनिवेशः । सर्वथा यूपार्था रशना । एकयूप एकादश पशवो नियोज्या इति प्रतिपशु रशना कार्या । यथा पूर्वः पक्षः ।

सिद्धान्ते द्वैरशन्यमेवेत्येतत्प्रयोजनं नेच्छन्ति । पश्वर्थाऽप्यसंनिपत्योपकारित्वाद्यूपे क्रियमाणैवोपकरिष्यति । यथा प्रयाजाः सकृत्कृताः । अतः पक्षद्वयेऽपि द्वैरशन्यम् । एतदप्ययुक्तम् । पश्वर्थाऽपि सत्यनपक्रमणं कुर्वती पशोः संनिपत्योपकरोति । यथा यूपे द्वितीया रशना समुच्चीयत एवं पशावपि समुच्चेष्यते । तस्माद्युक्तमेवेदं प्रयोजनम् । ॥ २३ ॥ [ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

ग्नीषोमीयं पशुमालभते, इति । तत्र श्रूयते । स्वरुणा स्वधितिना वा पशुमनक्तीति । तत्र संदेहः । किं यूपाङ्गं स्वरुरुत पश्वङ्गमिति । किं प्राप्तम् । यूपाङ्गमिति ब्रूमः । कुतः । एकदेशत्वात् । एकदेशः स्वरुर्यूपस्येति श्रूयते । यूपस्य स्वरुं करोति, इति । स्वरुमन्तं यूपं कुर्यादित्यर्थः । एवं स यूपो भवतीति । यथा चषालम् ॥ २५ ॥

निष्क्रयश्च तदङ्गवत् ॥ २६ ॥

यूपाङ्गमिव स्वरुं निष्क्रयवादो दर्शयति । अपश्यन् ह स्म वै पुरा ऋषयो ये यूपं प्रापयन्ति, संभज्य स्रुचं ते मन्यन्ते, यज्ञवेशसाय वा इदं कर्मेति, ते प्रस्तरं स्रुचा निष्क्रयमपश्यन्, यूपस्य स्वरुमयज्ञवेशसायेति, निष्क्रयश्रवणात्तदङ्गता विज्ञायते । तस्माद्यूपाङ्गमिति ॥ २६ ॥

पश्वङ्गं वाऽर्थकर्मत्वात् ॥ २७ ॥ सि०

पश्वङ्गं वा । तस्य ह्यञ्जनार्थेन स्वरुणा प्रयोजनम् । तथा हि श्रूयते । स्वरुणा पशुमनक्तीति । तदञ्जनं पशोः, स्वरोरुत्पत्तिं प्रयोजयति । यदि तदर्थ एषः स्वरुस्ततो दृष्टं प्रयोजनम् । अथ यूपार्थः, अदृष्टं प्रयोजनं ततः कल्प्यम् । तस्मात्पश्वङ्गमिति ॥ २७ ॥

भक्त्या निष्क्रयवादः स्यात् ॥ २८ ॥

कया भक्त्या । एवमाह । यूपः किलाग्नौ प्रक्षेप्तव्यः । यत्स्वरुः प्रक्षिप्यते । तेन यूपः प्रक्षिप्यत इति । स एष निष्क्रय इव भवति । अनया भक्त्या स्तुतिरिति । किं भवति प्रयोजनम् । एकयूप एकादश पशवो यदा नियुज्यन्ते, तदेकस्यैव[1] पशोः समञ्जनं पूर्वस्मिन्पक्षे । सर्वेषां[2] सिद्धान्ते । श्लोकश्च भवति—

स्वरुर्यूपाङ्गमिति चेदेकस्यैव समञ्जनम् ।
बहूनामेकयूपत्वे सर्वेषां तु समञ्जनम् ॥ इति ॥ २८ ॥

---

॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥]

---

१ एकस्यैव पशोरिति–स्वरोर्यूपाङ्गत्वपूर्वपक्षे ' स्वरुणा पशुमनक्ति ' इत्यस्मिन्वाक्ये स्वरुप्रतिपत्त्यर्थतया पश्वञ्जनविधानात्, पशोश्चोपादेयत्वेन विवक्षितसंख्यत्वादेकपश्वञ्जनेनापि स्वरुप्रतिपत्तिसिद्धेरिति भावः । २ सर्वेषामिति–सिद्धान्ते च स्वरुकरणकाञ्जनस्य पशुसंस्कारकतया ग्रहैकत्वन्यायेन संस्कार्यस्य पशोरविवक्षितसंख्यत्वेन सर्वेषामञ्जनं सिध्यतीति भावः ।

( आघारादीनामङ्गताधिकरणम् ॥ ११ ॥ )

[ ११ ] दर्शपूर्णमासयोरिज्याः प्रधानान्यविशेषात् ॥ २९ ॥ पू०

स्तो दर्शपूर्णमासौ । तत्र श्रूयन्ते, आग्नेयाग्नीषोमीयोपांशुयाजैन्द्राग्नसांनाय्ययागाः । तथा, आघारावाज्यभागौ, प्रयाजानुयाजाः, पत्नीसंयाजाः, समिष्टयजुः, स्विष्टकृदिति । तत्र संदेहः । किं सर्वे यागाः प्रधानभूता उत केचिद्गुणभूता इति । किं प्राप्तम् । दर्शपूर्णमासयोर्यावत्य इज्यास्ताः सर्वाः प्रधानभूता इति । यजेत स्वर्गकाम इत्यविशेषेण यागेभ्यः फलं श्रूयते । फलवच्च प्रधानम् । सर्वे चामी यागाः । तस्मात्सर्वे प्रधानभूता इति ॥ २९ ॥

अपि वाऽङ्गानि कानिचिद्येष्वङ्गत्वेन संस्तुतिः सामान्यो ह्यभिसंस्तवः ॥ ३० ॥ सि०

अपि वा कानिचिदङ्गानि भवेयुः । कानि पुनस्तानि । येष्वङ्गत्वेन संस्तुतिः । यथा, अभीषू वा एतौ यज्ञस्य यदाघारौ, चक्षुषी वा एतौ यज्ञस्य यदाज्यभागौ । यत्प्रयाजानुयाजाश्चेज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते, वर्म वा यजमानस्य भ्रातृव्यस्याभिभूत्यै, इति । अभीषू रथस्याङ्गं, चक्षुषी चक्षुष्मतः, वर्म वर्मवतः । सामान्यो ह्यभिसंस्तवो युक्तः । यदि चाङ्गानि तानि संस्तुतानि, ततः संस्तवोऽर्थवान् भवति । तस्मादङ्गसंस्तुतान्यङ्गानीति ॥ ३० ॥

तथा चान्यार्थदर्शनम् ॥ ३१ ॥

एवं च कृत्वाऽन्यार्थदर्शनमुपपन्नं भवति । प्रयाजे प्रयाजे कृष्णलं जुहोति, इति । न च प्रयाजान्यजति, न चानुयाजान्यजतीति च ॥ ३१ ॥

अविशिष्टं तु कारणं प्रधानेषु गुणस्य विद्यमानत्वात् ॥ ३२ ॥

अविशिष्टमेतत्कारणं संस्तवो नाम । आग्नेयादीनामप्यङ्गत्वेन संस्तुतिरस्ति । शिरो वा एतद्यज्ञस्य यदाग्नेयो, हृदयमुपांशुयागः, पादावग्नीषोमीय इति । शिरः शिरस्वतोऽङ्गं, हृदयं हृदयवतः, पादौ पादवत इति सर्वस्यैवाङ्गत्वेन संस्तुतिरिति सर्वमेवाङ्गं प्राप्नोति । तत्प्रधानं

न स्यात् । असति प्रधाने कस्याङ्गम् । तस्मान्नैतदङ्गमिति ॥ ३२ ॥

नानुक्तेऽन्यार्थदर्शनं परार्थत्वात् ॥ ३३ ॥

अथ यदुक्तमन्यार्थदर्शनं, परार्थत्वान्न तत्साधकं भवति । परार्थं हि तद्वाक्यं, न दृश्यमानस्य प्रयाजादेः प्रापणार्थम् । तस्मादन्यदस्य प्रमाणमन्वेष्टव्यं, श्रुत्यन्तरं न्यायो वा । तस्मिन्नसति, मृगतृष्णादर्शनमिव तद्भवति । संस्तुतिरप्यसति न्यायेऽसाधिकैव ॥ ३३ ॥

पृथक्त्वे त्वभिधानयोर्निवेशः श्रुतितो व्यपदेशाच्च तत्पुनर्मुख्यलक्षणं यत्फलवत्त्वं, तत्संनिधावसंयुक्तं तदङ्गं स्याद्भागित्वात्कारणस्याश्रुतश्चान्यसंबन्धः ॥ ३४ ॥

तुशब्दः पक्षं व्यावर्तयति । यदुक्तं, सर्वाणि समप्रधानानीति । नैतदेवम् । दर्शपूर्णमासशब्दवाच्यानि प्रधानानि कर्माणि । कुतः । फलसंयोगात् । दर्शपूर्णमासशब्दकेभ्यः फलं श्रूयते, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति । कानि पुनर्दर्शपूर्णमासशब्दकानि । येषां वचने पौर्णमासीशब्दोऽमावास्याशब्दो वा, आग्नेयादीनि तानि । नन्वमावास्याशब्दकानां नैव फलं श्रूयते । उच्यते । पृथक्त्वे समुदाययोर्निवेश एतयोरभिधानयोः, पौर्णमासीति चामावास्येति च । त्रिष्वाग्नेयादिषु यः समुदायस्तत्र पौर्णमासीशब्दः । इतरेष्वमावास्याशब्दः । कथं पौर्णमासी, अमावास्येति च द्विशब्दः श्रूयते । द्व्यर्थवद्व्यपदेशाच्च । कथं तद्व्यपदेशः । द्विवचननिर्देशात्, दर्शपूर्णमासाभ्यामिति । एकार्थौ च दर्शामावास्याशब्दौ । कथम् । दर्शो वा एतयोः पूर्वः, पूर्णमास उत्तरस्तयोरथ यत्पूर्णमासं पूर्वमारभते तद्यथापूर्वं प्रक्रियते । पूर्णमासमारभमाणः सरस्वत्यै चरुं निर्वपेत्, सरस्वते द्वादशकपालम् । अमावास्या वै सरस्वती, पूर्णमासः सरस्वान् । उभावेतौ यथापूर्वं कल्पयित्वाऽऽरभत ऋद्ध्यै, ऋध्नोत्येवाथो मिथुनत्वायेति । तत्र दर्शशब्देन प्रकृत्याऽमावास्याशब्देन ब्रुवन्नेकार्थतां दर्शयति । शक्यते च चन्द्रस्यादर्शनेनामावास्या दर्श इति लक्षयितुम् । यथा चक्षुषोरभावे सति चक्षुष्मानिति चक्षुर्भ्यां लक्ष्यते । एतस्माद् व्यपदेशाच्च श्रुतितश्च, लोके श्रवणादेकार्थतामेवाध्यवस्यामः । तत्पुनर्मुख्यलक्षणं यत्फलवत्त्वम् । यदन्यत्तत्संनिधौ श्रूयते, तत्तदङ्गम् । कथम् । इतिकर्तव्यताकाङ्क्षस्य संनिधौ

श्रूयमाणम्, इतिकर्तव्यताविशेषणत्वेन परिपूरणसमर्थं तदङ्गं भवितुमर्हति। अकल्प्यमाने वाक्यशेषे फलं कल्पयितव्यं स्यादिति। आह। ननु दर्शपूर्णमासफलमेवात्रानुषज्यते। उच्यते। शक्यमनुषक्तुं, किं तु दर्शपूर्णमासवाक्यं साकाङ्क्षमेव स्यात्। अन्याऽस्येतिकर्तव्यताऽश्रुता कल्प्येत। एषामपि प्रयाजादीनामन्या कल्प्येत। एतदितिकर्तव्यताऽवगम्यमानोत्सृज्येत। तेनाङ्गत्वं कारणमागीति। एषामन्येन फलेन संबन्धोऽश्रुतः। तस्मात्‌ सर्वाणि समप्रधानानि, आघारादीनि गुणकर्माणीति ॥ ३४ ॥

गुणाश्च नामसंयुक्ता विधीयन्ते नाङ्गेषूपपद्यन्ते ॥ ३५ ॥

नामविशेषसंयुक्ताश्च गुणविशेषा विधीयन्ते। यथा चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्राऽमावास्याम्, इति। सर्वेषु प्रधानेष्वस्मिन् समुदाये चतुर्होत्रा, अस्मिन् पञ्चहोत्रा, इति विभागाविज्ञानाच्चेदं नोपपद्येत। भवति चैवंलक्षणकं गुणविधानम्। तस्मादस्मत्पक्ष एवेति। अपि चाङ्गत्वेनाऽऽघारादीनां संस्तुतिरुपपन्ना भविष्यति॥ ३५ ॥

तुल्या च कारणश्रुतिरन्यैरङ्गाङ्गिसंबन्धः ॥ ३६ ॥

अथ यदुक्तम्—आग्नेयादीनामप्यङ्गत्वेन संस्तुतिरङ्गत्वं ख्यापयेदिति। तत्परिहर्तव्यम् ॥ ३६ ॥

उत्पत्तावभिसंबन्धस्तस्मादङ्गोपदेशः स्यात् ॥ ३७ ॥

नैष दोषः। प्रधानानामप्येषां सतामुत्पत्त्यपेक्षया शिरआदिस्तुतिर्भविष्यति। यथा जायमानस्य हि पुरुषस्याग्रे शिरो जायते, मध्ये मध्यं, पश्चात्पादौ। एवमाग्नेयोऽग्रतः, उपांशुयाजो मध्ये, अग्नीषोमीयः पश्चादिति। एतस्मात्सामान्यादेषा स्तुतिरिति ॥ ३७ ॥

तथा चान्यार्थदर्शनम् ॥ ३८ ॥

चतुर्दश पूर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायाम्, इति। इतरथा न चतुर्दश पौर्णमास्यामाहुतयो भवेयुः। न वाऽमावास्यायां त्रयोदशेति। तस्मादाग्नेयादीनि प्रधानानि, आघारादीन्यङ्गानीति सिद्धम् ॥ ३८ ॥

( सोमयागस्यैव प्राधान्याधिकरणम् ॥ १२ ॥ )

[ १२ ] ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम् ॥ ३९ ॥ पू०

अस्ति ज्योतिष्टोमो, ज्योतिष्टोमेन स्वर्गकामो यजेत, इति। तत्र

दीक्षणीयादयश्च यागा विद्यन्ते, सौत्ये चाहनि सोमयागः । तत्र संदेहः । किमत्र यागमात्रं प्रधानमुत सोमयाग इति । किं प्राप्तम् । ज्योतिष्टोमे तुल्यानि सर्वाणि भवेयुः । कुतः । अविशिष्टं हि कारणम् । यागात्फलं श्रूयते । सर्वे चामी यागाः । फलवच्च प्रधानम् । तस्माज्ज्योतिष्टोमे सर्वे यागाः प्रधानमिति ॥ ३९ ॥

**गुणानां तूत्पत्तिवाक्येन संबन्धात्कारणश्रुतिस्तस्मात्सोमः प्रधानं स्यात् ॥ ४० ॥ सि०**

गुणानां तूत्पत्तिवाक्येन संबन्धो भवति । केषां गुणानाम् । ज्योतिषां स्तोमानाम् । कतमेनोत्पत्तिवाक्येन संबन्धो भवति । ज्योतिष्टोमेन स्वर्गकामो यजेतेति । ज्योतिष्टोमाद्यागात्स्वर्गः श्रूयते, न यागमात्रात् । यत्र च ज्योतींषि स्तोमाः स ज्योतिष्टोमः । कस्य ज्योतींषि स्तोमाः । सोमयागस्येति ब्रूमः । एवं ह्याम्नायते । कतमानि वा एतानि ज्योतींषि, य एतस्य स्तोमास्त्रिवृत्पञ्चदशसप्तदशैकविंशाः । एतानि वा ज्योतींषि । तान्येतस्य स्तोमा इति । सोमयागस्य स्तोमा अङ्गम् । समभिव्याहारात् । ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोतीति । ते च स्तोमास्त्रिवृदादयः । कथम् । त्रिवृद्बहिष्पवमानं, पञ्चदशान्याज्यानीत्येवमादिभिः श्रवणैः । तस्मात्त्रिवृदादिस्तोमकः सोमयागः । स ज्योतिष्टोम इति । यश्च ज्योतिष्टोमस्ततः फलम् । यतश्च फलं तदेव प्रधानमिति । कथं पुनस्त्रिवृदादयो ज्योतींषि । उच्यते । भवन्तु वा ज्योतींषि, मा भूवन् । ज्योतिःशब्देन तावदुक्तानि । वचनमात्रेणापि शब्दो

---

न यागमात्रं विधीयते फले, किं तर्हि । ज्योतिष्टोमशब्दवाच्यो यागः फले विधीयते । कुतः । ज्योतिष्टोमसामानाधिकरण्यात् । कतरोऽसौ ज्योतिष्टोमशब्दवाच्यः । यस्य त्रिवृदादीनि ज्योतींषि सन्ति । त्रिवृदादयश्च स्तोत्रेषु सन्ति 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति' इति । न च दीक्षणीयादीनां स्तोत्रसंबन्धोऽस्ति । तस्माद्यः स्तोत्रसंबन्धी यागः फले विधीयते स च सोमयागः । एतदयुक्तं, स्तोत्रस्य ग्रहस्य च कालार्थः संबन्धो नाङ्गाङ्गिसंबन्धः । इतरेतराश्रयं च स्यात् । यस्याङ्गत्वेन ज्योतींष्यवगतानि स फले विधीयते । यश्च फले विधीयते तस्य ज्योतींष्यङ्गानि भवन्ति । प्राक् फले विधानाज्ज्योतिःसंबन्धो यद्यवगतः स्यात्तत इतरेतराश्रयं न स्यात् । इह तु फलोत्तरकालं ज्योतिःसंबन्धेन विशिष्टयागग्रहणम् । तस्माद्राजसूयन्यायेन सर्वाणि प्रधानानीति, सूत्रयोऽत्र परिहारः ।

भवति, विशेषतो लक्षणायाम्। अपि च द्योततेर्वा दीप्तिकर्मणो, द्योतयतेर्वा ज्योतिःशब्दं लभन्ते। द्योत्यन्ते हि तैः शब्दैर्द्योतयन्तीति वा स्तुत्यम्। तस्मात्सोमयागो ज्योतिष्टोमः। स च प्रधानं, गुणभूता दीक्षणीयादय इति॥ ४०॥

## तथा चान्यार्थदर्शनम्॥ ४१॥

शिरो वा एतद्यज्ञस्य यद्दीक्षणीया, इत्येवमादि च लिङ्गं दृश्यते। तथा गुणाश्च ज्योतिष्टोमविकारे दीक्षणीयादयो दृश्यन्ते, चतुर्विंशतिमानं हिरण्यं दीक्षणीयायां दद्यात्। प्रायणीयायां द्वे चतुर्विंशतिमाने इति। तुल्यत्वे न प्रवर्तयिष्यन्ते दीक्षणीयादयः। तस्मादपि सोमयागः प्रधानमिति॥ ४१॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये चतुर्थस्याध्यायस्य चतुर्थः पादः॥ संपूर्णश्चतुर्थोऽध्यायः॥

---

केचिदाहुः—'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति फलसंयुक्तो याग उत्पद्यत उद्भिदादिवत्। तं द्रव्याभिलाषिणमनूद्य सोमो विधीयते। तस्य कथंभावाकाङ्क्षायां ग्रहणमप्यक्तं स्तोत्रमपि—ग्रहं वा गृहीत्वा चमसं वोन्नीयेति। कालार्थेऽपि संबन्धे ज्योतींषि स्तोमा अस्य सन्तीति मत्वर्थमुररीकृत्य नामधेयं प्रवृत्तम्। अथवा नेदमुत्पत्तिवाक्यं तथाऽपि न तेषां फले विधिः। कथम्। यदिदं नामधेयं, किमिदं दीक्षणीयादीन्यपि वदत्युत नेति ब्रूमः। ज्योतींषि स्तोमा यस्य सोऽयं ज्योतिष्टोम। न च दीक्षणीयादीनां केनचिदपि प्रकारेण ज्योतींषि स्तोमा अवगताः। इतरत्र कालार्थेऽपि संबन्धे लक्ष्यलक्षणत्वेनास्ति संबन्धः। तमभिप्रेत्य ज्योतिष्टोमशब्दः प्रवृत्तः। तस्माज्ज्योतिष्टोमशब्दवाच्यं फले विधीयते। दीक्षणीयादीनां तु ग्रहस्यानङ्गत्वान्न साक्षात्संबन्धो न लक्ष्यलक्षणतया। तस्मान्न तेभ्यः फलम्। अथवा विनाऽपि लक्ष्यलक्षणत्वेनास्ति प्रणाड्या संबन्धः। ग्रहणं यागाङ्गम्। तस्याप्युपाकरणम्। उपाकरणस्तोत्रयोरङ्गाङ्गिसंबन्धो नास्ति। अस्ति त्वन्यः संबन्ध इति॥ ४०॥ [४१॥]

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां चतुर्थाध्याये चतुर्थः पादः॥ संपूर्णश्च चतुर्थोऽध्यायः॥

अथ पञ्चमेऽध्याये प्रथमः पादः ॥

( श्रौतकर्मनियमाधिकरणम् ॥ १ ॥ )

[ १ ] श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात् ॥ १ ॥ सि०

चतुर्थेऽध्याये प्रयोजकाप्रयोजकलक्षणं वृत्तम् । तत्र प्रस्मर्तव्यम् । इहेदानीं क्रमनियमलक्षणमुच्यते । तच्छ्रुत्यर्थपाठप्रवृत्तिकाण्डमुख्यैर्वे- ष्यते । श्रुत्यादीनां च बलाबलम् । आदितस्तु श्रुतिक्रमश्चिन्त्यते । किं यथाश्रुति पदार्थानां क्रम आस्थेय उतानियमेनेति । किं प्राप्तम् । एकत्वात्कर्तुरनेकत्वाच्च पदार्थानामवश्यंभाविनि क्रमे लाघवात्प्रयोग- प्राशुभावाच्चानियम इत्येवं प्राप्ते, ब्रूमः ।

श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वादिति । श्रुतिः—श्रवणमक्षराणां,तन्नि- मित्तं यस्य क्रमस्य स साधुः क्रमः । श्रुतिप्रमाणका हि वैदिका

भाष्यकारेण चतुर्थेऽध्याये प्रयोजकाप्रयोजकलक्षणं वृत्तमित्युक्तम् । तदयुक्तम् । कुतः । क्रत्वर्थपुरुषार्थजिज्ञासा हि सूत्रकारेण प्रतिज्ञाता । सैवोपसंहर्तव्या । उच्यते । प्रयोजकाप्रयोजकमपि प्रतिज्ञातं, ' अर्थे समवैषम्यम् ' इत्यत्र । द्वयोरेकस्मिन्नप्युपसं- ह्रियमाण इतरल्लक्ष्यत एव । अथवा प्रयोजकाप्रयोजकेत्येवोपसंहर्तव्यम् । यतोऽसाधा- रण्येन लक्षणभेदः । इतरथा द्वादशपादमेकं लक्षणं स्यात् । यावदर्थः शेषी नावधार्यते न तावच्छेषभावः । न हि सामान्येन व्यवहारः । ' कर्माण्यपि जैमिनिः ' इत्यनेन कर्मणां फलशेषभाव उक्तः । अतः शेषत्वावगमेनैवास्य पुरुषार्थतायाः सिद्धत्वात्पुरुषा- र्थजिज्ञासयाऽध्यायभेदो नोपपद्यते । तेन सा तेनैव गतत्वान्नाध्यायान्तरेण कार्या । 'अर्थैक्यं प्रकरणात् ' इति चानेन क्रत्वर्थलक्षणमुक्तम् । श्रुत्यादिभिर्यदसंयुक्तं फलवता च क्रतुना प्रकरणेन गृह्यते तत्क्रत्वर्थम् । प्रयोजकाप्रयोजकत्वं तु नोक्तं, तदिहोच्यते । ' अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा ' इति सूत्रं किंपरतयोपादीयते । क्रत्वर्थपुरुषार्थ- योर्ह्यनन्तरं प्रयोजकाप्रयोजकौ तयोर्लक्षणार्थम् । श्रुत्यर्थपाठक्रमा उपदेशविषया एव । प्रवृत्तिकाण्डमुख्यक्रमास्त्वतिदेशविषया अपि प्रधानभूताः पदार्थाः । कर्ता गुणभूतः । तस्य प्रतिप्रधानमनुष्ठानं कुर्वतः क्रमः सिद्ध एव । क्रमनियमस्तु चिन्त्यते ।

तत्र श्रुतिक्रमस्तावच्चिन्त्यते तस्मिन् ' आश्विनो दशमो गृह्यते ' इत्येतदप्युदाहरणं

१ ( अ० ४ पा० १ अ० ८ सू० २१ ) । २ विशेषेऽप्युपसंह्रियमाण एकस्मिन् , प्रदर्शनार्थत्वादितर- दप्युपसंहृतं लक्ष्यतेऽपा० । ३ यावच्च०गा० । ४ ( अ० २ पा० १ अ० ३ सू० ४ ) । ५ ( अ० ३ पा० ३ अ० ४ सू० ११ ) । ६ (अ० ४ पा० १ अ० १ सू० १ ) ।

अर्थाः । नैषामन्यत्प्रमाणमस्तीत्युक्तम् । किमिहोदाहरणम् । सत्रे दीक्षाक्रमे, ये यजमानास्त ऋत्विज इत्युक्त्वा तेषां दीक्षाक्रमं विधत्ते । अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति । तत उद्गातारं, ततो होतारम् । ततस्तं प्रतिप्रस्थाता दीक्षयित्वाऽर्धिनो दीक्षयति, ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारमुद्गातुः, मैत्रावरुणं होतुः । ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति, आग्नीध्रं ब्रह्मणः, प्रतिहर्तारमुद्गातुः, अच्छावाकं होतुः । ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति, पोतारं ब्रह्मणः, सुब्रह्मण्यमुद्गातुः, ग्रावस्तुतं होतुः । ततस्तमन्यो ब्राह्मणो दीक्षयति, ब्रह्मचारी वाऽऽचार्यप्रेषित इति । अनियमे न क्रमः कर्तव्यो यथा पूर्वः पक्षः । यथा तर्हि सिद्धान्तः, एष एव क्रमः कर्तव्य इति । तत्राऽऽह । अन्याय्यं श्रुतिवचनमिति । उच्यते । किमेष न साधुः । न न साधुरिति ब्रूमः । न्याय्यं तर्हि । न ब्रूमो न साधुः क्रम इति । किं तर्हि । उक्तस्य पुनर्वचनमन्याय्यमिति । उच्यते । साधोर्वचनं बहुशोऽप्युच्यमानं न्याय्यमेव । असाधोस्तु सकृदप्यन्याय्यम् । आह । सकृद्वचनेन ज्ञातस्य पुनर्वचने न प्रयोजनमस्तीति ।

---

नोपन्यस्तं, सुज्ञानत्वात् । दीक्षावाक्यं तु किंपरमिति चिन्त्यते । तदुदाहरणं व्याख्येयत्वेन । अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयतीत्यध्वर्योः कर्तृत्वं, दीक्षा, सा च यजमानार्थेति त्रितयमप्यविधेयं, प्राप्तत्वात् । 'ये यजमानास्त ऋत्विजः' इति यजमानत्वादेव ब्रह्मादीनामप्यविधेया दीक्षा । 'ततस्तं प्रतिप्रस्थाता' इति प्रतिप्रस्थातुर्विधानमिति चेत् ।

उच्यते । अध्वर्योः कर्मकर्तृत्वमापद्यते तत्र विरोधः । विरोधे च प्रधाने प्रवर्तते । अन्तरङ्गत्वात्प्रत्यक्षशिष्टत्वाच्च कर्मत्वस्य । तत्र कः कर्तेति 'इतरेमन्यस्तेषां यतो विशेषः स्यात्' इत्यध्वर्युसदृशः प्रतिनिधित्वेन प्रतिप्रस्थाता प्राप्तो न विधीयते । इतरेष्वध्वर्योरविरोधः । इतरेषु प्रतिप्रस्थातृविधिरिति चेत् । उच्यते । 'न पूतः पावयेत्' इति प्रतिषेधान्नाध्वर्योः कर्तृत्वम् । एवं सर्वत्र योज्यम् । तस्मात्सर्वस्य प्राप्तत्वात्पदार्थोच्चारणाद्यः क्रमः प्रतीयते स एव विधीयते ।

ननु क्त्वाततःशब्दौ क्रमस्य विधातारौ । उच्यते । क्त्वाशब्दः पूर्वकालतां समानकर्तृतामात्रं च वदति नाऽऽनन्तर्यम् । पूर्वं गृहपतेर्दीक्षा, उत्तरं ब्रह्मण इत्येतावदाह ।

---

१ (अ० ३ पा० ८ अ० १० सू० २१)।

उच्यते । भवत्यस्मरणमपि प्रयोजनमित्युक्तम् । वृत्तिकारेण तत्कार्यमिति चेत् । सूत्रकारस्याप्यविशेषो वृत्तिकारेण ॥ १ ॥

अथवा—अर्थान्तरमेवेदम् । तत्र ह्यन्य एव संशयो विचारो निर्णयश्च । श्रुतिप्रमाणको धर्मः, अन्यप्रमाणक इति संशयः । प्रत्यक्षादीनामधिगम्य निमित्तत्वान्न तत्प्रमाणकः, अतीन्द्रियत्वाच्चोदनालक्षण इति विचारः । चोदनालक्षण एवेति निर्णयः । इह तु सिद्धे तत्प्रामाण्ये व्यवहारः क्रमस्य साधुत्वावधारणम् ॥ १ ॥

अथवा—श्रुतिक्रमविचारोऽयम् । किं पदार्थाः कर्तव्या इति विधानं किंवा क्रमो विधीयत इति । अनेकार्थविधानानुपपत्तेः क्रमोऽनुवादो, दीक्षादीनां पदार्थानां विधिः । अवदानवाक्येष्विव पदार्थविधानं श्रुत्या, क्रमविधानं वाक्येन । तस्मान्न क्रमो विधीयत इति पूर्वः पक्षः । नन्ववदानवाक्येषु क्रमो विधीयते । सत्यं विधीयते पाठेन, न श्रुत्या । य ऋत्विजस्ते यजमाना इति तु दीक्षायाः प्राप्तत्वात्क्रमविधानार्था श्रुति-

---

अन्तराले तु यदि पदार्थसहस्रमपि करोति, नास्ति पूर्वोत्तरबाधः । ततःशब्दोऽपि परमात्रमाह, नाऽऽनन्तर्यम् । प्रयोगवचनश्चाऽऽनन्तर्यमाकाङ्क्षति, न पौर्वापर्यम् । अतस्तदेव विधेयम् । तद्विधौ च पौर्वापर्यमनुवादः । तस्य च विधौ प्रयोगवचनेनानाकाङ्क्षितत्वाददृष्टं कल्प्यम् । आनन्तर्यं पुनरपेक्षणीयम् । तस्माद्वर्णाः श्रोत्रेण गृह्यमाणा यं क्रमं प्रतिपादयन्ति स एव विधीयमानत्वाच्छ्रुतिक्रमोऽभिधीयते । अन्यस्य पादार्थान्तरस्याविधानात् । यत्राऽऽनुपूर्व्येण पादार्था विधीयन्ते स पाठक्रमः । यथा 'हृदयस्याग्रेऽवद्यत्यथ जिह्वया अथ वक्षसः' इति ।

नन्वथशब्देन श्रुत्यैव क्रमो विधीयते । उच्यते । हृदयाद्यवदानं विधीयते । अतः पाठक्रमादेवाऽऽनन्तर्यस्य सिद्धत्वादथशब्दोऽनुवादः । आह । अथशब्दश्रवणादानन्तर्येऽवगते कस्मात्पाठक्रमो नानुवादः । उच्यते । वृत्तादनन्तरस्य प्रक्रियार्थोऽयम् । यावच्च पूर्वोत्तरपदार्थौ नावधृतौ तावन्नास्ति । तौ चेदवधृतौ, पाठादेव क्रमः सिध्यति । श्रुतिरपीयं सापेक्षत्वाद्दुर्बला । तस्मादेकप्रयोगवचनपरिगृहीताना पाठादेव सिद्धत्वादथशब्दोऽनुवादः । यत्र तु प्रमाणान्तरेणावधृतः कर्तव्यः पदार्थोऽपरोऽन्येन, तत्राथशब्द आन-

---

१ व्यवहारक्रमस्येति पा० । २ अवदानवाक्येष्विति—'हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः, अथ वक्षसः' इत्यादिष्वित्यर्थः । ३ आनुपूर्व्यान्त इति पा० । ४ आनन्तर्यमवगम्यते । तस्मात्पाठक्रमोऽस्त्वनुवाद इति पा० ।

रिति सिद्धान्तः । तस्मादपुनरुक्तमिति ॥ १ ॥

( आर्थक्रमनियमाधिकरणम् ॥ २ ॥ )

## [ २ ] अर्थाच्च ॥ २ ॥ सि०

किमेष एवोत्सर्गः, सर्वत्र श्रुतिवशेनैव भवितुमर्हतीति । उक्तं हि, चोदनालक्षणोऽर्थो धर्म इति[1] । एवं प्राप्ते ब्रूमः । अर्थाच्च—सामर्थ्याच्च क्रमो विधीयत इति । गुणभूतो हि पदार्थानां क्रमो भवति । यश्च यस्य निर्वर्त्यमानस्योपकरोति स तस्य गुणभूतः । यस्मिन्नाऽऽश्रीयमाणे पदार्थ एव न संपद्यते, न स गुणभूतः । विनाऽपि तेन न वैगुण्यम् । एवं प्रत्यक्षः क्रमस्य गुणभावो यत्र, तत्रार्थेन स एवाऽऽश्रयितव्यः । यथा, जाते वरं ददाति । जातमञ्जलिना गृह्णाति । जातमभिप्राणितीति । अर्थात्पूर्वमभिप्राणितव्यं, ततोऽञ्जलिना ग्रहीतव्यः, ततो वरो देय इति । तथा, विमोकः[2] पूर्वमाम्नातः, पश्चात्तद्योगः[3] । अर्थाद्विपरीतः कार्यः । याज्यानुवाक्ये तु विपर्ययेणाऽऽम्नाते विपर्ययेण कर्तव्ये । नात्र पाठक्रमोऽनुष्ठीयते[4] । यतो देवतोपलक्षणार्थाऽनुवाक्या, प्रदानार्था याज्या । अग्निहोत्रं जुहोतीति पूर्वमाम्नातम् । ओदनं पचतीति पश्चात् । असंभवात्पूर्वमोदनः पक्तव्यः । प्रैषप्रैषार्थौ तु विपर्ययेणाऽऽम्नातौ । तौ च विपर्ययेण कर्तव्यौ ॥ २ ॥

( क्रमस्य क्वचिदनियमाधिकरणम् ॥ ३ ॥ )

## [ ३ ] अनियमोऽन्यत्र ॥ ३ ॥ सि०

अस्मिन्विषये क्रमस्य नियमो नास्ति । यथा दर्शपूर्णमासयोर्याज-

---

न्तर्थं ब्रवीति, यथा वेदमधीत्येतिवत् ॥ १ ॥ [ २ ॥ ]

‘ एको मम ’ ‘ वसन्तमृतूनां प्रीणामि ’ इति प्रयाजानुमन्त्रणानां समुच्चयः । पाठस्तावन्नास्ति शाखान्तराम्नानात् । श्रुतिरपि नास्ति । नाप्यर्थो नियामकः । यदि समित्प्रयाजः काठकानुमन्त्रणेनानुमन्त्रितस्तनूनपात्प्रयाजेऽपि प्रवृत्त्या तदेव प्रथममिति चेत् । तन्न । ये हि सह चोदितास्तेषां प्रवृत्तिर्नियन्त्री । न चैते सह चोदिताः । तस्माद्द्वितीयादिष्वप्यनियमः । काण्डक्रमोऽपि नास्ति । भिन्नदेशानां हि सहानुष्ठाने चोदिते

---

१ ( अ० १ पा० १ अ० २ सू० २ ) । २ विमोक इति—‘ इमं स्तनमूर्जस्वन्तं धयापामित्याज्यस्य पूर्णां स्रुचं जुहोत्येष वा अग्नेर्विमोकः ’ इत्येनेन विहितोऽग्निविमोक इत्यर्थः । ३ तद्योग इति—अग्नियोग इत्यर्थः । स च ‘ अग्निं युनज्मि शवसा घृतेनेति जुहोति, अग्निमेवैतेन युनक्ति ’ इत्यनेन विहितः । ४ मीयते पा० ।

मानानां प्रयाजानुमन्त्रणादीनां नानाशाखान्तरसमाम्नातानां, वसन्तमृतूनां प्रीणामीत्येवमादीनाम्, एको ममेत्येवमादीनां च ॥ ३ ॥

( पाठक्रमनियमाधिकरणम् ॥ ४ ॥ )

[ ४ ] क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात् ॥ ४ ॥ सि०

दर्शपूर्णमासयोराम्नातं—समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजतीति । तत्र संशयः । किमनियतेनैव क्रमेणैषामनुष्ठानमुत यः पाठक्रमः स एव नियम्येतेति । किं प्राप्तम् । नियमकारिणः शास्त्रस्याभावादनियम इत्येवं प्राप्ते, ब्रूमः । क्रमेणैव नियम्येतैकस्मिन्क्रताविति । कुतः । तद्गुणत्वात् । तद्गुणत्वं हि गम्यते पदार्थानाम् । यथा, स्नायादनुलिम्पेत्, भुञ्जीतेति च क्रमेणानुष्ठानमवगम्यते वाक्यात्पदार्थानाम् । यथा चादृष्टार्थेषूपदिश्यमानेषु कश्चिद्ब्रूयात्—देवाय धूपो देयः, पुष्पाण्यवकरितव्यानि, चन्दनेनानुलेप्तव्यः, उपहारोऽस्मा उपहर्तव्यः, एवं कृते देवस्तुष्यतीति । तमन्यः प्रतिब्रूते—नैतदेवं, न प्रथमं धूपो दातव्यः, प्रथमं पुष्पाण्यवकरितव्यानीति । एवं मन्यते, धूपदानस्य प्राथम्यमनेनोक्तमिति । तस्माद्वाचनिक एषामेष क्रम इति ॥ ४ ॥

अशाब्द इति चेत्स्याद्वाक्यशब्दत्वात् ॥ ५ ॥

इति चेत्पश्यसि, अथैवं गम्यमानेऽशाब्द एव क्रमः । कथम् । पदार्थपूर्वको वाक्यार्थः । पदेभ्यश्च पदार्था एवावगम्यन्ते न क्रमः । स्यादेतदेवं, यदि पदानां समूहस्य श्रवणं, प्रत्यायकमर्थस्य स्यात् । न तु समुदायः प्रत्यायक इत्युक्तं, तद्भूतानां क्रियार्थेन समाम्नाय इत्यत्र । तस्मात्क्रमस्य वाचकशब्दाभावाद्व्यामोह एष क्रमोऽवगम्यते । एवं चापूर्वासत्तिरनुग्रहीष्यते । इतरथा साऽपि विप्रकृष्येत घटीयन्त्र इव । दर्शयिष्यति च, हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः, अथ वक्षस इति । यदि नियामकः पाठक्रमस्ततो न विधातव्यमेतत् । नियामके हि पाठक्रमे पाठक्रमादेव प्राप्नुयात् ॥ ५ ॥

---

कः प्रथम आरभ्यतामिति यस्यैव बोधकः पदार्थो विद्यते सः प्रथमं क्रियते । इह त्वे[illegible]दपि नास्ति । मुख्यक्रमोऽपि नास्ति । तत्र प्रधानक्रमेण नियमः क्रियते सह चोदितानाम् । इह हीदृशमपि नास्ति । अतोऽनियमः ॥ ३ ॥ [ ४ ॥ ५ ॥ ]

१ ( अ० १ पा० १ अ० ५ सू० २५ ) ।

अर्थकृते वाऽनुमानं स्यात्क्रत्वेकत्वे परार्थत्वात्स्वेन
त्वर्थेन संबन्धस्तस्मात्स्वशब्दमुच्येत ॥ ६ ॥

एकस्मिन्क्रतावेकत्वात्कर्तुरनेकस्मिन्पदार्थेऽर्थकृतत्वात्क्रमस्य । तत्रैष एव क्रमो नियम्येतानुमानेन । कुतः । परार्थत्वाद्वेदस्य । परार्थो हि वेदो यद्यदनेन शक्यते कर्तुं तस्मै तस्मै प्रयोजनायैष समाम्नायते । शक्यते चानेन पदार्थो विधातुं, शक्यते च क्रियाकाले प्रतिपत्तुम् । तस्माद्वेदः पदार्थांश्च विधातुमुपादेयः, क्रियाकाले च प्रतिपत्तुम् । न गम्यते विशेषः, विधातुमयं समाम्नायते न प्रतिपत्तुमिति । अगम्यमाने विशेष उभयार्थमुपादीयत इति गम्यते । प्रतिपत्तुं चानेन क्रमेण शक्यते नान्येन । अत एव च कृत्वा पाठक्रमापचारे विनष्ट इत्युच्यते । इतरथा हि यद्यस्य प्रयोजनं, तस्मिन्निर्वर्तमान एव किं नष्टं स्यात् । अदृष्टं कल्प्येत तच्चान्याय्यं दृष्टे सति । तस्मात्स्वशब्दः क्रमः । य एव पदार्थानां वाचकः शब्दः स एव क्रमस्यापि ॥ ६ ॥

तथा चान्यार्थदर्शनम् ॥ ७ ॥

एवं चान्यार्थं दर्शयति, व्यत्यस्तमृतव्या उपदधाति । व्यत्यस्तं षोडशिनं शंसति । आश्विनो दशमो गृह्यते । तं तृतीयं जुहोतीति । यद्यनियमेनोपधानं शंसनं च, व्यत्यस्तवचनमनर्थकं स्यात् । न हि कथंचिदव्यत्यास इति । तथा, आश्विनस्य तृतीयस्य होमानुवादो नावकल्प्येत, यदि पाठक्रमेणानियम इति । तथा, अभिचरता प्रतिलोमं होतव्यम् । प्राणानेवास्य प्रतीचः प्रतियौतीति कश्चित्प्रतिलोमं विदधदनुलोमं दर्शयति । तदुपपद्यते यदि पाठक्रमेण प्रयोगः । इतरथा, सर्वमनुलोमं स्यात्, प्रतिलोमदर्शनं नोपपद्येत । तथा, चतुर्थो-

---

'स्वाध्यायोऽध्येतव्यः' इति स्वाध्यायाध्ययनेन भावयेत्किमिति तत्र [१]विश्वजिद्वत्फलं न कल्प्यते । न च [२]रात्रिसत्रन्यायेनार्थवादतः फलम् । भवितव्यं च फलेन । तस्मात्स्वाध्यायाध्ययनेन यदवबोध्यते, तदत्र फलम् । पदार्थाश्चानवबुद्धा अनेन बोध्यन्ते क्रमश्च । तस्माद्यथा पदार्थस्वरूपमनवबुद्धमवबुध्यते, एवं क्रमोऽप्यनवबुद्ध एव । अतः स्वाध्यायेन पदार्थज्ञानं भावयेत्क्रमज्ञानं चेत्यर्थः । तस्मात्स्वशब्दः ॥ ६ ॥ [ ७ ॥]

---

१ विश्वजिद्वदिति–( अ० ४ पा० ३ अ० ५ ) अत्रत्यन्यायेनेत्यर्थः । २ ( अ० ४ पा० ३ अ० ६ ) अत्रत्येनेति शेषः ।

समयोः प्रतिसमानयतीत्युक्ते सति, अतिहायेडो बर्हिः प्रति समानयती-त्युच्यते । तेन बर्हिषश्चतुर्थतां दर्शयति । सा पाठक्रमे नियामकेऽवकल्पते ॥ ७ ॥

( प्रवृत्तिक्रमनियमाधिकरणम् ॥ ५ ॥ )

## [ ५ ] प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात् ॥ ८ ॥ सि०

वाजपेये, सप्तदश प्राजापत्यान्पशूनालभत इति श्रूयते । तेषु पशुषु चोदकप्राप्ताः प्रोक्षणादयो धर्माः । तत्र प्रथमः पदार्थो यतः कुतश्चिदारब्धव्यः । द्वितीयादिषु भवति संशयः । किं तत एव द्वितीयोऽपि पदार्थ आरब्धव्य उत द्वितीयादिष्वनियम इति । किं तावत्प्राप्तम् । नियमकारिणः शास्त्रस्याभावादनियम इति ।

एवं प्राप्ते ब्रूमः । यतः पूर्व आरब्धस्तत एव द्वितीयादयोऽपि पदार्था आरब्धव्या इति । कुत एतत् । तदुपक्रमात् । सर्वे हि पदार्थाः प्रधानकालात्र विप्रकृष्टव्याः । प्रधानं हि चिकीर्षितम् । कृतं वा तेषां निमित्तम् । सहवचनं हि भवति । पदार्थैः सह प्रधानं कर्तव्यमिति ।

---

' वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति ' इति । अस्मिन्काल उपादीयमानाः सेतिकर्तव्यताका इतरेतरयुक्ताः सह कार्या इत्यवगते क्रमश्चिन्त्यते । तत्र प्रथमे पदार्थेऽनियमो यतः कुतश्चित्कर्तव्यः । द्वितीयस्तु किं प्रथमो यत आरब्धस्तत एवाऽऽरम्भणीय उतानियम इति । *श्रुत्यर्थपाठाभावादनियमे प्राप्ते, प्रवृत्त्यैव नियमः* । कुतः । एतदुपक्रमात् । **सर्वे हि पदार्थाः प्रधानकालात्र विप्रकृष्टव्याः । सहवचनं भवति, पदार्थैः सह प्रधानं कर्तव्यमिति** । एवं व्यवहितो ग्रन्थसंबन्धः । कथं, **प्रधानकालात्र विप्रकृष्टव्या** इत्यस्य **हि सहवचनं** भवतीत्युपपत्तिः । कथं, भवन्तं भावयेद्यागेनेत्यमिति । तत्र यस्यामेव वेलायां स्वर्गो भवने कर्तृत्वं प्रतिपद्यते तस्मिन्नेव क्षणे करणेतिकर्तव्यते अपि व्याप्रियेते । तस्मान्निरतस्य फलकरणेतिकर्तव्यत्वस्य यजेतेत्यनेन कर्तव्यतोच्यते । शब्दवृत्तं तु तावदेवं, वस्त्वप्येवमेव । यदि भूतकालं भाव्यं, भविष्यति काले करणेतिकर्तव्यते ततोऽनयोः करणेतिकर्तव्यतात्वमेव न स्यात् । भविष्यति भाव्ये भूते करणे य एव दोषः, करणेतिकर्तव्यतयोरपि विप्रकर्षेऽयमेव दोषः । अतः शब्दवस्तुभ्यामेककालतैषाम् । तत्र यदि फलस्य कालोऽवगम्यते, ततस्तदीयेन कालेन करणेतिकर्तव्यतयोः परिच्छेदः स्यात् । इह तु स्वर्गस्यानवगतः कालः, करणेतिकर्तव्यतयोस्त्ववगतः । तयोस्तु कालेन स्वर्गभवनकालः परिच्छिद्यते । ततः प्रधाने सेति-

**बहुपदार्थसमाम्नानात्त्ववश्यंभावी विप्रकर्षः। तथाऽपि तु यावद्भिर्नाव्यवहितः शक्यः पदार्थः कर्तुं तावद्भिर्व्यवधानमवश्यं कर्तव्यं, ततोऽभ्यधिकेन न व्यवधातव्यमिति । यदि द्वितीयं पदार्थमन्यत आरभेत, ततोऽधिकैरपि व्यवदध्यात्। तथा प्रयोगवचनं बाधेत। ननु तथा सति कश्चिदल्पैर्व्यवहितो भविष्यति। उच्यते। अनुमतानां व्यवधायकानां त्यागेन कश्चिदभ्यधिको गुणो भवतीति। तस्माद्यतः पूर्वपदार्थ आरब्धस्तत एवोत्तर आरम्भणीय इति ॥ ८ ॥**

---

कर्तव्यता। एकैकस्मिन्क्षणे सहकर्तव्ये प्राप्ते, एककर्ता बहूनि प्रधानानीतिकर्तव्यतां वाऽसमर्थः कर्तुं यौगपद्येनेत्यवश्यंभावी विप्रकर्षः। ईदृशेन विप्रकर्षेण क्रियमाणेनापि सहैव पदार्थाः कृता भवन्ति। तत्र प्रधाननियमेन पदार्थाः प्राप्नुवन्ति। आग्नेयादीनां सकाशात्तत्र श्रुत्यर्थपाठैरनियमेन या प्रसक्तिः सा व्यावर्त्यते।

अवश्यंभाविनि विप्रकर्षे प्रधानं हि चिकीर्षितं, कृतं वा तेषां निमित्तमित्यर्थतो ग्रन्थसंबन्धः। अग्न्यन्वाधानादीनां करिष्यमाणं प्रधानं निमित्तम्। स्विष्टकृदादीनां तु कृतम्। तेनैव केचित्पदार्थाः क्षणव्यवहिता अपेक्ष्यन्ते। केचिद्द्वाभ्यां, केचिद्बहुभिः। प्रकृतावयमर्थ इति विकृतावप्ययमेव न्यायः। अग्न्यन्वाधानादि प्रागुपाकरणात्साधारणं सर्वेषां सकृत्कृतम्। उपाकरणादयोऽपि संनिपत्योपकारकाः साहित्येनानुष्ठातव्याः, सहचोदितत्वात्तेषाम्।

तदेवं यस्य प्रथममुपाकरणं क्रियते, तस्य पाठेन यद्यपि द्वितीयः पदार्थ उपस्थाप्यते तथाऽपि सहवचनादिममर्थमाकाङ्क्षति सजातीयेन षोडशक्षणाव्यवहितं द्वितीयं पदार्थम्। द्वितीयस्तु पञ्चदशभिरुपाकरणक्षणैरेकेन च नियोजनक्षणेन। एवं तृतीयादयोऽपि सजातीयविजातीयव्यवहितानपेक्षन्ते। अन्त्यस्तु विजातीयक्षणव्यवहितमेवापेक्षते। संनिपत्योपकारकानाञ्चोच्येदश्यपेता प्रधानानां भवति। अत आह—**यावद्भिर्नाव्यवहितः शक्यः पदार्थः कर्तुं तावद्भिर्व्यवधानमवश्यं, ततोऽभ्यधिकैस्तु न व्यवधातव्यम्।**

यद्येकं पदार्थं कृत्वा द्वितीयोऽपि तस्यैव क्रियेत सहवचनं नोपपद्येत। एवं सर्वत्र योज्यम्। उच्यते। **अनुमतानां व्यवधायकानां त्यागे न कश्चिदप्यधिको गुणो भवतीति**—किमुक्तं भवति। अनुमतैर्व्यवधायकैः परित्यज्यमानैर्दोष एव। अभ्यधिकैर्व्यवधानेऽश्रुतकरणं, न्यूनैरप्यश्रुतकरणमेव। तस्मात्साहित्यसंपत्तये यः क्रमोऽपेक्षितः स द्विधा बाध्यते ॥ ८ ॥

**सर्वमिति चेत् ॥ ९ ॥**

इति चेत्पश्यसि, प्रधानाविप्रकर्षेण प्रयोगवचनानुग्रह इति । सर्वं तर्हि गुणकाण्डमेकस्मिन्नपवर्जयितव्यम् । यथा सौर्यादिषु ॥ ९ ॥

**नाकृतत्वात् ॥ १० ॥**

नैतदेवम् । सहप्रयोग एव हि नानुष्ठितः स्यात् ॥ १० ॥

**क्रत्वन्तरवदिति चेत् ॥ ११ ॥**

अथ यदुक्तं, यथा क्रत्वन्तरेषु सौर्यादिष्विति । तत्परिहर्तव्यम् ॥११॥

**नासमवायात् ॥ १२ ॥**

न तेषामर्थात्क्रमः प्राप्नोति, यो नियम्येत । अङ्गाश्रयो हि नियमो भवितुमर्हति । अनङ्गसमाश्रितस्य स्वयमङ्गता कल्प्येत ॥ १२ ॥

( स्थानक्रमनियमाधिकरणम् ॥ ६ ॥ )

**[६] स्थानाच्चोत्पत्तिसंयोगात् ॥ १३ ॥ सि०**

एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामं, त्रयस्त्रिंशेन प्रतिष्ठाकाममित्येवमादि श्रूयते । तत्राऽऽगमेन संख्यापूरणमिति वक्ष्यते[1] । तत्राऽऽगमे क्रियमाणे, किमनियतक्रमाः सर्वा ऋच आगमयितव्या उत काण्डक्रमेणेति । किं प्राप्तम् । अनियमेनेति । कुतः । अतिरात्रे त्रिणवादिशब्दार्थेनैताः प्राप्नुवन्ति । तत्रैतासां प्राप्नुवतीनां पाठक्रमो नास्तीति । एवं प्राप्त उच्यते । यदासां समाम्नाये स्थानं, तेनै-

---

यदि प्रधानासत्त्याऽङ्गाना विप्रकर्षो नेष्यते, एवं तर्ह्येकैकः पशुरवान्तरप्रयोगवचनेन निरपेक्षः पदार्थकाण्डेन संबध्यताम् ॥ ९ ॥

उत्तरं तु सर्व एवैते, इतरेतरयुक्ता उपादीयन्ते ॥ १० ॥ [ ११ ॥ ]

ये ह्येकप्रयोगवचनपरिगृहीतास्तेषां क्रमो नियामकः । सौर्ये इतिकर्तव्यतां गृह्णन्नैन्द्राग्ननिरपेक्षो गृह्णाति । अत ऐन्द्राग्नस्य येतिकर्तव्यता सा सौर्यस्थानक्रमम् । तस्मात्क्रमः परिच्छेदकत्वेन नापेक्ष्यते । अत आह—**अङ्गाश्रयो हि नियमो भवितुमर्हति । अनङ्गमाश्रितस्य स्वयमङ्गता कल्प्येत** । येषां पदार्थानामङ्गत्वं नावगतं तेषामङ्गता निष्प्रमाणिका कल्प्येत । अङ्गाश्रितश्च क्रमः ॥ १२ ॥

यद्यपि प्रथममन्त्रग्रहणेऽनियमस्तथाऽपि पूर्वो मन्त्रः पाठेनैवोत्तरं पर्युपस्थापयति । यथा मन्त्रक्रमाम्नायादवगम्यते, एवं क्रमविशिष्टमप्यवगम्यते । ब्राह्मणपाठेन तु पदार्था

---

१ ( अ० १० पा० ५ अ० ८ सू० २७ ) इत्यत्रेति शेषः ।

ता अत्र नियम्यन्ते । याः पूर्वं समाम्नातास्ताः पूर्वमेव प्रयोक्तव्याः । आनुपूर्व्यस्य हि दृष्टमेतत्प्रयोजनम् । यदुत्तरस्फुरणं तदपि चिकिर्षितमेवेति । त्रिणवादिशब्दैरतिरात्रे यौगपद्येनाऽऽसां प्राप्तेः पाठक्रमस्याविषय इत्यधिकरणान्तरमिति भवति मतिः ॥ १३ ॥

समाम्नायपाठक्रमादेवात्र नियम इति पुनरुक्तता गम्यत इत्यन्यथा वर्ण्यते—

## स्थानाच्चोत्पत्तिसंयोगात् ॥ १३ ॥ सि०

साद्यस्के श्रूयते, सह पशूनालभत इति । तत्रैषोऽर्थः समधिगतः । सवनीयकाले त्रयाणामालम्भ इति । अथात्र पाठक्रमात्किमग्नीषोमीयः पूर्वमालब्धव्य उत स्थानक्रमात्पूर्वं सवनीय इति । किं प्राप्तम् । पूर्वमग्नीषोमीय इति । कुतः । पाठक्रमात् । एवं प्राप्ते ब्रूमः । सवनीयः पूर्वं, स्थानात् । यदि पूर्वमग्नीषोमीयः स्यात्, सवनीयस्थानं व्याहन्येत । आश्विनं गृहीत्वा त्रिवृता यूपं परिवीयेति । नन्वितरत्रापि पाठक्रमो बाध्येत । बाध्यताम् । तस्य हि प्रतिषेधार्थः सहशब्दः समाम्नातः ।

---

विधीयन्त इत्येतावान्विशेषः । क्रमावबोधस्तूभयोः स्वाध्यायावगमात्तुल्यः । तस्मात्पाठक्रमेण तुल्यमित्यन्यदुदाह्रियते, ' सह पशूनालभते ' इति । श्रुत्यर्थपाठप्रवृत्तीनामभावादनियमः ।

अथास्य प्रयोजनं नियमेन ततोऽग्नीषोमीयप्रकृतौ प्रथममनुष्ठानं पाठादवगतमिहापि तथैव भवितुमर्हतीत्येवं प्राप्ते, ब्रूमः । आग्नेयस्य प्रथममुपाकरणम् । कथम् । ' आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाऽऽग्नेयं सवनीयं पशुमुपाकरोति ' इति । अयुक्तमिदं व्याख्यानम् । न हि शास्त्राण्यतिदिश्यन्ते । यद्यप्यतिदिश्येरंस्तथाऽपि पाठक्रमो वा स्याच्छ्रुतिक्रमो वा । पाठक्रमे पुनरुक्तमेव । क्त्वाशब्देन पूर्वकालताऽभिधीयते नाऽऽनन्तर्यम् । आनन्तर्याभावादग्नीषोमीयेऽपि प्राकृते पूर्वकालताऽपि घटत एव ।

उच्यते । ' सह पशूनालभते ' इति न्यायात्सवनीयस्थाने । तत्राऽऽश्विनो गृह्यमाण आग्नेयं शक्नोत्यवबोधयितुम् । स्वस्थानाद्धि चालितत्वान्नास्त्यवबोधकं प्रमाणमग्नीषोमीयस्य । तस्मान्नानेन वाक्येन शास्त्रातिदेशं भाष्यकार आह । न च वचनेन कृतं क्रमम् । किं तर्हि । अनेनाऽऽश्विनकालं लक्षयति । स च शक्नोति सवनीयमेव बोधयितुमित्येतावदेवाभिप्रेतम् । अग्नीषोमीयानुबन्ध्ययोरनियमे प्राप्ते, प्रकृतावनुबन्ध्यात्पूर्वमग्नीषोमीयो दृष्ट इहापि तथैव भवितुमर्हति । नन्वितरत्रापि पाठक्रमो बाध्यते । बाध्यताम् । तस्य हि प्रतिषेधार्थः सहशब्द इति । कोऽभिप्रायः—पूर्वः पदार्थः समाप्यमान

अप्रतिषिद्धं चाऽऽश्विनग्रहस्थानम् । तन्न बाधितव्यम् ॥ १३ ॥

( मुख्यक्रमनियमाधिकरणम् ॥ ७ ॥ )

[ ७ ] मुख्यक्रमेण वाऽङ्गानां तदर्थत्वात् ॥ १४ ॥ सि०

सारस्वतौ भवतः । एतद्वै दैव्यं मिथुनमिति श्रूयते । तत्र संदेहः । किं स्त्रीदेवत्यस्य प्रथमं धर्मा उत पुंदेवत्यस्येति । नियमकारिणः शास्त्रस्याभावादनियम इति प्राप्ते, ब्रूमः । मुख्यक्रमेण वा नियमः स्यादिति । स्त्रीदेवत्यस्य हि पूर्वं याज्यानुवाक्ययोः समाम्नानम् । प्रणो देवी सरस्वतीति । तस्मात्स्त्रीदेवत्यस्य पूर्वं प्रदानेन भवितव्यम् । तस्मात्स्त्रीदेवत्यस्य पूर्वं धर्माः कार्याः । तथा हि प्रधानकालता भवत्यङ्गानाम् । इतरथा, यैः पदार्थैर्व्यवधानं सामर्थ्यादनुज्ञातं तेभ्योऽधिकैरपि व्यवधानं स्यात् ॥ १४ ॥

( पाठक्रमस्य मुख्यक्रमापेक्षया बलीयस्त्वाधिकरणम् ॥ ८ ॥ )

[ ८ ] प्रकृतौ तु स्वशब्दत्वाद्यथाक्रमं प्रतीयेत ॥ १५ ॥ सि०

दर्शपूर्णमासयोः पूर्वमौषधधर्माः समाम्नाताः, तत आज्यस्य । तत्र

---

उत्तरं बुद्धावभिनिर्यस्यतीत्ययं पाठक्रमः । अग्नीषोमीयसवनीययोश्च पौर्वापर्यमात्रं तद्बाध्यते । यद्येवंविधं पाठक्रमं ब्रवीषि स बाध्यते । सहशब्दश्रवणात्सवनीयस्योपस्थापकमस्ति नेतरयोः ॥ १३ ॥

श्रुत्यर्थपाठप्रवृत्तिकाण्डैर्नियमस्याभावात्प्रथमे पदार्थेऽनियमः । एवं प्राप्ते ब्रूमः । स्त्रीदेवत्यस्य प्रथमं याज्यानुवाक्ये, तस्यैव प्रथमं प्रदानं, ततः स्त्रीदेवत्यस्यैव प्रथमः पदार्थ आरम्भणीयो मुख्यक्रमेण । कथम् । सहचोदितत्वादेकक्षणव्यवहितान्पदार्थानपेक्षते । तत्र पुंदेवत्यस्य प्रथमः पदार्थो यद्यारभ्यते ततः प्रवृत्त्यैकक्षणव्यवहितता स्त्रीदेवत्यस्य स एव पदार्थः क्रियते । एवं द्वितीयादिष्वपि पदार्थेषु प्राप्नोति । तत्र प्राक् स्त्रीदेवत्यस्य प्रदानाद्यः पदार्थस्तस्मिन्प्रवृत्त्या स्त्रीदेवत्यस्य कृते ततोऽनन्तरमेव स्त्रीदेवत्यस्य पाठक्रमेण प्रदानं प्राप्नोति । अत आनन्तर्येण स्त्रीदेवत्यस्य द्वौ पदार्थौ प्राप्नुतः । तत्रैकक्षणव्यवहितता बाध्येत या सहवचनेनापेक्षिता, इतरस्यापि ताभ्यां व्यवहितौ, सर्वेषामप्येकक्षणाविप्रकर्षः । तस्मात्प्रथमं स्त्रीदेवत्यस्य धर्माः । अत आह—यैः पदार्थैर्व्यवधानं सामर्थ्यादभ्यनुज्ञातं तेभ्योऽधिकैरपि व्यवधानं स्यात् ॥ १४ ॥

आज्यनिर्वाप इहोदाहरणम् । पूर्वेण न्यायेन तथैव प्राप्तेऽपवाद आरभ्यते । पाठ-

संदेहः । किमग्नीषोमीयधर्माणां मुख्यक्रमेण पूर्वमाज्यस्य धर्माः कर्तव्या उत यथापाठमिति । मुख्यक्रमानुग्रहेणाऽऽज्यस्य पूर्वमिति प्राप्ते, ब्रूमः । प्रकृतौ यथापाठं प्रतीयेत । स्वशब्दो हि तेषां पाठक्रमः । सोऽन्यथा क्रियमाणे बाधितः स्यात् । सहत्वस्य पुनरुपसंग्राहकः प्रयोगवचनः स्वक्रमेण पदार्थे संनिकृष्यमाणे न बाधितो भविष्यति । अपि च पाठक्रमे स्वशब्दः स्वाध्यायोऽध्येतव्य इति । मुख्यक्रमे प्रयोगवचनैकवाक्यता सूक्ष्मा ॥ १५ ॥

( ब्राह्मणपाठपेक्षया मन्त्रपाठस्य बलीयस्त्वाधिकरणम् ॥ ९ ॥ )

## [ ९ ] मन्त्रतस्तु विरोधे स्यात्प्रयोगरूपसामर्थ्यात्तस्मादुत्पत्तिदेशः सः ॥ १६ ॥ सि०

दर्शपूर्णमासयोराग्नेयस्य पूर्वं मन्त्रपाठः, उत्तरो ब्राह्मणस्य । तत्र संदेहः । कतमः पाठो बलीयानिति । उच्यते । अनियमः । नियमकारिणः शास्त्रस्याभावादित्येवं प्राप्ते, ब्रूमः । मन्त्रपाठो बलीयान् । कुतः । प्रयोगरूपसामर्थ्यात् । प्रयोगाय मन्त्रस्य रूपसामर्थ्यम् । तदस्य सामर्थ्यं, येन मन्त्रः प्रयुज्यते । तस्य च प्रयुज्यमानस्य क्रमो दृष्टाव

---

क्रमेणानुष्ठानं स्वाध्यायेनावगतत्वात्प्रत्यक्षम् । सह पदार्थाः कर्तव्या इति पदार्थेष्वयं धर्मः सहत्वं नाम । तत्र प्रयोगवचनेन सहत्वमवबोध्यते । सहत्वमवबोधयन्नन्यथानुपपत्त्या क्रममप्यनुमापयति प्रधानासत्त्वे । तत्र यदश्रुतक्रमानुमानं तत्प्रत्यक्षेण क्रमेण बाध्यते । अतो यथाक्रमं व्यवस्था । मुख्यक्रमे प्रयोगवचनेनैकवाक्यता सूक्ष्मा । अश्रुतः क्रमः कल्प्यत इत्यर्थः ॥ १५ ॥

आग्नेयस्य पूर्वो मन्त्रपाठः, अग्नीषोमीयस्य तु पूर्वो ब्राह्मणपाठः । तत्र ब्राह्मणपाठात्किमग्नीषोमीयस्य पूर्वं धर्मा उत मन्त्रपाठादाग्नेयस्येति । किं प्राप्तं, पूर्वो मन्त्र उत्तरं पर्युपस्थापयति । 'समिधो यजति' इति समाप्यमानस्तनूनपातमुपस्थापयति । अतो द्वयोरपि समाम्नायपाठयोः प्रत्यक्षत्वादनियम इति प्राप्ते ।

मन्त्रपाठो बलीयान् । कुतः । 'समिधो यजति' इत्यनेन पदार्थो विहितः । सोऽनुष्ठानकाले येन वाक्येन विहितस्तद्वाक्यं स्मारयति । तेन वाक्येन स्मृतेनानुष्ठानवेलायां पदार्थः स्मारितः सन्ननुष्ठीयते । द्वितीयं पदार्थं न स्मारयति । किं तर्हि । अनुष्ठानारम्भकाले योऽसौ कृतः पदार्थस्तमालोचयति । स चाऽऽलोच्यमानो येन ब्राह्मणखण्डकेन विहितस्तत्स्मारयति । तच्च स्यादुत्तरं ब्राह्मणखण्डकं स्मारयति पाठात् ।

भवति । ननु च ब्राह्मणपाठस्यापि तदेव प्रयोजनम् । उच्यते । उत्पत्तिदेशः सः । अपरमपि तस्य प्रयोजनं कर्मोत्पत्त्यर्थं भविष्यति ॥१६॥

( औपदेशिकमुख्यक्रमापेक्षयाऽऽतिदेशिकपाठक्रमस्य बलवत्त्वाधिकरणम् ॥ १० ॥ )

[ १० ] तद्वचनाद्विकृतौ यथाप्रधानं स्यात् ॥ १७ ॥ पू०

अस्त्यध्वरकल्पा नामेष्टिः, आग्नावैष्णवमेकादशकपालं निर्वपेत्, सरस्वत्याज्यभागा स्यात्, बार्हस्पत्यश्चरुरिति । तत्र संदेहः । किमाग्नेयविकारस्य बार्हस्पत्यस्य पूर्वं धर्माः कार्याः, चोदको बलवत्तरः प्रयोगवचनात्, उतोपांशुयाजविकारस्य, प्रयोगवचनो बलवत्तरश्चोदकादिति । किं प्राप्तम् । विकृतावस्यां, यथाप्रधानं स्यात् । तद्वचनात् । तेषां साक्षाद्वचनक्रमो विकृतौ । तेन संनिहितानामङ्गानामुपसंहारकः प्रयोगवचनो हि प्रत्यक्षः । तद्धर्माणां चाऽऽनुमानिकः । चोदकेन हि स प्राप्तः । तस्मात्प्रत्यक्षः प्रयोगवचनो बलवत्तरः । तेन चोदक आनुमानिको बाध्यते ॥ १७ ॥

विप्रतिपत्तौ वा प्रकृत्यन्वयाद्यथाप्रकृति ॥ १८ ॥ सि०

मुख्याङ्गक्रमविप्रतिपत्तौ वा, यथा प्रकृतौ तथैव विकृतौ भवितुमर्हतीति । कुतः । प्रकृत्यन्वयात् । यादृशाः प्रकृतौ धर्मास्तादृशा एव

---

तद्ब्राह्मणं पुनः पदार्थं विदधाति । अनुष्ठानवेलायां तावत्स्मारकमपेक्षितव्यम् । अयमत्र विप्रकर्षः । मन्त्रः पुनः परिसमाप्यमान उत्तरं मन्त्रं पर्युपस्थापयति । स च पर्युपस्थाप्यमान उत्तरं पदार्थं पर्युपस्थापयन्नेव पर्युपतिष्ठते । तस्मात्तत्रापेक्षाभावान्नास्ति विप्रकर्षः । उत्पत्तिदेशः स इति । पूर्वः पदार्थो विहितः उत्तरः पदार्थो विहित इति विधीयमानानां यः क्रमस्तेनार्थवान्ब्राह्मणपाठक्रमो नानुष्ठानक्रमेणेति ॥ १६ ॥

तृतीय आग्नेयविकारो द्वितीय उपांशुयागविकारः, प्रथमोऽग्नीषोमीयं विकरोति । तत्र किं प्रथममाग्नेयविकारस्य धर्माः कर्तव्याश्चोदकसामर्थ्यादुतोपांशुयाजविकारस्य, प्रयोगवचनसामर्थ्यात् । किं प्राप्तम् । प्रधानानामत्र प्रत्यक्षपाठान्मुख्यक्रमो बलीयान् । इतरश्चोदकप्राप्तत्वादानुमानिकः पाठः । तस्मात्प्रत्यक्षेण प्रयोगवचनेन परिगृहीतः क्रमो बलवान् ॥ १७ ॥

मुख्यप्रवृत्तिकक्रमौ प्रयोगवचनाश्रयत्वाद्दुर्बलौ । श्रुत्यर्थपाठकाण्डानां चोदकाश्रितत्वाद्बलीयस्त्वम् । किं कारणं, कथमित्याकाङ्क्षायामुत्पन्नायां या पदार्थालोचनाऽऽगमिति,

विकृतौ भवितुमर्हन्तीति मुख्यक्रमेण क्रियमाणा न प्रकृतिवत्कृताः स्युः । चोदको हि प्रयोगवचनाद्बलवत्तरः । स ह्युत्पादयति प्रापयति च । प्रापितानभिसमीक्ष्य प्रयोगवचन उपसंहरति । स प्राप्तेषूत्पन्नः प्राप्तिनिमित्तक उत्तरकालः पूर्वप्राप्तं न बाधितुमर्हति चोदकं, प्रत्यक्षोऽपि सन्, बहिरङ्गत्वात् । यथाप्राप्तानेवोपसंहरिष्यति । तस्मात्पूर्वं बार्हस्पत्यस्य धर्माः, तत आज्यस्येति ॥ १८ ॥

( साकमेधेऽनीकवत्यादीनां सद्यस्कालताधिकरणम् ॥ ११ ॥ )

[११]विकृतिः प्रकृतिधर्मत्वात्तत्काला स्याद्यथाशिष्टम् ॥१९॥पू०

चातुर्मास्येषु साकमेधस्तृतीयं पर्व । तस्यावयवाः, अग्नयेऽनीकवते प्रातरष्टाकपालो, मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुः, मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनमिति । तत्र संदेहः । किमेता द्व्यहकाला इष्टय उत सद्यस्काला इति । किं प्राप्तम् । विकृतिस्तत्काला भवितुमर्हतीति । यथाशिष्टम् । यथा प्रकृतिरुक्ता, तथा विकृतिः स्यात् । प्रकृतिधर्मा हि सा । तस्माद्या विकृतिः सा द्व्यहकाला भवितुमर्हतीति ॥ १९ ॥

अपि वा क्रमकालसंयुक्ता सद्यः क्रियेत तत्र विधेरनुमानात्प्रकृतिधर्मलोपः स्यात् ॥ २० ॥ सि०

---

सोत्पत्तिरिवोत्पत्तिस्तादृशानवधृतान्प्रापयति । तदुत्तरकालं प्रयोगवचनः समीक्ष्य क्रमनुपसंगृह्णाति । स उपसंगृह्णन् यादृशाश्चोदकेन प्रापितास्तादृशानुपसंगृह्णाति । ते च विशिष्टक्रमका एव प्राप्यन्ते । अतः प्रत्यक्षस्यापि चोदकादुत्तरकालमात्मलाभाद्दुर्बलत्वम् । यश्च यस्य सकाशादात्मानं लभते, स तमसमर्थो बाधितुम् । यावदुत्पत्तिर्नास्ति न तावत्प्राप्तिः, यावत्प्राप्तिर्नास्ति न तावदङ्गत्वम्, अङ्गत्वे चावधृते संग्रहः । तस्मात्प्रयोगवचनस्य पश्चात्कालीनत्वात्तदाश्रयो यः क्रमः स आश्रयदौर्बल्याद्दुर्बलः । अत आह—उत्तरकालः पूर्वकालप्राप्तं न बाधितुमर्हति प्रत्यक्षोऽपि सन् बहिरङ्गत्वात्॥१८॥

सर्वविकृतीनां सद्यःकालत्वं वक्ष्यति । अतस्तेनैव गतत्वादनारम्भ्यमिदम् । उच्यते । द्वैयहकाल्यमनुगृह्णत्पौर्णमासीश्रवणं बाधते । यदि हि तत्र द्वे पौर्णमास्यौ स्यातां स्यादेवं द्वैयहकाल्यम् । इह तु द्वौ प्रातःकालौ विधेते । तमनुगृह्णंश्चोदकप्राप्तं न शक्नोति बाधितुम् । अतो द्वैयहकाल्यं भविष्यति ॥ १९ ॥

अह्नः कालेषु ये पदार्था उच्यन्ते, प्रातर्मध्यंदिने सायमिति । क्रमेण त एकस्मिन्नहनीति प्रतीयन्ते । यथा, देवदत्तः प्रातरपूपं भक्षयति, मध्यंदिने विविधमन्नमश्नाति, अपराह्णे मोदकान्भक्षयतीति । एकस्मिन्नहनीति गम्यते । तस्मात्सद्यस्काला एवंजातीयका विकृतयः । द्वैयहकाल्यं हि चोदकप्राप्तमानुमानिकं प्रत्यक्षरूपया सद्यस्कालतया बाध्येत ॥ २० ॥

## कालोत्कर्ष इति चेत् ॥ २१ ॥

इति चेत्पश्यसि--प्रातः साङ्गं श्रूयते, तथा मध्यंदिने सायं चेति । उत्कर्षो भविष्यति । यथैतेषु कालेषु साङ्गम् । न च द्व्यहकालताया बाधः । एकस्याह्नः प्रातरनीकवन्तमुपक्रंस्यते । द्वितीयस्य प्रातर्यक्ष्यते । एवं सांतपनीया पूर्वेद्युर्मध्यंदिन उपक्रंस्यते । अपरेद्युर्मध्यंदिने यक्ष्यते । तथा, गृहमेधीये सायमुपक्रमणं पूर्वेद्युः, सायं यागोऽपरेद्युरिति । ननु वाक्यादेकमहर्गम्यत इत्युक्तम् । उच्यते । पदार्थसामर्थ्यजनितो हि वाक्यार्थो भवति । न चात्र पदार्थसामर्थ्यमस्ति, येनैकमहर्गम्येत ॥ २१ ॥

## न तत्संबन्धात् ॥ २२ ॥

नैतदेवम् । कस्मात् । तत्संबन्धात् । एककालसंबद्धानि प्रधानान्यङ्गैः सह श्रूयन्ते । कथम् । साङ्गं हि प्रधानं प्रातःकाले श्रूयते, तथा मध्यंदिने सायं च । नाङ्गानि प्रातःकालादिषु । तत्रान्यकालेष्वङ्गेष्वन्यकालेषु च प्रधानेषु न साङ्गं तेषु कालेषु कृतं स्यात् । तस्मात्सद्यस्काला एवैता विकृतय इति । अपि च, द्व्यहं साकमेधैरिति श्रूयते । तत्सद्यस्कालासूपपद्यते ॥ २२ ॥

---

प्रातर्मध्यंदिने सायमिति वाक्यादुच्चरितादेकस्मिन्नेवाहनीति प्रतीतिर्भवति । अनुच्चरितात्तु न भवति । तस्मात्प्रत्यक्षेण वाक्येन चोदकप्राप्तमानुमानिकं बाध्यते द्वैयहकाल्यम् ॥ २० ॥

इतर आह--उपपदप्रकरणार्थैस्तस्मिन्नेवाहनीत्यनुपात्तत्वाद्भ्रान्तिरेषा ॥ २१ ॥

प्रातर्मध्यंदिन इति प्रयोगपुनःश्रुतिः । स च प्रयोगः प्रातःकाले विधीयते । तत्र यदि पूर्वस्मिन्प्रातःकाले प्रक्रम्योत्तरस्मिन्परिसमाप्येत तथा सति प्रातर्मध्यंदिनापराह्णेषु साङ्गानि न कृतानि स्युः । तत्राङ्गानां प्रधानकालता बाध्यते । तस्माद्यस्मिन्नहनि प्रातरारम्भस्तस्मिन्नेव परिसमाप्तिः ॥ २२ ॥

( तदाद्युत्कर्षतदन्तापकर्षाधिकरणम् ॥ १२ ॥ )

[ १२ ] अङ्गानां मुख्यकालत्वाद्यथोक्तमुत्कर्षे स्यात् ॥ २३ ॥ पू०

ज्योतिष्टोमे श्रूयते, आग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीत्युत्कर्षः । तथाऽग्नीषोमीये पशौ, तिष्ठन्तं पशुं प्रयजन्तीत्यपकर्षः । तत्र संदेहः । किमुत्कर्षेऽनुयाजमात्रमुत्कृष्यते, अपकर्षे च प्रयाजमात्रम्, उतोत्कर्षेऽनुयाजादि, अपकर्षे च प्रयाजान्तमिति । किं तावत्प्राप्तम् । यावदुक्तमुत्कर्षापकर्षयोः स्यात् । कुतः । अङ्गानां मुख्यकालत्वात् । एवमन्येषां प्रधानकालता भविष्यतीति । तत्र सहत्वस्य प्रापकः प्रयोगवचनोऽनुग्रहीष्यते ॥ २३ ॥

तदादि वाऽभिसंबन्धात्तदन्तमपकर्षे स्यात् ॥ २४ ॥ सि०

तदादि, उत्कर्षे, तदन्तमपकर्षे गम्येत । कुतः । अभिसंबन्धात् । यदनुयाजानां परस्तात्समाम्नायते, तत्प्रधानादनन्तरं प्रयोगवचनेन प्राप्तं बाधित्वा पाठसामर्थ्यादनुयाजेभ्यः परस्तात्क्रियते । तथा, यस्ततः परः, स ततः परस्तात् । एवमेक उत्कृष्यमाणः सर्वं गुणकाण्डमुत्कर्षति । तथाऽपकृष्यमाणोऽपकर्षतीति ॥ २४ ॥

( पौरोडाशिकानां प्रोक्षणादीनां सौमिकपदार्थपूर्वभावित्वाधिकरणम् ॥ १३ ॥ )

[ १३ ] प्रवृत्त्या कृतकालानाम् ॥ २५ ॥ सि०

ज्योतिष्टोमे श्रूयते प्रातरनुवाककाले, प्रतिप्रस्थातः सवनीयान्निर्वप

---

प्रयाजानुयाजानामपकर्षोत्कर्षौ विहितौ तावन्मात्रमेवापकृष्येतोत्कृष्येत, उत तदन्तं तदादि वा । तावन्मात्रमिति प्राप्तम् । कुतः । प्रधानप्रत्यासत्तिं ह्यङ्गान्यपेक्षन्ते । तत्र वचनाद्यस्यापकर्षस्तावन्मात्रमेवापकृष्येत । अवशिष्टं प्रधानासत्त्यैव यथावस्थितम् ॥ २३ ॥

पूर्वः पदार्थ उत्तरस्योपस्थापकः प्रकृतौ । तेनेहापि तथैव प्राप्नोति । प्रयोगवचनो हि यां प्रधानासत्तिं प्रापयति, साऽवधृतस्वरूपाणां यादृशी प्रधानासत्तिस्तादृश्यैव प्रधानासत्त्या निराकाङ्क्षी भवति, न त्वन्यादृशीं प्रधानासत्तिं शक्नोति कल्पयितुं प्राकृतबाधेन ॥ २४ ॥

प्रातरनुवाकप्रैषं[1] प्रदायानन्तरं ' प्रतिप्रस्थातः सवनीयान्निर्वपस्व ' इति प्रैषो दत्तः ।

---

१ प्रातरनुवाकप्रैषमिति–' प्रातर्यावभ्यो देवेभ्यो होतरनुब्रूहि ' इत्येवंरूपमित्यर्थः ।

स्वेति प्रेष्यतीति सवनीयानां निर्वापकालः । अस्ति च बहिष्पवमाने स्तुते, अग्नीदग्नीन् विहर, बर्हिस्तृणीहि, पुरोडाशानलंकुर्विति । तत्र संदेहः । किं प्रातरनुवाककाले सवनीयान्निरूप्य प्रचरणीहोमादयः सौमिकाः पदार्था उत पौरोडाशिकाः प्रागलंकरणादिति । किं प्राप्तम् । अनियमः । नियमकारिणः शास्त्रस्याभावादित्येवं प्राप्ते, ब्रूमः । प्रवृत्त्या कृतकालानाम् । ज्ञातकालानां पदार्थानां प्रवृत्त्या नियमः स्यात् । प्रयुज्यमानमेव हि पूर्वपदार्थमभिनियच्छति । स तस्य परस्तात्समाम्नातः परस्तात्कर्तव्यः । सौमिकस्य तु पदार्थस्य प्रचरणीहोमस्य वचनात्क्रमो बाधितः । अलंकरणं च बहिष्पवमानस्य परस्तात्समा-

बहिष्पवमाने स्तुते 'अग्नीदग्नीन्विहर' इति पुनः प्रैषः । तत्र प्रैषसंबोधितो होता प्रातरनुवाके प्रवृत्तः । अध्वर्युरुपास्त्यां व्यापृतो वचनादाप्रातरनुवाकपरिसमाप्तेः । तस्य व्यापृतत्वात्प्रोक्षणादिष्वसंभवः । तस्मिन्काल एककालोपनिपातादन्यकर्तृत्वेऽवगते कर्तृविशेषश्चिन्त्यते । किं प्रतिप्रस्थाता प्रागलंकाराद्ये पदार्थास्तेषु विधीयते निर्वापेण तांल्लक्षयित्वा । स निर्वापोऽध्वर्युकर्तृकत्वासंभवाल्लक्षणावृत्त आश्रीयमाणो यावदेवाध्वर्योर्व्यापृतता तावदेव लक्षयति । अलंकरणादूर्ध्वं क्षणिकत्वादध्वर्योर्न लक्षयति । तस्मान्निर्वापादीनां किं प्रतिप्रस्थाता कर्तोतालंकरणात्प्राग्ये पदार्था ऊर्ध्वं निर्वापात्तानलंकरणेन लक्षयित्वाऽग्नीत्कर्ता विधीयते । किं प्राप्तम् । लक्षणाविशेषादनियमः, प्रतिप्रस्थाताऽऽग्नीध्रो वेत्येवं प्राप्ते, ब्रूमः ।

समकालवुभौ पदार्थावध्वर्युकर्तृकौ । तत्र विरोधादेकत्राध्वर्युर्नियत उपास्ते । प्रोक्षणादिषु 'इतरमन्यस्तेषां यतो विशेषः स्यात्' इति प्रतिप्रस्थाता स्यात् । किंच निर्वापेण प्रोक्षणमुपस्थाप्यते न त्वलंकरणेन । किं प्रातरनुवाककाले सवनीयान्निरूप्य प्रचरणीहोमादयः सौमिकाः पदार्थाः कर्तव्या उत पौरोडाशिकाः प्रागलंकरणादिति फलेनायं संशयः ।

अयुक्तमिदं व्याख्यानम् । समाख्यानात्सर्वस्याध्वर्युकर्तृकता । यथा वा 'सहावघ्नन्ति' 'सह पिंषन्ति' इत्येककालत्वात् 'इतरमन्यः' इति प्राप्नोति । ईदृशमपि नास्ति । न हि प्रातरनुवाकः प्रोक्षणादयश्च प्रागलंकरणात्सहानुष्ठेया इति वचनमस्ति । येनाध्वर्योरुपास्त्यां नियतत्वादितरेषां कर्ता चिन्त्यते ।

अभ्युपेत्य ब्रूमः । अस्तु समानकालता । तथाऽपि प्रागलंकरणान्नैव प्रतिप्रस्थाता ।

१ ( अ० ३ पा० ८ अ० १० सू० २१ ) ।

**म्नातम् । तस्मात्तस्य पूर्वः पदार्थो निर्वपणादीनामन्तः । तत उत्तरे सौमिकाः पदार्थाः कर्तव्या इति ॥ २५ ॥**

---

कथम् । पौरोडाशिकाः पदार्थाश्चिरेण समाप्यन्ते, शीघ्रं प्रातरनुवाकः । तत्र येषु समानकालता नास्ति तेष्वविरोधात्समाख्यानादध्वर्युरेव कर्ता । निर्वापस्य प्रोक्षणादींल्लक्षयतः किंकृतोऽवधिः । साक्षादेव हि स प्रयोगं लक्षयति । अथ विरोधात्कांश्चिदेव लक्षयिष्यतीति चेत् । न । नास्त्यस्य लक्षयतः परिमाणम् । संबन्धाल्लक्षणा प्रवर्तते । स च संबन्धः सर्वेष्ववशिष्टोऽस्य । किं प्रातरनुवाककाले सवनीयाश्निरूप्येत्येवमादिः फलत्वेन नोपपद्यते, किं प्रथमं प्रचरणीहोमादीनध्वर्युः करोत्युत प्रोक्षणादीनितीदृशं संभवति निरूपणम् । प्रतिप्रस्थात्राग्नीध्रकर्तृत्वेऽविद्यमाने प्रयोगवचनपरिगृहीतानां पौर्वापर्यक्रम एव चिन्त्यते । प्रातरनुवाकानन्तरकालं प्रोक्षणादीन्करोत्युत प्रचरणीहोमादीनित्ययं संशयः । तत्रोभयोरप्यध्वर्युकर्तृकत्वादानियम इत्येवं प्राप्ते, ब्रूमः ।

निर्वपस्वेत्यनेन प्रैषो दत्तः । तस्मात्प्रैषे स्वतन्त्रः कर्ता । प्रैषार्थे तु हेतुकर्तृत्वाद्द्वितीयः पदार्थः प्रोक्षणादिर्बुद्धौ संनिधीयते । प्रचरणीहोमादीनां नास्ति संनिधापकः पदार्थः । ननु ' अभूदुषारुशत्पशुः ' इत्यनेन प्रचरणीहोमः पर्युपस्थाप्यते । उच्यते । भिन्नकर्तृकावेतौ । भिन्नकर्तृकत्वाच्च पूर्वः पदार्थो नोत्तरमभिनियच्छति । न चानयोरङ्गाङ्गिसंबन्धः । येनेयमृक् प्रचरणीहोमस्य करणभूता स्यात् । अतः ' अभूदुषारुशत्पशुः ' इत्यस्य प्रचरणीहोमस्य च कालार्थः संबन्धः । तस्मात्प्रैषः प्रातरनुवाककाले । प्रोक्षणादयः प्रातरनुवाकादुत्तरत्र ।

एतदप्ययुक्तम् । होतुः प्रैषं दत्त्वाऽनन्तरमेव निर्वापप्रैषो दत्तः । तस्य चोपास्तिं कुर्वतो निर्वापसंस्कारोऽपैति । अतो नासौ प्रोक्षणादीनुपस्थापयति । अभूदुषा तु कालार्थेऽपि संबन्धेऽस्मिन्काले प्रचरणीहोम इति शक्योऽवगमयितुम् । यद्यस्मिन्प्रचरणीहोमादयो न क्रियेरन्कालसंबन्धो बाध्येत ।

अतोऽन्यथा वर्ण्यते । पाक्षिक्यध्वर्योरुपास्तिर्यतरस्मिन्पक्षे नास्ति तत्र विचार्यते । किं प्रचरणीहोमादिषु प्रवर्ततामुत प्रोक्षणादिष्विति । तत्र निर्वापे प्रतिप्रस्थाता कर्ता । अतो निर्वापोऽध्वर्योर्न प्रोक्षणमुपस्थापयति, भिन्नकर्तृत्वात् । प्रचरणीहोमस्यापि प्रैषेण व्यवधानान्नास्त्युपस्थापकम् । तस्माद्द्वयोरप्युपस्थापकाभावादानियम इत्येवं प्राप्ते, ब्रूमः । प्रैषे स्वतन्त्रः कर्ता । प्रैषार्थे हेतुकर्ता । तस्मान्निर्वापे हेतुकर्तृत्वात्प्रोक्षणमुपतिष्ठते । इतरत्र नास्ति प्रमाणम् ॥ २६ ॥

शब्दविप्रतिषेधाच्च ॥ २६ ॥

शब्दश्च विप्रतिषिध्यते । अलंकुर्वित्युक्तः प्रोक्षणादीन्प्रतिपद्येत । अस्मत्पक्षे तु, अलंकुर्वित्युक्तेऽलंकरणमेव प्रतिपत्स्यते । तत्रालंकरणे प्राप्तकाले प्राप्तकालवचनो लोडन्तोऽनुग्रहीष्यते । तस्मादत्र प्राप्तिकः क्रम इति ॥ २६ ॥

( यूपमात्रापकर्षाधिकरणम् ॥ १४ ॥ )

[१४] असंयोगात्तु वैकृतं तदेव प्रतिकृष्येत ॥ २७ ॥ सि०

अस्ति दर्शपूर्णमासप्रकृतिके पशावग्नीषोमीये वैकृतं यूपकर्म । तत्प्रतिकृष्यते, दीक्षासु यूपं छिनत्तीति । तत्प्रतिकृष्यमाणमर्वाचीनान्यप्यग्नीषोमप्रणयनादीनि प्रतिकर्षति, उत नेति संशये प्रतिकर्षति । संबन्धादिति । तथा प्राप्ते ब्रूमः । विकृतावभ्यधिकं यत्, तत्प्रतिकृष्यमाणं ततोऽर्वाचीनान्यप्यग्नीषोमप्रणयनादीनि न प्रतिकष्टुमर्हति । कथम् । असंयोगात् । पाशुकं यूपकर्म । ततः प्राचीनं सौमिकम् । न तयोः परस्परेण संबन्धः । न सौमिकः पदार्थः पाशुकस्योपकारकः पशोर्वा । यदि हि तयोरुपकारकः स्यात्ततस्तस्योपकुर्वतः क्रमोऽप्यस्य साहाय्यं कुर्वन् गुणभूतः स्यात् । न त्वेतदस्ति । तस्मान्नैषां परस्परेण क्रमे नियमः । अतो यूपमात्रं प्रतिकृष्यते । अपि च, यूपमात्रं प्रतिकृष्य कृतार्थे शब्दे सौमिकानां स्वक्रमबाधो न भविष्यतीति ॥ २७ ॥

---

अलंकुर्वित्युक्तः प्रोक्षणादीन्प्रतिपद्येत, न प्रोक्षणादीन्कुर्यात् । किं तर्हि । अध्वर्युणा क्रियमाणान्प्रतीक्षेतेत्यर्थः । नास्त्यग्नीधः कर्तृत्वे प्रमाणम् । तत्रालंकरणकाले प्राप्तकालतावचनो लोडन्तोऽनुग्रहीष्यते । अयुक्तमिदम् । एवं हि पूर्वमुक्तं, प्रैषलोट्, न प्राप्तकालतायाम् । अलंकरणस्य प्राप्तः कालस्तव चेति वाक्यं भिद्येत । उच्यते । यद्यसावर्थो वर्तमानकालेऽस्ति ततः प्रैषेण संस्कृतोऽनन्तरमेवाप्रष्टसंस्कारः प्रैषार्थे प्रवर्तते । एवं प्रैषस्य दृष्टार्थता । इतरथा प्रैषस्याऽऽनर्थक्यम् । अतः प्रैषसामर्थ्यात्प्राप्तकालताऽवगम्यते । सा बाध्येताकृतेषु प्रोक्षणादिषु ॥ २६ ॥

अग्नीषोमप्रणयनोत्तरकालं यूपस्य छेदनादयः पठ्यमाना वचनेनापकृष्यमाणाः सौमिकान्नापकर्षन्ति । कुतः । भिन्नप्रयोगवचनपरिगृहीतत्वात् । अभिन्नप्रयोगवचनपरिगृहीतेषु हि क्रम आकाङ्क्ष्यते । क्रमाच्च पूर्वः पदार्थ उत्तरमुपस्थापयति । तस्मात्पूर्वः पदार्थो योऽपकृष्यते सोऽन्यानपकर्षति । पाठस्यात्रानङ्गत्वात् ॥ २७ ॥

( दाक्षिणाग्निकहोमानपकर्षाधिकरणम् ॥ १५ ॥ )

## [ १५ ] प्रासङ्गिकं च नोत्कर्षेदसंयोगात् ॥ २८ ॥ सि०

ज्योतिष्टोमे श्रूयते, आग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीति। अनुयाजा उत्कृष्यमाणा दाक्षिणाग्निकौ होमावुत्कर्षन्ति, नेति संशयः। संबन्धादुत्कर्षन्ति, इति प्राप्ते, उच्यते। नैतावुत्क्रष्टुमर्हन्ति येन तयोस्त्वनुयाजाः संबद्धास्तेन प्रयुक्ताः, परकीयैस्तेषामर्थो निर्वर्तित इति। पदार्थानां च क्रमो भवति न पदार्थप्रयोजनानाम्। यौगपद्येन हि पदार्था उपकुर्वन्तीति वक्ष्यामः। पदार्थानां चोत्पत्तिः क्रमवती। पृथक्शब्दत्वा-

यद्यपि प्रकृतावनुयाजोत्तरकालौ दाक्षिणाग्निकौ होमौ दृष्टौ, तथाऽप्यनुयाजोत्कर्षे नोत्कृष्येते। कुतः। असंयोगात्। कथमसंयोगः। उपमितलक्षितप्राप्रणेनाग्नीषोमीयादयं धर्मान्गृह्णाति। तत्रायं सवनीयत्रिष्वपि सवनेषु विप्रकृष्यते। इतिकर्तव्यता चास्य तद्विप्रकर्षादेव विप्रकृष्यते। पदार्थप्रयोजनानामेककालत्वाद्यावत्क्रतूपकारो निर्वर्त्यते तावदग्न्यन्वाधानादिजनित उपकार आशेते। यावत्पशोरन्त्यः पदार्थस्तावद्ग्राह्यः। अन्त्योऽपि यावद्ग्राह्यः।

एवं चिन्त्यते। पशौ पशुपुरोडाशो मध्ये निपतन्नुपमितलक्षितप्रापणेनाग्नीषोमीयपुरोडाशयागगतं व्यापारमभिलषंस्तमुत्पादयति, प्रापयति च। तांश्च समस्तान्समीपे प्रयोगवचन उपसंगृह्णाति। तत्र पशुना प्रयुक्तस्य यागगतव्यापारस्य समीपे गृहीतत्वात्समीपे न करोति, उपसंगृह्णाति तु पशुना। ये न समीपे कृतास्तेषां पिष्टलेपादीनामुत्पत्तिप्राप्त्युपसंग्रहानपेक्षते। तत्रासौ व्यापारोऽपूर्वमन्तरेण नोपपद्यते। अपूर्वाण्यपि पदार्थैर्विना न सन्तीत्यन्यथानुपपत्त्या पदार्था आक्षिप्यन्ते। यांस्तु प्रसङ्गेनोपकारान्गृह्णाति तेषु तस्य व्यापारो नास्ति। येनैव ते प्रयुक्तास्तस्यैव तत्र व्यापारः। पदार्थानां च क्रम आकाङ्क्ष्यते न पदार्थप्रयोजनानाम्। तस्माद्दाक्षिणाग्निकहोमयोरनुयाजानां च नास्ति सः। अनुयाजजनितस्तेनोपकारो गृह्यते न पदार्थः। अतः परकीयैः पदार्थैरुत्कृष्यमाणैर्न दाक्षिणाग्निकौ होमावुत्कृष्येते।

अत्र ग्रन्थः। **पदार्थानां च क्रमो भवति न पदार्थप्रयोजनानाम्। यौगपद्येन हि पदार्था उपकुर्वन्तीति वक्ष्यामः।** कथमित्याकाङ्क्षायां यौगपद्येनोपकारा गृह्यन्ते। तत्र यस्मिन्क्षण एकः संबध्यते तस्मिन्नेव द्वितीयादयोऽपि। तस्मात्कथंभाववेलायां नास्ति क्रमः। अत्रापरो ग्रन्थः। **पदार्थानां चोत्पत्तिः क्रमवती, पृथक्**

१ एतयोः स्वे, अनुयाजाः संबद्धास्तेन प्रयुक्ताः पा०। २ उपमितलक्षितप्रापणेनेति–उपमितेन वाक्यान्तरेण लक्षिता येतिकर्तव्यता तत्प्रापणेनेत्यर्थः। ३ त्रिष्वपीति–'वपाया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने, अङ्गैस्तृतीयसवने' इति वाक्येनेत्यर्थः।

दुत्पत्तेः । न पदार्थप्रयोजनस्य, युगपत्प्रयोगवचनेनाभिहितत्वात् । अतोऽनुयाजोत्पत्तेरुत्कर्षिकाया अभावाद्दाक्षिणाग्निकौ होमौ नोत्कृष्येयातामिति । अपि चानुयाजमात्रमुत्कृष्य कृतार्थे शब्दे दाक्षिणाग्निकयोर्होमयोः स्वक्रमबाधो न भविष्यतीति ॥ २८ ॥

( हविरभिवासनान्तस्यामावास्यायां पूर्वेद्युरनपकर्षाधिकरणम् ॥ १६ ॥ )

## [ १६ ] तथाऽपूर्वम् ॥ २९ ॥ सि०

दर्शपूर्णमासयोर्वेदिर्हविरभिवासनोत्तरकाले समाम्नाता । साऽमावास्यायां प्रतिकृष्यते, पूर्वेद्युरमावास्यायां वेदिं करोतीति । सा त्वपकृष्यमाणा ततोऽर्वाचीनान्पदार्थानपकर्षति नेति संशयः । उच्यते । संबन्धात्प्रतिकर्षतीत्येवं प्राप्ते, ब्रूमः । तथाऽपूर्वम् । अप्रकृतिपूर्विकायाममावास्यायां वेदिकरणं पूर्वेद्युराम्नातम् । उभयोरपि श्वोभूते हविरभिवासनम् । अभिवासनं कृत्वाऽमावास्यायां वेदिः कर्तव्येति न श्रुत्यादीनामन्यतमं कारणमस्ति । तस्मान्नाभिवासनान्ताः प्रतिकृष्टव्या इति । अभिवासने चापकृष्यमाणे हवींषि भस्मी भवेयुः ॥ २९ ॥

( सांतपनीयोत्कर्षेऽप्यग्निहोत्रानुत्कर्षाधिकरणम् ॥ १७ ॥ )

## [ १७ ] सांतपनीया तूत्कर्षेदग्निहोत्रं सवनवद्वैगुण्यात् ॥३०॥ पू०

चातुर्मास्येषु साकमेधावयवः सांतपनीया नामेष्टिः—मरुद्भ्यः सांत-

---

शब्दत्वादुत्पत्तेः । न पदार्थप्रयोजनस्य । पदार्थग्रहणे हि क्रमो भवति । शब्देन हि पदार्थोऽवबोध्यते । एवं द्वितीयस्तृतीयोऽपि । अत्रावश्यं भवितव्यं क्रमेण । अनुष्ठानावबोधेन यः पुनरुपकारस्तदीयः स एकः । तस्मिन्गृह्यमाणे कीदृशः क्रमः । अतो न प्रयोगवचनापरिगृहीतानां प्रयोगमध्यपतितानामप्यस्ति क्रमः । तस्मात्स्वस्थानावेव दाक्षिणाग्निकौ होमौ ॥ २८ ॥

'पूर्वेद्युरमावास्यायां वेदिं करोति' इति वेदिरपकृष्यमाणा हविरभिवासनं नापकर्षति । कुतः । हविरभिवासनादुत्तरकाले दर्शपूर्णमासप्रकरणादुभयोरपि सामान्येन प्राप्यमाणं विशेषवचनेन वेदिमात्रमेवापकृष्यते । सामान्यपाठः पौर्णमास्यां कृतार्थः । अन्यन्वाधानब्रह्मवरणादेः सामान्यपाठ एव, वेदेश्चोत्तरः । तस्मात्सामान्यावबोधो विशेषेणबाध्यते ॥ २९ ॥

भिन्नप्रयोगवचनपरिगृहीतानामपि पौर्वापर्यं चिन्त्यते । यथा प्रोक्षणादिभिः प्रचरणी-

पनेभ्यो माध्यंदिने चरुं निर्वपतीति । सा देवान्मानुषाद्वा प्रतिबन्धादुत्कृष्यमाणाऽग्निहोत्रमुत्कर्षेन्न वेति संशये । उच्यते । सांतपनीया तूत्कर्षेदग्निहोत्रं सवनवद्वैगुण्यात् । यदि नोत्कर्षेदग्निहोत्रमनग्निहोत्रकाल उद्धृतेऽग्नावग्निहोत्रं विगुणं स्यात् । तस्मादुत्क्रष्टव्यं, सवनवत् । यथा प्रातःसवनं देवान्मानुषाद्वा प्रतिबन्धादुत्कृष्यमाणं माध्यंदिनं सवनमुत्कर्षतीति । एवमत्रापि द्रष्टव्यम् ॥ ३० ॥

अव्यवायाच्च ॥ ३१ ॥

एवं सांतपनीयमग्निहोत्रेण न व्यवहितं भविष्यतीति । तत्र क्रमोऽनुग्रहीष्यते । क्रमभेदे च दोषः श्रूयते । अप वा एतद्यज्ञस्य छिद्यते, यदन्यस्य तन्त्रे विततेऽन्यस्य तन्त्रं प्रतायत इति ॥ ३१ ॥

असंबन्धात्तु नोत्कर्षेत् ॥ ३२ ॥ सि०

नाग्निहोत्रस्य सांतपनीयाऽङ्गं, न सांतपनीयाया वाऽग्निहोत्रम् । तेनै नासावग्निहोत्रस्य पुरस्तात्कर्तव्या । अतो नाग्निहोत्रमुत्क्रष्टव्यम् ॥ ३२ ॥

प्रापणाच्च निमित्तस्य ॥ ३३ ॥

प्राप्तं चाग्निहोत्रस्य निमित्तम् । सायं जुहोति, प्रातर्जुहोति, उदिते जुहोति, अनुदिते जुहोति, प्रथमास्तमिते जुहोति, संध्यौ जुहोति, नक्षत्राणि दृष्ट्वा जुहोतीति । तन्नातिक्रमितव्यम् । तस्मादपि नोत्कर्षः । यदुक्तं वैगुण्यमिति । उत्कर्षेऽपि वैगुण्यं, कालान्यत्वात् । अङ्गमात्रेर्जघन्यः कालविधिर्बाध्यतामिति चेन्न । कालस्य निमित्तत्वात् । तदपायेऽश्रुतमेव सर्वं क्रियेत तन्निमित्तत्वं चानुपादेयत्वेन श्रवणात् । सप्तमी ह्याधारादिष्वसंभवान्निमित्तसप्तमी द्रष्टव्या ॥ ३३ ॥

अथ यदुक्तं सवनवदुत्क्रष्टव्यमिति । तदुच्यते—

संबन्धात्सवनोत्कर्षः ॥ ३४ ॥

संबद्धं हि सवनं सवनेन । एकक्रतुसंबन्धात्तदुत्कृष्यते ॥ ३४ ॥

---

होमादय उत्कृष्यन्ते । पूर्वो हि पदार्थ उत्तरमभिनियच्छति, एवमिहापि ॥३०॥[३१॥]

एकप्रयोगवचनपरिगृहीतानामुत्कर्षः ॥ ३२ ॥

काले हि निमित्ते कर्म विधीयमानं तस्मिन्नेव काले कर्तव्यम् । अङ्गमात्रेर्जघन्यः कालविधिर्बाध्यतामिति चेत् । सेतिकर्तव्यताकेऽत्र प्रयोगेऽवधृते पश्चात्कालसंयोगः । तस्माज्जघन्यत्वादसौ बाध्यताम् । इतरस्त्वाह—नाङ्गमात्रं कालः । किं तर्हि । निमित्तम् ॥ ३३ ॥ [ ३४ ॥ ]

---

१ तेनासावग्निहोत्रस्य परस्तादिति पा० । २ निमित्ते चेति पा० ।

( उक्थ्योत्कर्षे षोडश्युत्कर्षाधिकरणम् ॥ १८ ॥ )

[ १८ ] षोडशी चोक्थ्यसंयोगात् ॥ ३५ सि०

ज्योतिष्टोमे श्रूयते, षोडशिनं प्रकृत्य, तं पराञ्चमुक्थ्येभ्यो गृह्णातीति । यदा दैवान्मानुषाद्वा प्रतिबन्धादुक्थ्यान्युत्कृष्यन्ते, किं तदा षोडश्युत्कृष्टव्यो नेति भवति संशयः । किं प्राप्तम् । नोत्क्रष्टव्यः । कुतः । एवं स्तोत्रं स्वस्मिन्काले षोडशिनः कृतं भविष्यतीति । समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोतीति । तस्मादनुत्कर्ष इति ।

एवं प्राप्ते, ब्रूमः । षोडशी चोत्क्रष्टव्यः । कस्मात् । उक्थ्यसंयोगात् । उक्थ्यसंयोगो हि षोडशिनो भवति, तं पराञ्चमुक्थ्येभ्यो गृह्णातीति । तस्मादुत्क्रष्टव्यः षोडशी । यदुक्तं, षोडशिनः स्तोत्रकालेनावर्जनं भविष्यतीति । उच्यते । स्तोत्रक्रममनुरुध्यमानस्य प्रधानक्रमो विरुध्येत । तस्मान्न स्तोत्रक्रमोऽनुरोद्धव्यः । उभयं न शक्यमनुग्रहीतुम् । ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोतीति श्रूयते । तस्मादुत्क्रष्टव्यः षोडशीति ॥ ३५ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये पञ्चमस्याध्यायस्य प्रथमः पादः ॥

---

ननु 'समयाध्युषिते स्तोत्रम्' इत्यनेन विशेषवचनेन षोडशिनो य उक्थ्यपरभावः स बाध्यते । उच्यते । उक्थ्यपरभावः समयाध्युषितत्वं चोभयमप्यनुग्रहीतुं शक्यते । तस्मादविरोधात्सामान्यविशेषबाधो नास्ति । न च दैवान्मानुषाद्वा प्रतिबलादित्यस्मिन्सामान्यविशेषबाधः । शास्त्रं हि न दैवं मानुषं वा प्रतिबलमपेक्ष्य सामान्यविशेषबाधं करोति । ग्रहो यागस्य साक्षादुपकुर्वन्नन्तरङ्गः, संनिपत्योपकारित्वात् । स्तोत्रं पुनर्यागस्य न साक्षादुपकरोति । अतोऽनयोः कालयोरन्तरङ्गस्य कालोऽनुग्राह्यः । तस्मादाह—स्तोत्रक्रममनुरुध्यमानस्य प्रधानक्रमो विरुध्यते । अथवा—उक्थैरुत्कृष्यमाणैर्याग एवानेन प्रकारेणोत्कृष्यते । षोडशियागस्याप्युक्थपरत्वात् । ग्रहणे गृह्यमाणे न यागः प्रक्रान्तो भवति । यथाऽवदानेन । उक्थ्ययागाभ्यासोत्तरकालं षोडशियागाभ्यासस्य कालः । अतस्तस्य कालेनाङ्गस्य कालो बाध्यते ॥ ३९ ॥

इति श्रीमद्भट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां पञ्चमाध्यायस्य प्रथमः पादः ॥

---

१ बाधो नान्यत्रेति पा० ।

अथ पञ्चमेऽध्याये द्वितीयः पादः ।

( अनेकप्रधानेषु संनिपातिनां पदार्थानुसमयाधिकरणम् ॥ १ ॥ )

[ १ ] संनिपाते प्रधानानामेकैकस्य गुणानां सर्व-कर्म स्यात् ॥ १ ॥ पू०

वाजपेये, सप्तदश प्राजापत्यान्पशूनालभत इति श्रूयते । अग्नीषोमीये च पशौ पशुधर्माः समाम्नाताश्चोदकेन प्राप्ताः । तेषु संशयः । किमेकस्याऽऽदित आरभ्य धर्मान्सर्वान्कृत्वा द्वितीयस्य पुनरादित उपक्रमितव्याः, अथ प्रथमस्तावत्सर्वेषां कर्तव्यस्ततो द्वितीय इति । किं प्राप्तम् । एकैकस्य सर्वेऽपवर्जयितव्या इति । कुतः । प्रधानासत्तेरनुग्रहाय । इतरथा प्रधानासत्तिर्विप्रकृष्येत । यथा बहुष्वश्वेषु प्रतिगृहीतेषु ये पुरोडाशास्तेषु नैकजातीयानुसमयः, एवमिहापीति ॥ १ ॥

सर्वेषां वैकजातीयं कृतानुपूर्व्यत्वात् ॥ २ ॥ सि०

एकजातीयानुसमयः कर्तव्यः । किमेवं भविष्यति । सहत्वमनुग्रहीष्यते । तत्सहत्वं श्रूयते, वैश्वदेवीं कृत्वा पशुभिश्चरन्तीति । एकस्मिन् काले पशूनां प्रचारः । नन्वेवं सति पूर्वस्य पदार्थस्योत्तरः पदार्थः पश्वन्तरव्यापारेण व्यवधीयते । नैष दोषः । एवमपि कृतमेवाऽऽनुपूर्व्यम् । योऽसौ पश्वन्तरे व्यापारः स एवासौ, न पदार्थान्तरम् । पदार्थान्तरेण व्यवधानं भवति ॥ २ ॥

कारणादभ्यावृत्तिः ॥ ३ ॥

---

आरादुपकारकेषु भेदेन क्रियमाणेषु सौर्यादीनामिव तन्त्रभेदः स्यात् । तस्मात्संनिपत्योपकारका उदाहरणम् । प्रधानकालत्वादङ्गानामेकैकस्मिन्गुणकाण्डमपवृज्यात् । इतरथा हि पदार्थानुसमये प्रधानाद्विप्रकृष्येरन् । प्रकृतौ च पूर्वस्मात्पदार्थादुत्तरः । एवमत्रापि ॥ १ ॥

यद्येकैकस्मिन्गुणकाण्डमपवृज्येत तथा सति सहप्रयोगात्सहेतिकर्तव्यताऽनुभवितव्येत्येतद्बाध्येत । तस्मात्पदार्थानुसमयः । प्रकृतौ पूर्वं पदार्थं कृत्वोत्तरः कार्य इत्येतावदभिसंहितं न त्वनन्तरमेवेति । अर्थादेकत्वात्पशोरानन्तर्यं संजातम् । इह सहभावात्पदार्थाभ्यासोऽवश्यंभावी । द्वितीयः पदार्थ इहापि पाठेन पर्युपस्थापितः क्रियते । तस्मात्पदार्थानुसमयः । स्थित एतस्मिन्प्रवृत्तिक्रमस्याऽऽरम्भः ॥ २ ॥

---

१ कृतानुपूर्वत्वादिति मुद्रितेषु सर्वत्र पाठः ।

अथ यदुक्तं, बहुषु पुरोडाशेषु नैकजातीयानुसमय इति । तत्परिहर्तव्यम् । अत्रोच्यते । युक्तं तत्र, यत्कारणादभ्यावृत्तिः । एकजातीयानुसमये हि क्रियमाणे सहस्रस्याधिश्रयणे कृते प्रथमः क्षुभ्येत् । तस्य च प्रथमं न शक्येत कर्तुम् ॥ ३ ॥

( प्रधानविरोधे संनिपातिनां काण्डानुसमयाधिकरणम् ॥ २ ॥)

अथवाऽधिकरणान्तरम् ।

[ २ ] कारणादभ्यावृत्तिः ॥ ३ ॥ सि०

अनेकसहस्राश्वप्रतिग्रहे तन्त्रानुष्ठानमिति पूर्वः पक्षः । काण्डानुसमयोऽभ्युपेतव्य इति सिद्धान्तः ॥ ३ ॥

( मुष्टिकपालादिषु चतुर्मुष्टिनिर्वापादिनाऽनुसमयाधिकरणम् ॥ ३ ॥ )

[ ३ ] मुष्टिकपालावदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकेन ॥ ४ ॥ पू०

मुष्ट्यादिषु संशयः । किं मुष्टिनाऽनुसमय उत चतुर्भिर्मुष्टिभिरिति । किं प्राप्तम् । मुष्टिनेति । कुतः । एकमुष्टिनिर्वापो ह्येकः पदार्थो न चतुर्मुष्टिनिर्वापः । कथम् । एकस्मिन्मुष्टौ निरुप्ते निर्वपतिभावः[१] पर्यवस्यति[२] । न शक्यं वदितुं न किंचिन्निरुप्तमिति । न च निरुप्ते निर्वापो

---

कारणादभ्यावृत्तिरिति—न दृष्टान्तो युक्तो नापि परिहारः । अश्वप्रतिग्रहे चतुष्कपाला विधीयन्ते । यावत इत्यनेनाश्वेयत्तोच्यते । तावत इति पुरोडाशेयत्ता । एकत्र निमित्तेयत्तेतरत्र नैमित्तिकेयत्ता । वारुणानिति देवतासंबन्धो विधीयते । कतरेणात्र साहित्यं विधीयते । तस्माद्भिन्ना एवैषां[३] प्रयोगाः । क्रतूपकारस्त्वेकः । यथा प्रयाजानुयाजानां न तन्त्रेणेतिकर्तव्यता, एवमिहापि । वारुणानित्यनेन साहित्यमिति चेत् । तन्न । देवता ह्यनेनोच्यते । बहुत्वं श्रूयमाणं यागभेदं कुर्यात् । यथा, प्राजापत्यानिति तत्रैकस्मिन्नश्वप्रतिग्रहे बहवो वारुणाः प्राप्नुवन्ति । पुनरपि नैवास्ति साहित्यम् । तस्माद्वचनान्तरमेषां साहित्यप्रतिपादकं द्रष्टव्यमिति ॥ ३ ॥

' चतुरवत्तं जुहोति ' इत्यस्य विधीयमानत्वादवदानादिः प्रदानान्त एकः पदार्थः । तस्मात् ' द्विर्हविषोऽवद्यति ' इति संख्याविशिष्टमवदानं विधीयत इत्येतदसत् । ' चतुरवत्तं जुहोति ' इत्यनेनार्थप्राप्तावदाने संख्यामात्रं विधीयते । तस्मादुभयो-

---

१ निर्वपतिभाव इति–निर्वापयत्न इत्यर्थः । यतीभाव इति पा० । २ पर्यवसितो भवतीति पा० । ३ भिन्न एवैषां क्रम इति पा० ।

न कृतः स्यात् । न च मुष्टिमात्रेण निरूप्तेन न प्रयोजनम् । न ह्येकस्मिन्ननिरुप्ते चत्वारः संभवन्ति । मुष्टिसमानाधिकरणो हि चतुःशब्दः । तस्मान्मुष्टिनाऽनुसमयः कार्यः । एवं, कपालान्युपदधातीति । तथा, मध्यादवद्यति, पूर्वार्धादवद्यति । तथा, अङ्क्ते, अभ्यङ्क्ते, वपति, पावयतीति ॥ ४ ॥

सर्वाणि त्वेककार्यत्वादेषां तद्गुणत्वात् ॥ ५ ॥ सि०

सर्वाणि तु परिसमाप्यानुसमेयान्येकमुष्टिनिर्वापः पदार्थः । चतुःसंख्यत्वान्निर्वापस्य । कथं चतुःसंख्यता । चतुःशब्दस्य निर्वपतिना संबन्धात् । एवं सह कर्मणाऽनेकगुणविधानं न्याय्यम् । इतरथा, मुष्टिसंबन्धे सति वाक्यभेदः प्रसज्येत । अनिर्वापाङ्गं च स्यात् । तथोपधानादिष्वपि, अष्टाकपालम्, एकादशकपालं निर्वपतीति निर्देशात् । द्विरवद्यति, त्रिरभ्यङ्क्ते, एकविंशत्या पावयतीति संख्यादीनां क्रियागुणत्वं भवति । तस्मात्समुदायेनानुसमय इति ॥ ५ ॥

( दर्शपूर्णमासयोरवदानादिप्रदानान्तेनानुसमयाधिकरणम् ॥ ४ ॥ )

[४] संयुक्ते तु प्रक्रमात्तदङ्गं स्यादितरस्य तदर्थत्वात् ॥ ६ ॥ सि०

दर्शपूर्णमासयोः श्रूयते, द्विर्हविषोऽवद्यति, इति । तत्र संशयः । किमवदानेनानुसमय उतावदानेन प्रदानान्तेनेति । किं प्राप्तम् । अवदानेनेति ब्रूमः । कुतः । पृथक्पदार्थत्वात् । पृथक्पदार्थो ह्यवदानम् ।

---

पक्षयोः पदार्थावयवोऽयम् । एकमुष्टिग्रहणे कृते यतीभावः पर्यवस्यति । द्वितीयादयोऽपि पुनः प्रयत्नेनैवाऽऽरभ्यन्ते । तस्मात्प्रयत्नभेदाद्भिद्यते निर्वापः । पृथक्करणं सामर्थ्यादेव प्राप्तं न विधीयते । न ह्यपृथक्कृते यागः संप्रवर्तते । अतो निर्वापे यः प्रत्ययः स संख्यामुष्टिसंबन्धं विधत्ते । मुष्टिसंख्ययोः संबन्धादन्तरङ्गः संबन्धः ॥ ४ ॥

चतुःसंख्याविशिष्टो निर्वापो विधीयते । न च नियोगतो निर्वापः प्राप्नोति, येन न विधीयते । कारकाणां क्रियासंबन्धः श्रौतः । यदि च संख्या क्रियां प्रति न विधीयेत ततोऽक्रियार्थत्वादनङ्गं स्यात् । निर्वापे चाविधीयमाने वाक्यभेदादिदोषो भवति । तस्मादुभयविशेषणविशिष्टो निर्वापो विधीयते । एवं सर्वेषु योज्यम् । पूर्वस्मिन्पदार्थानुसमये स्थिते प्रसङ्गेन पदार्थस्वरूपनिरूपणमायातम् ॥ ५ ॥

‘ चतुरवत्तं जुहोति ’ इत्येतद्विधीयते । कतरत्तदित्यभिधारणद्वयं द्विरवदानं च ।

---

१ सर्वाणि तु समाप्य० पा० ।

यतीभावस्य पर्यवसानात्, अवद्यतिवचनात् । एवं प्राप्ते ब्रूमः । संयुक्ते तु प्रक्रमात्तदङ्गं स्यादितरस्य तदर्थत्वात् । नावदानं पृथक् पदार्थः । प्रदानस्य स उपक्रमः । इतरथाऽवद्यतेरदृष्टार्थता स्यात् । संख्याविशेषविधानार्थं च पुनर्वचनम् । तस्मात्पदार्थावयवोऽवदानम् । न चावयवसहत्वं प्रयोगवचनेनोच्यते । तस्मात्प्रदानान्तेनानुसमय इति ॥ ६ ॥

( यूपगणेऽञ्जनादिपरिव्याणान्तेनानुसमयाधिकरणम् ॥ ९ ॥ )

[५] वचनात्तु परिव्याणान्तमञ्जनादि स्यात् ॥ ७ ॥ सि०

ज्योतिष्टोमेऽग्नीषोमीयपशौ यूपस्याञ्जनाद्याः पदार्थाः श्रूयन्ते । तेषु यूपैकादशिन्यां प्राप्तेषु संशयः । किमञ्जनादीनामेकैकेनानुसमय उताञ्जनादिना परिव्याणान्तेनेति । किं प्राप्तम् । परिव्याणान्तमञ्जनादि स्यात् । कुतः । वचनात् । वचनमिदं भवति । अञ्जनादि यजमानो यूपं नावसृजेदापरिव्याणादिति । न च शक्यं बहुष्वञ्जनादिनाऽनुसमयः कर्तुं, न चानवसृष्टुम् । तस्मात्परिव्याणान्तेनानुसमयः ॥७॥

कारणाद्वाऽनवसर्गः स्याद्यथा पात्रवृद्धिः ॥ ८ ॥

सहत्वस्य प्रापकः प्रयोगवचनोऽनुग्रहीष्यत इति पदार्थेनानुसमयः । अनवसर्गश्च प्रकृतावर्थात्कृतः । साहाय्यं यजमानेनाध्वर्योः । एवं दृष्टार्थताऽनवसर्गस्य । इतरथाऽदृष्टार्थता स्यात् । न चार्थात्कृतं चोदकः प्रापयति । तस्माद्यूपान्तरेणोच्छ्रयितव्येन कारणेनावसृजेत् । यथा, पृषदाज्येनानुयाजान्यजतीत्यर्थात्तस्य धारणार्थं पात्रं भिद्यते ॥ ८ ॥

न वा शब्दकृतत्वान्न्यायमात्रमितरदर्थात्पात्रविवृद्धिः ॥ ९ ॥

न चैतत्पदार्थेनानुसमय इति । परिव्याणान्तेन पदार्थकाण्डेनानुसमयः स्यात् । शब्दकृतं हि प्रकृतावनवसर्जनम् । शक्नोति हि ऋतेऽपि यजमानादध्वर्युर्यूपमुच्छ्रायितुम् । सौकर्यमितिचेत् । विधिशब्दो बाध्येत । दृष्टार्थता, एवं हि नियम्येत, भोजने प्राङ्मुखतेव । अतोऽसंभवात्पदार्थकाण्डेनानुसमयः । प्रयोगवचनस्य च न्यायमात्रत्वम् । चोदकस्ततो बलीयान् । पात्रविवृद्धिस्त्वर्थात्कर्तव्या ॥ ९ ॥

अयमेवंविधः पदार्थो होमान्तः । न तावदवदानं विधीयते, येन पदार्थभेदः स्यात् । विधीयमानेऽप्यदृष्टार्थता स्यात् । एवमभिघारणेऽपि पदार्थभेदाविवक्षया विधीयमानेऽदृष्टार्थतैव । चतुरवत्तसंपादनाय विधीयमाने तु दृष्टार्थता ॥ ६ ॥ [ ७ ॥ ८ ॥ ९ ॥

( एकदेवताकपशुगणे दैवतावदानादिनाऽनुसमयाधिकरणम् ॥ ६ ॥ )

[ ६ ] पशुगणे तस्य तस्यापवर्जयेत्पश्वेकत्वात् ॥ १० ॥ पू०

वाजपेये प्राजापत्याः पशवः । तेषु संदेहः । किमेकैकस्य पशोर्दैवतान्यवदाय ततः सौविष्टकृतानि, तत ऐडानि । अथ दैवतैर्दैवतानामनुसमयः, सौविष्टकृतैः सौविष्टकृतानाम्, ऐडैरैडानामिति । किं तावत्प्राप्तम् । एकैकस्य कृत्स्नान्यवदाय ततो होतव्यम् । प्रकृतौ वचनादेतत्कृतं, प्राजापत्येष्वपि चोदकेनैव प्राप्नोति ॥ १० ॥

दैवतैर्वैककर्म्यात् ॥ ११ ॥ सि०

नैतदेवम् । दैवतैर्दैवतानां, सौविष्टकृतैः सौविष्टकृतानाम्, ऐडैरैडानामिति । कस्मात् । ऐककर्म्यात् । एवं सहकृतं भवति । यच्च वचनात्प्रकृतौ कृत्स्नावदानमिति । दैवतान्यवदाय न तावत्येव होतव्यम् । सौविष्टकृतान्यवदेयानि । सौविष्टकृतान्यवदाय न तावत्येव होतव्यम् । ऐडान्यवदेयानीति प्रकृतौ श्रूयते । तदिह दैवतैर्दैवतानामनुसमयं कुर्वन्नैव प्राकृतं धर्मं बाधेत । दैवतान्यवदाय नैव जुहोति, सौविष्टकृतान्यवद्यतीति । अथ सौविष्टकृतान्यवदाय नैव जुहोति । ऐडान्यवद्यतीति । तस्मात्पदार्थमात्रेणानुसमय इति ॥ ११ ॥

मन्त्रस्य चार्थवत्त्वात् ॥ १२ ॥

---

यद्यपि सांनाय्ये पदार्थावयवोऽवदानं तथाऽपि पशावपदानं विधीयते । कथं प्रतिप्रस्थाताऽवद्यतिर्दक्षिणो देशः प्लक्षशाखाऽऽस्तारः । अतः सर्वविशेषणविशिष्टमवदानं विधीयते । विधीयते चेत्पदार्थः । अथवा—अवदाने गृहीतेऽनन्तरमेव होमे प्राप्ते ' न तावत्येव होतव्यमथ सौविष्टकृतान्यवद्यति ' इति वचनेन पदार्थान्तरं विधीयते । अतः प्रकृतौ पदार्थावयवावेतौ । इह वचनात्तावेव पदार्थौ संजातौ । प्रकृतौ दैवतान्यवदायानन्तरं सौविष्टकृतान्यवत्तानि । इहापि तथैव स्यात् । पश्वेकत्वात् ॥ १० ॥

प्रयोगवचनस्य साहित्यानुग्रहादेकैकस्य दैवतैरनुसमयः । प्रकृतौ ' दैवतान्यवदाय न तावत्येव होतव्यम् ' इत्येतावद्विवक्षितम् । इहापि द्वितीयस्य पशोरवदानं गृह्णन् तत्समर्थयमानैव । अर्थाच्चाऽऽनन्तर्यं प्रकृतौ वृत्तम् ॥ ११ ॥ [ १२ ॥ ]

---

कथमिति—अवदानविध्यभावे कथं विना वाक्यभेदं वाक्ये श्रूयमाणानि बहूनि विशेषणानि विधीयेरन्नित्याशयः ।

एवं मनोतामन्त्रस्तन्त्रं भविष्यति । इतरथा पर्यायेणैव स्यात् । तस्माद्देवतादैवतानां, सौविष्टकृतैः सौविष्टकृतानाम्, ऐडैरैडानामिति ॥ १२ ॥

( नानाबीजेषु कृष्णाजिनास्तरणादि—तण्डुलप्रक्षालननिनयनान्तेनानुसमयाधिकरणम् ॥ ७ ॥ )

[ ७ ] नानाबीजेष्वेकमुलूखलं विभवात् ॥ १३ ॥ सि०

अस्ति राजसूये नानाबीजेष्टिः । अग्नये गृहपतयेऽसितानामष्टाकपालं निर्वपेत्, सोमाय वनस्पतये श्यामाकं चरुमित्येवमादि । अस्ति तु तत्र प्राकृतोऽवहन्तिः । तत्र संदेहः । किं तत्रैकमुलूखलं पर्यायेण, उत यौगपद्येन बहूनीति । कुतः संशयः । यदि कृष्णाजिनाधस्तरणादयः पृथक्पदार्थास्ततो भेदः । अथ कृष्णाजिनास्तरणादिस्तण्डुलनिर्वृत्त्यन्त एकः पदार्थस्ततस्तन्त्रमिति । किं तावत्प्राप्तम् । एकमिति । कुतः । पर्यायेण विभवात् । एकस्योपादानेन सिद्धेर्द्वितीयस्योपादानमनर्थकं स्यात् । तस्मात्तन्त्रमिति ॥ १३ ॥

विवृद्धिर्वा नियमानुपूर्व्यस्य तदर्थत्वात् ॥ १४ ॥

विवृद्धिरुलूखलानां स्यात् । नियतं ह्यानुपूर्व्यं पाठकृतं सहत्वे सत्युपपद्यते । पदार्थानां चानुसमयः । पृथक्पदार्थाश्चाधस्तरणादयो, यतीभावस्य पर्यवसानात् । अधस्तरणादेश्च पदैरभिधानात् । तस्माद्विवृद्धिरिति ॥ १४ ॥

एकं वा तण्डुलभावाद्धन्तेस्तदर्थत्वात् ॥ १५ ॥

एकं वोलूखलं पर्यायेण स्यात् । एको ह्यधस्तरणादिस्तण्डुलपर्यन्तः पदार्थः । स्तरणादिर्हन्तेरुपकारः फलीकरणान्तश्च तस्यैव शेषः । यतो हन्तिस्तण्डुलनिर्वृत्त्यर्थः । एवं स्तरणादीनां हन्तेश्च नादृष्टार्थता भविष्यति । तस्मात्तन्त्रमिति ॥ १५ ॥

---

शूर्पमुसलकृष्णाजिनानि तन्त्रेणैवोपकुर्वन्ति । उलूखलं चिन्त्यते । तत्र येयं तन्त्रावापचिन्ता, इदमस्य फलम् । किं कृष्णाजिनास्तरणादिस्तण्डुलनिर्वृत्त्यन्त एकः पदार्थ इत्ययमस्य प्रसङ्गः । क्रमान्यत्वमपि विद्यत एव ॥ १३ ॥ [ १४ ॥ १५ ॥ ]

---

१ अग्नये गृहपतयेऽष्टकपालं कृष्णानां व्रीहीणामिति भाट्टदीपिकादिधृतः पाठः ।

( अग्नीषोमीये पशौ प्रयाजानुयाजानां पात्रभेदाधिकरणम् ॥ ८ ॥ )

[८] विकारे त्वनुयाजानां पात्रभेदोऽर्थभेदात्स्यात् ॥१६॥सि०

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः । तत्र श्रूयते, पृषदाज्येनानुयाजान् यजतीति । तत्र संदेहः । किं प्रयाजानुयाजानामेकं पात्रमाज्यस्य पृषाज्यस्य च धारणार्थमुत भिद्यते । किं प्राप्तम् । एकमिति । कुतः । प्रकृतावेकं, प्रकृतिवदिहाप्येकेन भवितव्यम् । एवं प्राप्ते, ब्रूमः । पात्रभेदः स्यात् । कुतः । अर्थभेदात् । शुद्धस्य प्रयाजा अर्थः । पृषतोऽप्यनुयाजाः । पृषति गृह्यमाणे प्रयाजानां वैगुण्यं, शुद्धेऽनुयाजानाम् । न चैकस्मिन्पात्रे विविक्तं शक्यं कर्तुम् । मर्यादायामपि क्रियमाणायां प्रदीयमानं संसृज्येत । अपि चाऽऽकारभेदादुपभृत उपभृत्त्वं विहन्येत । पाणिमात्रपुष्करा हि सा, एकपुष्करा च । अथोच्येत, पृषदाज्यमप्याज्यमेवेति न मिश्रत्वं दोषायेति । नैतदेवम् । प्रकृतावुत्पवनावेक्षणयोः प्रयोजनमेतत्, यदाज्यस्यापरेण द्रव्येणासंसर्गः । एवं चेदनुपपन्नं, यत्प्रयाजाः पृषदाज्येनेज्येरन्निति । अपि च । एवं सत्यवश्यं हविषः काचिन्मात्राऽपनीयते । न च शक्यं प्रयाजकार्येऽवसितेऽनुयाजार्थं ग्रहीतुम् । प्रकृतावेककालं ग्रहणम् । इहाप्येककालमेव कर्तव्यम् । तस्मात्पात्रभेद इति ॥ १६ ॥

( नारिष्टहोमानामुपहोमपूर्वताधिकरणम् ॥ ९ ॥ )

[ ९ ] प्रकृते पूर्वोक्तत्वादपूर्वमन्ते स्यान्न ह्यचोदितस्य शेषाम्नानम् ॥ १७ ॥ सि०

---

प्रकृतावुपभृत एकत्वं विवक्षितमिति तत्रैव पृषदाज्यग्रहणं प्राप्नोति कालान्तरे । तद्य यथा सत्यपि प्रधानकालत्वेऽङ्गानां कर्तुरेकत्वाद्विप्रकर्षो, न तु विप्रकर्षदोषात्कर्त्रन्तरमुपादीयते, एवमाज्यपृषदाज्ययोर्भेदेऽपि नैव पात्रान्तरमुपादेयम् ।

एवं प्राप्ते, ब्रूमः । यथैव हि प्रकृतावेकपात्रता विवक्षिता, एवमेककालता । इह त्वेककालत्वं विवक्षितम् । किं कारणं, प्रयाजाज्यं गृह्यमाणं मन्त्रब्राह्मणपाठक्रमादनुयाजाज्यग्रहणमुपस्थापयति । अथवा ' अष्टावुपभृति गृह्णाति ' इत्यसंयुक्तोत्पन्नस्य वाक्यान्तरेण प्रयाजानुयाजार्थता कृता, न तूपभृद्विधीयते । अर्थलब्धा तु सा । न चार्थप्राप्तं विवक्षितमित्युच्यते । तस्माद्भिन्नत्वाद्द्रव्ययोरर्थात्पात्रभेदः । पूर्वपक्षोत्तरपक्षयोः क्रमान्यत्वेनोपनिपातः ॥ १६ ॥

नक्षत्रेष्टिः श्रूयते—अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेदिति । सोऽत्र जुहोति, अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहा, इत्येवमादिहोमाः समाम्नाताः । सन्ति तु प्रकृतौ नारिष्ठहोमाः । तत्र संदेहः । किं नारिष्ठहोमाः पूर्वमुतोपहोमा इति संशये । उच्यते । प्राकृतं पूर्वं, वैकृतमन्ते स्यादिति । कुतः । चोदितस्य परिपूर्णस्य शेष आम्नायते । यथा जातस्य पुत्रस्य क्रीडनकम् ॥ १७ ॥

मुख्यानन्तर्यमात्रेयस्तेन तुल्यश्रुतित्वादशब्दत्वात्प्राकृतानां व्यवायः स्यात् ॥ १८ ॥

आत्रेयो मन्यते स्म, मुख्यानन्तर्यं वैकृतस्य, पश्चात्तु प्राकृतं प्रयुज्येत । प्रधानानन्तरं वैकृतस्य पाठः प्रत्यक्षः । तस्मात्पूर्वमुपहोमास्ततो नारिष्ठहोमा इति । प्राकृतानां व्यवायः स्यात् । यतस्ते न श्रूयन्ते ॥ १८ ॥

अन्ते तु बादरायणस्तेषां प्रधानशब्दत्वात् ॥ १९ ॥

बादरायणस्त्वाचार्यो मन्यते स्म । अन्ते वैकृतानां प्रयोग इति । कुतः । प्रधानशब्दगृहीतत्वात्प्राकृतानामङ्गानाम् । प्रधानशब्दगृहीतानि हि प्राकृतान्यङ्गानि । तस्माच्च प्रधानशब्दात्परमेतत्, सोऽत्र जुहोति, अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा, इत्येवमादि । तस्मात्प्रत्यक्षादेव क्रमान्नारिष्ठहोमेभ्यः पराञ्च उपहोमा इति ॥ १९ ॥

तथा चान्यार्थदर्शनम् ॥ २० ॥

अन्यार्थोऽपि चैतमर्थं दर्शयति । अध्वरस्य पूर्वमथाग्नेरुपमेत्येतत्कर्म, यदग्निकर्मेति । पश्चात्समाम्नातस्य पश्चात्प्रयोगं दर्शयति ॥ २० ॥

---

कथमित्याकाङ्क्षायां क्लृप्तोपकारत्वात्पूर्वं प्राकृतैरुपकारैर्निराकाङ्क्षीकृता उत्तरकालमपूर्वेणाङ्गेन संबध्यन्ते । अक्लृप्तोपकारत्वात्तस्य । तस्माद्येनैव क्रमेण प्राकृतं विज्ञातं तेनैव तत्कृत्वा वैकृतं कर्तव्यम् ॥ १७ ॥

प्रधानोत्तरकालं पठितत्वात्तदनन्तरमेव प्राप्नुवन्ति । प्रधानानन्तरं प्रत्यक्ष आम्नाय आनुमानिकश्चोदकः ॥ १८ ॥

' अग्नये कृत्तिकाभ्योऽष्टाकपालम् ' इत्युत्पद्यमान एव किं, केन, कथमिति, त्रितयपरिपूर्णः कर्तव्यतया चोद्यते । तस्यां चाऽऽकाङ्क्षायां प्राकृतेन पूर्वं संबध्यत इत्येतदर्थवत्त्वेन तस्य व्यवधानमेवं नास्ति ॥ १९ ॥ [ २० ॥ ]

---

१ अग्नौ नक्षत्रेष्टयामिति पा० । २ बाधनमेवेति पा० ।

( विदेवनादीनामभिषेकपूर्वकालत्वाधिकरणम् ॥ १० ॥ )

## [ १० ] कृतदेशात्तु पूर्वेषां स देशः स्यात्तेन प्रत्यक्षसंयोगान्न्यायमात्रमितरत् ॥ २१ ॥ सि०

राजसूये श्रूयते, अक्षैर्दीव्यति, शौनःशेपमाख्यापयति, अभिषिच्यते, इति । तत्र संदेहः । किं विदेवनादीनामन्ते प्रयोग उताभिषेकात्पूर्वमिति । किं प्राप्तम् । अन्ते तु बादरायण इत्यन्ते प्रयोगः कर्तव्य इति । एवं प्राप्ते ब्रूमः । कृतदेशादभिषेकात्पूर्वं तु प्रयोगः । कृतदेशो ह्यभिषेकः । माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यत इति । प्रत्यक्षानुग्रहायाभिषेकात्पूर्वं प्रयोक्तव्यम् । न्यायमात्रमितरत्, अन्ते तु बादरायण इति ॥ २१ ॥

( सावित्रहोमादीनां दीक्षणीयापूर्वकालत्वाधिकरणम् ॥ ११ ॥ )

## [११] प्राकृताच्च पुरस्तायत् ॥ २२ ॥ सि०

अस्ति आग्निः, य एवं विद्वानग्निं चिनुते, इति । तत्र दीक्षणीयायाः पूर्वं सावित्रहोमाः, उखासंभरणम्, इष्टकाः, पशुश्चेत्येतदाम्नातम् । किं तदेव पूर्वं कर्तव्यमुत दीक्षणीयेति । किं प्राप्तम् । वैकृतानामन्ते प्रयोगः । अन्ते तु बादरायण इति । एवं प्राप्ते ब्रूमः । पूर्वं सावित्रहोमाः, इष्टकाः, पशुरुखासंभरणं च । कुतः । प्रत्यक्षपाठात् । पुनस्तत्र दीक्षणीयाऽऽम्नाता, तस्याश्च पुरस्तात्सावित्रहोमा इष्टकाः, पशुरुखासंभरणं

---

अभिषेचनीयादूर्ध्वं प्राग्दशपेयात् ' पष्ठौहीं दीव्यति ' इत्येवमादयः पठ्यन्ते । तत्र संशयः, किमभिषेकोऽपकृष्यमाण इतरानपकर्षति, उत नेति । केवलोऽपकृष्यते 'अन्ते तु बादरायणः ' इति । राजसूयान्त इत्याशङ्क्यैव नास्ति । अतोऽभिषेचनीयान्त इति । तत्राभिषेकमात्रस्यापकर्षः, यथाऽमावास्यायां वेदिमात्रस्य । प्रयाजानुयाजानां प्रकृतौ संबन्धस्यावगतत्वाद्विकृतावुत्कर्षापकर्षौ युज्येते । इह संबन्धस्यानवगतत्वादपकर्षोऽयुक्त इत्येवं प्राप्ते—

ब्रूमः । अत्रापि पाठस्य प्रत्यक्षत्वात्पूर्वैः पदार्थैरस्ति संबन्धः । न चायं पाठोऽत्र कृतार्थः, यथा पौर्णमास्यां वेदेः । अतः पूर्वेषामपकर्षः । नन्वभिषेचनीयपरत्वेऽपि पाठोऽस्ति । उच्यते । अभिषेचनीये साङ्गे विहिते तत एते परा भवन्ति । तस्य चैतेषां च भिन्नयोगवचनपरिग्रहात्पाठ एव नास्ति ॥ २१ ॥

सावित्रहोमा उखासंभरणमित्यादि विधायानन्तरं दीक्षणीयागुणवाक्यानि श्रूयमाणानि तत्स्थानमेव गुणिनमवबोधयन्ति । अतोऽस्य पाठस्य प्रत्यक्षत्वात्प्रथमं सावित्रहो-

---

१ (अ० ५ पा० २ अ० ९ सू० १९) । २ सावित्रग्रहहोमा इति पा० ।

च । तस्मात्तेषां पूर्वं प्रयोग इति ॥ २२ ॥

( दीक्षितसंस्काराणां रुक्मप्रतिमोचनादिपूर्वभाविताधिकरणम् ॥ १२ ॥ )

[१२] संनिपातश्चेद्यथोक्तमन्ते स्यात् ॥ २३ ॥ सि०

अग्नौ दीक्षणीयायाः परतो रुक्मप्रतिमोचनादि, आम्नातम् । तस्मि- न्नेव क्रमे चोदकेन दीक्षितसंस्काराः प्राप्ताः । तत्र संदेहः । किमनियम उत पूर्वं रुक्मप्रतिमोचनादि, उत दीक्षितसंस्कारा इति । किं प्राप्तम् । अनियमः । अथवा, यथा प्रत्यक्षपाठक्रमाद्दीक्षणीयायाः पुरत उखासं- भरणादय एवं रुक्मप्रतिमोचनादीनीति । एवं प्राप्ते, ब्रूमः । दीक्षितसं- स्काराः पूर्वं कर्तव्या इति । कुतः । दीक्षणीयां प्रति यः पाठक्रमः, यथा च चोदकः, तयोभयेऽपि परस्ताद्दीक्षणीयायाः कार्याः । यस्तेषां परस्परापेक्षः क्रमस्तत्र न कश्चिदुखासंभरणस्येव प्रत्यक्षः पाठक्रमः पूर्वत्वं साधयति । अस्ति तु संस्काराणां प्रकृतौ पूर्वं पाठः, विकृतौ रुक्मप्र- तिमोचनस्योत्तरः । तेन यथोक्त एव क्रमः स्यादन्ते वैकृतमिति । अथ किमर्थं संनिपात आशङ्क्यते । नन्वयं संनिपात एव व्यक्तः । असंदिग्धे संदिग्धवचनमेतत् । यथा—

ईजाना बहुभिर्यज्ञैर्ब्राह्मणा वेदपारगाः ।
शास्त्राणि चेत्प्रमाणं स्युः प्राप्तास्ते परमां गतिम् ॥ इति ।
तस्मान्न दोष इति ॥ २३ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये पञ्चमस्या- ध्यायस्य द्वितीयः पादः ॥

---

मास्ततो दीक्षणीया ॥ २२ ॥

दीक्षणीयानन्तरं प्रकृतौ दीक्षितसंस्काराः कृताश्चोदकेन तथैव प्राप्नुवन्ति । ननु रुक्मप्रतिमोचनादयो दीक्षणीयायाः परे श्रूयन्ते । तेषां चोदकप्राप्तानुष्ठानव्यवहितानामपि परत्वं नैव बाध्यते ॥ २३ ॥

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां पञ्चमाध्यायस्य द्वितीयः पादः ॥

---

१ न चार्यमिति पा० । २ प्राप्तानुष्ठितव्यवहितेति पा० ।

अथ पञ्चमेऽध्याये तृतीयः पादः ॥

( प्रयाजादिगतैकादशत्वादिसंख्यायाः सर्वसंपाद्यत्वाधिकरणम् ॥ १ ॥ )

[ १ ] विवृद्धिः कर्मभेदात्पृषदाज्यवत्तस्य तस्योपदिश्येत ॥ १ ॥ पू०

अग्नीषोमीये पशौ श्रूयते, एकादश प्रयाजान् यजति, एकादशानुयाजान् यजतीति । चातुर्मास्येषु, नव प्रयाजान् यजति, नवानुयाजान् यजतीति । अग्नौ श्रूयते, षडुपसद इति । तत्र संदेहः । किं प्रतिप्रयाजमेकादशसंख्या, प्रत्यनुयाजं च । तथा चातुर्मास्येषु नवसंख्या । तथा, अग्नौ चोपसत्सु षट्संख्या, उत सर्वसंपाद्या संख्येति । किं प्राप्तम् । प्रतिप्रधानं संख्या भिद्यत इति । कुतः । भिन्नानि हि तानि कर्माणि । तानि च प्रधानानि प्रति, संख्या श्रूयते । प्रधानसंनिधौ च गुणः शिष्यमाणः प्रतिप्रधानं भिद्यते । यथा, पृषदाज्येनानुयाजान् यजतीति प्रत्यनुयाजं पृषत्ता गुणो भिद्यते, एवमिहापीति ॥ १ ॥

अपि वा सर्वसंख्यत्वाद्विकारः प्रतीयेत ॥ २ ॥ सि०

सर्वसंपाद्या संख्या कल्प्येत । कुतः । पृथक्त्वनिवेशिनी हि संख्याऽसति पृथक्त्वेऽभ्यासेन कल्प्येत, यावत्संभवो भेदस्य, तावत्येवाभ्यस्येत । यावति संभवति तावति पृथक्त्वनिवेश एव न्याय्यः । तस्मा-

---

' एकादश प्रयाजान्यजति ' इति संख्या प्रयाजानामङ्गत्वेन विधीयते । तेषां चोद्दिश्यमानत्वात्साहित्यमविवक्षितम् । अत एकैकमेकादशसंख्यया संबध्यते ॥ १ ॥

पृथक्त्वनिवेशिनी संख्या । तत्र द्रव्याणां पृथक्त्वनिष्पन्नरूपाणामेकक्रियया संबध्यमानानां युज्यते संख्या, दश घटा आनीयन्तामिति । इह तु प्रयाजानां पृथक्त्वनिष्पत्तेरभावाद्या संख्या सा न युज्यते । उत्पत्त्यपेक्षा हि कर्मणां संख्या । उत्पत्तौ च द्विधाऽप्येकादशसंख्या न घटते । यद्येकस्मिंस्ततस्तत्र साक्षादयुज्यमानत्वात्तल्लक्षितेन प्रयोगेण युज्यते । एवं चेद्यत्र श्रुता तत्र न कृता । अश्रुते कृता । अश्रुतं च पञ्चपञ्चाशत्संख्यान्तरमुपजायेत । समस्तैरपि न शक्या योजयितुम् । कथं प्रयाजैः संख्यैकदेशः संबध्येत । अन्यस्य संख्यैकदेशस्यासंबध्यमानस्य संपत्तये प्रयाजाः प्रयोगं लक्षयेयुः । तेनासौ संबध्येत । तत्र प्रयाजाः संख्या चोभयमपि बाध्येत । संख्या तावत्प्रयाजे श्रूयमाणा प्रयोगे कृता । प्रयाजा अपि संख्यैकदेशेन योजिताः । अन्यश्च संख्यैकदेशः प्रयाजलक्षितेन प्रयोगेण युक्तः । तत्र प्रयाजोऽन्यार्थः श्रुतोऽन्यार्थमुच्चारितः ।

स्सर्वसंपाद्यैव संख्या । यत्तु पृषदाज्यवदिति । न पृषत्ता, एकस्य न संभवति । नासौ पृथक्त्वानिवेशिनी । न चैकस्य क्रियमाणा सर्वेषां तन्त्रेणोपकरोतीति : तस्मादवश्यं भेत्तव्या । तन्त्रेण तूपकरोति संख्या । इतरापेक्षा हि सा भवति । एवं सति सहत्वस्य प्रापकः प्रयोगवचनोऽनुग्रहीष्यत इति ॥ २ ॥

( स्वस्थानविवृद्ध्योपसत्संख्यासंपत्त्यधिकरणम् ॥ २ ॥ )

[ २ ] स्वस्थानात्तु विवृध्येरन् कृतानुपूर्व्यत्वात् ॥ ३ ॥ सि०

उपसत्सु संदेहः । किमावृत्तिर्दण्डकलितवदुत स्वस्थानाद्विवर्धेन्त इति । किं तावत्प्राप्तम् । आवर्तनीयानामर्थानामेष धर्मो यदुत दण्डकलितवत् । यो ह्युच्यते, त्रिरनुवाकः पठ्यतामिति स आदित आरभ्य परिसमाप्य पुनरादित आरभ्यते । त मादण्डकलितवदावृत्तिः । एवं प्राप्ते, ब्रूमः । स्वस्थानाद्विवर्धितुमर्हति । कुतः । कृतानुपूर्व्यत्वात् । कृत-

किं च, सकृदुच्चरितः संख्यया संबध्यते, प्रयोगं च लक्षयेत् । द्वयोरप्यश्रुतकल्पना ।

तस्मादन्यः प्रकार आश्रीयते । यदि वा प्रयाजशब्दः प्रयोगं लक्षयेत् । अथवा संख्या लक्षणावृत्ता । तत्र प्राथम्यादविरोधाच्च मुख्यवृत्ता संख्या । यदि च लक्षणावृत्ता स्यात्ततस्तया पञ्चत्वे लक्ष्यमाणेऽप्रवृत्तिविशेषकरं वाक्यं स्यात् । तस्मात्प्रयाजाः प्रयोगं लक्षयन्ति । ते च लक्षयन्त इतरेतरसव्यपेक्षा लक्षयन्ति । संख्याया इदमेव स्वाभाव्यं यदुत मिलितेष्वितरेतरयुक्तेषु वर्तते । योऽन्यो गुणः स इतरेतरनिरपेक्षैरेव संबध्यते । एकैकेन च प्रधानेन परस्परनिरपेक्षेण वशी क्रियते संख्यायामुभयमपि नास्ति । अतोऽयं गुणोऽपि सन्नितरगुणविसदृशः । प्राकृतसंख्योपमर्देन चास्या निवेशः । प्रकृतौ च पञ्चत्वं समुदितानां, नैकैकस्य । इहापि समुदितानामेवैकादशसंख्या । ननु पृथग्विहितानामर्थलभ्यत्वात्प्रयाजा अनूद्यन्ते ।

उच्यते । अर्थाच्छब्दाद्वा प्रकृताविष्टता पञ्चसंख्यापरिच्छिन्ना । इहापि प्रयाजसंबन्धित्वेनैकादशसंख्या परिच्छेदिका भवितुमर्हतीति । सर्वसंपादनेऽन्यादृशः क्रमोऽन्यादृश इतरत्र । उत्तरस्य चोपोद्घातोऽधिकरणमिदम् । स्थिते ह्येतस्मिन्दण्डकलितवदावृत्तिः स्वस्थानविवृद्धिर्वेति चिन्ताऽवतरति ॥ २ ॥

यथा प्रथमा परिसमाप्यमाना द्वितीयामुपस्थापयति, द्वितीया च तृतीयाम् । एवं

मानुपूर्व्यमुपसन्तु । प्रथमां कृत्वा मध्यमा कर्तव्या, तत उत्तमेति । तत्र यदि दण्डकलितवदावृत्तिः स्यात्, उत्तमां कृत्वा पुनराद्याया अभ्यासे क्रियमाणेऽस्थाने सा विवृद्धिः कृता भवति । स्वस्थानविवृद्धौ नैष दोषः । तस्मात्स्वस्थाने विवृद्धिरिति ॥ ३ ॥

( धाय्याशब्दितानामेव समिध्यमानवतीसमिद्धवत्योरन्तरालनिवेशाधिकरणम् ॥ ३ ॥ )

[ ३ ] समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युर्द्यावापृथिव्योरन्तराले समर्हणात् ॥ ४ ॥ पू०

दर्शपूर्णमासयोः सामिधेन्यः, सामिधेनीरन्वाहेति । तत्र काम्याः सामिधेनीकल्पाः, एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्येत्येवमादयः । तत्राऽऽगमेन संख्यापूरणं वक्ष्यते । तत्र संदेहः । किमागन्तूनामन्ते निवेश उत समिध्यमानवतीं समिद्धवतीं चान्तरेण निवेश इति । किं तावत्प्राप्तम् । अन्ते निवेशः, अन्ते तु बादरायणः, इत्यनेन न्यायेनेति । एवं प्राप्ते ब्रूमः । समिध्यमानवतीं समिद्धवतीं चान्तरेण निवेश इति । कुतः । द्यावापृथिव्योरन्तराले समर्हणात्—संस्तवादित्यर्थः । इयं वै समिध्यमानवती द्यौः, असौ समिद्धवती पृथिवी । यदन्तरा, तद्धाय्या, इत्यन्तरिक्षसंस्तुत्या तस्मिन्नन्तराले विधीयन्ते । तस्मान्नान्ते स्युरिति ॥ ४ ॥

तच्छब्दो वा ॥ ५ ॥ सि०

अथवा या धाय्याशब्दिकास्तास्तत्र भवितुमर्हन्ति । तेन हि शब्देन तत्र संस्तवः । संस्तवाच्च विधानम् । यथा, पृथुपाजवत्यौ धाय्ये, उष्णिककुभौ धाय्ये इति । काः पुनरेता धाय्या नाम । नास्य शब्दस्य प्रसिद्धिमुपलभामहे । उच्यते । सामिधेन्यो धाय्याः । कुतः । एवं हि भगवतः पाणिनेर्वचनम्—पाय्यसांनाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीष्विति । अस्माद्वचनाच्छ्रुतिमनुमिमीमहे । कतमासु

तृतीयाऽपि कर्मान्तरमुपस्थापयति । तत्र दण्डकलितवदावृत्तौ तृतीययाऽनुपस्थापिता प्रथमा क्रियेत । स्वस्थानविवृद्धौ तु नैष दोषः । चोदको ह्यमुमेवार्थं प्रापयति ॥ ३ ॥ [ ॥ ४ ॥ ५ ॥ ६ ॥ ]

१ ( अ० १० पा० ५ अ० ८ ) इत्यत्रेति शेषः । २ (अ० ५ पा० २ अ० ९ सू० १९ )
३ इयं वै समिध्यमानवती, असौ समिद्धवतीति पा० । ४ पा० सू० ( ३-१-१२९ )

सामिधेनीषु, इति। उच्यते। अविशेषात्सर्वास्विति गम्यते। इह तु समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युरिति। सर्वासु सामिधेनीषु सतीषु धाय्यावचनाद्विशिष्टानां सामिधेनीनां धाय्याशब्द इति गम्यते। ननु पाणिनिवचनादविशेषेण सर्वा धाय्याः। नेत्याह। विशिष्टास्वपि वचनमुपपद्यत एव। यदि विशिष्टास्ततः का इति। उच्यते। यासु धाय्याशब्दः श्रूयते, तास्तावद्धाय्याः। तासु च धाय्यासु सतीषु वचनमर्थवद्भवति। अर्थवति च सति वचने नान्या धाय्याः प्रमाणाभावादिति ॥ ५ ॥

उष्णिक्ककुभोरन्ते दर्शनात् ॥ ६ ॥

उष्णिक्ककुभोश्चान्ते प्रयोगो दृश्यते। यज्जगत्या परिदध्यादन्तं यज्ञं गच्छेत्। अथ यत्त्रिष्टुभा परिदधाति नान्तं गच्छतीति। ननु त्रिष्टुबत्रान्ते दृश्यते, नोष्णिक्ककुभाविति। उच्यते। त्रिष्टुभमेवायमुष्णिक्ककुभाविति ब्रूते। कथम्। त्रिष्टुभो वीर्यमित्येवं संस्तुतेः। त्रिष्टुभो वा एतद्वीर्यं यदुष्णिक्ककुभाविति कारणे कार्यवदुपचारः कृतः ॥ ६ ॥

( बहिष्पवमाने, आगन्तूनां पर्यासोत्तरकालताधिकरणम् ॥ ४ ॥ )

[ ४ ] स्तोमविवृद्धौ बहिष्पवमाने पुरस्तात्पर्यासादागन्तवः स्युस्तथा हि दृष्टं द्वादशाहे ॥ ७ ॥ पू०

सन्ति विवृद्धस्तोमकाः क्रतवः, एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामं, त्रयस्त्रिंशेन प्रतिष्ठाकाममितिᶦ। तत्राऽऽगमेन संख्यापूरणं वक्ष्यते। अथ बहिष्पवमाने वैकृतेष्वानीयमानेषु भवति संशयः। किं वैकृतानामन्ते निवेश उत प्राक्पर्यासादिति। किं प्राप्तम्। पुरस्तात्पर्यासादागन्तवः स्युः। तथा हि दृष्टं द्वादशाहे। स्तोत्रीयानुरूपौ तृचौ भवतः। वृषण्वन्तस्तृचा भवन्ति। तृच उत्तमः पर्यास इति। इहापि प्राक्पर्यासादागन्तुभिर्भवितव्यम् ॥ ७ ॥

---

बहिष्पवमानस्यान्त्यतृचात्पूर्वमागन्तवः स्युः। कुतः। ज्योतिष्टोमे बहिष्पवमाने त्रयस्तृचा अभूवन्—स्तोत्रीयोऽनुरूपः, पर्यासश्चेति। द्वादशाहस्य षाडहिके द्वितीयेऽहनि स्तोत्रीयानुरूपौ तृचौ पठित्वाऽपूर्वास्तृचाः पठ्यन्ते। तत उत्तरः पर्यासः पठितः। तस्मात्पर्यासात्पूर्वमेतेषां निवेशो दृष्ट इहापि तथैव भवितुमर्हति। ७॥

---

१ ( अ० १० पा० ५, अ० ७ सू० २६ )

पर्यास इति चान्ताख्या ॥ ८ ॥

पर्यासशब्दश्चान्तवचनो लोके दृश्यते । यथा, क्षेत्रपर्यासः नदीपर्यास इति । एवं पर्यासोऽन्ते कृतो भविष्यति ॥ ८ ॥

अन्ते वा तदुक्तम् ॥ ९ ॥ सि०

अन्ते वैवंजातीयकं वैकृतं स्यात् । उक्तम् । अन्ते तु बादरायण इति ॥ ९ ॥

वचनात्तु द्वादशाहे ॥ १० ॥

अथ यदुक्तम् । तथा हि दृष्टं द्वादशाहे, इति । तत्परिहर्तव्यम् । अत्रोच्यते । वचनाद्द्वादशाहे भवति । स्तोत्रीयानुरूपौ तृचौ भवतः । वृषण्वन्तस्तृचा भवन्ति, तत्र उत्तमः पर्यास इति । न हि वचनस्यातिभारोऽस्ति ॥ १० ॥

अतद्विकारश्च ॥ ११ ॥

न चायं तद्विकारः, यत्ततो धर्मान् गृह्णीयादिति ॥ ११ ॥

तद्विकारेऽप्यपूर्वत्वात् ॥ १२ ॥

योऽपि तद्विकारस्तत्राप्यन्त एव निवेशः । कुतः । अपूर्वत्वात् । वृषण्वतां तृचानां वृषण्वन्तावेव प्राक्पर्यासात् । यावद्वचनं वाचनिकं, न सदृशमुपसंक्रामति ॥ १२ ॥

( माध्यंदिनार्भवपवमनयोरागन्तूनां साम्नां गायत्र्यादिष्वेव निवेशाभिकरणम् ॥ ५ ॥ )

[ ५ ] अन्ते तूत्तरयोर्दध्यात् ॥ १३ ॥ पू०

इहापि त्रिवृद्धस्तोमकाः क्रतव[१] उदाहरणम् । तत्रोत्तरयोः पवमानयोः साम्नामागम इति वक्ष्यते[२] । तत्राऽऽगम्यमानेषु सामसु संदेहः । किं तेषामन्ते निवेश उत गायत्रीबृहत्यनुष्टुप्स्विति । किं प्राप्तम् । अन्ते,

पर्यास इति चान्त उच्यते । तस्योपरि यद्यन्ये क्रियेरंस्ततोऽन्तता व्याहन्येत ॥ ८ ॥ न्यायादन्त एवैतेषां निवेशः । द्वादशाहे तु प्रत्यक्षपाठाद्वृषण्वतां मध्ये निवेशः । द्वादशाहप्रकृतिकेष्वपि विशिष्टानामेव तृचानां मध्ये निवेशः । न त्वयमपूर्वाणां धर्मोपचयः स्यात् ॥ ९ ॥ [ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ ]

१ ( अ० ५ पा० २ अ० ५ सू० १९ ) । २ ( अ० १० पा० ५ अ० ५ सू० १६ ) । इत्यत्रेति शेषः ।

उत्तरयोर्दध्यात्। उक्तोऽत्र न्यायः, अन्ते तु बादरायण इति। तस्मादन्ते निवेश इति ॥ १३ ॥

**अपि वा गायत्रीबृहत्यनुष्टुप्सु वचनात् ॥ १४ ॥ सि०**

गायत्रीबृहत्यनुष्टुप्सु निवेशः। कस्मात्। वचनात्। त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुबिति। अत्र ह्येवाऽऽवपन्ति, अत एवोद्वपन्तीति वचनेनास्त्युपालम्भः। तस्मादेषामन्ते निवेश इति ॥ १४ ॥

( अनारभ्याधीतग्रहेष्टकयोः क्रत्वग्निशेषताधिकरणम् ॥ ६ ॥ )

**[ ६ ] ग्रहेष्टकमौपानुवाक्यं सवनचितिशेषः स्यात् ॥ १५ ॥ पू०**

औपानुवाक्ये काण्डे ग्रहा इष्टकाश्च समाम्नाताः। एष वै हविषा हविर्यजते, योऽदाभ्यं गृहीत्वा सोमाय यजत इति। तथा, परा वा एतस्याऽऽयुः प्राण एति योंऽशुं गृह्णातीति। तथेष्टकाः, चित्रिणीरुपदधाति, वज्रिणीरुपदधाति, भूतेष्टका उपदधातीति। तत्र संदेहः। किं ग्रहेष्टकमौपानुवाक्यं सवनशेषश्चितिशेषश्च। अथ किं क्रतुशेषोऽग्निशेषश्चेति। किं प्राप्तम्। सवनचितिशेषः। कुतः। ग्रहैः सवनान्यारभ्यन्ते, इष्टकाभिश्चितयः। यच्च येनाऽऽरभ्यते तत्तदङ्गम् ॥ १५ ॥

**क्रत्वग्निशेषो वा चोदितत्वादचोदना नु पूर्वस्य ॥ १६ ॥ सि०**

क्रत्वग्निशेषः स्यात्। कुतः। चोदितत्वात्। अग्निश्चेतव्यः श्रूयते। य एवं विद्वानग्निं चिनुते, इति। न चितिश्चेतव्या। इष्टकाचयनेनाग्निश्चेतव्यः श्रूयते। अग्निमिति द्वितीयानिर्देशात्। तथा, योऽदाभ्यं गृहीत्वा सोमाय यजत इति, अदाभ्यस्य यजतिना संबन्धः। तथा, अंशोः। तस्मात्सकृद्यागसंबन्धं कृत्वा कृतार्थः शब्दो भवति, श्रुतं संबन्धमभिनिर्वर्त्य। तथा सकृदग्निसंबन्धं कृत्वा कृतो मन्येत। अचोदना चितिसवनयोः। न हि ते कर्तव्यतया चोद्येते। परार्थं हि तयोः श्रवणम्। किं प्रयोजनम्। सवनचितिशेषत्वे, प्रतिसवनं ग्रहणं प्रतिचिति चेष्टकोपधानम्। क्रत्वग्निशेषत्वे सकृद्ग्रहणोपधाने ॥ १६ ॥

ग्रहैः सवनानि प्रत्यक्षमारभ्यमाणानि दृश्यन्ते। इष्टकाभिश्चितयश्च। तस्मात्तदुपकारकत्वादेतेषां तदर्थता। इतरस्त्वाह—अग्नियागयोः फलवत्त्वात्तदर्थं ग्रहेष्टकमुपोद्घातिकमिदम्। स्थित एतस्मिन्क्रमविचारः ॥१५॥[१६॥१७॥१८॥१९॥२०॥]

१ अचोदनाश्च पूर्वस्येति पा०। २ अचोदनाश्च चितिसवनयोरिति पा०।

( चित्रिण्यादीनां मध्यमचितावुपधानाधिकरणम् ॥ ७ ॥ )

[ ७ ] अन्ते स्युरव्यवायात् ॥ १७ ॥ पू०

औपानुवाक्ये श्रूयते । चित्रिणीरुपदधाति, वज्रिणीरुपदधातीति । तत्र संदेहः । किमेताः पञ्चम्यां चितावुपधेया उत मध्यमायामिति । किं प्राप्तम् । पञ्चम्यामेव । इष्टकाः कृतक्रमा अन्या नैताभिर्व्यवेयन्ते ॥ १७ ॥

लिङ्गदर्शनाच्च ॥ १८ ॥

आवपनं वोत्तमा चितिः । अन्या इष्टका उपदधातीति ॥ १८ ॥

मध्यमायां तु वचनाद्ब्राह्मणवत्यः ॥ १९ ॥ सि०

नैवैता अन्त्यायां चितौ । कस्यां तर्हि । मध्यमायाम् । कुतः । ब्राह्मणवत्य एता इष्टकाः । तासां मध्यमा चितिराम्नायते । यां वै कांचिद्ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चितावुपदध्यादिति । ननु सर्वा एवेष्टका ब्राह्मणवत्यः । नेत्याह । अपरा लिङ्गक्रमात्, समाख्यानाच्च । तस्मादेता नान्ते स्युरिति ॥ १९ ॥

( प्राग्लोकंपृणायाश्चित्रिण्याद्युपधानाधिकरणम् ॥ ८ ॥ )

[ ८ ] प्राग्लोकंपृणायास्तस्याः संपूरणार्थत्वात् ॥ २० ॥ सि०

औपानुवाक्ये काण्ड इष्टकाः समाम्नाताः, वज्रिणीरुपदधाति, चित्रिणीरुपदधाति, भूतेष्टका उपदधातीति । तत्रेदं समधिगतं, मध्यमायां चितावुपधेया इति । तत्र संदेहः । किं प्राग्लोकंपृणाया उत पश्चादिति । किं प्राप्तम् । अन्ते तु बादरायण इति । एवं प्राप्ते, उच्यते । प्राग्लोकंपृणायाः । तस्याः संपूरणार्थत्वात् । संपूरणार्थता तस्याः श्रूयते, यदेवास्योनं, यच्छिद्रं, तदेतया पूरयति, लोकंपृण च्छिद्रंपृण, इति । अपूर्वत्वाच्चार्थस्य विधिरेवायं, संस्तवो नेति गम्यते । तस्मात्प्राग्लोकंपृणायाः स्यात् ॥ २० ॥

( पवमानेष्ट्युत्तरकालमग्निहोत्राद्यनुष्ठानाधिकरणम् ॥ ९ ॥ )

[९] संस्कृते कर्म संस्काराणां तदर्थत्वात् ॥ २१ ॥ सि०

आधाने सन्ति पवमानेष्टयः । सन्ति च नियतानि कर्माण्यग्निहोत्रा-

---

प्रागाधानात्कर्मस्वयोग्यः । कृत आधानेऽग्नीनां विद्यमानत्वात्सर्वकर्मभिरधिक्रियते ।

दीनि । अनियतानि चैन्द्राग्नादीनि । तत्र संदेहः । किं पवमानेष्टीः कृत्वा कर्माणि प्रतिपत्तव्यानि, उताऽऽहितमात्रेष्वग्निष्विति । किं प्राप्तम् । आहितमात्रेष्विति । कुतः । आहितमात्रेष्वसावग्निषु कर्माणि कर्तुं समर्थो भवति । यथा, आहिताग्निर्न क्लिन्नं दार्वभ्यादध्यादित्येवमादीन्याहिताग्निव्रतान्याहितमात्रेष्वेव भवन्तीति दर्शयति । अग्निं वै सृष्टमग्निहोत्रेणानुद्रवन्तीत्याहितमात्रेष्वग्निहोत्रं दर्शयति । तस्मान्न पवमानेष्टयः प्रतीक्षितव्या इति ।

एवं प्राप्ते, ब्रूमः । पवमानेष्टिभिः संस्कृतेष्वग्निषु कर्माणि वर्तेरन् । कुतः । संस्काराणां तदर्थत्वात् । संस्कारशब्दा एत आहवनीयादयः । संस्कारस्य कस्यचिदभावे नाऽऽहवनीयादिषु प्रतिपत्तिः स्यात् । तस्मात्संस्कृतेष्वग्निषु कर्माणीति ॥ २१ ॥

---

किं च 'अग्निं वै सृष्टम्' इत्यग्निमुत्पाद्याग्निहोत्रेणानुद्रववचनमाधानानन्तरमेवाग्निहोत्रं दर्शयति । 'आहिताग्निर्न क्लिन्नं दार्वभ्यादधीत' इत्यनेनानन्तरमेवैते यथा प्राप्नुवन्ति, एवं कर्माण्यपीति ।

एवं प्राप्ते ब्रूमः । पवमानेष्ट्यादिभिराहवनीयादय उत्पाद्यन्ते । उत्पन्नाश्च सन्तो यागाङ्गतां प्रतिपत्तुं शक्नुवन्ति, अतोऽन्यमाआदभावः कर्मणाम् ।

'न क्लिन्नं दार्वभ्यादध्यात्' इति पुरुषसंयोगेन श्रवणादाहिताग्नित्वेन निमित्तेनानन्तरमेव भवन्ति । निमित्तस्य विद्यमानत्वात् ।

'अग्निहोत्रेणानुद्रवन्ति' इति 'यथस्रुषा जुहुयादयथापूर्वमाहुतीः कुर्यात्' इति पवमानेष्ट्यनन्तरमाहुतीनां करणादयथापूर्वं कृताः स्युः । यदि पूर्वं न क्रियेरन्, अग्निरुद्वायेत्तस्मात्तूष्णींहोमस्तुतिरियम् । स चाग्न्यर्थः । यत एव पूर्वं प्रवर्तते । किमस्मिन्नग्निहोत्रधर्माः प्राप्यन्ते न वेति । केचिदाहुः—अग्निहोत्रधर्मा नाम्ना प्राप्यन्ते, यथा कुण्डपायिनामयन इति ।

तदयुक्तम् । तूष्णीं होतव्यमित्यनेन कर्म विधीयते । तस्मिंश्च विधिवाक्येऽग्निहोत्रशब्दो नास्ति, येन धर्मातिदेशको भवेत् । तूष्णीं होमोऽग्निसंधुक्षणार्थः क्रियते । एतदतो भवति । अग्न्यर्थो होम इत्यवगते योऽग्निहोत्रशब्दो वाक्येऽर्थवादत्वेन प्रवृत्तः स योगेन प्रवर्तते, अग्नये होत्रमिति । अतो योगस्य विद्यमानत्वान्नास्ति नामधेयम् । नामधेयाभावाच्चातिदेशो नास्ति ॥ २१ ॥

अनन्तरं व्रतं तद्भूतत्वात् ॥ २२ ॥

यत्तु, आहिताग्निर्न क्रिमं दार्वेभ्यादध्यादित्येवमादि । युक्तं तत्र, यदाहितमात्रेषु क्रियते, आहिताग्नेस्तद्व्रतमुच्यते । स चाऽऽहितमात्रेष्वाहिताग्निः संवृत्तः । तस्मादनन्तरं व्रतं स्यात् । तद्भूतत्वात् ॥ २२ ॥

पूर्वं च लिङ्गदर्शनात् ॥ २३ ॥

अथ यदुक्तम्, आहितमात्रेष्वग्निहोत्रं दर्शयति पूर्वमिष्टिभ्य इति । तस्य कः परिहार इत्याभाषान्तं सूत्रम् ॥ २३ ॥

अर्थवादो वाऽर्थस्य विद्यमानत्वात् ॥ २४ ॥

अर्थवाद एषः । कुतः । अर्थस्य विद्यमानत्वात् । विद्यमानो हि तत्रान्य एवाग्निहोत्रहोमः । कथम् । होतव्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते ब्रह्मवादिनः । यद्यजुषा जुहुयादयथापूर्वमाहुतीर्जुहुयात् । यदि न जुहुयादाग्निः परापतेत् । तूष्णीमेव होतव्यमिति । तस्य तूष्णींहोमस्य प्रशंसार्थोऽयमर्थवादः ॥ २४ ॥

न्यायविप्रतिषेधाच्च ॥ २५ ॥

न्यायविप्रतिषेधश्च भवेत् । यद्यनन्तरमग्निहोत्रादयः स्युः । यः पूर्वोक्तो न्यायः, स विप्रतिषिध्येत, न वा तासां तदर्थत्वादिति । तस्मात्संस्कृते कर्माणि भवेयुरिति ॥ २५ ॥

( अग्निचिद्व्रतानां क्रत्वन्तेऽनुष्ठानाधिकरणम् ॥१०॥ )

[ १० ] संचिते त्वग्निचिद्युक्तं प्रापणान्निमित्तस्य ॥ २६ ॥ पू०

अग्निचिद्वर्षति न धावेत्, न स्त्रियमुपेयात् । तस्मादग्निचिता पक्षिणो नाशितव्या इत्येवमादयः पदार्थाः श्रूयन्ते । तेषु संदेहः । किं संचितमात्रे प्रतिपत्तव्या उत क्रत्वन्त इति । किं प्राप्तम् । संचितमात्र एवेति । अग्निं यश्चितवान्सोऽग्निचिदिति तस्य श्रूयमाणाश्चितवतोऽनन्तरमेव प्राप्नुवन्ति । प्राप्ते निमित्ते नैमित्तिकं कर्तव्यम् । तस्मादनन्तरमेव ॥ २६ ॥

क्रत्वन्ते वा प्रयोगवचनाभावात् ॥ २७ ॥ सि०

प्रयोगवचनो ह्यत्र तान्पदार्थान्प्रापयति, येषां क्रत्वर्थत्वम् । न चैषां

[ २२ ॥ २३ ॥ २४ ॥ ॥ २५ ॥ २६ ॥ ]

योऽग्निं चितवान्सोऽग्निचित् । स चाग्निः कर्मभूतः । चयनं तदर्थम् । तस्माच्चयने-

१ ( अ० ३ पा० ६ अ० ४ सू० १२ ) ।

क्रत्वर्थत्वमस्ति। पुरुषार्था ह्येते। कथम्। प्रतिषेधे पुरुषः श्रूयते। वर्षति न धावेत्, न स्त्रियमुपेयादित्येवमादि। न च क्रत्वर्था एते प्रसक्ताः, येन प्रतिषेधः क्रतोरुपकुर्यात्॥ २७॥

ननु पुरुषार्था अपि चितवतः श्रवणाच्चयनानन्तरं प्राप्ताः। नेति ब्रूमः—

अग्नेः कर्मत्वनिर्देशात्॥ २८॥

अग्न्यर्थं चयनं तत्। यदग्नेः स्वं कार्यं कुर्वतः साहाय्ये वर्तते, तत्तदर्थम्। कश्च तस्य स्वार्थः। यागसिद्धिः। सिद्धे च यागे चयनेनोपकृतं भवति। तस्मात्सिद्धे यागेऽग्निचित्। तेन क्रत्वन्त इति॥ २८॥

(दीक्षणीयान्ते दीक्षितस्य स्वधर्मानुष्ठानाधिकरणम्॥ ११॥)

[११] परेणाऽऽवेदनाद्दीक्षितः स्यात्सर्वैर्दीक्षाभिसंबन्धात्॥ २९॥ पू०

ज्योतिष्टोमे श्रूयते, आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण इति। तथा, दण्डेन दीक्षयति, मेखलया दीक्षयति कृष्णाजिनेन दीक्षयतीत्येवमादि। तत्र संदेहः। किं सर्वैर्दीक्षितो भवति, अथवा, इष्ट्यन्ते दीक्षित इति। किं तावत्प्राप्तम्। सर्वैरिति। कुतः। दीक्षाभिसंबन्धात्। दीक्षासंबन्धो भवति, दण्डेन दीक्षयति, दीक्षामस्य करोतीत्यर्थः। यदीष्ट्यन्ते दीक्षितः स्यात्कथमस्य दण्डेन दीक्षां कुर्यात्। तेनेष्ट्या न दीक्षितः। न चास्येष्ट्यन्ते दीक्षितशब्दं पश्यामः। आवेदने त्वस्य दीक्षितशब्दः। तस्मान्न तावति दीक्षितः स्यात्। न च सं·

---

नाग्नेरुपकर्तव्यम्। तच्चाऽऽधारतां प्रतिपद्यमानमुपकरोति। अग्निश्चाङ्गप्रधानार्थः। अतो यावदङ्गप्रधानानि निर्वर्तन्ते। तावच्चयनमाधारतां प्रतिपद्यमानमग्न्यर्थं भवति, न चयनमात्रम्। तस्मात्साङ्गपरिसमाप्त्युत्तरकालं निमित्ततां प्रतिपद्यते। तस्मात्साङ्गे कृते यागेऽग्निचिदुच्यते॥ २७॥ [२८॥]

'दण्डेन दीक्षयति' दण्डेन दीक्षां निर्वर्तयतीति दीक्षार्थः। आग्नावैष्णवोऽपि वाक्येन दीक्षार्थः। यदि ह्याग्नावैष्णवेन दीक्षितः स्यात् 'दण्डेन दीक्षयति' इति नोच्यते। तस्मान्न स तावता दीक्षितः। न च विकल्पः। दीक्षितत्वं नामादृष्टम्। तत्र यावदाम्नायते तावता दीक्षितो भवति।

आह। करणविभक्तिनिर्देशादितरेतरनिरपेक्षाणां दीक्षाकरणताऽवगम्यते, यथा व्रीहीणाम्। तेषां दृष्टोपकारित्वाद्विकल्प इति चेत्। तन्न। व्रीहियवसमुच्चयेन शक्यते

भवति समुच्चये विकल्पो न्याय्यः । पक्षे बाधः स्यात् । तत्र प्रयोग-वचनो बाध्येत । तस्माद्विकेष्वपि दीक्षासंबन्धवाक्येषु प्रयोगवचनेन सहैकवाक्यतेत्यावेदनकाले दीक्षितः स्यात् ॥ २९ ॥

## इष्ट्यन्ते वा तदर्था ह्यविशेषार्थसंबन्धात् ॥ ३० ॥ सि०

इष्ट्यन्ते वा दीक्षितः स्यात् । तदर्था हि सा, दीक्षार्था । कथम् । दीक्षिष्यमाणस्य—अदीक्षितस्य सा भवति । यदि तस्या उत्तरकाले दीक्षित एवं सा दीक्षिष्यमाणस्य । तस्माद्वाक्यादवगम्यते, भवति तदा दीक्षित इति । दीक्षाकारणे पदार्थे निर्वृत्ते किमिति न दीक्षितः स्यात् । वाक्यं हि निरपेक्षं दीक्षित इति ज्ञापयति ।

यत्तु दीक्षासंबन्धो दण्डेन-दीक्षयतीति, कथं स दीक्षितत्वे स्यादिति । दण्डेनैनं दीक्षितं संपादयतीत्यवगच्छामः । यत्तु, अनन्तरं दीक्षितशब्दो नास्तीति । न शब्दस्याप्रयोगोऽर्थाभावे हेतुः । सत्यप्यर्थे तदवसराभावान्न प्रयुज्यते शब्दः । अन्येन च दीक्षित इत्यवगम्यते वाक्येन, आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण इति । यथाऽऽवेदनकाले दीक्षितशब्द इति । इष्ट्यन्तेऽपि दीक्षितस्यासावविरुद्धः । प्रयोगवचनमावि-

---

पुरोडाशो निर्वर्तयितुम् । करणविभक्तिस्तु यवनिरपेक्षाणां पुरोडाशप्रकृतिद्रव्यत्वं प्रतिपादयति । सा बाध्यते समुच्चये । एवमिहापि ।

उच्यते । अत्र पुरोडाशप्रकृतित्वेनैकं द्रव्यमाकाङ्क्षितम् । तस्य करणविभक्त्या नियतता कृता । दण्डादीनां त्वनवगतं तादर्थ्यं करणविभक्त्या क्रियते । तच्च तादर्थ्यमदृष्टविषयमिति सर्वैः क्रियते । अतः प्रयोगवचनेन सर्व उपसंह्रियते ॥ २९ ॥

दीक्षितत्वं नाम संस्कारः । संस्कारश्च क्रियाजन्यः । न च दण्डादीनां क्रियात्वम् । अथोच्येत, क्रियां साधयन्तो दण्डादयः संस्कारार्थाः । अर्पणादिकाया अश्रवणान्न ज्ञायते कां क्रियां साधयन्तः संस्कारार्थतां प्रतिपद्यन्ते । अतो द्रव्यरूपत्वादनध्यवसानमेव स्यात् । 'दीक्षिष्यमाणः' इति यो दीक्षामाप्तुमिच्छति तस्य दीक्षणीयोपायत्वेन विधीयते । यदि च तया दीक्षितत्वं तस्य जायेत ततस्तस्योपायत्वेन विधीयते, यथा स्वर्गस्याग्निहोत्रम् । यदि चानयैव दीक्षा क्रियते ततोऽस्याः समाख्या युज्यते । तस्माद्वाक्यसंयोगाद्दीक्षणीययैव दीक्षितत्वं जन्यते । इष्ट्यन्तेऽग्निहोत्रादीनि न कार्या-

---

१ दीक्षणार्थेति पा० । २ दण्डेनैवं संपादयतीति पा० । ३ समाख्याऽप्युच्यत इति पा० ।

कर्द्धः । यत एकं दीक्षाकारणमन्यैर्दीक्षितं संपादयतीति गम्यते ॥३०॥

समाख्यानं च तद्वत् ॥ ३१ ॥

इतश्च पश्यामः, इष्टिर्दीक्षणार्था, इष्ट्यन्ते च मन्त्राविरिति । कस्मात् । समाख्यानं च तद्वदिति यद्वन्याय उपदिष्टः । कथम् । दीक्षणीयेति तादर्थ्यकरी समाख्या भवति । यथा, स्नानीयं, भोजनीयं चेति । तस्माच्च पश्याम इष्टिर्दीक्षणार्था, इष्ट्यन्ते च मन्त्राविरिति ॥ ३१ ॥

( काम्यानामनुष्ठाने पाठक्रमस्यानियामकत्वाधिकरणम् ॥ १२ ॥ )

[ १२ ] अङ्गवत्क्रतूनामानुपूर्व्यम् ॥ ३२ ॥ पू०

इह काम्या इष्टय उदाहरणम् । ऐन्द्राग्नमेकादशकपालं निर्वपेदित्येवमादयः । गवादयः सोमाः । सौम्यादयः पशवः । तत्र संदेहः । किं येन क्रमेणाधीतास्तेनैव क्रमेण प्रयोक्तव्या उतानियम इति । किं तावत्प्राप्तम् । क्रतूनामानुपूर्व्यं यत्पाठे, तदेव प्रयोगे भवितुमर्हति । एवं पाठक्रमोऽनुगृहीतो भविष्यति । इतरथा पाठक्रमो बाध्येत । तस्माद् भूदिति क्रमेणानुष्ठातव्यम् ॥ ३२ ॥

न वाऽसंबन्धात् ॥ ३३ ॥ सि०

न चायं क्रमो नियम्येत । कुतः । असंबन्धात् । पृथक् पृथगेषां कर्मणां प्रयोगवचनानि । तानि स्वपदार्थानामुपसंहारकाणि । यो यस्य नोपकारकः, स तस्य न क्रमेण, नोत्क्रमेण । यो यस्योपकरोति कस्यचित्तस्योपकुर्वतः क्रमः साहाय्ये वर्तते । न चैतानि कर्माणि अन्योन्यस्योपकुर्वन्ति । तस्मान्नैषां क्रमः साहाय्ये वर्तते । तस्मादसंबन्ध इति ॥ ३३ ॥

काम्यत्वाच्च ॥ ३४ ॥

काम्यानि चैतानि कर्माणि । कामाश्च न क्रमेणोत्पद्यन्ते । तेन निमित्तस्याक्रमत्वान्न क्रमवन्त इति ॥ ३४ ॥

आनर्थक्यान्नेति चेत् ॥ ३५ ॥

---

णीत्ययं क्रमलक्षणसंबन्धः ॥ ३० ॥ [ ३१ ॥ ३२ ॥ ]

अनियमेन कामा उत्पद्यन्ते । तेषां नास्ति क्रमः । कामेन च निमित्तेन कर्म कर्तव्यम् । तस्मान्नैमित्तिकेन क्रमेण प्रयोगे ( न ) स्वाध्यायक्रमो बाध्यते । अनङ्गत्वात्तेषाम्, एकप्रयोगवचनाभावाच्च नास्ति क्रमः ॥ ३३ ॥ [ ३४ ॥ ३५ ॥ ३६ ॥ ]

इति यदुक्तं पूर्वपक्षं, तदेव पुनरुच्यते परिहर्तुम् । एवं क्रमेण पाठोऽर्थवान् भविष्यतीति । एतदाभाष्यं सूत्रम् ॥ ३५ ॥

स्याद्विद्यार्थत्वाद्यथा परेषु सर्वस्वारात् ॥ ३६ ॥

स्यादर्थवान् क्रमपाठः । असत्यपि प्रयोगे क्रमे, विद्याग्रहणार्थत्वात् । कर्मावबोधनार्थायां विद्यायां क्रमनियमादर्थं तदाश्रयमेव भविष्यतीति । यथा त्वत्पक्षे, परेषु सर्वस्वारात् । यस्यापि क्रमोऽङ्गमिति पक्षस्तस्यापि सर्वस्वारात्परेषां सर्वस्वारेण यः क्रमस्तस्याग्रहणार्थताऽवश्यं कल्पनीया ॥ ३६ ॥

( अग्निष्टोमस्य प्राथम्याधिकरणम् ॥ १३ ॥ )

[१३] य एतेनेत्यग्निष्टोमः प्रकरणात् ॥ ३७ ॥ सि०

ज्योतिष्टोमे श्रूयते, एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः, य एतेनानिष्ट्वाऽथान्येन यजेत गर्तपत्यमेव तज्जायते प्र वा मीयते, इति । तत्र संदेहः । य एतेनेति कस्यायं वाद इति प्रश्नेनैवोपक्रमः । उच्यते । य एतेनेत्यग्निष्टोमस्य वादः । कुतः । प्रकरणात् । तस्य हि प्रकरणे भवत्येतद्वचनम् । प्रकृतवाचीनि च सर्वनामानि भवन्ति ॥ ३७ ॥

लिङ्गाच्च ॥ ३८ ॥

लिङ्गमपि भवति । तत्र श्रूयते तस्य नवतिशतं स्तोत्रीया इति । अग्निष्टोमस्य हि भवन्ति नवतिशतं स्तोत्रीयाः । कथम् । त्रिवृद्बहिष्पवमानं, पञ्चदशान्याज्यानि, तानि चत्वारि । सा, एकोनसप्ततिः । पञ्चदशो माध्यंदिनः पवमानः । तेन चतुरशीतिः । सप्तदशानि पृष्ठानि, तानि चत्वारि । साऽष्टषष्टिः । चतुरशीत्या सह द्विपञ्चाशच्छतम् । सप्तदश आर्भवः पवमानः । तेन षष्ट्यधिकं शतं नव च । एकविंशं यज्ञायज्ञीयमिति, तदेतन्नवतिशतमग्निष्टोमस्य । तस्मादप्यग्निष्टोमः ॥ ३८ ॥

---

' य एतेनानिष्ट्वा ' इति सर्वनाम्ना प्रकृतं परामृश्यते । प्रकृतश्च ज्योतिष्टोमः । तस्य चाविनाभूताऽग्निष्टोमसंस्था, यदा ज्योतिष्टोमाभ्यासस्तदाऽवश्यंभाविनी । उक्थ्यादयः काम्याः । ततो नित्यत्वादग्निष्टोमः परामृश्यते ॥ ३७ ॥ [ ३८ ॥ ]

---

१ सर्वस्वारादिति—' मरणकामो ह्येतेन यजेत, यः कामयेतानामयः स्वर्गं लोकमियाम् ' इत्यनेन स्वर्गार्थं विहितात्सर्वस्वारनामकयज्ञादित्यर्थः ।

( अग्निष्टोमविकाराणामग्निष्टोमोत्तरकालताधिकरणम् ॥ १४ ॥ )

[१४] अथान्येनेति संस्थानां संनिधानात् ॥ ३९ ॥ पू०

अथान्येनेति किं संस्थानां वादः, अथ ज्योतिष्टोमविकाराणामेकैकाहादीनामिति । किं तावत्प्राप्तम् । संस्थानामिति । कुतः । संनिधानात् । संनिहितास्तस्मिन्प्रकरणे संस्थाः । तासां वादः, प्रकरणानुग्रहाय ॥ ३९ ॥

तत्प्रकृतेर्वाऽऽपत्तिविहारौ हि न तुल्येषूपपद्येते ॥ ४० ॥ सि०

तत्प्रकृतेर्वा गवादेर्वादः स्यात् । आपत्तिविहारौ हि प्रकृतिविकारमात्रेषूपपद्येते, न तुल्यशब्देष्वेव ज्योतिष्टोमशब्दकेषु । नैवमभिसंबन्धः क्रियते । अथान्येन ज्योतिष्टोमशब्दकेनेति । कथं तर्हि । अन्येनेति प्रकृतादितरद्ब्रवीति । न स ज्योतिष्टोमेन विशिष्यते । न हि शब्दस्यार्थः समीपगतेन कृतप्रयोजनेनैकदेशेऽवस्थापयितव्यो भवति । न हि वाक्येन श्रुतिर्बाध्यते । अथ, ज्योतिष्टोमादन्येनेत्यभिसंबध्यते, ततो नतरां संस्थावादः । कथं पुनरापत्तिविहारौ । प्रजापतिर्वाऽग्निष्टोमः, स उत्तरानेकाहानसृजत, ते सृष्टास्तमब्रुवन् । न वै स्वेनाऽऽत्मना प्रभवाम इति । तेभ्यः स्वातन्त्र्यं प्रायच्छत् । तथा च ते प्राभवन्, तद्यथा वा इदमग्नेर्जातादन्येऽग्नयो विह्रियन्ते ।

---

अथान्येनेति संस्थाः । पूर्वप्रकृतादन्यद्यत्संनिहितं तदभिधीयते सर्वनाम्ना । अग्निष्टोमस्य चोक्थ्यादयः संनिहिताः । तस्मादग्निष्टोमसंस्थं ज्योतिष्टोमं कृत्वोक्थ्यादयः कर्तव्याः । गवादीनामनियमः ॥ ३९ ॥

अन्यशब्दः प्रकृतादन्यवाचकः । तस्य न विशेषो गम्यते । किमुक्थादय उक्ता उत गवादय इति । अतो विशेषानवगमात्सर्वानभिधत्ते । विशेष्यमाणो वा ज्योतिष्टोमो नान्येनोक्थ्यादिनेति विशेष्येत । तत्रायं 'य एतेन' इत्यस्मिन्निराकाङ्क्षीभूतः कृतप्रयोजनः किमर्थमन्यसंबन्धार्थमुच्चार्यते । यद्यपि विशेषणत्वेनोच्चार्येत, तथाऽपि ज्योतिष्टोमादन्येनेत्यन्ययोगे पञ्चमी स्यात् । ज्योतिष्टोमाच्चान्ये गवादयः । यदि ज्योतिष्टोमादग्निष्टोमसंस्थादित्युच्यते, वाक्यं भिद्येत, ज्योतिष्टोमादन्येन तच्चाग्निष्टोमसंस्थादिति । अत उक्थादयो गवादयश्चान्यशब्दाभिधेयाः । 'य एतेनानिष्ट्वाऽथान्येन' इति द्वावपीमौ पदार्थौ विचारितौ ।

एवं वा । एतस्माद्यज्ञादन्ये यज्ञक्रतवो विह्रियन्ते । यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते, स तं दीपयति, यः पञ्चदशं स तं, यः सप्तदशं, स तं, य एकविंशं स तमित्येवमाहुरेको यज्ञ इति । एते वै सर्वे ज्योतिष्टोमा भवन्तीति । एवं वैकृतानां संकीर्तनात्तेषामेव वाद इति गम्यते । कथम् । अथान्येनेति योऽसावन्यस्तत्र प्राकृतान् धर्मान् विहृतान् दर्शयति । अतो मन्यामहे, यस्य यतो विहृतिः, तेनान्येनेति ॥ ४० ॥

प्रशंसा वा विहरणाभावात् ॥ ४१ ॥

यद्येवं न तर्हि तद्विकाराणां वादः । तत्र न विहारो नाऽऽपत्तिः । प्रकरणादिभिस्ते धर्मा ज्योतिष्टोमस्य । यदि ते गवादिषु विह्रियेरन् प्रकरणादीनि बाध्येरन् । तदापत्तिः प्रत्यक्षविरुद्धा । प्रशंसा त्वेषा । आपत्तिविहाराभावात् ॥ ४१ ॥

विधिप्रत्ययाद्वा न ह्यकस्मात्प्रशंसा स्यात् ॥ ४२ ॥

अत्रोच्यते, यद्यप्यापत्तिविहारौ न विधीयेते, तथाऽपि चोदकेन विधीयेते । ये प्रकृतौ कर्तव्यास्ते चोदकवचनाद्विकृतावपि कर्तव्या गम्यन्ते । तदापत्तिविहाराविव यत्र भवतस्तेनान्येनेति गम्यते । न ह्यकस्मात्प्रशंसा स्यात् । योऽसावन्यः स कथमनया प्रशंसया लक्ष्येतेत्येवमर्था प्रशंसा ॥ ४२ ॥

( अग्निष्टोमविकाराणां सर्वेषामेव तदुत्तरकर्तव्यताधिकरणम् ॥ १५ ॥ )

[१५] एकस्तोमे वा क्रतुसंयोगात् ॥ ४३ ॥ पू०

य एतेनानिष्ट्वाऽथान्येन यजेतेति श्रूयते । तत्रैषोऽर्थः समधिगतः । तद्विकाराणां वाद इति । अथेदानीं संदिह्यते । किमेकस्तोमकस्य क्रतो-

---

इदानीं वाक्यार्थो विचार्यते । किमग्निष्टोमस्य प्राथम्यं नाम धर्मो विधीयत उतेतरेषां प्राथम्यप्रतिषेधोऽथवाऽन्यः प्रकारः । किं तावत्प्राप्तं, ज्योतिष्टोमस्य प्राथम्यं विधीयते, प्रकरणात् । इतरेषां न प्राथम्यप्रतिषेधः । तत्र । एवं हि ज्योतिष्टोमस्य द्वितीयादौ प्रयोगे प्राथम्याभावादफलता प्रसज्येत । नाप्यन्येषां प्राथम्यप्रतिषेधः । तद्वाचकस्य शब्दस्याभावात् । तस्मादन्यः प्रकारः । कः पुनरसौ । 'य एतेनानिष्ट्वा' इति क्त्वाशब्दस्य पूर्वकालवाचित्वात्पूर्वमग्निष्टोमस्य कर्तव्यतामाह, पश्चाद्गवादीनाम् । तेन तत्प्राथम्यं गवादीनामक्रमनेन वाक्येन चोद्यते । वाक्यान्तरेण स्वर्गः । अतो द्वितीयादिप्रयोगे फलं भविष्यतीत्यदोषः ॥ ४० ॥

रेष वाद एकस्तोमकस्यानेकस्तोमकस्य चेति। किं प्राप्तम्? एकस्तोमकस्य वादः। कुतः। क्रतुसंयोगात्। एकस्तोमे क्रतुसंयोगो भवति। यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति, यः पञ्चदशः, स तं, यः सप्तदशः, स तं, य एकविंशः, स तम्। त्रिवृदादय एकस्तोमकाः। तस्मात्तेषां वाद इति॥ ४३॥

**सर्वेषां वा चोदनाविशेषात्प्रशंसा स्तोमानाम्॥४४॥ सि०**

सर्वेषां वैष वादः, एकस्तोमकानामनेकस्तोमकानां च। कुतः। अविशेषवचनादन्यशब्दस्य। नन्वेकस्तोमकाः क्रतवः संकीर्त्यन्ते। सत्यं संकीर्त्यन्ते प्रशंसार्थं, न विशेषार्थम्। कः पुनः प्रशंसार्थः। यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति, चोदकप्राप्ता धर्मा अभ्यस्ताः (प्रकृतौ) विकृतौ सुखं प्रतिपद्यन्ते॥ ४४॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये पञ्चमस्याध्यायस्य तृतीयः पादः॥

---

अथ पञ्चमेऽध्याये चतुर्थः पादः॥

(पाठक्रमापेक्षया श्रुत्यर्थक्रमयोर्बलीयस्त्वाधिकरणम्॥ १॥)

**[१] क्रमकोपोऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च॥ १॥ सि०**

इह पाठक्रमस्य श्रुत्यर्थक्रमाभ्यां सह बाधां प्रति विचारणा। किं पाठक्रमस्ताभ्यां तुल्य उत बाध्यत इति। किं प्राप्तम्। तुल्यबलावेतौ। पाठोऽपि हि कारणं श्रुत्यर्थावपि। न च प्रामाण्ये कश्चिद्विशेषोऽस्ति। तस्मादनियम इति। एवं प्राप्ते ब्रूमः। पाठक्रमो हि बाध्यते श्रुत्या, अर्थेन च। कुतः। श्रुतिविशेषात्, अर्थपरत्वाच्च। श्रुतिविशेषः कः। यत्र श्रवणं तत्र प्रत्यक्षं कारणम्। पाठक्रमस्त्वानुमानिकः पाठक्रमेण स्मरणम्। एवमभिनिर्वर्तयितव्यमित्यवगम्यते। तस्यार्थवत्त्वेनैकयोप-

---

[॥ ४१॥ ४२॥ ४३॥ ४४॥]

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां पञ्चमाध्यायस्य तृतीयः पादः॥

पस्या तथैवानुष्ठानं, श्रुत्या पुनरनुष्ठानमेवैवं भवतीति प्रत्यक्षादवगम्यते । तथाऽर्थेन । कुतः । अर्थपरत्वात् । अर्थार्थं हि सर्वं प्रधानार्थं, प्रधानमभिनिर्वर्तयतीति सर्वं क्रियते । तस्मात्पाठस्ताभ्यां बाध्यते । किमुदाहरणं प्रयोजनं च । श्रुतौ, आश्विनो दशमो गृह्यते, तं तृतीयं जुहोति । अत्र पाठक्रमस्य बलीयस्त्वे तृतीयस्य ग्रहणं, सिद्धान्ते तु दशमस्य । अर्थे, अग्निहोत्रहोमः पूर्वमाम्नायते, पश्चाच्छ्रपणम् । एवं कर्तव्यं, यदि पाठो बलवान् । सिद्धान्ते श्रपणं पूर्वं, ततो होमः ॥ १ ॥

( प्रवृत्तिक्रमापेक्षया मुख्यक्रमस्य बलीयस्त्वाधिकरणम् ॥ २ ॥ )

[ २ ] अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् ॥ २ ॥ पू०

स्तो दर्शपूर्णमासौ । तत्र पूर्वं दध्नो धर्माः समाम्नाताः पश्चादाग्नेयस्य । प्रदानं चाऽऽग्नेयस्य पूर्वम् । तत्र संदेहः । किं प्रावृत्तिकेन क्रमेण पूर्वं दध्नोऽवदानाभिघारणासादनानि, उत मुख्यक्रमेण पूर्वमाग्नेयस्येति । किं प्राप्तम् । अनियम इत्येवं प्राप्ते, ब्रूमः । अवदानादिषु प्रावृत्तिकेन पूर्वं दध्न इति । कुतः । एवमनुज्ञातेभ्यो व्यवधायकेभ्यो नाभ्यधिकोऽन्यो वा व्यवधायकः कल्पितो भविष्यति । दर्शयति च दध्नः पूर्वमवदेयमिति ॥ २ ॥

यथाप्रदानं वा तदर्थत्वात् ॥ ३ ॥ सि०

यथाप्रदानं वा कर्तव्यानि । यस्य प्रदानं पूर्वं तस्यावदानानि पूर्वम् । तस्मादाग्नेयस्य । कुतः । प्रदानचोदनागृहीतत्वादवदानादीनाम् ।

---

अवदानाभिधारणासादनेषु—स्विष्टकृदवदानं, प्रयाजशेषाभिघारणं, बर्हिषि हवींष्यासादयति, इत्युदाहरणानि । प्रावृत्तिकमुख्यक्रमयोः कतरो बलीयानिति विचारः । तत्र दध्नः प्रथमं धर्माः प्रक्रान्ताः । यदि तथैव प्रवृत्त्या तस्याऽऽसादनादीनि प्रथमं क्रियन्ते, ततो भवत्यङ्गानां प्रधानासत्तिः । इतरथाऽन्यस्य प्रथमं क्रियेरंस्तत्र व्यवधानात्प्रधानप्रत्यासत्तिर्बाध्येत । प्रयोगवचनेन साहित्याद्यावद्भिः क्षणैर्व्यवधानमनुज्ञातं तावद्भ्योऽधिकैरपि कृतं स्यात् ॥ २ ॥

दध्नः पाठात्पूर्वं क्रियन्ते । अपरेद्युः पाठक्रमादेवाऽऽग्नेयस्य पूर्वम् । एतावति विषये मुख्यप्रावृत्तिकौ नावतरतः । पाठस्य प्रत्यक्षत्वात् । वेद्यासादने नास्ति पाठः, कस्य पूर्वमासादनमिति । तत्र यदि दध्नः पूर्वं प्रवृत्ता इति कृत्वा तस्यैवाऽऽसादनं क्रियते, तथा सति प्रधानक्रमेणाऽऽग्नेयस्याकृत्वाऽन्येषां कर्तव्यमिति नानुगृह्यते । कुतः ।

प्रदानोपक्रमा एते, न पृथक्पदार्था इत्युक्तम् । अभिघारणमवदानं च तस्य प्रदानचिकीर्षयैव क्रियते । आसादनमपि प्रदानार्थमेवाऽऽसन्नकरणम् । एवं दृष्टार्थता भवति । तस्मान्मुख्यक्रमेणाङ्गानां प्रयोग इति । यत्तु दध्नः पूर्वं प्रवृत्तिरिति । अर्थात्पूर्वं प्रवृत्तिः, न पाठात् । प्रावृत्तिकाच्च मुख्यक्रमो बलीयान् । मुख्यक्रमे गृह्यमाणे प्रथम एकः पदार्थो विप्रकृष्टकालः स्यात् । प्रावृत्तिके पुनर्गृह्यमाणे सर्वेषां विप्रकर्षः । तस्मान्मुख्यक्रमो बलीयानिति । अथ यल्लिङ्गमुक्तं, दध्नः पूर्वमवदेयमिति । अत्रोच्यते । श्रुताभिप्रायमेतद्भविष्यति । तस्माददोषः ॥ ३ ॥

लिङ्गदर्शनाच्च ॥ ४ ॥

लिङ्गमप्यस्मिन्नर्थे भवति । स वै ध्रुवामेवाग्रेऽभिघारयति, ततो हि प्रथमावाज्यभागौ यक्ष्यन् भवतीति । तस्मादपि मुख्यक्रमेण नियम इति ॥ ४ ॥

( इष्टिपूर्वत्वसोमपूर्वत्वयोर्विकल्पाधिकरणम् ॥ ३ ॥ )

[ ३ ] वचनादिष्टिपूर्वत्वम् ॥ ५ ॥ पू०

इष्टिपूर्वत्वं समाम्नातम् । तत्र संदेहः । किमिष्टिपूर्वत्वं, सोमपूर्वत्वं वा विकल्प्यते, अथवेष्टिपूर्वत्वमेवेति । किं प्राप्तम् । इष्टिपूर्वत्वमेव स्यात् । कुतः । वचनात् । वचनमिदं भवति । एष वै देवरथो यद्दर्शपूर्णमासौ, यो दर्शपूर्णमासाविष्ट्वा सोमेन यजते, रथस्पष्ट एवावसाने वरे देवानामवस्यतीति । नास्ति वचनस्यातिभारः । तस्मादिष्टिपूर्वत्वमेवेति ॥ ५ ॥

सोमश्चैकेषामग्न्याधेयस्यर्तुनक्षत्रातिक्रमवचनात्तदन्तेनानर्थकं हि स्यात् ॥ ६ ॥ सि०

इष्टिपूर्वत्वमित्येतद्गृह्णीमः । किंतु सोमश्चैकेषां पूर्वो दर्शपूर्णमासयोः

प्रथममाग्नेयस्ततो दधि, ततः पय इति । एकैकमेषामितिकर्तव्यता संनिहितामभिलषति । सहत्वयोगाद्द्विक्षणव्यवहितामेकैकम् । प्रत्यक्षपाठाच्च पूर्वं पूर्वस्य धर्मास्ततो द्वितीयतृतीययोः । तत्र यदि दध्नः पूर्वं क्रियेरंस्तथा सति पूर्वमासादनमनुभवितव्यमिति योऽवगतः प्रधानेनाङ्गानां क्रमः स बाध्येत । एतस्मिन्बाध्यमाने विप्रकर्षः । तस्मात्प्रावृत्तिको बाध्यते । प्रदानोपक्रमा एते न पृथक्पदार्था इत्युक्तम् । अग्रन्थोऽयम्, लिङ्गदर्शनं चेममेव न्यायं दर्शयति, यस्य पूर्वमवदानं तस्य पूर्वमभिघारणं हेतुवन्निगदेनार्थवादेन । अतस्तुल्यन्यायत्वादितरेष्वपि तथैव भवितुमर्हति ॥ ३ ॥ [४॥६॥]

१ ( अ० ५ पा० २ अ० ४ सू० ६ ) इत्यत्रोति शेषः ।

स्यात् । कुतः । अग्न्याधेयस्य ऋतुनक्षत्रातिक्रमवचनात् । यः सोमेन यक्ष्यमाणोऽग्नीनादधीत, नर्तुं प्रतीक्षेत न नक्षत्रमिति । यः सोमयागं कर्तुमादधीत, स न प्रतीक्षेत नक्षत्रं, नाप्यृतुं तावत्येवाऽऽदधीतेति, आनन्तर्यमुच्यते । इतरथा, ऋतुनक्षत्रातिक्रमवचनमनर्थकं स्यात् । आनन्तर्येऽनपेक्ष्यमाणे यस्यैव ऋतुनक्षत्रे उक्ते तस्यैव तयोरनादरः कीर्तितः स्यात् । तस्मादस्ति सोमाधानयोरानन्तर्यमिति । अपि च विस्पष्टा चाद्यतनी विभक्तिः, सोमेन यक्ष्यमाण इति । यदा सेष्टिपूर्वत्वमनुज्ञाय विवक्ष्यते, न तदाऽद्यतनकालविवक्षा । तत्रायं शब्दो विप्रतिषिध्येत । तस्मादानन्तर्यविवक्षेत्यवगम्यते ॥ ६ ॥

## तदर्थवचनाच्च नाविशेषात्तदर्थत्वम् ॥ ७ ॥

इतश्च सोमाधानयोरानन्तर्यम् । कुतः । तदर्थवचनात् । यः सोमेन यक्ष्यमाणोऽग्निमादधीतेति च, सर्वैरप्यसौ यक्ष्यमाणोऽग्निमाधत्ते सोमेन अग्निहोत्रादिभिश्च । नासति सोमस्य विशेषे सोमार्थता स्यात् । अयमसौ विशेषः स्यात् । यदानन्तर्यं सोमाधानयोरिति ॥ ७ ॥

## अयक्ष्यमाणस्य च पवमानहविषां कालनिर्देशा-दानन्तर्याद्विशङ्का स्यात् ॥ ८ ॥

सोमेनायक्ष्यमाणस्य च पवमानहविषां कालो निर्दिश्यते । यः

---

प्रागपि दर्शपूर्णमासाभ्यां कर्तव्यः । कथम् । 'सोमेन यक्ष्यमाणोऽग्नीनादधीत' इति हि श्रूयते । स चासाधारण उपपद्यते, यद्याधानोत्तरकालं सोमेन यजेत, न दर्शपूर्णमासोत्तरकालम् । एवमसाधारणः संबन्धः । इतरथा सोमदर्शपूर्णमासपशुबन्धादिभिः सर्वैरेव यक्ष्यते । तत्र सोमेन यक्ष्यमाण इति विशेषणं नावकल्पेत । न चैवंविधोऽस्ति, यः सोमेन नैव यक्ष्यते, येन तदपेक्षया विशेषणं भवेत् । नित्यो हि सोमः । ऋतुनक्षत्रप्रतिषेधश्च सोमाधानानन्तर्य एव घटते । सोमस्य हि कालो विहितः । स यदि प्रतिषिध्येत, किमर्थं तस्य विधानम् । यद्याधानोत्तरकालस्य सोमस्य कालप्रतिषेधस्ततो दर्शपूर्णमासोत्तरकाले वसन्तकालविधानं कृतार्थम् । तस्मात्सोमस्य द्वौ कालौ । प्राग्दर्शपूर्णमासयोरूर्ध्वं च । न चाऽऽधानानन्तरमन्यत्र किंचिदनुष्ठेयं सोम एव कर्तव्यः । किं तर्हि । पवमानेष्टित्रात्यपश्वग्निहोत्राणि कृत्वाऽपि सोमो दर्शपूर्णमासयोः प्राक्कर्तव्य इत्येतदपेक्षया सोमेन यक्ष्यमाण इत्यसाधारण्यमुपपद्यत एव । यथा तु भाष्यकारेणोक्तं, मात्यपशुः सोमाङ्गत्वाद्भवति । पवमानेष्टयोऽप्यग्निसंस्कारत्वाद्भवन्त्येव । अग्निहोत्रं तु नास्ति ॥ ६ ॥ [ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ ]

---

१ यः सोमेन यजेत सोऽग्निमिति पा० ।

सोमेनायक्ष्यमाणोऽग्निमादधीत, स पुरा संवत्सराद्धवींषि निर्वपेदिति। न खलु कश्चिदयक्ष्यमाणः। सर्वस्य विहितत्वात्। तस्मादनन्तरमयक्ष्यमाण इति गम्यते॥ ८॥

इष्टिरयक्ष्यमाणस्य तादर्थ्ये सोमपूर्वत्वम्॥ ९॥

इदं प्रयोजनसूत्रं वर्ण्यते। क्षीणमधिकरणम्। किं प्रयोजनं चिन्तायाः। इष्टिरयक्ष्यमाणस्य सोमेन निरभिसंधिक आधाने। तादर्थ्ये सोमपूर्वत्वम्। सोमार्थतायां त्वाधानस्य सोमपूर्वत्वं स्यात्।

( ब्राह्मणस्यापि सोमपूर्वत्वेष्टिपूर्वत्वरूपकल्पद्वयाधिकरणम्॥ ४॥ )

[ ४ ] उत्कर्षाद्ब्राह्मणस्य सोमः स्यात्॥ १०॥ पू०

अस्त्याधानं, तत्रैषोऽर्थः समधिगतः। इष्टिपूर्वत्वं सोमपूर्वत्वं चेति। इदानीं संदेहः। किं त्रयाणां वर्णानामिष्टिपूर्वत्वं सोमपूर्वत्वं वा, उत ब्राह्मणस्य सोमपूर्वत्वमेव, उत केवला पौर्णमास्युत्कृष्यते, ब्राह्मणस्योभौ कल्पाविति। अथवा कर्मान्तरमिदं यदूर्ध्वं सोमात्। अथवैकं हविरुत्कृष्यते, ब्राह्मस्योभावेव कल्पाविति। किं प्राप्तम्। त्रयाणां वर्णानामिष्टिपूर्वत्वं सोमपूर्वत्वं वा। कुतः। अविशेषात्। न कंचिद्विशेषमवगच्छामः। एवं प्राप्ते ब्रूमः। ब्राह्मणस्य सोमपूर्वत्वं स्यात्। कस्मात्। उत्कर्षात्। उत्कर्षो हि श्रूयते, आग्नेयो वै ब्राह्मणो देवतया, स सोमेनेष्ट्वाऽग्नीषोमीयो भवति। यदेवादः पौर्णमासं हविस्तत्तर्ह्यनुनिर्वपेत्। तर्ह्युभयदेवत्यो भवतीति। किमिव हि वचनं न कुर्यात्। तस्माद्ब्राह्मणस्य सोमपूर्वत्वमेवेति॥ १०॥

पौर्णमासी वा श्रुतिसंयोगात्॥ ११॥

यदुक्तं, ब्राह्मणस्य सोमपूर्वत्वमेवेति। तन्न। तस्याप्युभौ कल्पौ। कुतः। अविशेषात्। न हि कल्पयोर्ब्राह्मणस्य कश्चिद्विशेष आम्नायते। नन्विदानीमेवोक्तं, ब्राह्मणस्योत्कर्ष इति। नेति ब्रूमः। पौर्णमासीमात्रस्य तत्रोत्कर्षः। श्रुतिसंयोगः पौर्णमास्यास्तत्र, यदेवादः पौर्णमासं हविरिति। यावद्वचनं वाचनिकं, तत्र न न्यायः क्रमते। तुल्ययोरेकदेश उत्कृष्टे नूनमपरोऽप्येकदेश उत्कृष्यत इति॥ ११॥

सर्वस्य वैककर्म्यात्॥ १२॥

यदुच्यते केवला पौर्णमास्युत्कृष्यत इति। तन्न। कृत्स्नस्य दर्शपूर्णमासकर्मण उत्कर्षः। एवं फलेन संबन्धः। इतरथा न स्यात्फलम्।

एकदेशत्वात्पौर्णमास्याः केवलायामुत्कृष्यमाणायामवशिष्टस्य पूर्वत्र क्रियमाणस्य न फलं स्यात्। एकदेशत्वादफलत्वाच्चोक्तमपि न क्रियेत। समुदाये चोत्कृष्यमाणे भवति फलम्। तस्मादर्थात्समुदायस्योत्कर्षः, एवं कृत्स्नोपदेशोऽर्थवान् भविष्यतीति। तस्मात्सर्वस्योत्कर्षः। सोमपूत्वमेव ब्राह्मणस्येति ॥ १२ ॥

## स्याद्वा विधिस्तदर्थेन ॥ १३ ॥

नैतदस्ति कृत्स्नोत्कर्ष इति। यदेवं समुदायस्यासति वचन उत्कर्षः परिकल्प्येत। तस्मादन्यदेवैवंनामकं कर्म, ऊर्ध्वं सोमात्स्यात्। एवमेकदेशस्याश्रुतं फलं न कल्पयितव्यं भविष्यति। नामधेयं तु द्वयोः कर्मणोरेकम्। अक्षाः, पादाः, माषा इति यथा। पौर्णमासधर्मकं वा कर्मान्तरं चोद्यत इति। कर्मविधानं श्रुतेरेतद्भवति तद्वाक्यस्य बाधकम्। तस्मात्कर्मान्तरमिति ॥ १३ ॥

## प्रकरणात्तु कालः स्यात् ॥ १४ ॥

कर्मान्तरस्यैतद्वाचकमिति प्रमाणाभावः। प्रकृतस्य कर्मणो वाचकमिति प्रत्यक्षम्। यच्च सप्रमाणकं, तद्ग्राह्यम्। अन्यायश्चानेकार्थत्वम्। धर्मग्रहणे लक्षणाशब्दः श्रुतिसंभवे कल्प्यः स्यात्। अपि चास्य रूपं न गम्यते। रूपावचनाच्च कर्मान्तरम्। तस्मात्प्रसिद्धेन नाम्ना प्रकृतस्य कर्मणो ग्रहणं कालविधानार्थं स्यात्। फलवत्त्वाच्च कृत्स्नस्योत्कर्षः। ब्राह्मणस्य च तथैव। यत्तु, श्रुतिर्वाक्याद्बलीयसीति। अत्रोच्यते। यत्र फलं न श्रूयते, वाक्यार्थोऽपि तावत्तत्र गृह्यते। न चेह फलस्य श्रवणमस्ति। कल्प्यं फलमिति यद्युच्यते, न तत्फलं वचनमन्तरेण। तत्र फलवचनः शब्दः कल्प्येत। तेन च सहैकवाक्यता।

---

यदि केवला पौर्णमास्युत्कृष्येत, फलं न स्यात्। अथ दर्शोऽप्युत्कृष्येत, अश्रुतस्तस्योत्कर्षः। तस्मात्सोमोत्तरकालं कर्म विधीयतेऽन्यदेतत्। एवं कर्मविधानाच्छ्रुतिः। इतरथा पौर्णमासीकर्मणः सोमोत्तरकालता विधीयेत। तत्र वाक्यं स्यात्, यागस्याविधानात्। तस्माद्यागविधानात्पौर्णमासीसंज्ञकं कर्मान्तरम्। अथवोभयोः कर्मणोः साधारणीयं संज्ञा। ब्राह्मणस्योभौ कल्पौ ॥ १३ ॥

पौर्णमासप्रकरणे श्रुतं नालं कर्मान्तरं कल्पयितुम्। अतो निर्ज्ञातस्य यागस्य कालमुपदिश्य कृतार्थं वाक्यमशक्तं कर्मान्तरविधौ। बहुदृष्टप्रसङ्गाच्च धर्मातिदेशोऽप्ययुक्तः। सत्यां गतौ साधारणशब्दताऽप्ययुक्ता, अन्यायश्चानेकार्थत्वमिति। तस्मात्पौर्णमास्युत्कर्षः।

कालवचनेन तु सह प्रत्यक्षेणैकवाक्यतेति । तस्मान्न कर्मान्तरम् ॥१४॥
स्थितं तावदपर्यवसितमधिकरणम् । अन्तरा चिन्तान्तरं वक्ष्यते ।

( सोमपर्वत्वकल्पे सोमस्य विहितकालबाधाधिकरणम् ॥ ५ ॥ )

[ ५ ] स्वकाले स्यादविप्रतिषेधात् ॥ १५ ॥पू०

यः सोमेन यक्ष्यमाणोऽग्निमादधीत, नर्तु प्रतीक्षेत न नक्षत्रमिति । अत्र संदेहः । किमाधानस्यायं कालविशेषबाध उत सोमस्येति । किं प्राप्तम् । अधानस्य कालबाधः । स्वकाले स्यात्सोमः । कुतः । अविप्रतिषेधात् । अङ्गमाधानम् । तस्य कालबाधो न्याय्यः, न प्रधानस्य [1]अङ्गगुणविरोधे च तादर्थ्यादिति वक्ष्यते ॥ १५ ॥

अपनयो वाऽऽधानस्य सर्वकालत्वात् ॥१६॥ सि०

अपनयो वा सोमकालस्य स्यात् । कुतः । आधानस्य सर्वकालत्वात् । नैवाऽऽधाने कश्चित्कालनियमोऽस्ति, यदहरेवैनं श्रद्धोपनमेत्तदहरादधीत, इति । अप्राप्तमेव तदाधानस्य, यत्प्रतिषिध्यते । तस्मात्सोमस्य कालबाध इति ॥ १६ ॥

( अपर्यवसितस्य चतुर्थाधिकरणस्य पुनरारम्भः ॥ ४ ॥ )

पौर्णमास्यूर्ध्वं सोमाद्ब्राह्मणस्य वचनात् ॥ १७ ॥

स्थितादुत्तरम् । न चैतदस्ति, कृत्स्नौ दर्शपूर्णमासावुत्कृष्येते । ऊर्ध्वं सोमात्केवला पौर्णमास्युत्कृष्यते । कुतः । वचनात् । वचनमिदम् । यदेवादः पौर्णमासं हविस्तत्तर्ह्यनुनिर्वपेदिति । नास्ति वचनस्यातिभारः। तस्मात्पौर्णमासीमात्रमुत्कृष्येत। यत्तु फलं नास्तीति, समुदायादेव फलं भविष्यतीति । वचनादेवं विज्ञानात् । तस्माददोषः ॥ १७ ॥

एकं वा शब्दसामर्थ्यात्प्राकृत्स्नविधानात् ॥१८॥सि०

एकं वा हविरुत्कृष्येत, न कृत्स्ना पौर्णमासी । कुतः । शब्दसामर्थ्यात् । एकं हविरुत्क्रष्टुं शब्दः समर्थः । यदेवादः पौर्णमासं हविरिति श्रूयते। यावद्वचनं वाचनिकं, तावद्वचनेनोत्क्रष्टुं शक्यते, नान्यदपि। प्राक्सोमात्कृत्स्नं विधीयते । ततो यद्वचनेनोत्कृष्यते, तदूर्ध्वं सोमात्, यन्नोत्कृष्यते, तत्प्राग्भवितुमर्हति । तस्मादेकं हविरुत्क्रष्टव्यम् । ब्राह्मणस्योभौ कल्पाविति ॥ १८ ॥

अतस्तत्संबन्धेन फलस्य चोदितत्वाद्दर्शोऽप्युत्कृष्येतेति ॥ १४ ॥ [ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ ]

[1] ( अ० १२ पा० २ अ० ९ सू० २७ )।

( उपांशुयागस्य सोमोत्तरमनुत्कर्षाधिकरणम् ॥६॥ )

[६] पुरोडाशस्त्वनिर्देशे तद्युक्ते देवताभावात् ॥१९॥ सि०

इदं श्रूयते । आग्नेयो वै ब्राह्मणो देवतया, स सोमेनेष्ट्वाऽग्नीषोमीयो भवति । यदेवादः पौर्णमासं हविस्तत्तर्ह्यनुनिर्वपेत् । तर्ह्युभयदेवत्यो भवतीति । यस्मात्तस्मिन्काले सोऽग्नीषोमीयो भवति, न प्राचीने काले तस्माददो हविरनुनिर्वपेदिति । अग्नीषोमीयत्वं विधाय द्विदेवताकत्वं हेतुत्वेन निर्दिश्यते । तस्मादग्नीषोमीयं हविर्हेतुमत्स्यात्, नान्यदेवताकम् । तदाऽसावग्नीषोमौ यष्टुमर्हति, न प्राक् । साऽस्य देवता, इति भवति पुरुषस्यापि यष्टुर्देवताभिसंबन्धः । तस्मात्पुरोडाशोऽग्नीषोमीयो नान्यद्धविरिति सिद्धम् ॥ १९ ॥

आज्यमपीति चेत् ॥ २० ॥

इति चेत्पश्यसि, अग्नीषोमीयत्वात्पुरोडाश इति । आज्यमपि ह्यग्नीषोमीयम् । तस्मात्तदप्युत्कृष्येत ॥ २० ॥

न मिश्रदेवतत्वादैन्द्राग्नवत् ॥२१॥

मिश्रदेवतं ह्याज्यम्, अग्नीषोमीयं, प्राजापत्यं, वैष्णवमिति च । पुरोडाशस्त्वग्नीषोमीय एव । न त्वत्र मिश्रदेवतस्य वादः । मिश्रदेवतस्य हि प्रागपि भावोऽवकल्प्यते । यद्यपि तदानीं यजमानो नाग्नीषोमीयस्तद्देवतार्हः[२], तथाऽप्याज्यं हविः करिष्यत्येव । प्रजापतिं यक्ष्यति, विष्णुं वा । तस्मात्तस्योर्ध्वभावे न एष हेतुरग्नीषोमीयत्वं नाम । यथा चतुर्धाकरणं मिश्रदेवतत्वादैन्द्राग्ने न भवति[१], तद्वत् । तत्राऽऽग्नेय इति, ऐन्द्राग्नो न शक्यते वदितुं, तद्धितः साकाङ्क्षाभोत्पद्यत इति । एवमिहाग्नीषोमीयशब्देन न शक्यमाज्यं वदितुम् । अनग्नीषोमीयोऽप्यसौ[३] । तस्माच्छक्यं प्राग् यजमानेन कर्तुमिति । तस्मान्न तस्योत्कर्षेऽग्नीषोमीयता यजमानस्य हेतुरिति । मिश्रदेवतस्याग्रहणसामान्यादैन्द्राग्नवदित्युक्तम् ॥ २१ ॥

( विकृतीनामैन्द्राग्नादीनां सद्यस्कालताधिकरणम् ॥ ७ ॥ )

[७] विकृतेः प्रकृतिकालत्वात्सद्यस्कालोत्तरा विकृतिस्तयोः प्रत्यक्षशिष्टत्वात् ॥ २२ ॥ सि०

इह वैकृतानि कर्माण्युदाहरणम् । ऐन्द्राग्नमेकादशकपालं निर्व-

---

१ पा सू० ( ४-२-२४ ) । २ नाग्नीषोमदेवतार्ह इति पा० । ३ अग्नीषोमीयो यसाविति पा० ।

पेदित्येवमादीनि । तत्र संदेहः । किमेता विकृतयः सद्यस्काला उत द्व्यहकाला इति । किं प्राप्तम् । विकृतिः प्राकृतान् धर्मांश्चोदकेन गृह्णाति । अतस्ते धर्मा आनुमानिकाः । पौर्णमासी चान्यः कालः । स यदि वा प्रकृत्या गृह्येत, यदि वा विकृत्या, असंभवेऽन्यतरस्याः कालस्त्यक्तव्यः । तत्राऽऽनुमानिको वैकृतस्य त्यज्यतां, न प्रत्यक्षश्रुतः प्राकृतस्येति न्याय्यम् । तस्मात्सद्यस्काला एता विकृतयो भवेयुरिति ॥ २२ ॥

द्वैयहकाल्ये तु यथान्यायम् ॥ २३ ॥

द्वैयहकाल्ये क्रियमाणे यथान्यायं कृतं भवति । तस्माद्द्वैयहकाल्यं स्यात् । चोदकस्तथाऽनुगृहीतो भवति । प्रकृतौ हि श्रूयते । पूर्वेद्युरग्निं गृह्णाति । उत्तरमहर्देवतां यजतीति । तस्माद्व्यहकालमेकमभिनिर्वर्त्य, तदहरेवोपक्रम्यापरेद्युः परिसमापयेत् ॥ २३ ॥

वचनाद्वैककाल्यं स्यात् ॥ २४ ॥

नैतदेवं, द्व्यहकाला विकृतयो भवेयुरिति । सद्यस्कालाः स्युः । कस्मात् । वचनमिदं भवति, य इष्ट्या पशुना सोमेन ( आग्रयणेन ) वा यक्ष्यमाणः स पौर्णमास्याममावास्यायां वा यजेतेति । साङ्गस्यैतद्वचनम् । तस्मात्साङ्गं पौर्णमास्याममावास्यायां वा कुर्वीतेति गम्यते । तेन सद्यस्काला विकृतयः ॥ २४ ॥

( सांनाय्याग्नीषोमीयविकाराणां सोमोत्तरकालताधिकरणम् ॥ ८ ॥ )

[ ८ ] सांनाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात्प्रकृतिवत् ॥ २५ ॥ सि०

इह सांनाय्यविकाराश्च, अग्नीषोमीयविकाराश्चोदाहरणम् । सांनाय्यविकारास्तावद्यथा, आमिक्षा, पशुरिति । अग्नीषोमीयविकाराः, अग्नीषोमीयमेकादशकपालं निर्वपेच्छ्यामाकं ब्राह्मणो वसन्ते ब्रह्मवर्चसकाम इत्येवमादयः । तत्र संदेहः । किमेते प्रागूर्ध्वं च सोमादुतोर्ध्वमिति । किं प्राप्तम् । प्रागूर्ध्वं च, विशेषानवगमात् । एवं प्राप्ते ब्रूमः । ऊर्ध्वं सोमात्स्युरिति । प्रकृतिर्ह्येषामूर्ध्वं सोमात् । चोदकेनैभिरप्यूर्ध्वं सोमाद्भवितव्यम् । सांनाय्यस्योर्ध्वं सोमाद्वचनं, नासोमयाजी संनयेदिति ।

---

अनुदाहरणमग्नीषोमीयः । तस्य हि वचनेन चोदकप्राप्तः कालो बाध्यते । तद्वि॰

---

१ अग्नीषोमीयः—अग्नीषोमीयः पशुरित्यर्थः । २ वचनेन—सोमप्राक्कालत्वविधायकेनेति शेषः ।

अग्नीषोमीयस्यापि, आग्नेयो वै ब्राह्मणो देवतया, स सोमेनेष्ट्वाऽग्नीषोमीयो भवति, यदेवादः पौर्णमासं हविः, तत्तर्ह्यनुनिर्वपेदिति, तर्हि स उभयदेवत्यो भवतीति । तद्विकृतिरपि सोमादूर्ध्वं भवितुमर्हति ॥ २५ ॥

( सोमविकाराणां दर्शपूर्णमासोत्तरकालताधिकरणम् ॥ ९ ॥ )

## [ ९ ] तथा सोमविकारा दर्शपूर्णमासाभ्याम् ॥२६॥ सि०

सोमविकारा गवादयः, एकाहाः । तेषु संदेहः । किं दर्शपूर्णमासाभ्यामूर्ध्वं च प्रयोक्तव्या उतोर्ध्वमिति । किं प्राप्तम् । अनियमः, अविशेषात् । एवं प्राप्ते ब्रूमः । तथा सोमविकारा दर्शपूर्णमासाभ्यामूर्ध्वं स्युः । ज्योतिष्टोमो दर्शपूर्णमासाभ्यामूर्ध्वं भवति, दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति । चोदकेनैष धर्मो गवादिष्वप्येकाहेषु प्राप्नोति । तस्मात्तेऽपि दर्शपूर्णमासाभ्यामूर्ध्वं कर्तव्या इति ॥ २६ ॥

इति श्रीशबरस्वामिकृतौ मीमांसाभाष्ये पञ्चमाध्यायस्य
चतुर्थः पादः ॥

समाप्तश्च पञ्चमोऽध्यायः ॥

---

काराश्चानुदाहरणम् । न तेषां प्रकृत्या सोमादूर्ध्वकालोऽनुभूतः । केवलाऽऽमिक्षाऽत्रोदाहरणम् ॥ २५ ॥

दर्शपूर्णमासोत्तरकालं सोमस्य काले चोद्यमाने विकृतीनामपि तदूर्ध्वता प्राप्नोत्येव । तस्मात्पूर्वाधिकरणेनैव सिद्धत्वान्नैवाऽऽरम्भणीयम् । प्रागपि दर्शपूर्णमासाभ्यां सोमः श्रूयत इत्यनेन विशेषेण प्रस्तावः । अत्र किं गवादय ऊर्ध्वं प्राग् भवन्तीति संप्रधारणा । तत्रानियमे प्राप्ते । उच्यते । न हि वचनमस्ति, यत्प्राक्कालतां सोमस्य विदध्याद्दर्शपूर्णमासयोः । कुतस्तर्हि । अर्थप्राप्तः । न चार्थप्राप्तं चोदकः प्रापयति । अथोच्येत, आधानानन्तरः सोमस्य कालो वचनादिति । न शक्यम् । प्रकृत्यवरुद्धो न हि संभवति विकृतेः । स हि यद्वा प्रकृत्याऽवरोधनीयो यद्वा विकृत्या । तत्र यदि प्रकृतिर्नावरुणद्धि, विकृतेः प्राप्तिरेव नास्ति । प्रकृत्या चेदवरुद्धं सामर्थ्यादेवेतरासां नास्ति । तस्मादूर्ध्वं दर्शपूर्णमासयोर्गवादय इति सिद्धम् ॥ २६ ॥

इति श्रीमद्भट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां
पञ्चमाध्यायस्य चतुर्थः पादः ॥

समाप्तश्च पञ्चमोऽध्यायः ॥

अथ षष्ठेऽध्याये प्रथमः पादः ॥

( स्वर्गकामाधिकरणम् ॥ १ ॥ )

[ १ ] द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः ॥ १ ॥ पू०

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेतेत्येवमादि समाम्नायते । तत्र संदेहः । किं स्वर्गो गुणतः, कर्म प्रधानतः, उत कर्म गुणतः, स्वर्गः प्रधानत इति । कुतः संशयः । इह स्वर्गकामोऽपि निर्दिश्यते, यजेतेत्यपि । अत्र स्वर्गकामयागयोः संबन्धो गम्यते । तस्मिंश्च संबन्धे किं यागः साधनत्वेन संबध्यते, उत साध्यत्वेनेति भवति विचारणा ।

तत्र यदि स्वर्गकामस्य पुरुषस्य यागः कर्तव्यतया चोद्यते, स्वर्गकामेन यागः कर्तव्य इति, स्वर्गेच्छाविशिष्टस्य स सिध्यतीति गम्यते । स्वर्गेच्छा तत्र पुरुषस्य यागं प्रत्युपादिश्यते । तेन तस्य स सिध्यति, नान्यस्येति । यः स्वर्गकामः, स शक्नोति पुरुषो यागं साधयितुम् ।

---

औपोद्घातिकमेतत् । फलवत्त्वेऽवगते क एतैरधिक्रियत इति युक्तो विचारः । अफलवत्त्वे तु विचारानुपपत्तिः । यदि चैवं कामशब्देः फलमभिधीयते ततो भावार्थाधिकरणे चिन्ता—किं भावशब्दाः फलसंबन्धिन उत द्रव्यगुणशब्दा इति । ततोऽपूर्वचिन्ता । ततोऽतिदेशः । फलसद्भावे च ( तद्विकाराच् ) चोदनालक्षण इति विचारः । अयमेवावसरोऽध्यायस्य । कथम् । भेदाभेदशेषशेषिप्रयोजकाप्रयोजकत्वेक्रमयुक्तेः कर्मभिः कोऽधिक्रियत इति विचारस्यायमेवावसरः । किं स्वर्गो गुणतः, कर्म प्रधानत इत्ययुक्तमिदम् । स्वर्गशब्दो यथाख्यातेन संबध्यते न कामपदेन ।

अथ कामपदेन, नाऽऽख्यातेन । कामपदेन स्वपदोपात्तेन श्रुत्याऽस्य संबन्धः । आख्यातेन पदान्तरोपात्तत्वाद्वाक्यम् । श्रुतिश्च वाक्याद्बलीयसी । तस्मात्स्वर्गशब्दः पुरुषविशेषणत्वेनोपक्षीणत्वान्नान्येन संबन्धुमर्हति । यथा राजजातिविशिष्टः कर्ता राजसूयसाधनं विधीयते, राजसूयो वा तदर्थत्वेन । राजजातिर्न साध्या, नापि साधनम् ,

---

१ कर्मणां फलवत्त्वविचारस्य नाधिकारलक्षणमात्रोपयोगित्वं, किं तु, उक्तोच्यमानवक्तव्यसमस्तार्थोपयोगित्वमित्येतद्दर्शयति–यदि चैवमित्यादिना । २ ( अ० २ पा० १ अ० १ ) । ३ अतिदेशपदेन समस्तस्योत्तरषट्कस्य परामर्शः क्रियते । ४ एवं प्रमाणलक्षणस्यापि प्रथमाध्यायस्यैतद्विचारापेक्षितत्वं दर्शयति–फलसद्भावे चेत्यादिना । ५ युक्तेति—कामपदोपात्तेति शेषः ।

अथ स्वर्गकामस्य कामः कर्तव्यतया चोद्यते, ततो यागविशिष्टा कर्तव्यतेति यागः साधकोऽभ्युपगम्यते । स चायमुभयोऽप्यर्थ एकस्मादुच्चरिताद्वाक्यादवगम्यते । यागो वा कर्तव्यः, कामो वेति । न चैतद्यौगपद्येन संभवति । यदा कामो, न तदा यागः । यदा यागो, न तदा कामः । वचनव्यक्तिभेदादुपपन्नः संशयः ।

तथेदमपरं संदिग्धम् । किं प्रीतिः स्वर्ग उत द्रव्यमिति । यदि द्रव्यं स्वर्गस्ततः प्रधानं कर्म, द्रव्यं गुणभूतम् । अथ प्रीतिः स्वर्गस्ततो यागो गुणभूतः, स्वर्गः प्रधानमिति । कुतः संशयः । नास्त्यत्र कामस्य गुणत्वेन प्राधान्येन वा श्रुतिः । संबन्धमात्रं त्वस्य यागेन गम्यते । द्रव्यस्य तु कर्मार्थता[1] स्वभावतः । पुरुषप्रयत्नस्य च फलार्थता[2] । किं तावत्प्राप्तम् । स्वर्गो गुणतः, कर्म प्रधानत इति । तत्रैवं तावद्वर्णयन्ति । द्रव्यं स्वर्ग

---

एवं न स्वर्गः । तस्मात्स्वर्गेच्छाविशिष्टः कर्ता कर्मसंबन्धी । एवं चेत्संशयानुपपत्तिः । किं च 'यजेत स्वर्गकामः' इति सामानाधिकरण्याद्यागे गुणभूतः कर्ता निर्दिश्यते । यथा देवदत्तः पचतीत्यत्र न देवदत्तार्थः पाक एवमिहाप्यत्यन्तगुणभूत एव कर्ता प्रतीयते ।

उच्यते[3] । नायमेकान्तो यत्प्रथमान्तं गुणभूतं, प्रधानमपि भवति क्रियायाम् । यथा, मलिनः स्नायादिति । संशयोऽपि युक्त एव । पदेतरार्थेऽवगते पदार्थो[4]ऽवधार्यते, तदुत्तरकालं वाक्यार्थः । तत्र यदि स्वर्गशब्देन द्रव्यमभिधीयते, ततोऽसौ[5] साधनत्वेन तत्कामयमानो यागे साधनांशेनैव संबध्यते । अथास्य प्रीतिरभिधेया, ततस्तामात्मसंबन्धित्वेन कामयमानः स्वर्गकामशब्देनाभिधीयते । तदुत्तरकालं यागेनाभिसंबध्यमानः साध्यांशेनैव संबध्यते । यागस्तु गुणभूतः । एवं द्विप्रकारायां कामनायां स्वर्गो गुणभूतः, अथ प्रधानभूत इत्युपपन्नः संशयः । पदे पदेतरार्थवाक्यानि निर्णेतव्यानि । राजजात्याऽपि न सादृश्यम् । न हि कामयोगिनी जातिः ।

द्विप्रकारः[6] पूर्वपक्षः । स्वर्गेच्छा[7]विशिष्टस्य यागे कर्तृता, अतद्विशिष्टेन यागो न

---

१ कर्माङ्गताऽवगम्यते–पा० । २ प्रीत्यर्थताऽवगम्यते–पा० । ३ किं चेत्यादिनोक्तमाक्षेपमादौ समाधत्ते–उच्यत इति । ४ पदार्थः–स्वर्गकामपदार्थ इत्यर्थः । ५ ततोऽसाविति—स्वर्गकामपदोपात्तः पुरुष इत्यर्थः । ६ द्विप्रकार इति–तत्रैकस्तावत्साधनत्वेन स्वर्गादिविधानमिति । ७ द्वितीयमाह—स्वर्गेच्छेति ।

इति । कथमवगम्यते । सर्वेषामेव शब्दानामर्थज्ञाने लौकिकः प्रयोगोऽभ्युपायः । तस्मिंश्च लौकिके प्रयोगे द्रव्यवचनः स्वर्गशब्दो लक्ष्यते । कौशेयानि सूक्ष्माणि वासांसि स्वर्गः, चन्दनानि स्वर्गः, द्व्यष्टवर्षाः स्त्रियः स्वर्ग इति । यद्यत्प्रीतिमद्द्रव्यं तत्तत्स्वर्गशब्देनोच्यते । तेन सामानाधिकरण्यात्प्रीतिमद्द्रव्यं स्वर्ग इति मन्यामहे । [3]उपमानाच्छब्दप्रवृत्तिरिति चेत् । न हि कस्मिंश्चिदनुपमिते लोके प्रसिद्धः, यस्यैतदुपमानं स्यात् । तस्मान्नोपमानम् । अतो द्रव्यं स्वर्ग इति ।

नेत्याह । प्रीतिः स्वर्ग इति । न द्रव्यम् । व्यभिचारात् । तदेव हि द्रव्यं कस्यांचिदवस्थायां न स्वर्गशब्दोऽभिदधाति । प्रीतिं तु न कस्यांचिदवस्थायां नाभिदधाति । तस्मादन्वयव्यतिरेकाभ्यामेतदवगम्यते—प्रीतौ स्वर्गशब्दो वर्तत इति । नैतदस्ति, प्रीतेरभिधायकः स्वर्गशब्द इति । कुतः । विशेषणत्वात्प्रीतेः । यद्विशेषणं, न तच्छब्देनोच्यते। तद्यथा, दण्डीति दण्डनिमित्तः पुरुषवचनः । दण्डोऽस्य निमित्तं, नाभिधेयः । एवमेष न प्रीतिवचनः । प्रीतिसाधनवचनस्त्वेष स्वर्गशब्द इति ।

ननु स्वर्गशब्दो लोके प्रसिद्धो विशिष्टे देशे । यस्मिन्नोष्णं, न शीतं, न क्षुद्, न तृष्णा, नारतिः, न ग्लानिः, पुण्यकृत एव प्रेत्य तत्र

---

कर्तव्यः । यथा राजजातिविशिष्टेन राजसूयः कार्यो नातद्विशिष्टेन, तद्वदत्रापि । एवं चेन्नावश्यमुपादेयं प्रीतिमद्द्रव्यम् । तद्विषया त्विच्छाऽदृष्टविषयद्वारेणोपकरिष्यति । 'अथाप्यदृष्टेन तथाऽपि न दोषः ' इत्यस्माद्ग्रन्थादयं द्वितीयः पक्षोऽनुमीयते । शब्दवस्तुभ्यां च पूर्वः पक्षः । कथम् । यजेतेति प्रत्ययो यस्यैव परः श्रूयते तस्य श्रुत्या कर्तव्यतामाह । अपि चानिष्पन्नत्वाद्यागस्य भाव्यत्वम् । यच्च भाव्यं तत्कर्तव्यतां प्रतिपद्यते । यन्निष्पन्नं तत्करणत्वं प्रतिपत्तुं शक्नोति दात्रादि । अनेन प्रकारेण भाव्यमानो यागो न स्वर्गः । किमुत यदा प्रीतिमद्द्रव्यवचन एव लोके स्वर्गशब्दः [illegible] स्साधनांशेनैव काम्यते । यद्यत्प्रीतिमद्द्रव्यं तत्तत्स्वर्गशब्देनोच्यते तद्यथा दण्डीत्यनेनास्य ग्रन्थस्य संबन्धो व्यवहितोऽपि ।

---

१ कौशिकानि. पा० । २ शब्दवस्तुभ्यां—श्रुतिलिङ्गाभ्यामित्यर्थः । ३ व्यवहितोऽपि—उपमानाच्छब्दप्रवृत्तिरित्यारभ्य—नोपमानमित्यन्तेनेति शेषः । तस्मादयं ग्रन्थः 'प्रीतिसाधनवचनस्त्वेष स्वर्गशब्दः ' इत्यस्यान्ते, उत्कृष्य व्याख्येय इत्याशयः ।

गच्छन्ति नान्ये । अत्रोच्यते । यदि तत्र केचिदमृत्वा न गच्छन्ति, तत आगच्छन्त्यजनित्वा वा, न तर्हि स प्रत्यक्षो देश एवंजातीयकः । नाप्यनुमानाद्गम्यते । नान्येन । ननु चान्ये सिद्धाः केचिद्दृष्टवन्तः, ते चाऽऽख्यातवन्त इति चेत् । न तत्र प्रमाणमस्ति, सिद्धा एवंजातीयकाः सन्ति, ते च दृष्ट्वाऽऽचक्षीरन्निति । तस्मादेवंजातीयको देश एव नास्ति ।

ननु च लोकादाख्यानेभ्यो वेदाच्चावगम्यते, देश एवंजातीयकः स्वर्ग इति । तन्न । पुरुषाणामेवंविधेन देशेनासंबन्धादप्रमाणं वचः । आख्यानमपि पुरुषप्रणीतत्वादनादरणीयम् । वैदिकमपि स्वर्गाख्यानं विधिपरं नास्त्येव । भवति तु विध्यन्तरेणैकवाक्यभूतं स्तुतिपरम् । यद्यपि केवलसुखश्रवणार्थापत्त्या तादृशो देशः स्यात्, तथाऽप्यस्मत्पक्षस्याविरोधः, प्रीतिसाधने स्वर्गशब्द इति । तेन देशेन व्यवहाराभावात्कुतस्तस्याभिधायकः स्वर्गशब्दो भविष्यति । यदा प्रीतिमद्द्रव्यं स्वर्गस्तदा ब्रूमः । द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्ध इति । यागोऽत्र कर्तव्य इति श्रूयते स्वर्गकामस्य । तत्रावश्यं स्वर्गस्य यागस्य च संबन्धः । तत्र भूतं द्रव्यम् । भव्यं कर्म । भूतस्य च भव्यार्थता न्याय्या । दृष्टार्थत्वात् । न तु भव्यस्य भूतार्थता । तत्र दृष्ट उपकारस्त्यज्येत ।

---

अत्र ग्रन्थः । यद्यपि केवलसुखश्रवणार्थापत्त्या तादृशो देशः स्यात्तथाऽप्यस्मत्पक्षस्याविरोधः प्रीतिसाधनं स्वर्ग इति । तेन देशेन व्यवहाराभावात्कुतस्तस्याभिधाता स्वर्गशब्दो भविष्यतीति । एकस्य[1] प्रीतिः स्वर्गशब्दवाच्याऽपरस्य प्रीतिमद्द्रव्यम् । विशिष्टो देश उभयोरप्यवाच्यः । किं कारणं, तस्याप्रत्यक्षत्वेन व्यवहाराभावैः । तेन व्यवहाराभावात्प्रयोगाभावः ।

किंतु यस्य प्रीतिरभिधेया, तत्साधनं च यागः, तेन सा नानुभूयत[2] इत्यर्थापत्त्या वाच्योऽपि स कल्प्यते । यथाऽपूर्वम् । नन्वस्मिन्नपि देशे शक्या प्रीतिरनुभवितुम् । चन्दनानुलेपनादिभिः कृतैरनन्तरं प्रीतिरुपलभ्यते । यैषा भोजनादिप्रीतिरेषा क्षणिकी । कर्मणां त्वल्पमध्यममहतामल्पमध्यममहत्य एव प्रीतयः[3] । तत्र या प्रीतिर्निरतिशयाऽ-

---

१ एकस्य–सिद्धान्तवादिनः । अपरस्य–पूर्वपक्षवादिनः । २ सा नानुभूयत इति—अनुभवितव्या प्रीतिर्विशिष्टदेशादृते नानुभूयत इत्यर्थः । ३ प्रीतय इति–( अ० १ पा० २ अ० १ सू० १७) इत्यत्र फलमित्युक्तमिति शेषः ।

कथं पुनरवगम्यते, यागः कर्तव्यतया चोद्यत इति । यदा कामस्यापि कर्तव्यताऽस्माद्वाक्यादवगम्यते । उच्यते, कामस्य कर्तव्यता वाक्यात् । यज्यर्थस्य कर्तव्यता श्रुतेः । श्रुतिश्च वाक्याद्बलीयसी । तस्मादयमर्थः, स्वर्गकामो यागं कुर्यादिति । स्वर्गकामस्य यागः कर्तव्य इति । कर्तव्यश्च सुखवान् । अकर्तव्यो दुःखवान् । कर्तव्य इति चैनं ब्रूते । तस्मात्सुखफलो यागो भविष्यति, स तु यस्येच्छा तस्य सिध्यति, नान्यस्येति गम्यते । तेन स्वर्गेच्छा यागस्य गुणभूता । सर्वस्यापि

---

नुभवितव्या, सा चोष्णशीतादिद्वन्द्वरहिते देशे शक्याऽनुभवितुम् । अस्मिंश्च देशे मुहूर्तशतभागोऽपि द्वन्द्वैर्न मुच्यते । तस्मान्निरतिशयप्रीत्यनुभवाय कल्प्यो विशिष्टो देशः । चन्दनादिजन्या तु या प्रीतिश्चन्दनादीन्येव तस्या उत्पादकानि न यागः । अस्मिंश्च देशे यावज्जङ्गमतिर्यगादि तत्सर्वं प्रीत्यप्रीती अनुभवति । न च तैः कर्माणि कृतान्यस्मिन्देशे । अतो ये साधारणे प्रीत्यप्रीती, ते स्वभावकृते ।

अथोच्येतान्यस्मिञ्जन्मनि तैः कृतानि कर्माणि येन प्रीतिमनुभवन्तीति । यथाऽस्मिञ्जन्मनि सर्वाणि न कुर्वन्ति, एवमन्यस्मिञ्जन्मनि । अनुभवन्ति च सर्वाणि प्रीतिम् । अतो यदीयं कर्मजन्या स्यात्कैश्चिदेवानुभूयेत । अकर्मजन्यत्वे न दोषः । तस्मात्स्वर्गस्य प्रीतिरभिधेया । सा चाशक्या विशिष्टदेशादृतेऽनुभवितुमिति विशिष्टदेशोऽनुमीयते । यद्यपि केवलसुखश्रवणात्स्वर्गस्येति–अभ्युपेत्यवादेनायं ग्रन्थः, यतः स्वर्गशब्देन द्रव्यमभिधीयते । भवता प्रीतिसामर्थ्याद्विशिष्टो देशः कल्प्यते, तथाऽपि प्रीतिमद्द्रव्यं तस्य साधनम् । तस्य देशस्य तु व्यवहाराभावात्स्वर्गशब्देनावाच्यता भवतोऽपि । तस्मान्निष्प्रमाणको विद्यमानोऽपि नास्मत्पक्षं विरुणद्धि । यथा च स्वर्गशब्दो द्रव्यवचनस्तथोक्तं लोकव्यवहारादिति ।

स्वर्गकामस्य यागः कर्तव्यः । कर्तव्यश्च सुखवानकर्तव्यो दुःखवान् । कर्तव्य इति चैनं ब्रूते । तस्मात्सुखफलो यागो भविष्यतीति—अयुक्तोऽयं ग्रन्थः । यदा यागो भाव्यस्तदाऽन्यद्भाव्यतां न प्रतिपद्यते । कतरद्वा फलवदाख्यातं दृष्टं, येनात्रापि फलमनुमीयेत । अनुमीयमानमपि द्रव्यवचनतां प्रतिपद्यते । तस्मादस्य

---

१ साधारणे—सर्वप्राणिसाधारणे । २ स्वभावकृते–दृष्टकारणमात्रजन्ये इत्यर्थः । ३ स्वर्गस्य–स्वर्गशब्दस्य । ४ प्रीतिः–निरतिशया प्रीतिः । ५ निष्प्रमाणक इति–सिद्धान्तिपक्षे विशिष्टो देशो निष्प्रमाणक इत्यर्थः । ६ विद्यमान इति–पूर्वपक्षिमत इति शेषः । ७ अनुमीयमानमपि–फलपदमिति शेषः ।

कर्मणो द्रव्येच्छा भवति गुणभूता। तया द्रव्यमानेतुं यतते दृष्टेनैव द्वारेण। इह तु स्वर्गसंज्ञकद्रव्येच्छैव नियम्यते। यथैव सा गुणभूता प्राप्ता, तथैव सती नियम्यते, दृष्टेनैव द्वारेण नादृष्टेनोपकारेण। तेन स्वर्गेच्छया गुणभूतया स्वर्गद्रव्यं प्रति यतिष्यते यागं साधयितुम्। अथाप्यदृष्टेन तथाऽपि न दोषः॥ १॥

## असाधकं तु तादर्थ्यात्॥ २॥ सि०

तुशब्देन पक्षो व्यावर्त्यते। तत एतत्तावद्वर्णयन्ति, प्रीतिः स्वर्ग इति। कुतः। एवमुक्तं भवता। प्रीतिविशिष्टे द्रव्ये स्वर्गशब्दो वर्तेत इति। यद्येवं, पूर्वं तर्हि प्रीतौ वर्तितुमर्हति। तां हि स न व्यभिचरति। व्यभिचरति पुनर्द्रव्यम्। यस्यैव प्रीतिसाधनस्य द्रव्यस्य वक्ता स्वर्गशब्दस्तदेव यदा न प्रीतिसाधनं भवति, तदा न स्वर्गशब्देनाभिधीयते। तस्मात्प्रीतिवचनोऽयम्। यत्तूक्तं दण्डिशब्दवदिति। सोऽपि प्रतीते शब्दाद्दण्डे, दण्डिनि प्रत्ययमादधाति। अन्तर्गतस्तत्र दण्डशब्दः। स

---

कीदृशी वर्णना। यागस्तावद्वस्तुश्रुतिभ्यां कर्तव्यरूपः। यश्च कर्तव्यरूपस्तस्य लोके कर्तव्यतोत्तरकालमभ्युदयो दृष्टः। इहापि कर्तव्यरूपत्वाद्भवितव्यं केनापि फलेन। तच्च निरीक्ष्यमाणं प्रमाणाभावान्न किंचिदवतिष्ठते। तस्मादनर्थकत्वात्फलनिराकरणमेव क्रियते।

ननूत्पत्तिवाक्यशिष्टं पुरोडाशाद्यशक्यं बाधितुं विकल्पयितुं वा। उच्यते। रूपरससौरभ्यादयस्तेषु करिष्यन्ते स्वर्गशब्दवाच्यत्वाय॥ १॥

आकृत्यधिकरणन्यायेन स्वर्गशब्दस्य प्रीतिरभिधेया। सा साध्या, पुरुषार्थत्वात्। सर्वो हि प्रीत्यै यतते। न ततो यागः। न चोभौ साध्यौ। एकेन भाव्येन भवितव्यमन्येन भावकेन। यद्यपि यागे तृतीया न श्रुता, नापि स्वर्गे द्वितीया, तथाऽपि स्वर्गस्य भाव्यत्वाद्यागस्य करणता। ननु पशुकामे द्रव्यवचनत्वात्कामना न प्राप्नोति। उच्यते। यदीप्सितं पुरुषार्थत्वेन तस्यैव कामना मुख्या, तदुपायभूता क्रिया, तत्साधनानि च नान्तरीयकत्वात्काम्यन्ते। साध्यसंपत्तये सर्वः प्रवर्तते, न तु कर्म सेत्स्यतीति।

अपि च यत्साधनभूतं द्रव्यं तस्य कामपदोच्चारणमन्तरेणापि कामनाऽर्थलभ्येति कामपदोच्चारणमनर्थकम्। यस्य पुनः पशुकामशब्देन फलमभिधीयते तस्य पशुं काम-

---

१ (अ० १ पा० ३ अ० ९) अत्रत्येनेति शेषः। २ न ततो याग इति–प्रीतिश्चेत्साध्या, न यागः साध्य इत्यर्थः। ३ अनर्थकमिति–द्रव्यविधिवादिन इति शेषः।

दण्डस्य वाचकः । इह पुनः स्वर्गशब्दः एव प्रीतेरभिधाता । प्रीतिवचनश्चेत्, यागो गुणभूतः, प्रीतिः प्रधानम् । कुतः । तादर्थ्यात्पुरुषप्रयत्नस्य । प्रीत्यर्थं हि पुरुषो यतते । तेन न प्रीतिर्यागसाधनमिति विज्ञायते । द्रव्यं हि यागसाधनम् । न ऋते द्रव्याद्यागो भवति । यस्माद्द्रव्यदेवताक्रिये यजतिशब्दो वर्तते ।

असत्यामपि प्रीत्यां भवति यागः । यदि च यागो न प्रीत्यर्थो भवेत्, असाधकं कर्म भवेत् । साधयितारं नाधिगच्छेत् । यो हि प्रीत्यर्थः, स साध्यते, नान्यः । ननु कर्तव्यतया यागः श्रूयते । उच्यते । सत्यं कर्तव्यतया श्रूयते, कामोऽपि कर्तव्यतयाऽवगम्यते । आह । श्रुत्या यागस्य, वाक्येन कामस्य । न चोभयोः । वाक्यभेदप्रसङ्गात् । उच्यते । यद्यपि यागः कर्तव्यः श्रूयते, तथाऽपि न कर्तव्यः । सुखदः कर्तव्यो भवति । दुःखदो यागः । तस्मात्प्रत्यक्षेणाकर्तव्यः । प्रत्यक्षेण च दुःखदः । कर्तव्यतावचनादनुमानेन सुखदो भवतीति । उच्यते । अनुमानं च प्रत्यक्षविरोधान्न प्रमाणम् । तस्मादकर्तव्यो यागः, यदि न प्रीत्यर्थः ।

---

यमानः पशुकामोऽभिधीयते । तत्र यदि कामशब्दो नोच्चार्यते पशवोऽस्याभिप्रेता इति नैवं विज्ञायेत । अज्ञानात्पशवः फलं यागः साधनमिति सर्वं नावकल्प्येत । साधनपक्षे कामपदोच्चारणादृतेऽपि लभ्यत एव । यथा 'व्रीहिभिर्यजेत' इति । यागे च स्वर्गविधिमिच्छतः[1] पुरोडाशादिभिः सहाविरोधो नास्ति । कथम् । पुरोडाशादि स्वर्गशब्देन नाभिधीयते । रसगन्धसौरभ्यादयस्तत्र[2], स्वर्गशब्देनाभिधेया अन्यथा न संभवन्तीति क्रियन्ते ।

एतदयुक्तम् । यदेव स्वर्गशब्दवाच्यमप्रयत्नजनितं तस्मिन्नेवोपादातव्ये विस्पष्टे शब्दार्थे[3] पुरोडाशादावश्रुतः प्रयत्नः किमर्थमाश्रीयते । क्रियमाणेनाप्यश्रुतेन यागः कृतो भवेत् । चन्दनाद्येवोपास्यत इति चेत् । न । तत्रोत्पत्तिवाक्यविशिष्टेनाविरोधाद्विकल्पसमुच्चयौ[4] न संभवतः । संनिधौ च विपरिवर्तमानं कर्मान्तरमशक्यं कल्पयितुम् ।

---

१ स्वर्गविधिमिति–स्वर्गाख्यद्रव्यविधिमि त्यर्थः । २ तत्र–पुरोडाशादिषु, क्रियन्त इत्यनेन संबन्धः । ३ शब्दार्थे—गम्यमाने, इति शेषः । ४ विकल्पसमुच्चयाविति—विषमशिष्टत्वाद्विकल्पासंभवः । एकार्थत्वाच्च न समुच्चयः संभवतीत्यर्थः ।

अथाऽऽनर्थक्यपरिहाराय कल्पितेनान्येन फलवचनेन संभन्त्स्यत इति । उच्यते । ततः संबध्यमानोऽप्यविधीयमानो न समीपवचनमात्रेण फलवान् विज्ञायते । तस्मादनर्थको मा भूदिति स्वर्गस्य कर्तव्यता गम्यते । पुरुषप्रयत्नश्च यागविशिष्ट इति यागस्तस्य करणं स्यात् । तस्मात्सुष्ठूक्तं यागो गुणभूतः, स्वर्गः प्रधानभूत इति ॥ २ ॥

प्रत्यर्थं चाभिसंयोगात्कर्मतो ह्यभिसंबन्धस्तस्मात्कर्मोपदेशः स्यात् ॥ ३ ॥

न केवलमानर्थक्यभयाद्यागस्य गुणभावं ब्रूमः । किं तर्हि । स्वर्गसंज्ञकमर्थं प्रति करणत्वेन यागो विधीयते । ननु यागः कर्तव्यतया श्रुत्या विधीयते । सत्यमेवम् । आनर्थक्यं तु तथा भवति । स्वर्गे

विधीयमानेऽपि स्वर्गशब्द आत्मानमुपस्थापयत्येव । सर्वप्रयत्नपुरुषार्थत्वेनोपस्थाप्यमाने यद्यन्यः[1] श्रूयेत, साध्यता न स्यात् । न चान्यः पुरुषार्थः श्रूयते । तस्मादयमेव पुरुषार्थतां प्रतिपद्यते । तस्मात्कर्मान्तरेऽपि कल्पिते स्वर्गः सिध्यत्येव । तस्माद्विज्ञातस्य फलमिदम् । तत्र च धात्वर्थे किंचिद्विधीयत इति वाक्यम् । अन्यत्र[2] विधाने श्रुतिः । अतो[3] वस्तुतः शब्दाच्च स्वर्गः कर्तव्यः ॥ २ ॥

आनन्तर्यश्रुत्या[4] यागस्य कर्तव्यता । प्रत्ययः पुनः स्वार्थे भावनायां पुरुषं प्रवर्तयति । सा च प्रयोज्यादिभिरविनाभूता, तेन[5] यन्नियमितं तदेव पुरुषार्थं प्रयोज्यत्वेनाऽऽकाङ्क्षति, न यागम् । यश्च भावनाव्यापारः सामान्यरूपस्तत्र यागादयस्तं विशेषयन्तः साधनांशेन संबध्यन्ते । व्यापारोद्दिष्टफलसाधनात्साध्यभूतोऽपि धात्वर्थः करणमुच्यते । परशुवत्स हि पुरुषव्यापारव्याप्योऽपि करणं भवति । व्यापारोद्देश्यद्वैधीभवनं तदधीनमिति । एवमिहापि यागस्य साध्यत्वं करणत्वं च नानुपपन्नम् । सोऽपि प्रयोज्यमुत्पादयामीतिकर्तव्यतामभिलषति । अत एभिरंशैः परिपूर्णा । ततः प्रत्ययो भावनायां पुरुषं प्रवर्तयति । तस्मान्नैव कदाचिद्यागे[6] प्रत्यय उपनिपतति सत्येवाऽऽनन्तर्ये । अतो यत्र कर्तव्यतावचनस्तत्र पुरुषार्थः साक्षात्पारम्पर्येण वाऽविनाभूतः । तस्माद्यागस्य कर्तव्यता प्राप्ता, सा भावनाशब्दस्य नियतपुरुषार्थप्रयोज्यत्वाद्बाध्यते ।

१ यद्यन्य इति—यदि स्वर्गापेक्षया श्रेयान्पुरुषार्थः श्रूयेत तदा स्वर्गस्य साध्यता न स्यादित्यर्थः । २ अन्यत्र विधान इति—मम तु फले धात्वर्थस्य विधाने सतीत्यर्थः । ३ अतो वस्तुत इति—प्रीतिस्वभावात्कामशब्दाच्च फलस्य प्राधान्यात्स्वर्गो भाव्य इत्यर्थः । ४ आनन्तर्यश्रुत्या—पदश्रुत्येत्यर्थः । ५ तेन—पुरुषप्रवर्तनात्मकेन लिङ्विकल्पेनार्थः । ६ यागे प्रत्यय उपनिपतति—प्रत्ययार्थो भावना न यागं भाव्यतया स्वीकरोति सत्यप्यानन्तर्ये इत्यर्थः ।

प्रत्ययविहिते यागे, स्वर्गकामस्तस्मिन्निष्फले विधीयमानोऽपि निष्प्रयोजनः स्यात् । तत्रास्योपदेशवैयर्थ्यम् । द्वयोश्च विधीयमानयोः परस्परेणासंबद्धयोर्वाक्यभेदप्रसङ्गः । अतो न स्वर्गकामपदेन स्वार्थो विधीयते । किं तर्हि । उद्दिश्यते । तत्र वाक्यादवगतस्य कामस्य कर्तव्यताऽवगम्यते, यागस्य च करणता । एवं च यागकर्तव्यतायां न प्रत्यक्षविरोधो भविष्यति । तस्मात्कर्मोपदेशः स्यात् । कर्म स्वर्गं प्रत्युपदिश्यते, न स्वर्गः कर्म प्रति । किमतो, यदि स्वर्गो नोपदिश्यते । एतदतो भवति । न ह्यनुपदिष्टोऽर्थमात्रश्च गुणो भवति । तस्मात्स्वर्गः प्रधानतः, कर्म गुणत इति । अपि च । यस्य स्वर्ग इष्टः स्यात्स यागं निर्वर्तयेदित्यसंबद्धमिव, अन्यदिच्छति, अन्यत्करोति ।

अथ मतं, ततः स्वर्गो भवतीति संबन्धादिदं गम्यत इति । न शब्दप्रमाणकानामन्तरेण शब्दमवगतिर्न्याय्या । वाक्यादेवास्मादिमं संबन्धमवगच्छामः । यथा, काष्ठान्याहर्तुकामोऽरण्यं गच्छेदिति यदि ब्रूयात्, ब्रूयादेतत्–दृष्टं तत्र प्रमाणान्तरेणारण्यगमनस्य काष्ठाहरणसामर्थ्यं विद्यत इति । अथ मन्यते, उपदेशानर्थक्यं मा भूदित्यर्थापत्तिर्भविष्यतीति । उच्यते । नोपदेशानर्थक्यस्यैतत्सामर्थ्यं, यदन्तरेण फलवचनं यागस्य प्रीतिः फलमवगम्येत । काममस्याऽऽनर्थक्यं भवेत्, न जातुचित्सामर्थ्यमस्य जायते । न हि दग्धुकामस्योदकोपादानमसति दाहेऽनर्थ-

---

अपि च प्रत्ययोच्चारणानन्तरमेव तिस्र आकाङ्क्षा उत्पद्यन्ते । तत्र यदि प्रथमांशे पुरुषार्थ उपनिपतति द्वितीये च यागस्ततः कतरशब्दस्य बाधा कृता । अथ किमंशे याग उपनिपतति ततो नियतप्रयोजिका प्रत्ययस्य शक्तिः, सा बाध्यते । कर्मणां चाऽऽनर्थक्यम् । तस्माच्छब्दवस्तुभ्यां करणभूतो यागः । अथवाऽन्यप्रकारेण यागस्य करणता । कथम् । स्वर्गमात्मसंबन्धित्वेन प्रार्थयमानः स्वर्गकामोऽभिधीयते । स स्वर्गमभिलषमाण उपायमभिलषति । तस्मादनयोरविनाभावात्स्वर्गकामशब्देन शक्यते तदुपायो लक्षयितुम् । अतः शास्त्रेण यागादयस्तत्रोपायत्वेन विधीयन्ते । अतो न स्वर्गकामशब्देन स्वार्थो विधीयते । अभिधीयत इत्यर्थः । अनेन ग्रन्थेनोपायलक्षणार्थं स्वर्गकामशब्दं ब्रवीति । तत्र वाक्यादवगतस्य कामस्य कर्तव्यताऽवगम्यते ।

---

१ संबन्धादवगम्यते० पा० । २ मन्यसे० पा०

कमिति दहनशक्तिमस्य जनयेत्। अथवा स्वर्गकामस्य यागो विधीयत इति पक्षान्तरावलम्बेनेनास्यार्थवत्ता भविष्यति।

नन्वितरस्मिन्नपि पक्षे स्वर्गकामस्य यागो विधीयते, न यागात्स्वर्गः। नैतदेवम्। तस्मिन्खलु पक्षे स्वर्गं प्रार्थयमानस्यानुष्ठानमनूद्य यागस्तस्योपायत्वेन विधीयत इति न दोषः। तदनुष्ठानं स्वर्गं प्रतीति नास्ति वचनमिति चेत्। इष्टमर्थं प्रत्यनुष्ठानं भवति। स्वर्गकामस्य च स्वर्ग इष्टः। तदनुष्ठानविशेषग्रहणार्थमेव स्वर्गकामविशेषणग्रहणमिति निरवद्यम्। तस्मात्स्वर्गकामस्य यागकर्मोपदेशः स्यात्। अतः स्वर्गः प्रधानतः, कर्म गुणत इति स्वर्गकाममधिकृत्य, यजेतेति वचनमित्यधिकारलक्षणमिदं सिद्धं भवति॥ ३॥

---

यागस्य करणतेति। अथवा स्वर्गकामस्य यागो विधीयत इति पक्षान्तरावलम्बनेनास्यार्थवत्ता भविष्यतीति—यागं कुर्यादित्येतस्मात्पक्षान्तरं यागेन कुर्यादिति। अथवा स्वर्गकामस्येति—अतः स्वर्गकामस्येति द्रष्टव्यम्। उपपत्त्यन्तरस्यानुक्तत्वात्।

नन्वितरस्मिन्नपि पक्षे स्वर्गकामस्य यागो विधीयते न यागात्स्वर्ग इति—कोऽभिप्रायः। पदार्थपूर्वकत्वाद्वाक्यार्थस्य यागेन स्वर्गमिति यदि श्रूयेत तत इदं साध्यमिदं साधनमिति स्यात्। न च यागेन स्वर्गमिति श्रूयते। तस्मात्पूर्वोक्तो दोषस्तदवस्थ एव। नैतदेवम्। तस्मिन्खलु वै पक्षे स्वर्गं प्रार्थयमानस्यानुष्ठानमनूद्य यागस्तस्योपायत्वेन विधीयत इत्यदोषः। स्वर्गं प्रार्थयमानस्तत्संबन्धितयोपायमप्यभिलषति। न ह्युपायादृत उपेयमस्ति। तस्मात्स्वर्गकामशब्दः शक्नोत्युपायं लक्षयितुम्। स च लक्षितः सन्नुपायत्वेन विधीयते। पदान्तरोपात्तो यागो विशेषः। तेन पदार्थपूर्वक एव वाक्यार्थः। तस्मात्फलवत्त्वे कर्मणां युक्तमधिकारलक्षणमारब्धुम्। अधिकारीति कर्मणामुपरिभावेनावस्थितः स्वामीत्यर्थः॥ ३॥ [ ४ ॥]

---

१ अधिकारलक्षणं तु—प्रवृत्तिप्रयोजकफलेच्छाफलान्यतरसमानाधिकरणं कर्तृत्वम्। जातेष्टिश्राद्धादौ पित्रादेः फलभोगाभावेऽपि फलेच्छाया यजमाननिष्ठत्वान्नाधिकारविघातः। ऋत्विजामधिकारव्यावृत्तये समानाधिकरणान्तम्। यजमानस्य फलं भूयादितीच्छायाः स्वनिष्ठकर्तृत्वसमानाधिकरणत्वादृत्विजामधिकारापत्तिवारणाय प्रवृत्तिप्रयोजनकेति विशेषणम्। अन्यतरेति विशेषणाच्च नित्यस्थले पापक्षयेच्छायाः प्रवृत्तिप्रयोजकत्वाभावेऽपि नाधिकारलक्षणविघातः, अन्यतरान्तर्गतफलसमानाधिकरणं कर्तृत्वमादायाधिकारोपपत्तेरिति दिक्।

( तिर्यगधिकरणम् ॥ २ ॥ )

[ २ ] फलार्थत्वात्कर्मणः शास्त्रं सर्वाधिकारं स्यात् ॥ ४ ॥ पू०

इदमामनन्ति । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेतेत्येवमादि । तत्र संदेहः । किं यावत्किंचित्सत्त्वं, तत्सर्वमधिकृत्यैतदुच्यत उत समर्थमधिकृत्येति । किं प्राप्तम् । सर्वाधिकारः । अविशेषात् । ननु वृक्षादयो न किंचित्कामयन्ते, कथं तेषामधिकारः स्यात् । उच्यते । मा भूदचेतनानाम् । तिरश्चस्त्वधिकृत्य यजेतेति ब्रूयात् । ननु तिर्यञ्चोऽपि न किंचित्कामयन्ते । नेति ब्रूमः । कामयन्ते सुखम् । एवं हि दृश्यते, घर्मोपतप्ताश्छायामुपसर्पन्ति, शीतेन पीडिता आतपम् ।

आह । ननु तिर्यञ्च आसन्नं फलं चेतयन्ते न कालान्तरफलं प्रार्थयन्ते । कालान्तरफलानि च वैदिकानि कर्माणि । उच्यते । कालान्तरेऽपि फलं कामयमाना लक्ष्यन्ते । शुनश्चतुर्दश्यामुपवसतः पश्यामः । श्येनांश्चाष्टम्याम् । न चैषां व्याध्याशङ्का । नियतनिमित्तत्वात् । नानाहाराणामपि तस्मिन्काले दर्शनात् । समानाहाराणामप्यन्यस्मिन्कालेऽदर्शनात् । लिङ्गानि च वेदे भवन्ति, देवा वै सत्रमासतेत्येवमादीनि । देवतानाम्, ऋषीणां, वनस्पतीनामधिकारं दर्शयन्ति ।

ननु कार्त्स्न्येन विधिमुपसंहर्तुं न शक्नुवन्तीत्यनधिकृताः । उच्यते । यागं कर्तुं शक्नुवन्ति केचित् । तस्माद्यजेतेत्येवमादीन्यधिकरिष्यन्ति शक्नुवतः । विष्णुक्रमणादिवचनानि [1]त्वशक्तानधिकरिष्यन्ति । तत्र योऽनुपदिष्टविष्णुक्रमादिकः स केवलं यागं करिष्यति । कस्तस्य दोषः । द्रव्यपरिग्रहोऽपि देवग्रामः, हस्तिग्रामः, ऋषभस्य ग्राम इत्युपचारादस्त्येवेति । तस्मादमनुष्याणामपि शक्नुवतामधिकार इति ॥ ४ ॥

कर्तुर्वा श्रुतिसंयोगाद्विधिः कार्त्स्न्येन गम्यते ॥ ५ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । न चैतदस्ति, तिर्यगादीनामप्यधिकार इति । कस्य तर्हि । यः समर्थः कृत्स्नं कर्माभिनिर्वर्तयितुम् । न चैते शक्नुवन्ति तिर्यगादयः कृत्स्नं कर्माभिनिर्वर्तयितुम् । तस्मादेषां न

---

द्रव्यपरित्यागाद्यभावादसामर्थ्याद्देवादीनामनधिकारः । मनुष्येषु वाचन विष्णुक्रम-

---

1 विष्णुक्रमादि० पा० ।

सुखस्याभ्युपायः कर्मेति । कथं यो न शक्यते कर्तुं सोऽभ्युपायः स्यादिति । न देवानाम् । देवतान्तराभावात् । न ह्यात्मानमुद्दिश्य त्यागः संभवति । त्याग एवासौ न स्यात् । न ऋषीणाम् । आर्षेयाभावात् । न भृग्वादयो भृग्वादिभिः सगोत्रा भवन्ति । न चैषां सामर्थ्यं प्रत्यक्षम् । अपि च तिर्यञ्चो न कालान्तरफलेनार्थिनः । आसन्नं हि ते कामयन्ते ।

ननु चोक्तं, कालान्तरफलार्थिनस्तिरश्चः पश्यामः, शुनः श्येनांश्चतुर्दश्यामष्टम्यां चोपवसत इति । उच्यते । न जन्मान्तरफलार्थिन उपवसन्ति । कथमवगम्यते । वेदाध्ययनाभावात् । ये वेदमधीयते त एतद्विदुः, इदं कर्म कृत्वेदं फलममुत्र प्राप्नोतीति । न चैते वेदमधीयते । नापि स्मृतिशास्त्राणि । नाप्यन्येभ्योऽवगच्छन्ति । तस्मान्न विदन्ति धर्मम् । अविद्वांसः कथमनुतिष्ठेयुः । तस्मान्न धर्मायोपवसन्तीति । किमर्थं तर्ह्येषामुपवासः । उच्यते । रोगादरुचिरेषाम् । कथं पुनर्नियते काले रोगो भवति । उच्यते । नियतकाला अपि रोगा भवन्ति । यथा तृतीयकाश्चातुर्थकाश्चेति । तस्मान्मनुष्याणामधिकार इति । न च तिरश्चां द्रव्यपरिग्रहः । न ह्येते द्रव्यं स्वेच्छयोपयुञ्जाना दृश्यन्ते । तस्मादनीशाना धनस्य । यत्तु, देवग्रामो हस्तिग्राम इति । उपचारमात्रं तत् । तस्मादपि न तिरश्चामधिकार इति । यानि पुनर्लिङ्गानि, देवा वै सत्रमासतेत्येवमादीनि । अर्थवादास्ते विधिप्ररोचनार्थाः । विद्यते हि विधिरन्यस्तेषु सर्वेषु । न च विधेर्विधिनैकवाक्यभावो भवति वचनव्यक्तिभेदात् । स्तुतिस्तु सा । इत्थं नाम सत्राण्यासितव्यानि, यत्कृतकृत्या अप्यासते देवाः, आसन्नचेतना अपि तिर्यञ्चः, अचेतना अपि वनस्पतयः, किमङ्ग पुनर्विद्वांसो मनुष्या इति ।

---

णाज्यावेक्षणेष्वसमर्थो नाधिक्रियते । कुतः । इतिकर्तव्यतांशे वाचनादीनां गृह्यमाणत्वात्क्रत्वर्थता । तैर्विना फलमेव नास्ति । न च भृग्वादयो भृग्वादिसगोत्रा इत्ययुक्तम् । अनादिर्हि कालोऽस्माकम् । न देवानां देवतान्तराभावादिति—येषां शब्द एव देवता तेषामप्ययुक्तो ग्रन्थः ॥ ९ ॥

---

१ चेतयन्ते० पा० । २ असमर्थ इति–' क्लृप्तीर्यजमानं वाचयति ' इत्यादिविहिते वाचनादौ बधिरादिरसमर्थ इत्यर्थः ।

ननु विष्णुक्रमादिष्वनधिकृताः केवलं यागं करिष्यन्ति। नैवम्। गुणा यागं प्रत्युपदिश्यन्ते, न कर्तारं प्रति। तेन यागमात्रे क्रियमाणे वैगुण्यमिति न फलसंबन्धः स्यात्। कथं पुनर्यागं प्रत्युपदिश्यत इति चेत्। इतिकर्तव्यताकाङ्क्षस्य यागवचनस्यान्तिकादुपानिपतिताः शक्नुवन्ति तं निराकाङ्क्षीकर्तुम्। इतरथा हि कर्तॄनधिकुर्वत्सु गुणवचनेष्वनिवृत्ताकाङ्क्षं फलवचनमनर्थकमेव स्यात्। अनुषङ्गश्च फलवचनमभविष्यत्। तत्र साकाङ्क्षत्वाद्वाक्यमुपरोत्स्यते।

अथैतदेव वाक्यं समर्थानां सगुणं कर्म विधास्यति, असमर्थानां विगुणमिति। तन्न। सकृदुच्चारण उभयशक्तिविरोधाद्वाक्यं भिद्येत। साकाङ्क्षं हि तदितिकर्तव्यतां प्रति। तस्मात्साङ्गयागोपदेशः स इति निरङ्गयागोपदेशाभावः। तस्मान्मनुष्याणामेवाधिकार इति। प्रयोजनं पक्षोक्तं केचिदाहुः। सहस्रसंवत्सरं कर्म न नियोगतो दिवसेषु कल्पयितव्यमिति। पूर्वपक्षे तदायुषां देवतादीनां संभवादिति। सिद्धान्ते तदसंभवादिति दिवसेष्वेव कल्पयितव्यमिति। तत्तूपरिष्टाद्व्याख्यास्यामः॥ ५॥

( क्रतुषु स्त्रिया अप्यधिकाराधिकरणम्॥ ३॥ )

## [ ३ ] लिङ्गविशेषनिर्देशात्पुंयुक्तमैतिशायनः॥ ६॥ पू०

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, इत्येवमादि समाम्नायते। तत्र संदेहः। किं स्वर्गकामं पुमांसमधिकृत्य यजेतेत्येष शब्द उच्चरितः। अथवाऽनियमः, स्त्रियं पुमांसं वेति। किं प्राप्तम्। पुंलिङ्गमधिकृतं मेने ऐतिशायनः। कुतः। लिङ्गविशेषनिर्देशात्। पुंलिङ्गेन विशेषेण निर्देशो भवति, स्वर्गकामो यजेतेति। तस्मात्पुमानुक्तो यजेतेति, न स्त्री॥ ६॥

---

ग्रहाधिकरणे विभक्तिवाच्यस्यैकत्वस्याविवक्षोक्ता, न प्रातिपदिकार्थस्य लिङ्गस्य। तस्मादयं पूर्वपक्षवादिनोऽभिप्रायः। अर्थस्योद्दिश्यमानस्यापि यथा विवक्षा, एवं तद्वाच्यस्य लिङ्गस्यापीति॥ ६॥

---

१ प्रकरणवचनम्० पा०। २ वचनमुपरोत्स्यते०पा०। ३ ( अ०३पा०१ अ०७)।

तदुक्तित्वाच्च दोषश्रुतिरविज्ञाते ॥ ७ ॥

अविज्ञाते गर्भे हते भ्रूणहत्यानुवादो भवति। तस्मादविज्ञातेन गर्भेण हतेन भ्रूणहा भवतीति। भ्रूणहा पापकृत्तमः। यश्चोभयोर्लोकयोरुपकरोति, तस्य हन्ता भ्रूणहा। यज्ञहन्ता भ्रूणहा। स यज्ञसाधनवधकारी। तस्माद्यज्ञं भ्रूणशब्देनाभिदधाति। स हि बिभर्ति वा सर्वं भूतिं वा नयति। अतो भ्रूणहा यज्ञवधकारी। स पुंयुक्तत्वादनुवादोऽवकल्पते। अविज्ञाते गर्भे हन्यमाने कदाचित्पुमान् हन्येत। तत्र यज्ञाधिकृतस्य हतत्वाद्यज्ञवधो भ्रूणहत्या स्यात्। इतरथा यद्युभयोराधिकारस्ततो विज्ञाते चाविज्ञाते च यज्ञवधः स्यात्। तत्राविज्ञातग्रहणमतन्त्रमिति कल्प्येत। तस्माद्विवक्षिता पुंलिङ्गस्य वाचिका विभक्तिरिति। तथा, आत्रेयीं हत्वा भ्रूणहा भवति। आत्रेयीमापन्नगर्भामाहुः। अत्र ऋतुस्नावस्या विद्यत इत्यात्रेयी। तस्मादपि पुंसोऽधिकारो गम्यते। यथा, पशुमालभेतेति पुंपशुरेवाऽऽलभ्यते। लिङ्गविशेषनिर्देशात्। एवमिहापि द्रष्टव्यमिति ॥ ७ ॥

एवं प्राप्ते ब्रूमः—

जातिं तु बादरायणोऽविशेषात्तस्मात्स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात् ॥ ८ ॥ सि०

तुशब्दः पक्षं व्यावर्तयति। नैतदस्ति, पुंस एवाधिकार इति। जातिं तु भगवान् बादरायणोऽधिकृतां मन्यते स्म। आह। किमयं स्वर्गकाम इति जातिशब्दः समधिगतः। नेत्याह। कथं तर्हि। यौगिकः, स्वर्गेच्छायोगेन वर्तते। केन तर्हि शब्देन जातिरुक्ता, याऽधिकृतेति गम्यते। नैव वयं ब्रूमो जातिवचन इह शब्दोऽधिकारक इति। किं तर्हि। स्वर्गकामशब्देनोभावपि स्त्रीपुंसावधिक्रियेते इति। अतो न विवक्षितं पुंलिङ्गमिति। कुतः। अविशेषात्। न हि शक्नोत्येषा विभक्तिः स्वर्गकामं लिङ्गेन विशेष्टुम्। कथम्। लक्षणत्वेन श्रवणात्। स्वर्गे कामो यस्य, तमेष लक्षयति शब्दः। तेन लक्षणेनाधिकृतो यजेतेति शब्देनोच्यते। तच्च लक्षणमविशिष्टं स्त्रियां पुंसि च।

---

[॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

तस्माच्छब्देनोभावपि स्त्रीपुंसावधिकृताविति गम्यते। तत्र केनाधिकारः स्त्रिया निवर्त्यते। विभक्त्येति चेत्। तन्न। कस्मात्। पुंवचनत्वात्स्त्रीनिवृत्तावशक्तिः। पुंसो विभक्त्या पुनर्वचनमनर्थकमिति चेन्न। आनर्थक्येऽपि स्त्रीनिवृत्तेरभावः। परिसंख्यायां स्वार्थहानिः परार्थकल्पना प्राप्तबाधश्च। न चाऽऽनर्थक्यम्। निर्देशार्थत्वात्। तस्मात्स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात् ॥ ८ ॥

चोदितत्वाद्यथाश्रुति ॥ ९ ॥

अथ यदुक्तं, पशुमालभेतेति पुंपशुरालभ्यते। पुंलिङ्गवचनसामर्थ्यात्। एवमिहापि पुंलिङ्गवचनसामर्थ्यात्पुमानधिक्रियते। यागवचनेनेति। तत्परिहर्तव्यम्। अत्रोच्यते। नात्र जातिर्द्रव्यस्य लक्षणत्वेन श्रूयते। यदि हि लक्षणत्वेन श्रूयेत, ततः स्त्रिया अपि याग उक्तो न पुंवचनेन विवर्त्येत। इदं तु पशुत्वं यागस्य विशेषणत्वेन श्रूयते। तत्र पशुत्वस्य यागस्य च संबन्धो, न द्रव्ययागयोः। यथा पशुत्वं यागसंबद्धमेवं पुंस्त्वमेकत्वं च। सोऽयमनेकविशेषणविशिष्टो यागः श्रूयते। स यथाश्रुत्येव कर्तव्यः। उपादेयत्वेन चोदितत्वात्। यच्च दोषश्रुतिरविज्ञाते गर्भे हते, आत्रेय्यां च पुंयुक्तत्वेनेति। तत्परिहर्तव्यम्। अत्रोच्यते। अविज्ञातेन गर्भेणेत्यनुवादः प्रशंसार्थः। आत्रेयी च न हन्तव्येति। इत्थं गर्भो न हन्तव्यः। यद्व्यक्तेनाप्येनस्वी भवति। पुंलिङ्गविभक्तिः श्रूयमाणा न शक्नोति स्त्रियं निवर्तयितुम्। किमङ्ग पुनरविज्ञातगर्भवचनं लिङ्गम्। तथा गोत्रप्रशंसार्थमात्रेय्या अवधसंकीर्तनम्। न चाऽऽपन्नसत्त्वा, आत्रेयी। गोत्रं ह्येतत्। न हि, अत्रिशब्दादयं तद्धित उत्पन्नः। समर्थानां हि तद्धित उत्पद्यते। न च, अत्रिशब्दस्य सामर्थ्यमस्ति ॥ ९ ॥

द्रव्यवत्त्वात्तु पुंसां स्याद्द्रव्यसंयुक्तं, क्रयविक्रयाभ्यामद्रव्यत्वं स्त्रीणां, द्रव्यैः समानयोगित्वात् ॥ १० ॥

पुंसां तु स्यादधिकारः। द्रव्यवत्त्वात्। द्रव्यवन्तो हि पुमांसो न

॥ १४ ॥ १३ ॥ ॥ १६ ॥]

स्त्रियः। द्रव्यसंयुक्तं चैतत्कर्म । व्रीहिभिर्यजेत, यवैर्यजेतेत्येवमादि। कथमद्रव्यत्वं स्त्रीणाम्। क्रयविक्रयाभ्याम् । क्रयविक्रयसंयुक्ता हि स्त्रियः। पित्रा विक्रीयन्ते । भर्त्रा क्रीयन्ते। विक्रीतत्वाच्च पितृधनानामनीशिन्यः। क्रीतत्वाच्च भर्तृधनानाम्। विक्रयो हि श्रूयते। शतमतिरथं दुहितृमते दद्यात्, आर्षे गोमिथुनमिति । न चैतद्दृष्टार्थे सति, आनमनेऽदृष्टार्थं भवितुमर्हति। एवं द्रव्यैः समानयोगित्वं स्त्रीणाम्॥१०॥

## तथा चान्यार्थदर्शनम् ॥ ११ ॥

या पत्या क्रीता सत्यथान्यैश्चरतीति क्रीततां दर्शयति ॥ ११ ॥

## तादर्थ्यात्कर्मतादर्थ्यम् ॥ १२ ॥

आह। यदनया भक्तोत्सर्पणेन वा कर्तनेन वा धनमुपार्जितं, तेन यक्ष्यत इति। उच्यते। तदप्यस्या न स्वम्। यदा हि साऽन्यस्य स्वभूता, तदा यत्तदीयं तदपि तस्यैव । अपिच, स्वामिनस्तया कर्म कर्तव्यम्। न तत्परित्यज्य स्वकर्मार्हति कर्तुम्। यत्तयाऽन्येन प्रकारेणोपार्ज्यते, तत्पत्युरेव स्वं भवितुमर्हतीति। एवं स्मरति—

भार्या दासश्च पुत्रश्च निर्धनाः सर्व एव ते[1]।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनमिति ॥ १२ ॥

## फलोत्साहाविशेषात्तु ॥ १३ ॥

तुशब्दः पक्षं व्यावर्तयति । न चैतदस्ति। निर्धना स्त्रीति । द्रव्यवती हि सा । फलोत्साहाविशेषात्। स्मृतिप्रामाण्यादस्वया तया भवितव्यं, फलार्थिन्याऽपि । श्रुतिविशेषात्, फलार्थिन्या यष्टव्यम्। यदि स्मृतिमनुरुध्यमाना परवशा निर्धना च स्यात्, यजेतेत्युक्ते सति न यजेत। तत्र स्मृत्या श्रुतिर्बाध्येत । न चैतन्न्याय्यम् । तस्मात्फलार्थिनी सती स्मृतिमप्रमाणीकृत्य द्रव्यं परिगृह्णीयाद्यजेत चेति ॥ १३ ॥

## अर्थेन च समवेतत्वात् ॥ १४ ॥

अर्थेन चास्याः समवेतत्वं भवति। एवं दानकाले संवादः क्रियते—धर्मे चार्थे च कामे च नातिचरितव्येति। यत्तूच्यते। भार्यादयो निर्धना इति। स्मर्यमाणमपि निर्धनत्वमन्याय्यमेव । श्रुतिविरोधात्। तस्मादस्वातन्त्र्यमनेन प्रकारेणोच्यते, संव्यवहारप्रसिद्ध्यर्थम् ॥१४॥

---

१ त्रय एवाधनाः स्मृताः। इति खण्डदेवादिधृतः पाठः।

क्रयस्य धर्ममात्रत्वम् ॥ १५ ॥

यत्तु क्रयः श्रूयते । धर्ममात्रं तु तत् । नासौ क्रय इति । क्रयो हि, उच्चनीचपण्यपणो भवति । नियतं त्विदं दानम् । शतमतिरथं शोभनामशोभनां च कन्यां प्रति । स्मार्तं च श्रुतिविरुद्धं विक्रयं नानुमन्यन्ते । तस्मादविक्रयोऽयमिति ॥ १५ ॥

स्ववत्तामपि दर्शयति ॥ १६ ॥

पत्नी वै पारिणय्यस्येष्टे पत्यैव गतमनुमतं क्रियते । तथा, जाघन्या पत्नीः संयाजयन्ति । भसद्वीर्या हि पत्नयः । भसदा वा एताः परगृहाणामैश्वर्यमवरुन्धत इति ॥ १६ ॥

( कर्मसु दंपत्योः सहाधिकाराधिकरणम् ॥ ४ ॥ )

[ ४ ] स्ववतोस्तु वचनादैककर्म्यं स्यात् ॥ १७ ॥ सि०

स्ववन्तावुभावपि दंपती इत्येवं तावत्स्थितम् । तत्र संदेहः । किं पृथक् पत्नी यजेत, पृथग् यजमान उत संभूय यजेयातामिति । किं प्राप्तम् । पृथक्त्वेन । कुतः । एकवचनस्य विवक्षितत्वात् । उपादेयत्वेन कर्ता यजेतेति श्रूयते । तस्मादेकवचनं विवक्ष्यते। यथा न द्वौ पुरुषौ संभूय यजेयातां, तथाऽत्रापि द्रष्टव्यम् ।

एवं प्राप्ते ब्रूमः । स्ववतोस्तु वचनादैककर्म्यं स्यात् । वचनात्तयोः सहक्रिया । एवं हि स्मरन्ति, धर्मे चार्थे च कामे च नातिचरितव्येति ।

---

पत्न्याज्यमवेक्षते, यजमानश्चेति । तस्माद्द्विरवेक्षणसंस्कृतमाज्यं प्रयोगाङ्गम् । एकावेक्षणे वैगुण्यं स्यात् । पत्नी च न या काचित् । किं तर्हि । यज्ञस्वामिन्यां पत्नीशब्दं स्मरन्ति[1] । एवं यजमानशब्दमपि[2] । तस्माद्यादृशं कर्तृत्वमितिकर्तव्यतापेक्षायामवगतं, तादृशं प्रयोगवचन उपसंगृह्णाति । अध्वर्य्वाद्युपन्यासस्त्वयुक्तः[3] । कथं व्यापारान्तरेऽध्वर्य्वादीनां कर्तृत्वात्तत्रैकवचनस्य नास्ति विघातः । पत्नीयजमानयोस्तु य ऋत्विगानयने देवतोद्देशे च व्यापारः स एक इत्येकसंख्या विरुध्यते । तस्माद्ययैको देवतोद्देशेन

---

१ स्मरन्तीति—' पत्युर्नो यज्ञसंयोगे ' ( पा० सू० ४–१–३३ ) इत्यादिनेति शेषः । २ यजमानशब्दमपीति—स्वामिनि स्मरन्तीति पूरणम् । ' स्वरितञितः कर्त्रभिप्राये क्रियाफले ' ( पा० सू० १–३–७२ ) इति स्मृत्या कर्तृगतक्रियाफलवाच्यात्मनेपदान्तत्वाद्यजमानशब्दस्येति शेषः । ३ अयुक्त इति—परं तु ' इदं तावदयं प्रष्टव्यः ' इत्यारभ्य 'यथाऽध्वर्युराध्वर्यवेषु प्रवर्तमानः' इत्यन्तो भाष्यग्रन्थः परमतेन व्याख्येय इत्याशयः ।

तथा सह धर्मश्चरितव्यः सहापत्यमुत्पादयितव्यमिति। उच्यते। स्मृतिवचनेन न श्रुतिवचनं युक्तं बाधितुम्। नेति ब्रूमः। इह किंचित्कर्म स्त्रीपुंसकर्तृकमेव। यथा दर्शपूर्णमासौ ज्योतिष्टोम इति। यत्र पत्न्यवेक्षितेन यजमानावेक्षितेन चाऽऽज्येन होम उच्यते, तत्रान्यतराभावे वैगुण्यम्।

ननु पुंसो यजमानस्य यजमानावेक्षितमाज्यं, स्त्रिया यजमानायाः पत्न्यवेक्षितं भविष्यतीति। नेत्याह। नायमीक्षितृसंस्कारः। ईक्षितुः संस्कारो यदि, तदेवं स्यात्। आज्यसंस्कारश्चायम्। गुणभूतावीक्षितारौ। तत्रान्यतरापाये नियतं वैगुण्यम्। सर्वाङ्गोपसंहारी च प्रयोगवचनः। तत्रैतत्स्यात्। स्त्री यजमाना पुमांसं परिक्रेष्यत्याज्यस्येक्षितारं, पुमांश्च स्त्रियं त्ववेक्षित्रीमिति। तच्च न। पत्नीति हि यज्ञस्य स्वामिनीत्युच्यते, न क्रीता। पत्नीति संबन्धिशब्दोऽयम्। यजमान इति च स्वामी, न क्रीतः। तस्मात्स्त्रीपुंसयोरेकमेवंजातीयकं कर्मेति। तत्र श्रुतिसामर्थ्याद्यः कश्चिद्यया कयाचित्संभूय यजेतेति प्राप्ते, इदमुच्यते— यस्त्वया कश्चिद्धर्मः कयाचित्सह कर्तव्यः, सोऽनया सहेति। तेन न श्रुतिविरोधः स्मृतेरिति गम्यते। अथ यदुक्तं, केवलस्य पुंसोऽधिकारः, केवलायाश्च स्त्रियाः। यजेतेत्येकवचनस्य विवक्षितत्वादिति। तत्परिहर्तव्यम्।

इदं तावदयं प्रष्टव्यः। यजेतेत्येकवचने विवक्षिते, कथं षोडशभिर्ऋत्विग्भिः सह यागो भवतीति। एवमुच्यते, प्रतिकारकं क्रियाभेदः। याजमानानेव पदार्थान्परिक्रयादीन्कुर्वन्, यजत इत्युच्यते यजमानः। आध्वर्यवानेव कुर्वन् अध्वर्युर्यजतीत्येवमुच्यते। यथा संभरणमेव कुर्वती स्थाली पक्तिं करोतीत्युच्यते। यस्य च कारकस्य य आत्मीयो व्यापारः, स एकवचने विवक्षिते, एकेन कर्तव्यो भवतीति। एवं येयावान् व्यापारो यजमानस्य, तावान् न संभूय कर्तव्यः। एकेनैको याजमानोऽपरेणापरः। द्वादशे वा शते, एकेन षट्पञ्चाशत्, अपरेणापि षट्पञ्चाशदिति। इह तु पत्नीव्यापारोऽन्य एव। न तत्र पत्नी प्रवर्तमाना यजमानस्यैकत्वं विहन्ति। यथाऽध्वर्युराध्वर्यवेषु प्रवर्तमानः।

---

परित्यागं कुर्यादितरो याजमानं, नैवं विरोधः स्यात्। तस्माद्द्वयोः कर्तृत्वतुल्यत्वाद्वि-

अवश्यं च सह पत्न्या यष्टव्यम् । मध्यगं हीदं दंपत्योर्धनम् । तत्र यागोऽवश्यं सह पत्न्या कर्तव्यः । इतरथाऽन्यतरानिच्छायां त्याग एव न संवर्तेत । तथा हि द्वितीयया पत्न्या विना त्यागो नैवावकल्पते । यस्य द्वितीया पत्न्यस्ति, तत्र क्रत्वर्थानेका करिष्यति । कर्तृसंस्कारार्थेषु नैवं दोषः । संभवन्ति हि तानि सर्वत्रेति ॥ १७ ॥

## लिङ्गदर्शनाच्च ॥ १८ ॥

लिङ्गं खल्वपि दृश्यते । योक्त्रेण पत्नीं संनह्यति, मेखलया यजमानं मिथुनत्वायेति । यदि स्त्रीपुंसावेकत्र, योक्त्रस्य मेखलायाश्च विभागो वाक्याद्गम्यते । मिथुनसंस्तवश्च । तदेतत्स्त्रीपुंससाधनके कर्मण्युपपद्यते, नान्यथा ॥ १८ ॥

## क्रीतत्वात्तु भक्त्या स्वामित्वमुच्यते ॥ १९ ॥

स्थितादुत्तरमुच्यते । तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति । यदुक्तं स्ववती स्त्रीति । क्रीता हि सा । इष्टार्थत्वाद्रतिरथशतदानस्य । अतो यदस्याः स्वामित्वमुच्यते, तद्भक्त्या । यथा, पूर्णकाऽस्माकं बलीवर्दानामीष्ट इति । एवं पत्न्यापि पारिणाय्यस्येष्ट इति ॥ १९ ॥

## फलार्थित्वात्तु स्वामित्वेनाभिसंबन्धः ॥ २० ॥

नैतदस्ति । क्रयो मुख्यो, गौणं स्वामित्वमिति फलार्थिनी हि सा, स्मृतिर्नाऽऽदरिष्यते । स्मृत्यनुरोधादस्वा स्यात् । स्ववती श्रुत्यनुरोधात् ॥ २० ॥

## फलवत्तां च दर्शयति ॥ २१ ॥

सं पत्नी पत्या सुकृतेन गच्छतां, यज्ञस्य धुर्या युक्तावभूताम् । संजानानौ विजहीताम् । अरातीर्दिवि ज्योतिरजरमारभेतामिति दंपत्योः फलं दर्शयति । तस्मादप्युभावधिकृताविति सिद्धम् ॥ २१ ॥

---

रोधः । अवश्यं च पत्न्या सह यष्टव्यमित्यादिस्त्वयुक्तो ग्रन्थः । कथं, उद्वाहकाल एवानयोर्वचनेन द्रव्यसाधारण्यं प्रतिपादितम् । धर्मे चार्थे च कामे च नातिचरितव्येति प्रतिपादितत्वात् । यस्त्यागः स इतरेतरसंसृष्टयोरेव । कथमेकवचनम् । द्वयोश्चैतयोः संसृष्टकर्तृता । तत्रैकवचनमुपपद्यत एव संसर्गाभिप्रायं मिथुनकारकाभिप्रायं वा । तयोश्च विभागः प्रतिषिद्धो ' न भर्त्रा सह विभजेत ' इति । तस्मान्नास्ति भिन्नयोः कर्तृता ॥ १७ ॥ [१८ ॥ १९ ॥ २० ॥ २१ ॥]

---

१ नैष° पा° ।

( एकस्यैव पुरुषस्य स्त्रीसद्वितीयस्याऽऽधानेऽधिकाराधिकरणम् ॥ ५ ॥ )

## [५] द्व्याधानं च द्वियज्ञवत् ॥२२॥ पू०

अस्त्याधानं, य एवं विद्वानग्निमाधत्त इति । तत्रेदमामनन्ति, क्षौमे वसानावग्निमादधीयातामिति । तत्रैषोऽर्थः सांशयिकः । किं द्वौ पुरुषावादधीयातामुतैकः पुरुष इति । कथं संशयः । उच्यते । इहैतच्छ्रूयते, वसानावादधीयातामिति । तत्र वचनमर्थप्राप्तं पुनः श्रूयते । तत्किं पुंलिङ्गसंबन्धार्थमुत क्षौमविध्यर्थमिति । उभयोर्विद्यमानत्वाद्भवति संशयः । यदि लिङ्गसंबन्धार्थमुभौ पुरुषावाधास्येते । अथ क्षौमसंबन्धार्थं तत एकः । किं प्राप्तम् । द्व्याधानं तु द्वियज्ञवत्स्यात् । यथा, एतेन द्वौ राजपुरोहितौ सायुज्यकामौ यजेयातामिति द्वयोः पुरुषयोर्द्वियज्ञो भवति । एवं द्व्याधानं द्वयोः पुरुषयोः स्यात् । ततोऽविशेषात् । वसानाविति श्रवणादेव पुरुषौ गम्येते । न पदान्तरगतेन क्षौमेणास्य संबन्धः । श्रुत्यवगतं हि श्रवणादवगतम् । पदान्तरसंबन्धं वाक्यादवगतम् । श्रुतिश्च वाक्याद्बलीयसी । वसानशब्दगतश्चार्थ आधानेन संबध्यते, न क्षौमशब्दगतः ।

---

यजेतेति[1] संख्या मिथुनाभिप्राया । आधानेऽपि प्राप्तं वसानाविति मिथुनद्वयं, तन्निवार्यते । अतः पूर्वः पक्षः । यदादधीयातां तद्वसनाविति । आधाने द्वित्वविधाने धात्वर्थे किंचिद्विहितमिति श्रुत्यनुग्रहः । इतरत्रापि[2] यद्याधाने क्षौमं विधीयते तत्र क्षौममधिकरणत्वेन[3] प्राप्नोति । अथ वसने क्षौमं विधीयते ततः क्षौमं वसनाङ्गमाधानस्यानङ्गत्वादनर्थकम् । वसानप्रातिपदिकस्यैवौकारेण श्रुत्या संबन्धः । पदान्तरत्वात्क्षौमसंबन्धो वाक्येन । तादृशस्य[4] प्रत्ययेन परामर्शादत्यन्तं वाक्यं स्यात् । वसानाविति संख्यासंख्येयसंबन्धः । तत्र संख्यया नान्यत्संख्येयं ग्राह्यं, संख्येयेन च नान्या संख्येतीतरेतरनियमः । यथाऽरुणैकहायन्योर्नियमः । तस्माद्द्वावत्र पुंसांसौ प्राप्तौ । स्त्रीग्रहणे संख्यासंख्येयसंबन्धो बाध्येत । द्वितीयस्य पुंसोऽस्ति पर्युपस्थापकः । यथा घटावानीयेयातामित्युक्तो द्वितीयो घट एवाऽऽनीयते नाश्वादिः, एवमिहापि ।

---

१ अनन्तरसङ्गतिं तावद्दर्शयति–यजेतेतीत्यादिना । २ इतरत्रापि–पक्ष इति शेषः । ३ अधिकरणत्वेनेति–आधाने क्षौमविधिपक्षे क्षौमशब्दः सप्तम्येकवचनान्तः । द्वितीयाद्विवचनान्तस्याऽऽधानेनान्वयायोगादिति भावः । ४ तादृशस्य प्रत्ययनेति–वाक्यगम्यस्य क्षौमवसनसंबन्धस्याऽऽदधातिपरेण विधिप्रत्ययेनेत्यर्थः ।

आह । वसानाविति नायं केवलं पुंलिङ्ग एव । स्त्रीपुंसयोरप्यभिधायको भवति । यथा कुक्कुटश्च कुक्कुटी च कुक्कुटौ । शूकरश्च शूकरी च शूकराविति । एवं वसानश्च वसाना च वसानौ स्यातामिति । अत्रोच्यते । यत्र नार्थः प्रकरणं वा विशेषकं, विधायकश्च शब्दः, नानुवादस्तत्र द्वौ पुमांसौ गम्येते । यथा द्वावानयेत्युक्तः पुमांसावानयति । द्वे आनयेति स्त्रियौ । तेन स्त्रियो वाचकमेकारान्तं द्विवचनमिति गम्यते । औकारान्तमपि द्वयोः पुंसोर्वाचकमिति । यत्रेदानीं स्त्रीपुंसयोः प्रयुज्यमानमौकारान्तं दृश्यते, तत्र किं पुमान् सद्वितीयस्तस्य निमित्तमुत स्त्री सद्वितीयेति । उच्यते । पुंसि सद्वितीये दृष्टः । यथा ब्राह्मणावानयेति । इहापि पुमान् सद्वितीयोऽर्थः । तस्मात्पुंनिमित्त इति गम्यते । अत्राऽऽह । प्रयोगो यदि दृष्टं प्रमाणं, द्वयोः पुंसोर्दृष्टः कथमेकस्मिन् स्यात् । अत्रोच्यते । पुंसि च द्वित्वे च दृष्ट इति शक्यते वदितुं, न द्वयोर्द्रव्ययोरिति । पुंभावं द्वित्वं चैष शब्दो न व्यभिचरति । द्रव्यं पुनर्व्यभिचरति ।

---

आह—वसानाविति नायं केवलं पुंलिङ्ग एव, स्त्रीपुंसयोरप्यभिधाता भवतीति । अस्य[2] न पुंद्वित्वविशिष्टं द्रव्यमभिधेयं, न च स्त्रीपुंसद्वित्वविशिष्टम् । तस्मादुभयोर्यत्सामान्यं तद्वाच्यम् । किं तत्, पुंस्त्वं द्वित्वं चेति । तच्च प्राप्तं न विधेयम् । तस्मात्सौमं विधीयत इत्यन्तर्णीताभिप्रायः परिचोदयति । अथवा—शब्दार्थमेवोभयप्रकारं[3] मन्यते प्रयोगदर्शनात् ।

अत्रोच्यते । यत्र नार्थः प्रकरणं वा विशेषकं, विधायकश्च शब्दो नानुवाद इति । कोऽभिप्रायः । कुक्कुटावानय मिथुनं करिष्याम इत्यत्र सामर्थ्याद्द्वितीया स्त्री, आनीयते । यत्र वा स्त्रीपुंसावधिकृतौ यत्र चौकाराभिधेयं प्राप्तत्वान्न विधीयते, तत्र स्त्रीपुंसौ गृह्येते । इहेदं त्रितयमपि नास्ति । अत औकारो द्वितीयं पुमांसं शक्नोति पर्युपस्थापयितुं न स्त्रियम् । अन्वयव्यतिरेकाभ्यां पुंस्त्वं द्वित्वं चाभिधेयम् । द्वयोरपि पुंसोः प्रयुक्तः स्त्रीपुंसयोरपि । तत्रानेकशक्तिकल्पनाभयात्पुंस्त्वं द्वित्वं चास्य वाच्य-

---

१ शब्दो नास्त्यनुवादः, तत्र–पा० । २ अस्य–द्विवचनस्य । ३ उभयप्रकारमिति–स्त्रीपुंद्वित्व–पुंद्वित्वरूपोभयप्रकारमित्यर्थः ।

अपि च युगपदधिकरणवचनतायां द्वंद्वस्मृतेर्द्विवचनबहुवचनोपपत्तेश्च। प्रमित्रयोर्वरुणयोरिति च दर्शनात्। इतरेतरयोगे चार्थे समासविधानाद्द्वन्द्वापवादत्वाच्चैकशेषस्य। यथैव खदिरौ च धवौ चेति निदर्शनं क्रियते, एवमत्रापि द्रष्टव्यम्। तस्मात्पुंसि द्वित्वे च वर्तेत इति गम्यते। न च स्त्रीद्वित्वे दृष्टः। अत्राऽऽह। नन्वत्रैव दर्शनात्स्त्रीपुंसयोर्वाचक इति गम्यते।

अत्रोच्यते। उक्तमेतत्। अन्यायश्चानेकार्थत्वमिति पुमान् सद्वितीयोऽस्यार्थो भविष्यति। स्त्रीपुंसौ चेत्यन्याय्यम्। अथेदानीं सद्वितीयस्य पुंसो विधौ कोऽन्यः सहायत इति। स्त्रिया अनभिधेयत्वात्, अवश्यंभावित्वाच्च द्वितीयस्य अपरः सद्वितीयः पुमान्, एवमितरोऽपीतरेण सद्वितीयः, इतरोऽपीतरेणेति द्वावेव पुमांसावुपादीयेते। तस्मादिह द्वौ पुमांसावाधाने विधीयेते इत्युच्यते।

मित्यध्यवसीयते। युगपदधिकरणवचनतायां द्वंद्वस्मृतेरित्येवमादिना यथा संख्यापूरणी न गृह्यते स्त्री, तत्प्रतिपाद्यते। कथं, द्वंद्वे धवशब्द आत्मीयमर्थमितरापेक्षमभिधत्ते। इतरोऽपीतरापेक्षमितीदृशेऽर्थे स्मर्यते। द्विवचनबहुवचनोपपत्तेश्चेति–यदि धवशब्दः खदिरनिरपेक्षमात्मीयमर्थमभिधत्ते, तर्ह्येकत्वाद् द्विवचनबहुवचने न स्याताम्। दृश्येते च द्विवचनबहुवचने। तस्मात्तुल्यं द्वितीयं प्रातिपदिकार्थमपेक्ष्य द्वित्वादिसंभवः। प्रमित्रयोर्वरुणयोरिति च दर्शनादिति। न द्वौ मित्रौ स्तो न वरुणौ। तत्र द्वित्वं नोपपद्यते, अन्योन्यापेक्षया घटते। इतरेतरयोगे चार्थे द्वंद्वविधानादिति। चकारः समुच्चयान्वाचयेतरेतरयोगसमाहारेषु वर्तते। तत्र समुच्चयान्वाचययोर्नास्ति समासः। समाहारेतरेतरयोगयोः समासः। ततोऽपि युगपदधिकरणवचनतायां द्वंद्वः। द्वंद्वापवादत्वाच्चैकशेषस्येति। यो हि द्वंद्वस्य धर्म इतरेतरयोगो नाम, स एकशेषस्यापि। इयांस्तु विशेषः। एकत्र शब्दश्चार्थश्च द्वावपि भिन्नौ। इतर-

१ एकशेषविधानस्य—पा०। २ सहायः—पा०। ३ द्वन्द्वस्मृतेरिति—'युगपदधिकरणे द्वन्द्वो भवति' इति कात्यायनवचनम्। अस्य चायमर्थः। अधिकरणं-शब्दप्रतिपाद्योऽर्थः। स यत्रानेको युगपदेकेन पदेन बोध्यते, तत्र द्वन्द्वो भवतीति। ४ चार्थमात्रे द्वन्द्वसमासपरिजिहीर्षया युगपदधिकरणवचनतायामेव द्वन्द्व एषितव्य इत्याह– ततोऽपीति। ५ एकत्र—द्वन्द्वे।

ननु स्त्रीपुंसयोर्वाचकमोकारान्तं द्विवचनं स्मरन्ति। नैषा स्मृतिरस्तीति ब्रूमः। आह। भगवतः पाणिनेर्वचनात्स्मृतिमनुमास्यामहे। पुमान् स्त्रिया, इति। उच्यते। न पाणिनेर्वचनं, कुक्कुटाविति, औकारः स्त्रीपुंसयोर्वाचक इति। कथं तर्हि। यत्र स्त्रीपुंसयोः सहवचनं, तत्र सद्वितीयो वा पुमानिति कृत्वाऽकारान्तस्यौकारः प्राप्नोति। सद्वितीया वा स्त्रीति कृत्वा, एकारः। पुंशब्दस्तत्र साधुर्न स्त्रीशब्द इति पाणिनेर्वचनम्। पुमान् शिष्यत इति च ब्रूते। तेन सुतरां गम्यते, पुंसोर्वाचक औकार इति। तस्माद्द्वयोः पुंसोरधिकार इति।

ननु क्षौमविधानपरमेतद्वाक्यम्। क्षौमसंबन्धस्यार्थवत्त्वात्। इतरथा क्षौमवचनमनर्थकं स्यात्। अत्रोच्यते। वसानावादधीयातामित्यस्ति संबन्धः, न क्षौमे आदधीयातामिति। तस्मात्संनिकृष्टमपि न तत्संबद्धमाधानेन। आह। वसानशब्देन सह संबध्यमानमर्थवद्भविष्यति। वसानसंनिकृष्टे अपि क्षौमे न विधीयते, विधायकस्य शब्दस्याभावात्। न हि वसानशब्दो विधायको, न क्षौमशब्दो, नानयोः समुदायः। कस्तर्हि विधातुं शक्नोति। आदधीयातामित्यत्र या लिङ्। आह। सा खलु विधास्यति। उच्यते। सा स्वशब्दगतमाधानं शक्नोति विधातुं श्रवणात्। विहितत्वादाधानस्याऽऽनर्थक्ये, वसानाविति शक्नोति वाक्येन विधातुम्। भवति हि वसानयोराधानसंबन्धः। तत्र नात्यन्ताय स्वार्थः परित्यक्तो भवति। क्षौमवसानसंबन्धे तु विधातव्ये, आदधीयातामित्याधानमुत्सृज्य विदधानोऽत्यन्ताय श्रुतिं जह्यात्। आधानसंनिकृष्टे च लिङ्गे विधातव्ये श्रुतिर्विप्रकृष्टं न क्षौमवसानसंबन्धं विधातुमुत्सहते। अर्थविप्रकर्षात्।

---

प्रार्थो भिन्नः। शब्द एक एव। वसानावित्येकशेषत्वाद्द्वितीयेन पुंसा भवितव्यम्। पुमान्हि श्रूयते द्विवचनश्रवणात्। स इतरसव्यपेक्षस्तस्य पुमानेव द्वितीयः। पुंसोऽस्ति पर्युपस्थापकं न स्त्रियाः। यत्र स्त्रीपुंसौ सहोच्चार्येते तत्र पुमान्सद्वितीय इत्यौकारान्तः

---

१ पा० सू० ( १-२-६७ )। २ स्त्रिया सहोक्तौ पुमान् पुंलिङ्गः शब्दः शिष्यते० पा०। ३ इतरत्र—एकशेषे। ४ पुमान्स्त्रियेति पाणिनिसूत्रविरोधमाकलय्य तदाशयं व्याचष्टे-यत्रेत्यादिना।

अपि चोत्सृज्य श्रुतिं क्षौमवसानसंबन्धे विधीयमाने क्षौमं वसानस्याङ्गं स्यान्नाऽऽधानस्य। तत्र क्षौमाभावेऽपि नाऽऽधानं विगुणमिति क्षौमाभावेऽप्याधानं स्यात्। आह। वसानगुणतायां तर्हि कोऽर्थो विवक्ष्यते। उच्यते। न कश्चित्। अत एवास्य पक्षस्य परित्यागः। आह। क्षौमवसानश्रवणमिदानीं किमर्थमिति। उच्यते। न शक्यत उभयं विधातुं, क्षौमं लिङ्गं च। भिद्येत हि तथा वाक्यम्। तस्मात्क्षौमाक्षौमयोः क्षौमशब्दोऽनुवादः। अर्थप्राप्ते च वसने, वसानौ पुमांसावित्यर्थः। ते च प्रायेण विचेष्टमानस्य मलिने क्षौमसदृशे भवतः। विचेष्टमानस्य वा वसने शब्दवती भवत इति। तस्माद्‌द्वयोः पुंसोरधिकार इति॥ २२॥

## गुणस्य तु विधानत्वात्पत्न्या द्वितीयशब्दः स्यात्॥ २३॥ सि०

तुशब्दः पक्षं व्यावर्तयति। नैतदस्ति। यदुक्तं द्वौ पुरुषावादधीयातामिति। एक एवाऽऽदधीत। वसन्ते ब्राह्मणोऽग्नीनादधीतेति, एकवचनं हि विवक्षितम्। तस्मादेक एवाऽऽदधीत। नन्विदं वचनं द्वौ पुमांसावादधीयातामिति। नेत्याह। गुणस्य तु विधानत्वात्, क्षौमविधानमस्मिन्वाक्ये न्याय्यम्। तथा ह्यपूर्वोऽर्थो विहितो भवति। गम्यते हि विशेषनियमः[3]। इतरथा क्षौमवचनमनुवादमात्रं स्यात्। वादमात्रं चानर्थकम्। पक्षे चानुवादः। न चैकपक्षवचन एष शब्दः। गौणत्वे च साधारणं सादृश्यम्। तस्मात्प्रमादाध्ययनमवगम्येत विनैव हेतुना।

---

प्राप्नोति स्त्री सद्वितीयेत्येकारान्तः। तत्राकारैः प्रयुज्यमानः साधुर्न स्त्रीपुंसौ वाच्यौ॥ २२॥

क्षौमशब्दस्यानुवादो न घटते, अप्राप्तत्वात्। न लक्षणयाऽनुवादः, सादृश्येन[4] वा। न हि क्षौमं मलिनत्वेन विनाऽऽत्मानं न लभते, येन तल्लक्षयेत्। यथा शुक्लादिगुणो द्रव्येण विना न भवतीत्यविनाभावाद्‌द्रव्यं लक्षयति, नैवमिह। विनाऽपि मलिनत्वेन क्षौमस्य सद्भावोऽस्त्येव। अतो नास्ति लक्षणयाऽवबोधः। अथ विद्यते क्षौमे मलिनतेति।

---

१ निर्वर्त्येते० पा०। २ एकवचनस्य विवक्षितत्वात्० पा०। ३ विशेषवचनं० पा०। ४ सादृश्येन वेति—गौण्या वृत्त्यो इत्यर्थः।

आह । ननु पुमांसौ विधेयौ । तद्विधाने च न क्षौमविधानम् । वाक्यभेदो हि तथा स्यात् । श्रुतिगम्यौ च पुमांसौ, वाक्यगम्यं च क्षौमं बाधेयातामिति । अत्रोच्यते । न पुमांसौ विधेयौ । प्राप्त एवात्र सद्वितीयः पुमान् । सोऽनूद्यते । कथम् । एकोऽत्र पुमान् श्रूयते । तस्य पत्न्या द्वितीयशब्दः स्यात् । न च यत्प्रागुवचनाद्गम्यते, तद्विधेयं भवति । तस्मात्क्षौमविधानं, न वाक्यभेदो भवति । यदुच्यते, न क्षौमस्य विधायकोऽस्तीति । तदुच्यते । आदधीयातामिति तद्विधास्यति । नन्वेतदाधानं श्रुत्या विधातुं समर्थं, नान्यदिति । उच्यते । शब्दान्तरेण विहितत्वादाधानस्य न विधायकं, विहितत्वाच्च पुंसः सद्वितीयस्य, तस्यापि न विधायकम् । अतस्तदसंभवात्क्षौमस्य विधायिका लिङ् भविष्यति । वाक्यसामर्थ्यात् ।

यत्त्वस्मिन्पक्षेऽत्यन्ताय स्वार्थं जहातीति । नात्यन्ताय हास्यति । आधाने वासः क्षौमं कुर्यादिति । अस्मिन्पक्षे पुंशब्दः स्त्रीपुंसयोर्वृत्त इति गम्यते । अस्ति हि तत्र तस्य निमित्तं पुमान् सद्वितीयः । एवमादि च दृष्ट्वा भगवता पाणिनिना सूत्रं प्रणीतं, पुमान् स्त्रिया, इति । तस्य विषयः पुंशब्दः शिष्यमाणः साधुर्भवति, न स्त्रीशब्द इति । तस्मादेकः पुमानादधीत, न द्वाविति ॥ २३ ॥

( याजमानमिति समाख्यातानां पत्नीकर्तृकत्वाभावाधिकरणम् ॥ ६ ॥)

## [६] तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात् ॥२४॥ सि०

---

सा हि कार्पासादावपि विद्यते । असाधारण्येन हि लक्षणा भवति । न हि सादृश्यं हेतुः[२], उपपदाभावात् । सामानाधिकरण्येन हि भवति सादृश्यं, यथा सिंहो देवदत्त इति । अवयवप्रसिद्धिरपि समुदायप्रसिद्ध्या बाध्यते । तस्मादनुवादाभावाद्विधेयमेतत् । यः प्रकरणगतः पुरुषस्तस्यार्थप्राप्ते वसने क्षौमं नियम्यते । स प्रकरणगतः शक्नोत्यपूर्वं लक्षयितुम् । तत्रैतद्विधीयते न पुरुषस्वरूपे । यथा व्रीहयः शक्नुवन्त्यपूर्वं लक्षयितुम्, एवमिहापि । वसानाविति, उत्पत्तिवाक्ये[३] स्त्रीपुंसयोः प्राप्तत्वादनुवादः ॥ २३ ॥

---

१ पा० सू० ( १—२—६७ ) । २ हेतुः—क्षौमशब्दार्थप्रतिपत्तिहेतुः । ३ उत्पत्ति वाक्ये— ' वसन्ते ब्राह्मणोऽग्नीनादधीत ' इत्यस्मिन्नित्यर्थः ।

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यवमादिष्वेतदुक्तं स्त्रीपुंसयोः सहाधिकार इति । अथेदानीं संदिह्यते । किं सर्वं याजमानं पत्न्या कर्तव्यमुत यावदुक्तमाशीर्ब्रह्मचर्यं चेति । किं प्राप्तम् । सर्वं याजमानं पत्न्या स्यात् । साऽपि हि यजमाना । तुल्यत्वात् । तस्मात्सर्वं तस्या इति ।

एवं प्राप्ते ब्रूमः । तस्या यावदुक्तं स्यात् । वचनप्रामाण्यात् । आशीः, ब्रह्मचर्यं च स्यात् । कस्मात् । अतुल्यत्वात् । अतुल्या हि स्त्री पुंसा । यजमानः पुमान् विद्वांश्च, पत्नी स्त्री चाविद्या च । किमतो यद्येतदतुल्यत्वम् । एतदतो भवति । क्रत्वर्थेषु यानि याजमानानि श्रवणानि, तेषूपादेयत्वेन श्रवणाद्विवक्षितं लिङ्गम् । तेन तेषु पत्नी न स्यात् । यानि च क्रत्वर्थानि समन्त्रकाणि तेष्वविद्यत्वात्पत्नी न स्यात् । तत्पत्न्या अध्ययनस्य प्रयोजकं स्यादिति यद्युच्येत । तन्न । असत्यपि प्रयोजकत्वे तस्य निर्वृत्तिर्भविष्यति । अस्ति हि तस्य पुमान्निर्वर्तकः । यच्च क्रत्वर्थं, तदेकेन येन केनचिन्निर्वर्तयितव्यम् । तस्मात्प्रतिषिद्धस्य पत्न्या अध्ययनस्य पुनः प्रसवे, न किंचिदस्ति प्रमाणम् । अतस्तदपि पत्नी न कुर्यात् । यास्त्वाशिषो, यच्च ब्रह्मचर्यं, तत्पुरुषं

---

आशीःशब्देन केशश्मश्रुवपनादयः संस्कारा लक्ष्यन्ते । त उभयोरपि भवन्ति । पुरुषार्थत्वेन ब्रह्मचर्यमुक्तं, तथा क्रत्वर्थेनापि दृश्यते । एवं चेदब्रह्मचर्येण क्रतोर्वैगुण्यम् । इतरथा पुरुषार्थत्वान्न स्यात् । 'शुक्रं यजमानोऽन्वारभते' इत्येवमादिषु तस्योपादीयमानत्वात्पुंलिङ्गं विवक्षितम् । यजमानकाण्डेऽपि ये समाख्यायन्ते तेऽपि यजमानकर्तृका एव । तत्र ये मन्त्रास्ते यजमानेनैवोच्चारणीयाः । कथम् । स हि विद्वानितरा त्वविद्या । अन्यथानुपपत्त्याऽध्येष्यत इति चेत् । साऽपि यजमानविद्वत्तयाऽन्यथानुपपत्तिः क्षीणा । तदीयेनैवाध्ययनेन निराकाङ्क्षत्वान्न प्रतिषिद्धमध्ययनं करिष्यति । एवं चेद्याजमानमित्यन्यतरस्मात्तद्धितोत्पत्तौ कृतायां येऽप्यमन्त्रवन्तः,

---

१ केशश्मश्रुवपनादिपदं स्त्रियाः संभवत्संस्कारोपलक्षणार्थं न तु स्वार्थपरं, पत्न्याः केशश्मश्रुवपनासंभवादिति ज्ञेयम् । २ इतरथेति—यदि प्राकरणिकवाक्येन ब्रह्मचर्यं क्रत्वर्थतया न विधीयेत तदा तस्य केवलपुरुषार्थत्वात्तदननुष्ठानेऽपि न क्रतोर्वैगुण्यं भवेत्, संयोगपृथक्त्वात्तु तेन क्रत्वर्थतयाऽपि ब्रह्मचर्यविधानाद्भवत्येव तदननुष्ठाने क्रतोर्वैगुण्यमिति भावः ।

मति गुणभूतम्। न तत्रान्यतरेण कृते सिध्यति। अन्यतरस्य हि संस्कारो हीयेत। न च तत्रोपादेयत्वेन यजमानस्य श्रवणम्। तस्माल्लिङ्गमप्यविवक्षितम्। अत आशीर्ब्रह्मचर्यं चोभयोरपि स्यात्। यच्चाऽऽइत्योच्यते। यथा, पत्न्याज्यमवेक्षेते, इति। तस्मादतुल्यत्वादसमानविधाना पत्नी यजमानेन भवितुमर्हतीति॥ २४॥

---

पदार्थास्तानपि यजमान एव करिष्यति। यद्यपि तेष्वविद्वत्त्वं नास्ति दोषः, तथाऽपि यजमानेनैव केवलेन तद्धितस्योत्पद्यमानत्वात्पत्न्याऽननुष्ठानम्। न च पत्नीयजमानयोः कृतैकशेषयोस्तद्धितः, प्रमाणाभावात्॥ २४॥

द्व्याधानं च द्वियज्ञवत्। पूर्वाधिकरणे, एकवचनं मिथुनाभिप्रायं, संसर्गाभिप्रायं वेत्युक्तम्। इहापि द्विवचनं तथैव द्वे कारकशक्ती द्वे च मिथुने ब्रवीतीत्यनेन प्रसङ्गेनाऽऽरभ्यते; क्षौमाधानसंबन्धो न, वसानव्यवधानात्। वसानावादधीयातामिति सामानाधिकरण्यादुपपद्यते संबन्धः। क्षौमे, आदधीयातामिति सामानाधिकरण्याभावान्नास्ति संबन्धः। संबन्ध्यमानं वाऽऽधानस्याधिकरणं स्यात्। क्षौमवसानसंबन्धे न सामानाधिकरण्यमधिकरणदोषश्च नास्तीति चेत्। वसनक्रिया कर्तुरुपसर्जनभूतत्वान्नान्येन संबन्धयितुं शक्यते। कर्त्राऽपि नास्ति संबन्धः। वसनक्रिया, उपसर्जनीभूताऽपि पुनर्विपरिवृत्त्य संबध्यतऽइति चेत्। न। विधीयमाना हि क्रिया भाव्यमानत्वात्कारकैः संबध्यते। अविधीयमानाया न कारकैर्भवति संबन्धः। अविधीयमाने क्षौमं संबध्यमानं लौकिकेऽपि स्यात्। तत्रादृष्टार्थताऽपि स्यात्।

किं च क्षौमवसानयोः संबन्धमादधीयातामिति कुर्यात्। तत्रात्यन्तं वाक्यम्। प्रत्यय उपश्लेषलक्षणया श्रुत्या धात्वर्थं विधत्ते तदङ्गं वा। इह द्वयमपि न विधत्ते–धात्वर्थं धात्वर्थस्य वाऽन्यत्। तत्परायाः श्रुतेरभावात्। वसानाविति विधीयमाने धात्वर्थे

---

१ अवेक्षेत इतीति—तदपि पत्न्या कर्तव्यमिति शेषपूरणम्। २ 'द्व्याधानं च द्वियज्ञवत्' इत्यादिसूत्रत्रयमधिकरणद्वयेन यथाभाष्यं व्याख्यायाधुना तदेवाधिकरणद्वयं विस्पष्टीकरणाय पुनर्व्याख्यायते—द्व्याधानं चेत्यादिना। ३ संसर्गाभिप्रायं वेति—दंपत्योर्व्यासज्यवृत्ति यत्कर्तृत्वं तदभिप्रायं वेत्यर्थः। ४ न सामानाधिकरण्यमिति—बाधकमिति शेषः। ५ नास्ति संबन्ध इति—कारकाणां मिथः संबन्धायोगादिति शेषः। ६ उपसर्जनीभूता—कर्तुरिति शेषः। ७ संबध्यते—क्षौमेणेति शेषः। ८ उपश्लेषलक्षणया—एकपदप्रत्यासत्तिलक्षणयेत्यर्थः। ९ इह—वसनाङ्गतया क्षौमविधिपक्षे।

किंचिद्विधानाच्छ्रुतिः । वसानशब्दस्याप्येकपदोपात्तत्वादौकारेण श्रुत्या संबन्धः । क्षौमेण पदान्तरोपात्तत्वाद्वाक्यम् । श्रुतिश्च वाक्याद्बलीयसी । तस्माद्द्वौ पुमांसावाधाने विधीयेते । कस्मात्पुनः पूर्वपक्षवादिनाऽनुमानेन द्वितीयः पुमानिष्यते, न पुनरौकारेण द्वौ पुमांसावभिधीयेते इति ब्रवीति । येन सिद्धान्तवादिनः परिचोदनैव नोत्तिष्ठति ।

उच्यते । यदि पुमांसौ वाच्याविति ब्रूयात्ततोऽनैकान्तिकत्वं भवति । यथा द्वयोः पुंसोर्दृष्टस्तथा स्त्रीपुंसयोरपि दृष्ट एव । तत्र क्षौमविधानात्स्त्रीपुंसयोरर्थप्राप्तत्वात्पूर्वपक्षानुत्थानम् । तन्मा भूदिति न्यायात्पुंद्वयं प्रतिपाद्यते न शब्दात् । 'यत्र नार्थः प्रकरणं वा विशेषकं, विधायकश्च शब्दो नानुवादः' इति पूर्वपक्षविपरीतोऽयं ग्रन्थः । कथम् । यत्रैतानि कारणानि तत्र स्त्रीसद्वितीयो गृह्यते । इह च प्रकरणात्स्त्रीसद्वितीयः पुमान्प्राप्तः । एवं चेत्सैव ग्रहीष्यते । किं च क्षौमपदानुग्रहात् ।

उच्यते । प्रत्ययविप्रकर्षाद्व्यवहितकल्पनात्सामानाधिकरण्याच्चोक्तं न विधीयते क्षौमम् । वसानाविति चोच्चार्यमाणं स्वरसेन द्वौ पुमांसाववगमयति । अत एतस्मिन्स्थित इदमुक्तम् । 'औकारस्य पुंस्त्वं द्वित्वं च वाच्यमिति' कथं, ब्राह्मणाविति द्वयोः पुंसोरौकारः प्रयुक्तः । कुक्कुटाविति स्त्रीपुंसयोः । तत्र यदि द्वे अभिधेये स्यातां, द्विर्दृष्टं भवेत् । उच्चरिते च संशयः स्यात्, कतरदनेनाभिहितमिति । अतो यदनयोः सामान्यं तद्वाच्यम् । तत्र पुमानुभयत्रापि विद्यते द्वित्वं च । तस्मादेतदेवास्य वाच्यम् । पुमानेव कथं द्वितीय इति चेत् ।

उच्यते । यत्र द्वित्वं तत्र पुमान् यत्र पुमांस्तत्र द्वित्वम् । अनयोः परस्परनियमः । एकपदोपादानाद्यस्यां क्रियायां द्वित्वं तस्य पुंस्त्वम् । अनयोः परस्परसंबन्धोऽरुणादिवत् । द्वित्वस्याऽऽश्रयेण भवितव्यम् । स्त्रिया अवबोधकं नास्ति । द्वित्वं तावन्नावबोधयति । विनाऽपि स्त्रियोपपद्यमानत्वात् । पुमानपि न शक्नोत्यवबोधयितुम् । असंबन्धात् । औकारो ब्रूते पुंलिङ्गं द्वित्वं च । द्वित्वसंख्यापूरकं बाह्यं तत्रेतरत् । तत्र कतरत्स्यात्, पुमान् । पुमाञ्छक्नोति पुमांसमवबोधयितुम् । तस्मान्न्यायाद्द्वौ पुमांसौ । न च विग्रहकालेऽपि स्त्रियाः श्रवणम् । वसानश्च वसाना चेतीदृशस्याभावात् । कथमभावः । युगपदधिकरणवचनतायां द्वंद्वस्मृतेः । यत्र द्वौ बहवो वा युगपदभिधातुमिष्यन्ते, तत्र द्वंद्वसमासो भवतीति ।

अयक्तमिदमुच्यते । समासः प्रमाणान्तरेण संबन्धे भवति । धवखदिरयोश्चाङ्गा-

१ स्यादिति शेषः । २ एतानि कारणानि—अर्थ—प्रकरण—अनुवादकत्वरूपाणि स्त्रीप्राप्तिकारणानि 'नार्थः प्रकरणं वा' इत्यादिभाष्यादर्थादुक्तानीत्यर्थः । ३ अनुग्रहादिति—सैव ग्रहीष्यत इत्यनुषङ्गः । ४ द्विर्दृष्टं–द्विः कल्पितं शब्दस्य वाचकसामर्थ्यमित्यर्थः । ५ अरुणान्यायमेव प्रकृते दर्शयति–द्वित्वस्येत्यादिना ।

क्रिस्वस्वाम्याश्रयाश्रयिसंबन्धो नास्ति । क्रियया च संबन्धः समासोत्तरकालभावी । सर्वे च समासाः संबन्धोत्तरकालम् । यथा राजपुरुष इति स्वस्वामिभावेऽवगते, चित्रगुरिति चित्राभिर्गोभिः संबन्धेऽवगते, पञ्चमूलीति समाहारसंबन्धोत्तरकालम्, उपकुम्भमिति समीपसंबन्धोत्तरकालं, न चेह धवखदिरयोः संबन्धोऽस्ति । उच्यते । एकशब्दाभिधेयत्वमनयोः संबन्धः । तत्र समासेऽभिप्रेते भवति । विग्रहस्त्वीदृशः, धवौ च खदिरौ चेति । 'द्विवचनबहुवचनोपपत्तेश्चेति' । यदि धवेन केवलेन धव एवाभिधीयते खदिरेण च खदिरः, एवं खादिरात्परं द्विवचनं न प्राप्नोति । अतो द्वावप्यभिधीयेते । लौकिकोऽयं न्यायः प्रदर्शितः ।

'प्रमित्रयोर्वरुणयोरिति दर्शनात्' मित्रस्यैकत्वाद्वरुणस्य च, द्विवचनं न प्राप्नोति । 'इतरेतरयोगे च द्वंद्वविधानादिति' चार्थे द्वंद्वः इति सूत्रस्यार्थः प्रदर्श्यते । चशब्दः समुच्चयान्वाचयेतरेतरयोगसमाहारेषु । तत्र समुच्चये–धवमानय, खदिरमानयेति समासो नास्ति । अन्वाचये–काष्ठमानय शाकमप्याहर्तव्यमिति ।

तत्र काष्ठान्यरण्यगमनप्रयोजकानि । इतरदप्रयोजकम् । समुच्चये द्वयमपि प्रयोजकम् । द्वयोः सहाऽऽनीयमानयोरितरेतरयोगोऽनुनिष्पादी भवति । चकारस्य तत्फलम् । तत्कृते चार्थे द्वंद्व इति । तत्रैव कदाचिदितरेतरयोगो विवक्षितः । समाहारः प्रचयादवगम्यमानोऽविवक्षितः । कदाचित्समाहारो विवक्षित इतरेतरयोगो नान्तरीयकः । एतयोरर्थयोर्द्वंद्वः । समाहारविवक्षायां धवखदिरमिति प्रयोगः, इतरत्र धवखदिराविति-प्रयोगः । 'द्वंद्वापवादत्वाच्चैकशेषस्य' । यथा द्वंद्वे यौगपद्येन द्वावभिधीयेते, विग्रहश्च, तथैकशेषेऽपि । वसानाविति चैकशेषस्ततो द्वौ पुमांसौ ।

ननु यदि धवो द्वित्वाभिधायी खदिरश्च, तयोर्बहुवचनं स्यात् । उच्यते । द्वयोर्द्वित्वयोर्बहुवचनं न द्वयोर्द्विवचनयोः । यदि हि द्वयोर्द्विवचनयोर्बहुवचनं स्यात्, ब्राह्मणौ शोभनौ विज्ञातारावित्यत्रापि बहुवचनं स्यात्, ।

सैषा युगपदधिकरणवचनता दुःखा, दुरुपपादा च । कथम् । एकैकशब्दस्य द्वे द्वे अभिधेये स्याताम् । यदि च स्याताम् 'उक्तार्थानामप्रयोगः' इति धवस्याप्रयोगः स्यात् ।

१ पा० सू (२-२-२९)। २ समुच्चयान्वाचययोर्भेदं दर्शयति—तत्रेत्यदिना । विभक्त्यर्थान्वये परस्परनिरपेक्षत्वे सति क्रियान्वये परस्परसापेक्षत्वे सति समत्वं समुच्चयः । इतरेतरयोगे, विकल्पे, अन्वाचये चातिव्याप्तिवारणाय यथाक्रमं विशेषणत्रयं बोध्यमिति । ३ विग्रहश्च—धवौ च खदिरौ चेत्येवं तदनुरूप इति शेषः । ४ तथैकशेषेऽपिति—यौगपद्येनार्थद्वयाभिधानमिति शेषः । ५ वसानाविति–वसानौ च वसानौ चेत्येवमेव विगृह्यैकशेष इत्यर्थः । ६ दुःखा–बुद्ध्यावनारोहादिति शेषः । ७ इतीति—इति न्यायादिति शेषः ।

तस्मादेवं वर्णयन्ति–धव आत्मीयमभिधेयमितरसहितं ब्रवीति, एवं खदिरोऽपि । स कतरो द्वितीय इति तत्र खदिरशब्देन धवो विशेष्यते, धवेनापीतरः । ननु तत्र पाणिनिस्मरणं ' पुमान् स्त्रिया ' इति । उच्यते । न पाणिनिनाऽर्थानुशासनं कृतं, किं तर्हि, यथा लोकेऽवस्थितोऽर्थस्तथास्थितस्य शब्दानुशासनं कृतम् । तत्राकारात्पर औकारः श्रूयमाणः पुमांसं सद्वितीयं वदति । यदा स्त्री सद्वितीया तदौकार एकारीभवति । यदा पुनः स्त्रीपुंसावभिधेयौ तदेकारौकारौ प्राप्नुतः, द्वयोरभिधेययोर्विद्यमानत्वात् । तत्रौकारः शिष्यत इत्ययं नियमः क्रियते । न तु पुंसा सद्वितीया ऽस्याभिधीयते ॥ २२ ॥

गुणस्य तु विधानत्वात् ॥ उत्पत्तिवाक्यशिष्टेनैकत्वेनावरुद्धत्वाद्द्वित्वस्यावकाशाभावात्कर्मान्तरं प्राप्नोति । न चेष्यते कर्मान्तरम् । न च क्षौमयोरनुवादो घटते । तत्र शब्दवती वा क्षौमे, मलिने वा । तत्र ' टुक्षु शब्दे ' इत्यवयवव्युत्पत्त्या वर्तेत । रूढ्या क्षौममेव ब्रवीति । रूढ्या चावयवव्युत्पत्तिर्बाध्यते । व्युत्पत्तावाश्रीयमाणायां शङ्खादीनामपि क्षौमशब्दवाच्यता स्यात् । न च तेषु वर्तते । मलिनवचने कार्पासादीनामपि मलिनत्वस्य विद्यमानत्वात्क्षौमशब्दाभिधेयता स्यात् । न च तेषु क्षौमशब्दः । अमलिने क्षौमे प्रयोगो न स्यात् । अस्ति च प्रयोगः । अमलिनपक्षे च विधिं प्रयोजयति ।

लक्षणाऽप्यविनाभावादुपपन्ना भवति । न चोपपदेन सहानुच्चरितत्वात्क्षौमसदृशं कार्पासादि शक्नोत्यवबोधयितुम् । यथा सिंहो देवदत्त इति । सिंहशब्दोच्चारणे सिंहसादृश्यं देवदत्ते, एवमिहापि । तस्मादुपपदाभावात्सादृश्ये गृह्यमाणे साधारणशब्दता स्यात् । अविनाभावेन मलिनत्वमवबोधयेताम् । न च मलिनत्वेन विना क्षौमं नोपपद्यते । तस्मादप्राप्तत्वात्क्षौमं विधीयते । वसानाविति पुंस्त्वं द्वित्वं च वदति । तच्च प्रकरणे प्राप्तत्वादनूद्यते । यदुक्तमाधानसंबन्धो न प्राप्नोतीति । तत्रोच्यते । आधाने क्षौमं कुर्यादिति विधीयते, तत्कथमाधाने भवति, तत्साधनस्य भवतदर्थं भवति । अथवा—अस्तु क्षौमवसनसंबन्धविधानम् । ननु वसनमात्रे स्यात् । उच्यते । आधानप्रकरणे

१ पा० सू० ( १–२–६७ ) २ उत्पत्तिवाक्यशिष्टेनेति—' वसन्ते ब्राह्मणोऽग्नीनादधीत इत्याधानोत्पत्तिवाक्यविहितेनेत्यर्थः । ३ तत्र—शब्दवतोस्तावत्क्षौमशब्दो वर्तेतेत्यर्थः । ४ क्षौमशब्दस्य मलिनत्ववाचित्वपक्षं, अमलिनपक्षे नित्यानुवादत्वासंभवेन प्रदूष्य लक्षणापक्षं दूषयति—लक्षणाऽपीत्यादिना । न हि क्षौमं मलिनत्वेनाविनाभूतमतो लक्षणा न शक्नोति भावः । ५ नापि गौणी संभवतीत्याह—न चोपपदेनेत्यादिना । ६ यद्युपपदाभावेऽपि सादृश्यं गृह्येत तदाऽनिष्टं प्रसञ्जयति—तस्मादित्यादिना । ७ साधारणशब्दता—अनेकार्थता । सा चान्याय्येति भावः । ८ क्षौमद्वयाभिप्रायेण द्विवचनं बोध्यम् ।

समाम्नानात्तदीयस्य पुरुषस्य यद्व्यसनं, तत्र भविष्यति । यथा 'प्रकरणविशेषाद्वा तद्युक्तस्य संस्कारो द्रव्यवत्' इति, एवमत्रापीति सिद्धम् ॥ २३ ॥

**तस्या यावदुक्तम्** ॥ 'शुक्रं यजमानोऽन्वारभते' इत्येवमादिषु पुंस्त्वैकत्वयोर्विवक्षितत्वात्पुमान्प्रत्येतव्यः । न चाऽऽशीर्वचनं तस्याः । कुतः । 'ब्राह्मणमुपनयीत' इत्याचार्यकरण आत्मनेपदं भवति । देवदत्त आत्मन आचार्यत्वं भावयति । तत्र देवदत्त उपनयनफलं भजमानः प्रधानभूतः । माणवकस्य तूपादीयमानत्वाल्लिङ्गसंख्यं विवक्षितम् । स तु वेदमध्यापयन्नाचार्यो भवति नान्यथा । तस्मात्पुंसोऽध्ययनं विहितमितरस्य विधानाभावादवैधता । न चान्यथानुपपत्त्याऽध्ययनं तस्याः, अन्यथाऽप्युपपद्यमानत्वात् । अतः प्राप्तोऽध्ययनप्रतिषेधः । अथवा स्मृतेः प्रतिषेधः । एवं वेदाशीःशब्देन संस्कारा लक्ष्यन्ते, त उभयोरपि भवन्ति । तत्र लिङ्गसंख्यमविवक्षितम् । न च पत्न्या वपनम् । किं कारणं, केशश्मश्र्विति द्वंद्वोऽयम् । तत्रेतेरतरयोगे वपनं निष्पद्यते ।

ननु केशश्मश्रुणोः संस्कार्यत्वात्साहित्यमविवक्षितम् । उच्यते । तयोरपनीतयोरन्यन्न किंचित्प्रयोजनं श्रूयते, येन संस्क्रियेयाताम् । वपनेनापनीताश्चामेध्या भवन्ति । न च कृतप्रयोजनाः । ततः पुरुषो वपनेन संस्क्रियते । तस्मात्केशश्मश्रुणोः संस्कारार्थत्वेनोपादानाद्विवक्षितं साहित्यम् । ब्रह्मचर्यं क्रत्वर्थतया यदि न विधीयते ततः क्रतुरविगुणः, किं पुरुषस्य वैगुण्यम् । तस्मादप्राप्तत्वाद्विधेयम् । संस्कारेण गतार्थत्वादवाच्यम् । अतो ब्रह्मचर्येण कामा लक्ष्यन्ते । ते पत्न्या अपि भवन्ति ।

येषु नावैधतादोषः, न चोपादीयमानता, तत्रानियम इति चेत् । न । तत्रापि मुख्यत्वाद्यजमान एव भवति । अथवा—यद्यप्यमन्त्रकास्ते पदार्थास्तथाऽपि विद्वत्तया तेषु यजमानेन क्रियमाणेषु प्रमादो न भविष्यति । न चान्यथानुपपत्त्या तस्या विद्वत्ता शक्या कल्पयितुं, तदीयया क्रतोर्निराकाङ्क्षत्वात् । अथवा—याजमानमिति तद्धितः स्त्रीप्राति-

१ (अ० ३ पा० ४ अ० ५ सू० १५) २ नान्यथेति—उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥ इति मनुस्मृतेरिति शेषः । ३ अन्यथानुपपत्त्या । आशीर्वचनान्यथानुपपत्त्या । ४ अन्यथाऽपि—पुंविद्वत्तयैव । ५ अत इति—यतो न्यायादेव सिद्धमनध्ययनं स्त्रियाः, अत इति शेषः । ६ नापि भूतोपयोगित्वमित्याह—न चेति । ७ तत इति—तल्लोपेऽपीति शेषः । ८ अप्राप्तत्वादिति—क्रत्वर्थतया ब्रह्मचर्यस्येति शेषः । ९ अमन्त्रकेषु केषुचित्, याजमानमिति समाख्यया पत्नीयजमानयोः कर्तृत्वानियमं शङ्कते—येष्वित्यादिना । १० मुख्यत्वात् स्वातन्त्र्यादित्यर्थः ।

( अपशूद्राधिकरणम् ॥ ७ ॥ )

[ ७ ] चातुर्वर्ण्यमविशेषात् ॥ २५ ॥ पू०

अग्निहोत्रादीनि कर्माण्युदाहरणम् । तेषु संदेहः । किं चतुर्णां वर्णानां तानि भवेयुरुतापशूद्राणां त्रयाणां वर्णानामिति । किं तावत्प्राप्तम् । चातुर्वर्ण्यमधिकृत्य, यजेत, जुहुयादित्येवमादिशब्दमुच्चरति वेदः । कुतः । अविशेषात् । न हि कश्चिद्विशेष उपादीयते । तस्माच्छूद्रो न निवर्तते ॥ २५ ॥

निर्देशाद्वा त्रयाणां स्यादग्न्याधेये ह्यसंबन्धः क्रतुषु, ब्राह्मणश्रुतिरित्यात्रेयः ॥ २६ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । त्रयाणामधिकारः स्यात् । कुतः । अग्न्याधेये निर्देशात् । अग्न्याधेये त्रयाणां निर्देशो भवति । वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्य इति । शूद्रस्याऽऽधाने श्रुतिर्नास्तीत्यनग्निः शूद्रोऽसमर्थोऽग्निहोत्रादि निर्वर्तयितुम् । तस्मात्, अग्निहोत्रं जुहुयात्स्वर्गकाम इत्येवमादिषु शूद्रस्य प्रापिका श्रुतिर्नास्ति । ब्राह्मणादीनेवाधिकृत्य सा प्रवर्तते । ते हि समर्थाः । अग्निमत्त्वात् । आहवनीयादयो न शूद्रस्य । अविधानात् । संस्कारशब्दत्वाच्चाऽऽहवनीयादीनाम् । तस्मादनधिकृतोऽग्निहोत्रादिषु शूद्र इत्यात्रेयो मुनिर्मन्यते स्म ॥ २६ ॥

---

पदिकाद्वोत्पाद्यः पुंप्रातिपदिकाद्वा । तत्र स्त्रीप्रातिपदिकादुत्पत्तौ समन्त्रकेषु विरोधः । न तु पुंप्रातिपदिकादुत्पत्तौ कश्चिद्विरोधः । तस्मात्सर्वं यजमानेन कर्तव्यम् । आहत्य विहितं पत्न्या च । न च कृतैकशेषयोस्तद्धितोत्पत्तिः, प्रमाणाभावात् ॥ २४ ॥ [ २६ ]

वसन्तब्राह्मणकर्तृत्वविशिष्टमाधानमग्न्युत्पत्त्यर्थम् । स चाग्निर्यज्ञाङ्गम् । न च शूद्रस्याग्निरस्ति । विशिष्टेन कारणेनोत्पद्यमाना आहवनीयादयो भवन्ति, अलौकिकत्वात् । न च यूपशब्दवदयम् । तत्र हि बन्धनसमर्थं यत्तद्वगतं, विशेषस्त्वनवगतः । स ह्युपपदाद्वाक्यान्तराद्वाऽवधार्यते, अयं यूप इति । इह तु होमेनाऽऽहवनीयस्याक्षेपात्सामान्यावगतिर्नास्ति । तस्मादन्येनाक्षेपाद्वेदाद्योऽवगम्यते स आहवनीयः । स च वसन्ते ब्राह्मणकर्तृकोऽवगम्यते । तेनान्यकालकर्तृको न भवत्याहवनीयः । तदभावे[1] फलाभावः । तस्माच्छूद्रस्यानधिकारः ॥ २६ ॥

---

१ तदभावे फलाभाव इति–आहवनीयाभावे विगुणाद्धोममात्रफलमुत्पद्यते शूद्रस्येत्यर्थः ।

## निमित्तार्थेन बादरिस्तस्मात्सर्वाधिकारं स्यात्॥ २७ ॥

यदुक्तमनधिकारः शूद्रस्येति । तन्न । सर्वं हि अर्थिनमधिकृत्य यजेतेत्युच्यते । सोऽसति प्रतिषेधवचने शूद्रान्न व्यावर्तेत । यच्चासमर्थोऽग्न्यभावादिति । स्यादेवास्याग्निरर्थप्राप्तः । कामश्रुतिपरिगृहीतत्वात् । अत्राऽऽह । नन्वग्न्याधेयचोदना ब्राह्मणादिसंयुक्ता न शूद्रस्येति । उच्यते । निमित्तार्थेन ताः श्रुतयो न प्रापिकाः । कथम् । निमित्तस्वाभावा एते शब्दाः । ब्राह्मण आदधानो वसन्ते, राजन्यो ग्रीष्मे, वैश्यः शरदीति ब्राह्मणादीनां वसन्तादिभिः संबन्धो गम्यते । तेन वसन्तादिसंबन्धार्था ब्राह्मणादय इत्येव गम्यते । तथा चाऽऽदधातिर्न वाक्येन शूद्राद्व्यावर्तितो भविष्यति । तस्माद्बादरिः सर्वाधिकारं शास्त्रं मन्यते स्मेति गम्यते ॥ २७ ॥

## अपि वाऽन्यार्थदर्शनाद्यथाश्रुति प्रतीयेत ॥ २८ ॥

अपि वेति पक्षो व्यावर्त्यते । यथाश्रुत्येव प्रतीयेत । ब्राह्मणादयो ह्याधाने श्रूयन्ते । तेन ब्राह्मणादिकर्तृकमाधानम् । वसन्तादिश्रवणाच्च वसन्तादिकालकम् । तथा चेदं शूद्रवर्जितानामेवानुक्रमणं भवति । बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्येति । शूद्रस्य साम नाऽऽमनन्ति । तथा, पयो व्रतं ब्राह्म-

---

आहवनीयादिभिरर्थाक्षिप्तमाधानम् । न हि तेन विनाऽऽहवनीयादयः सन्ति । तस्मात्प्राप्तमाधानमनूद्य तत्र वसन्तादिर्गुणो विधीयते । तस्य तेन गुणेन सगुणं, शूद्रस्य गुणाभावादगुणमेव ॥ २७ ॥

निमित्तार्थता न घटते । न ह्यर्थादाधानं प्राप्नोति । न हीदं लोके विज्ञायते, आधानेनाऽऽहवनीयादयो भवन्तीति । शास्त्राद्धयवगम्यते । तच्च विशिष्टकालकर्तृकमाहवनीयमुत्पादयति । अन्यकालकर्तृकं कथमुत्पादयेत् । शास्त्रेणाचोदितत्वात् । आधानोत्तर-

---

१ यद्यपि 'आधानेऽसर्वशेषत्वात्' (अ० २ पा० ३ अ० ३) इत्यत्र वसन्तादिवाक्ये ब्राह्मणादिश्रवणस्य निमित्तार्थत्वमाशङ्क्य विशिष्टाधानप्रापकत्वस्य सिद्धान्तितत्वात्तेनैव न्यायेन शूद्रस्यानग्नितयाऽनधिकारसिद्धेर्न पुनरिदमधिकरणमारब्धव्यं, तथाऽप्यविद्यत्वरूपहेत्वन्तरेणानधिकारं शूद्रस्य साधयितुं षाष्ठिकमपशूद्राधिकरणमारब्धम । तेन चानग्निसाध्येष्वपि कर्मसु शूद्रस्यानधिकार इति फलितं भवतीति बोध्यम् ।

णस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्येति। तथा, आधानेऽष्टसु प्रक्रमेषु ब्राह्मणोऽग्निमादधीत, एकादशसु राजन्यः, द्वादशसु वैश्य इति। एवमब्रह्मसामकमव्रतकमप्रक्रमकं च शूद्रस्य प्रयुक्तमपि कर्म निष्फलं स्यात्। तस्मान्न शूद्रो जुहुयात्, यजेत वा॥ २८॥

## निर्देशात्तु पक्षे स्यात्॥ २९॥

नैतदेवम्। शूद्रस्याग्न्यभावादनधिकारोऽग्निहोत्रादिष्विति। अस्ति हि शूद्रस्याऽऽधानम्। य एवं विद्वानग्निमाधत्ते, इति शास्त्रं सामान्येन। इदमपि निमित्तार्थं भविष्यति। तस्मात्सर्वाधिकारं शास्त्रं भवितुमर्हतीति॥ २९॥

## वैगुण्यान्नेति चेत्॥ ३०॥

अथ यदुक्तं, अब्रह्मसामकमव्रतकमप्रक्रमकं च शूद्रस्य कर्म प्रयुक्तमपि फलं न साधयेद्विगुणमिति, तत्परिहर्तव्यम्॥ ३०॥

## न काम्यत्वात्॥ ३१॥

स एष परिहारः। काम्यत्वात्। कामयिष्यते शूद्रः। अभीवर्तं नाम ब्रह्मसाम। तद्धि अनारभ्य किंचिदाम्नातमविशेषेण। चक्षुर्निमितं आदध्यादिति, अनियतप्रक्रमेषु शूद्रस्य नियम्यते। व्रतेऽपि, मस्तु शूद्रस्येति संबन्धदर्शनादध्यवसीयते। मस्त्वेव शूद्रस्य। तस्माच्चातुर्वर्ण्यमधिक्रियेत॥ ३१॥

## संस्कारे च तत्प्रधानत्वात्॥ ३२॥

व्रते च विशेषोऽवगम्यते तत्प्राधान्यम्। पुरुषप्राधान्यं हि व्रते।

---

कालाः कामश्रुतयः। न चाऽऽधानमेव केवलोऽभ्युपायः। अग्नीनां गुणद्वयविधानाच्च वाक्यभेदः स्थित एव। बार्हद्गिरं गवामयने समाम्नायते। अभीवर्तो ज्योतिष्टोमे। पार्थुरश्मश्वमेधे, विदेशपाठादनुदाहरणम्॥ २८॥ [ २९॥ ३०॥ ३१॥॥ ३२॥ ]

---

१ क्वचित्, नैष परिहार इति पाठः श्रूयते। तदा तु न एष परिहार इत्येवं नवर्णः शङ्कानिराकरणार्थो द्रष्टव्यः। २ चक्षुर्विमिते० पा०। ३ अनियतपदं क्वचिन्नास्ति। ४ आधानोत्तरकाला इति—वसन्तादिविधिप्रयुक्तमग्निमन्तमधिकृत्यैव कामश्रुतयः प्रवर्तन्ते, न तु कामश्रुत्याक्षिप्तमाधानं दूरीकृत्य वसन्तादिविधिः। सति, आधानप्रापकविधावाक्षेपानुदयादिति भावः। ५ केवलोऽभ्युपाय इति—आहिताग्निभ्यः क्रयादिनाऽप्याहवनीयसंपादनसंभवादनैकान्तिक आक्षेपो वसन्तादिवाक्यस्याऽऽधानविधायकत्वं न विरुन्ध्यादित्याशयः।

किमतो यत्पुरुषप्रधानता । एतदतो भवति । पुरुषप्रधानः संस्कारो न शक्नोत्यनुपसंह्रियमाणस्तस्याधिकारं व्यावर्तयितुम् । तत्कथमिति । यजेतेति हि स्वर्गकामेऽभिधीयमाने, तत्कामः शूद्रो नाभिहित इति कथं गम्यते । किं हि स यागस्य पुरुषनिर्वर्त्यं न निर्वर्तयति । व्रतमिति चेत् । न । सामर्थ्योपजननाय हि तत् । यस्यैवोच्येत तस्यैव तेन विना न सामर्थ्यं, नान्यस्य । एवमेव हि व्रतस्याङ्गभावो, यत्कर्तारं समर्थं करोति । यस्य तु तेन न प्रयोजनं, स तदनपेक्ष्यैव यागमभिनिर्वर्तयति । तस्मादपि[1] न शूद्रवर्जनम् ॥ ३२ ॥

## अपि वा वेदनिर्देशादपशूद्राणां प्रतीयेत ॥ ३३ ॥

एवं न प्रापकाणि श्रवणानीत्युक्तम् । शक्यते तु वक्तुं प्रापकाणीति । न च सूत्रकारेण तद्व्यपदिष्टम् । नैमित्तिकेष्वपि तेषु सत्सु शक्य एव शूद्रपर्युदासो वक्तुमिति न तदादृतम् । हेत्वन्तरं व्यपदिष्टम् । अपि वेति पक्षव्यावर्तनम् । एवमपि सति नैमित्तिकेऽपि ब्राह्मणादिश्रवणे सति अपशूद्राणामेवाधिकारः । कुतः । वेदनिर्देशात् । वेदे हि त्रयाणां निर्देशो भवति । वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यमिति । वेदाभावादसमर्थः शूद्रो यष्टुम् । तस्मान्नाधिक्रियेत ॥ ३३ ॥

## गुणार्थित्वान्नेति चेत् ॥ ३४ ॥

---

'वसन्ते गर्भाष्टमे ब्राह्मणमुपनयीत' इति वदन्तो गर्भाष्टमत्वमन्ये च नियमा अध्ययनाङ्गम् । पुरुषस्य च 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनं चोद्यते । अत ईदृश्या विशिष्टेतिकर्तव्यतया वेदोपादानं पुरुषार्थम् । क्रतुनाऽर्थाद्वेदोऽपेक्षित आत्मनिर्वृत्त्यर्थम् । अतः स वेदाध्ययनमप्रयोजयन् प्रसङ्गान्निराकाङ्क्षी क्रियते । अतो यादृशमध्ययनं तादृशेन निराकाङ्क्षत्वाच्छूद्रस्याध्ययनाभावादनधिकार इत्यन्तनीताभिप्रायः सिद्धान्तव्याह ॥ ३३ ॥

---

१ तस्मादप्यशूद्रवर्जनम् । तस्मादप्यस्य शूद्रवर्जनम् । तस्मादपि शूद्रवर्जनम् । इत्येवं मातृकभेदेन पाठो दृश्यते । परंतु शूद्राधिकारसमर्थनपरत्वादस्य सूत्रस्य तदनुगुण एव पाठः साधीयान्, इतरस्तु लेखकादिप्रमादादायात इति बोध्यम् ।

गुणेनाध्ययनेनार्थी शूद्रोऽनुपनीतः स्वयमुपेत्याध्येष्यते । तथाऽस्य सामर्थ्यं जनिष्यत इति ॥ ३४ ॥

**संस्कारस्य तदर्थत्वाद्विद्यायां पुरुषश्रुतिः ॥ ३५ ॥**

उच्यते । विद्यायामेवैषा पुरुषश्रुतिः । उपनयनस्य संस्कारस्य तदर्थत्वात् । विद्यार्थमुपाध्यायस्य समीपमानीयते, नादृष्टार्थं, नापि कटं कुड्यं वा कर्तुम् । दृष्टार्थमेव सैषा विद्यायां पुरुषश्रुतिः । कथमवगम्यते । आचार्यकरणमेतदभिधीयते । कुतः । आत्मनेपददर्शनात् । कथं पुनर्नयतिराचार्यकरणे वर्तते । तदर्थसंबन्धादुपनयनमाचार्यकरणप्रयुक्तम् । वेदाध्यापनेन चाऽऽचार्यो भवति । तस्माद्वेदाध्ययने ब्राह्मणादयः श्रुताः । शूद्रस्य न श्रुतं वेदाध्ययनम् । अतोऽवेदत्वादसमर्थः शूद्रो नाधिक्रियते, इति ॥ ३५ ॥

**विद्यानिर्देशान्नेति चेत् ॥ ३६ ॥**

इति चेत्पश्यसि, अवैद्यत्वादसामर्थ्यादनधिकृतः शूद्र इति । नैष दोषः । विद्यानिर्देशात् । विद्यां निर्देक्ष्यति । अनुक्तामप्यध्येष्यत इति । शक्यते ह्यनुक्तामप्यध्येतुम् । तस्माच्चातुर्वर्ण्यस्याप्यधिकारः॥३६॥

**अवैद्यत्वादभावः कर्मणि स्यात् ॥ ३७ ॥**

न चैतदस्ति । शूद्रोऽध्येष्यत इति । प्रतिषिद्धमस्याध्ययनं, शूद्रेण नाध्येतव्यमिति । अधीयानस्याप्यध्ययनफलं न भवति, दोषश्च जायते । अतोऽवैद्यः शूद्रः । अस्याभावः कर्मणीति सिद्धम् । अथापि

---

इतरस्त्वविदिताभिप्राय आह । **गुणार्थत्वान्नेति चेत्** । क्रत्वङ्गमध्ययनम् ॥३४॥

संस्कारो[1] विद्यार्थः, विद्या च पुरुषार्थेत्यत्र पूर्व एव न्यायो द्रष्टव्यः ॥ ३५ ॥

यस्योपनयनादयः संस्कारा विहितास्तस्य ते भवन्तु, इतरस्त्वनुपनीतः पठिष्यति । न च क्रतुवैगुण्यम्, उपनयनादीनां पुरुषार्थत्वात् ॥ ३६ ॥

अनुपनीताध्ययने क्रतोर्वैगुण्यम् । कथम् । ‘ स्वाध्यायोऽध्येतव्यः ’ इति यम[2]नियमादिभिरध्ययनं पुरुषार्थत्वेनावगतं तादृशमेव प्रसङ्गात्क्रतुर्गृह्णाति । न चान्यथानुपपत्त्याऽऽक्षिपति । अन्यथा[3]ऽप्युपपद्यमानत्वात् । अतो विशिष्टेनाध्ययनेन निराकाङ्क्षीकृतत्वा-

---

१ संस्कारो विद्यार्थ इति—उपनयनादिसंस्कारो ब्राह्मणादिनियमैः सहितो विद्यार्थः इत्यर्थः । २ यमनियमादिभिरिति—यमः—मधुमांसादिवर्जनम् । नियमः—समिदाधानाद्यनुष्ठानम् । ३ अन्यथाऽपि—स्वाध्यायविधिप्रयुक्तविद्योपजीवनेनापि ।

वैद्यत्वेन सिध्येत्। तथाऽप्यनग्नित्वादभावः कर्मणि स्यात्। अथ कथमनग्निता इति। प्रापकाणि हि ब्राह्मणादीनामाधाने वाक्यानि। ननु य एवं विद्वानग्निमाधत्ते, इत्याधानस्य विधायकम्। तत्र, ब्राह्मणो वसन्तेऽग्निमादधीतेति निमित्तार्थानि वचनानीति गम्यते। अत्रोच्यते। ब्राह्मणोऽग्निमादधीतेति श्रुत्या विधानं गम्यते। य एवं विद्वानग्निमाधत्ते, इति स्तुत्या। तदानुमानिकं प्रत्यक्षश्रुताद्दुर्बलम्। तस्मात्प्रापकाणि वचनानि। अतः शूद्रस्यानधिकारः॥ ३७॥

तथा चान्यार्थदर्शनम्॥ ३८॥

अन्यार्थदर्शनं च भवति। यथा न शूद्रस्याध्ययनमिति। किं लिङ्गं भवति। यद्रु वा एतत् श्मशानं यच्छूद्रः। तस्माच्छूद्रसमीपे नाध्येयमित्यनध्ययनं शूद्रस्य दर्शयति। तस्मादपशूद्राणामधिकारः। नन्वाहवनीयाद्विनाऽपि यागो वचनप्रामाण्याच्छूद्रस्य विधीयते। उच्यते। नात्र यागसद्भावो विधीयते स्वर्गकामस्य। किं तर्हि। स्वर्गफलताविशिष्टस्य यागस्य। तस्मादसंभवः शूद्रस्याग्निहोत्रादिषु॥ ३८॥

(अद्रव्यस्याप्यधिकाराधिकरणम्॥ ८॥)

[८] त्रयाणां द्रव्यसंपन्नः कर्मणो द्रव्यसिद्धित्वात्॥३९॥ पू०

अग्निहोत्रादिष्वेव संदेहः। किमद्रव्यस्याधिकारो नेति। उच्यते। त्रयाणां द्रव्यसंपन्नोऽधिक्रियेत, नाद्रव्यः। कुतः। न हि शक्नोत्यद्रव्यो द्रव्यसंयुक्तं कर्मानुष्ठातुम्। तस्मादद्रव्यस्यानधिकारः॥ ३९॥

अनित्यत्वात्तु नैवं स्यादर्थाद्धि द्रव्यसंयोगः॥ ४०॥ सि०

नैवं स्यात्, यदुक्तमद्रव्यस्यानधिकार इति। कुतः। अनित्यत्वात्।

---

दन्यादृशमध्ययनं न गृह्यते। यथा गोदोहनं दर्शपूर्णमासाङ्गप्रणयनेन नैराकाङ्क्ष्याद्बहिःप्रणयनेन विगुणं भवति, एवमिहाप्यनियताध्ययनेन विगुणो भवति। अत आह—अधीयानस्याप्यध्यैयनफलं न भवतीति। द्रव्यानाक्षेपेऽप्ययमेव न्यायः॥ ३७॥

[ ३८॥ ३९॥ ]

न च जात्या कश्चिदद्रव्यो नाम, येनेतरेऽधिक्रियेरन्। न च द्रव्यवान्, येनेतरे

---

१ अध्ययनफलमिति—कर्माधिकारित्वमित्यर्थ.। २ अयमेव न्याय इति—यथा, अग्निविधे विध्यन्तरसिद्धे न क्रतुविधिभिः प्रयुज्यते तथा द्रव्यमपि पुरुषार्थत्वेनैवाऽर्जितं क्रतुविधिभिरङ्गी क्रियते, न तु तैराक्षिप्यत इत्यर्थः। एतच्चोत्तराधिकरणपूर्वपक्षोपयोगितया स्मारितमिति वेदितव्यम्।

अनित्योऽद्रव्यसंयोगः । न हि कश्चिज्जात्याऽद्रव्य एव पुरुषः । अस्त्युपायो येन द्रव्यवान् भवति । यः शक्नोति यष्टुं, तस्य यजेतेति वाचको भवति । यो न कथंचिदपि शक्नोति यागमभिनिर्वर्तयितुं, तं नाधिकरोति यजेतेति शब्दः । यस्तु केनचित्प्रकारेण शक्नोति, न तं वर्जयित्वा प्रवर्तते । अर्थाच्च द्रव्यसंयोगो भविष्यति । जीविष्यति विना धनेनेत्येतद्विप्रतिषिद्धम्[1] । तदिदमभिधीयते । तस्मादर्थादेव द्रव्यसंयोगः । अधिकारोऽद्रव्यस्यापीति ॥ ४० ॥

( प्रतिसमाधेयाङ्गवैकल्यस्याधिकाराधिकरणम् ॥ ९ ॥ )

## [ ९ ] अङ्गहीनश्च तद्धर्मा ॥ ४१ ॥ सि०

अग्निहोत्रादिष्वेवाङ्गहीनं प्रति संदेहः । किमसावधिक्रियत उत नेति । तत्राप्यधिकरणातिदेशः । असमर्थ इति कृत्वा पूर्वः पक्षः । शक्तेर्विद्यमानत्वादित्युत्तरः पक्षः । तदिदमभिधीयते, अङ्गहीनश्च तद्धर्मेति । किंधर्मा । अद्रव्यधर्मेति[2] ॥ ४१ ॥

( अप्रतिसमाधेयाङ्गवैकल्यस्य कर्मानधिकाराधिकरणम् ॥ १० ॥ )

## [ १० ] उत्पत्तौ नित्यसंयोगात् ॥ ४२ ॥ सि०

यस्य त्वप्रतिसमाधेयमङ्गवैकल्यं तं प्रति विचारः । किमधिक्रियते, नेति । पूर्वाधिकरणेनाधिक्रियत इति प्राप्ते, ब्रूमः । नाधिक्रियत इति । कुतः । शक्त्यभावात् । नासौ केनचिदपि प्रकारेण शक्नोति यष्टुम् । तस्मात्तस्याधिकारो न गम्यते । ननु यच्छक्नोति तत्राधिक्रियत इति,

---

नाधिक्रियेरन् । तस्माद्द्रव्यवत्त्वस्यानवस्थितत्वात्सर्वेऽधिक्रियेरन् ॥ ४० ॥

पूर्वो न्याय[3]ः ॥ ४१ ॥ [ ४२ ॥ ]

---

१ धनेनेत्येतदनुपपन्नम् । तस्मादर्थादद्रव्यसंयोगः इति पा० । २ अद्रव्यधर्मा—अद्रव्यतुल्य इति यावत् । ३ पूर्वो न्याय इति—अनेन च 'अङ्गहीनश्च तद्धर्मा' 'उत्पत्तौ नित्यसंयोगात्' इत्यधिकरणद्वयं संहत्य व्याख्यातं ज्ञेयम् । अयं भावः—ये प्रतिसमाधेयाङ्गवैकल्यास्तेषामनवस्थितत्वादशक्तेः, योऽद्रव्यस्योक्तो न्यायः स एवैतेषामपि भवितुमर्हति । किमर्थं तर्हि, अधिकरणान्तरमिति चेदुच्यते—द्रव्यं ह्यत्यन्तबहिर्भूतं मा नाम भूदधिकारविच्छेदकं, अवेक्षणाद्यङ्गानि त्वत्यन्तमन्तरङ्गत्वादधिकारं विच्छिन्दन्तीति विशेषाशङ्कायाः सत्त्वात् । जात्यन्धादीनां तु सर्वथाऽसामर्थ्यादनधिकार इति ।

चक्षुर्विकलो विनाऽऽज्यावेक्षणेन, विना विष्णुक्रमैः पङ्गुः, विना प्रैषादिश्रवणेन च बधिरः । एतान् पदार्थान् प्रति चक्षुर्विकलादीनामनधिकार इति । नेत्युच्यते । नाऽऽज्यावेक्षणादि पुरुषं प्रति निर्दिश्यते । यदि हि तं प्रति निर्दिश्येत ततो विकलोऽप्यधिक्रियेत । क्रतुं प्रत्येषामुपदेशः, प्रकरणाविशेषात् । पुरुषस्य चाऽऽख्यातेनानभिधानादिति । उक्तमेतत्, विधिर्वा संयोगान्तरादित्यत्र । तैश्च विना विगुणं कर्म प्रयुक्तमपि न फलं साधयेत् । तस्मात्तस्यानधिकारः ॥ ४२ ॥

( दर्शपूर्णमासयोस्त्र्यार्षेयस्यैवाधिकाराधिकरणम् ॥ ११ ॥ )

## [ ११ ] अत्र्यार्षेयस्य हानं स्यात् ॥ ४३ ॥ सि०

दर्शपूर्णमासयोः श्रूयते—आर्षेयं वृणीते, एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते, न चतुरो वृणीते, न पञ्चातिवृणीते, इति । तत्र संदेहः । किमत्र्यार्षेयस्याधिकार उत नेति । किं प्राप्तम् । अत्र्यार्षेयोऽप्यधिक्रियत इति । कुतः । आर्षेयं वृणीते, इति सामान्यवचनम् । तस्मादेकं वरिष्यति द्वौ वा । तच्च दर्शयति—एकं वृणीते, द्वौ वृणीते, इति । तथा प्रतिषेधति, न चतुरो वृणीते, न पञ्चातिवृणीते, इति । न ह्यप्राप्तस्य प्रतिषेधोऽवकल्पते । तस्मादत्र्यार्षेयोऽप्यधिक्रियेतेत्येवं प्राप्ते, ब्रूमः ।

यो न त्र्यार्षेयः स नाधिक्रियेत । कुतः । त्रीन् वृणीते, इति विशेषवचनात् । विधिश्च, अप्राप्तत्वात् । ननु, एकं वृणीते, इत्यपि विशेष-

---

' आर्षेयं वृणीते ' इति सामान्येन विधिः । एकत्वादयस्तु प्राप्तत्वात्स्तुत्यर्थाः । चतुरादिप्रतिषेधश्चास्मिन्नेव पक्ष उपपद्यते । अथवा सामान्येन विहिते, एकत्वादिभिर्विशेष्यते ।

एवं प्राप्ते ब्रूमः । ' आर्षेयं वृणीते ' इति साकाङ्क्षं ' त्रीन्वृणीते ' इति विशेष्यते । एकत्वादयोऽवयुत्यानुवादाः । इतरथा वाक्यभेदोऽदृष्टकल्पनाऽश्रुतकल्पना च । सामान्येन विधिरेकत्वादयोऽनुवादा इति चेत् । एवमपि चतुरादिप्रतिषेधाद्वाक्यभेदः स्थित एव । अस्मत्पक्षे पुनरेकवाक्यत्वान्न कश्चिद्दोषः । त्रीण्यार्षेयाणि यः संपादयितुं शक्नोति सोऽधिक्रियते । चतुरार्षेयस्य त्रित्वसंपादनेऽस्ति सामर्थ्यम् । न चेदृग्वाक्यं, त्र्यार्षेय

---

१ ( अ० ३ पा० ४ अ० ४ सू० १३ ।

वचननमस्ति । नेत्युच्यते । विधायिकाया विभक्तेरभावात् । ननु स्तुत्या विधास्यते, यथा, त्रीन्, वृणीते, इति उच्यते । त्रयाणामेव स्तुतिः । सा त्रित्वं विधास्यति । एकं वृणीते, इत्यवयुत्यानुवादोऽयं त्रयाणामेव । तत्रापि त्रित्वमेव स्तूयते विधातुम् । एकमेकवाक्येन विधानं भविष्यतीति । न चतुरो वृणीते, न पञ्चातिवृणीत इति नित्यानुवादो भविष्यति । तस्मात्त्र्यार्षेयस्याधिकारो, नान्यस्येति ॥ ४३ ॥

( रथकाराधिकरणम् ॥ १२ ॥ )

[१२] वचनाद्रथकारस्याऽऽधानेऽस्य सर्वशेषत्वात् ॥ ४४ ॥ सि०

आधाने श्रूयते, वर्षासु रथकार आदधीतेति । तत्र संदेहः । किं त्रैवर्णिकानामन्यतमो रथकारः, आहोस्विदत्रैवर्णिक इति । किं प्राप्तम् । रथकारस्यात्रैवर्णिकस्याऽऽधानमेतत् । कुतः । वचनात् । वचनमिदं भवति, वर्षासु रथकार आदधीतेति । न हि वचनस्य किंचिद-लभ्यं नाम[1] । सर्वशेषश्चात्रैवर्णिक आधाने । ब्राह्मणराजन्यविशामुक्तमाधानम् । परिशेषादत्रैवर्णिको रथकारः स्यात् ॥ ४४ ॥

न्याय्यो वा कर्मसंयोगाच्छूद्रस्य प्रतिषिद्धत्वात् ॥ ४५ ॥

न्याय्यो वा स्यात्त्रैवर्णिको रथकारः, रथकर्मणा विशेषेणोच्यते । शूद्रो ह्यसमर्थत्वात्प्रतिषिद्धः । तस्मात्त्रैवर्णिको रथकारः स्यात् ॥ ४५ ॥

---

एवाधिक्रियत इति ।

नन्विदमेवास्ति ' त्रीन्वृणीते ' इति । त्रीणि यः संपादयितुं शक्नोति तस्य वरणमुच्यते । न यस्य त्रीण्येवेति, गुरु वाक्यं भवति । अनपेक्षितश्च संबन्धः । ननु ' न पञ्चातिवृणीते ' इति पञ्चातिक्रमणप्रतिषेधादिदमवगम्यते, अस्ति पञ्चानां वरणमिति । नैतदेवम् । अनुमानादेव तद्वरणं कल्प्यते । न चानुमानेन शक्यः शास्त्रार्थोऽनुष्ठातुम् । त्रिवरणे न पञ्च व्रियन्ते, नाप्यतिक्रम्यन्ते । एवं लघुत्वेन च स्तुतावेकवाक्यत्वं घटते । इतरथा वाक्यभेदादि स्थितमेव । तस्मात्त्रित्वसंपादनसमर्थोऽधिक्रियते । मा गैव इत्येतावन्मात्रं वरणं न कर्तव्यम् । मनुवत्पक्षे तु यस्याप्येको, यस्यापि पञ्च, तस्यापि सकृदेवोच्चारणं मनुवदिति ॥४३॥[४४॥४५॥]

---

१ किंचिदलभ्यमस्तीति पाठ० ।

अकर्मत्वात्तु नैवं स्यात् ॥ ४६ ॥

नास्ति त्रैवर्णिको रथकारः । प्रतिषिद्धं हि तस्य शिल्पोपजीवित्वम् । अत्रैवर्णिकस्त्वस्ति । तस्माद्वचनप्रामाण्यात्स आधास्यति ॥ ४६ ॥

आनर्थक्यं च संयोगात् ॥ ४७ ॥

ब्राह्मणादिषु वसन्तादयो नियताः । तान्प्रति वर्षा उच्यमाना अप्य-संबन्धादानर्थक्यं प्राप्नुयुः । तस्मादत्रैवर्णिको रथकार इति ॥ ४७ ॥

गुणार्थेनेति चेत् ॥ ४८ ॥

एवं चेत्पश्यसि, नास्ति त्रैवर्णिको रथकारः, प्रतिषिद्धत्वाच्छिल्पो-पजीवित्वस्येति । गुणार्थेन कश्चिद्भविष्यति रथकारः, आपदि जीवनं चैतस्य । वाक्येन तस्येदमाधानं विज्ञायते ॥ ४८ ॥

उक्तमनिमित्तत्वम् ॥ ४९ ॥

उक्तमेतदस्माभिः, न निमित्तार्थान्येतानि श्रवणानीति । किमतो यदि न निमित्तार्थानि । एतदतो भवति, प्रापकाणीति । प्रापितत्वात्ते-षामाधानस्य, पुनः प्रापकमनर्थकम् । तेन यस्याप्राप्तं तस्य भविष्य-तीति । अथोच्येत, एतदेकं निमित्तार्थं भविष्यतीति । नैतदेवमवक-ल्पते । वसन्तादिसंयुक्तं तत्कथमिव वर्षाभिः संबध्येत । अपि च । प्रापकपक्ष आधानं विधीयते श्रुत्या । निमित्तपक्षे पुनर्वर्षा विधातव्या वाक्येन । श्रुतिश्च वाक्याद्बलीयसीति । तस्मादत्रैवर्णिकस्येदमाधा-नमिति ॥ ४९ ॥

सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात्प्रतीयेरन् ॥ ५० ॥

न तु सर्व एवात्रैवर्णिको रथकारः । सौधन्वना इत्येष जातिवचनः शब्दः । सौधन्वना नाम जातिरभिधीयते । हीनास्तु—किंचित्त्रैवर्णि-केभ्यो जात्यन्तरं, न तु शूद्राः, न वैश्याः, न क्षत्रियाः । तेषामिद-माधानम् । कथमवगम्यते । प्रसिद्धेर्मन्त्रवर्णाच्च । मन्त्रवर्णो हि भवति । सौधन्वना ऋभवः सूरचक्षस इति । ऋभूणां त्वेति रथकारस्याऽऽधान-मन्त्रः । तस्मात्सौधन्वना ऋभव इति । ऋभवश्च रथकाराः । अपि च, नेमिं नयन्ति ऋभवो यथा, इति ये नेमिं नयन्ति ते ऋभव इत्युच्यन्ते ।

॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥

१ रथकारो वैतश्येन । तस्येदमाधानं विज्ञायते । इत्येवं पा० ।

रथकाराश्च नेमिं नयन्ति । तस्मादत्रैवर्णिकानामशूद्राणामेतदाधानमिति ॥ ५० ॥

( निषादस्थपत्यधिकरणम् ॥ १३ ॥ )

## [ १३ ] स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात् ॥ ५१ ॥ सि०

वास्तुमध्ये रौद्रं चरुं निर्वपेत्, यत्र रुद्रः प्रजाः शमयेदित्येतामिष्टिं प्रकृत्योच्यते । एतया निषादस्थपतिं याजयेदिति । निषादस्थपतिं प्रति संदेहः । किमधिकृतानामन्यतम उतान्य एवेति । अन्यतम इति ब्रूमः । स हि समर्थः । विद्वत्त्वादग्निमत्त्वाच्च । अन्योऽविद्वत्त्वादनग्नित्वादसमर्थ इति ।

ननु निषादस्थपतिशब्दस्तत्र नोपपद्यते । उच्यते । न नोपपद्यते । निषादानां स्थपतिरिति षष्ठीसमासो भविष्यति, श्रेष्ठो निषादानाम् । तस्मादधिकृताधिकारमेतच्छास्त्रमिति । एवं प्राप्ते ब्रूमः । स्थपतिर्निषादः स्यात् । निषाद एव स्थपतिर्भवितुमर्हति । कस्मात् । शब्दसामर्थ्यात् । निषादं हि निषादशब्दः शक्नोति वदितुं श्रवणेनैव । निषादानां तु स्थपतिं लक्षणया ब्रूयात् । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा ।

अथोच्यते, नैष दोषः । निषादशब्दो निषादवचन एव । षष्ठी संबन्धस्य वाचिकेति । तन्न । षष्ठ्यश्रवणात् । नात्र षष्ठीं शृणुमः । आह । लोपसामर्थ्यात् षष्ठ्यर्थोऽवगम्यत इति । सत्यमवगम्यते । न

---

कर्मधारयोऽयं न षष्ठीतत्पुरुषः । एवं पदद्वयं स्वार्थवृत्तम् । इतरथा निषादशब्दो लक्षणया स्थपतावध्यारोपितः स्यात्, सामानाधिकरण्यसमासप्रतिपत्त्यर्थम् । उत्पलशब्दस्यापि तदेवाधिकरणं, नीलशब्दस्यापि । अत ऐकाधिकरण्यात्सामर्थ्यं, सामर्थ्याच्च समासः । यदि च निषादशब्देन निषाद एवोच्यते, स्थपतिशब्देन स्थपतिरेव, ततो भिन्नाधिकरणत्वात्सामर्थ्याभावः, सामर्थ्याभावात्समासाभावः । तस्मान्निषादशब्देन स्थपतिं यावद्गन्तव्यमित्येषा लक्षणा । न वाऽत्र षष्ठी विद्यते, अनुपलभ्यमानत्वात् । लुप्तेति चेत् ।

१ अधिकरणं-प्रतिपाद्योऽर्थः ।

तु लोपेन। केन तर्हि। निषादशब्दलक्षणया। तस्याश्च दौर्बल्यमित्युक्तम्। समानाधिकरणसमासस्तु बलीयान्। तत्र हि स्वार्थे शब्दौ वृत्तौ भवतः। द्वितीया च विभक्तिस्तन्त्रेणोभाभ्यां संबध्यते। तेन द्वितीयानिर्दिष्टो निषादो गम्यते। तत्र षष्ठ्यर्थं कल्पयन्नश्रुतं गृह्णीयात्। तस्मान्निषाद एव स्थपतिः स्यात्॥ ५१॥

लिङ्गदर्शनाच्च॥ ५२॥

लिङ्गं दृश्यते। कूटं दक्षिणा, इति निषादस्य द्रव्यं दर्शयति। कूटं हि निषादानामेवोपकारकं, नाऽऽर्याणाम्। एवं, स्वमेव तन्निषादानामिति॥ ५२॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये षष्ठस्याध्यायस्य प्रथमः पादः॥

---

अथ षष्ठेऽध्याये द्वितीयः पादः॥

( सत्रे प्रत्येकं कृत्स्नफलभोक्तृणामधिकाराधिकरणम्॥ १॥ )

[१] पुरुषार्थैकसिद्धित्वात्तस्य तस्याधिकारः स्यात्॥१॥ सि०

द्वादशाहेन प्रजाकामं याजयेत् ऋद्धिकामा उपेयुः। तथा तत्र तत्रैवंकामाः सत्रमुपेयुः, सप्तदशावराश्चतुर्विंशतिपरमाः सत्रमासीरन्निति।

---

उच्यते। यद्यत्राश्रवणेन कारणेन लोपः, स्वादयो लुप्ता इति किमिति न कल्प्यते। तस्माल्लोपे नास्ति प्रमाणम। ततो राजपुरुष इत्यत्रापि राजा चासौ पुरुषश्चेतीदृशो विग्रहः कर्तव्यः। तत्रापि षष्ठ्यश्रवणादेव नास्ति. किं तु स्वस्वामिसंबन्धात्षष्ठ्यर्थमध्यारोप्य तदा समासो भवति। राज्ञः पुरुष इति वाक्यमर्थप्रदर्शनार्थम्। तस्मात्स्थपतिशब्दे या विभक्तिः सेतरत्रानुषज्यते। अन्यस्या अश्रवणात्। अथवा समुदायादुत्पादादुभयत्रापि द्रष्टव्या॥ ५१॥

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां षष्ठाध्यायस्य प्रथमः पादः।

---

नन्वितरेतरयुक्ता इतरत्राप्यनुतिष्ठन्तीतरत्रापि। तस्मात्प्रयोगे नास्ति विशेषः।

---

१ समस्तात्प्रातिपदिकादुत्पन्नत्वाद्द्वितीयाया अनुषङ्गोऽपि नास्तीति वस्तुस्थितिमनुरुध्याऽऽह–अथवेति।

तेषु संदेहः । किं तस्य तस्य कृत्स्नेन फलेनार्थिनः सत्रेऽधिकार उत पर्षदोऽर्थिन्या अधिकार इति । आह । नन्वार्थिनो बहुसंख्याविशिष्टा निर्दिश्यन्ते कथमेषामेकैकशोऽधिकारो भविष्यतीति । उच्यते । ऋद्धिकामा इत्येवमादि विधीयमानमृद्धिलक्षितेषु समस्तेषु व्यस्तेषु च प्राप्तम् । न शक्यं बहुवचनेन विशेषेऽवस्थापयितुम् । तेन तं तमधिकुर्यात् , पर्षदं वेति भवति संदेहः ।

किं तावत्प्राप्तम् । एकैको न समर्थो बहुकर्तृकं सत्रं रचयितुम् । पर्षदं तु कर्त्रीमर्थिनीमवगच्छामः । न चाकर्तुः फलं भवति । न चैकः कर्तोच्यते । तस्मात्समस्तानां फलम् । एकैकस्य फलावयवः । मध्यकं स्यात्कृत्स्नं फलमिति ।

---

प्रयोगगताऽधिकारचिन्ता युक्ता[1] । कृत्स्नेन फलेन व्याप्यते फलावयवेन वेति काकदन्तपरीक्षा, प्रयोगाविशेषात् । उच्यते । किं कृत्स्नफलार्थिनो यागोपदेश उतावयवार्थिनोऽपीत्युपदेशोऽधिकार एव चिन्त्यते, सत्यप्यनुष्ठानाविशेषे । अथवा क्रियाफलं कर्तृगामि भवत्येकस्मिन्पक्षे[2], इतरत्राकर्तृगामि[3] । एवं चेत्समुदायस्य कर्तृत्वान्न ते कर्तारः । ईदृश्यां प्रतीतावस्ति विशेषः । समुदायकर्तृत्वे कर्ममध्य एकस्मिन्प्रमृते नान्य आनेतुं शक्यते । सिद्धान्ते त्वेकैकस्य कर्तृत्वात्संख्यापूरणार्थमानीयते ।

नन्वितरत्राप्यविशिष्टं संख्यापूरणम् । द्रव्यभेदात्तत्र संख्या न कर्तृभेदात् । एवं चेत्[4] ' सप्तदश प्राजापत्यान् ' इत्यत्र यथा पूर्वपक्ष एकस्मिन्पशौ विनष्टे कृत्स्नः पशुगण आवर्तते, एवमिहाप्येकस्मिन्नष्टे सप्तदश भूत्वा पुनरादावारभ्य यागमनुतिष्ठन्ति । ईदृशस्य साधनत्वावगमात् । किं तावत्प्राप्तं, फलावयवेनैव संबन्धः । कुतः । फलं प्राप्नुयाद्यद्येकैकः, पृथक् पृथक् प्रयोगः स्यात् । ततो बहुवचनं नोपपद्यते । अपि च, यत्कर्म बहुषु फलेषु तदेकत्र प्रयोग एकमेव फलं साधयति । किमुत यदेकफलमेव चोदितम् । किं च ' ऋद्धिकामाः ' इत्येकशेषोऽयम् । तत्र यदीतरेतरयुक्ताः फलं कामयन्ते तत एकशेष उपपद्यते । द्वंद्वापवादो ह्ययम् । ननूद्दिश्यमानत्वादितरेतरयोगाविवक्षा । उच्यते । यद्यप्यस्मिन्पदेऽविवक्षितस्तथाऽपि यादृशानां साधनभावोऽवगतस्तादृशानामेव फलसंबन्धः । इतरेतरयुक्ताश्च फलसाधनत्वेनावगतास्तत इतरेतरयुक्ता एव फलेन संभन्त्स्यन्ते ।

---

१ युक्तेति—याऽधिकारचिन्ता प्रयोगविशेषफलिका सैव कर्तुं युक्ता नान्येत्यर्थः । २ एकस्मिन्पक्षे—समुदायस्य कर्तृत्ववादिपूर्वपक्षिमते । ३ इतरत्र—प्रत्येकं भोक्तृत्ववादिसिद्धान्तिमते । ४ एवं चेदिति–यथा पूर्वपक्षवादी मन्यते तथा चेच्छास्त्रार्थ इत्यर्थः ।

एवं प्राप्ते ब्रूमः । तस्य तस्यार्थिनः कृत्स्नं फलं सत्त्रान्निर्वर्तते । कुतः । पुरुषार्थस्यैकैकस्य सिद्धिर्यतो भवति । सह क्रियमाणे सर्वे एकैकं पुरुषार्थं साधयति तन्त्रेणं । कर्तृणां फलं च भवति । एकैकश्चात्र कर्ता ।

आह । नन्वेतदुक्तमेकैको न शक्नोति बहुकर्तृकं कर्तुमिति । उच्यते । शक्नोत्येकैकस्य स्वातन्त्र्यविवक्षायाम् । यदा, एकैकः स्वातन्त्र्येण प्रवर्तते, तदाऽन्यान् संख्यानिर्वृत्त्यर्थं सामादिभिः प्रयोक्ष्यते । एवमेकः पुरुषार्थं साधयति, इतर इतरश्च । तेन सर्वे कर्तारः सव्यपेक्षा भविष्यन्ति । सर्वे चेत्कर्तारः, पृथक्पृथगेव फलेन संभन्त्स्यन्ते ॥ १ ॥

अपि चोत्पत्तिसंयोगाद्यथा स्यात्सत्त्वदर्शनं तथा भावोऽविभागे स्यात् ॥ २ ॥

अपि च, नैतद्विरुद्धं यदेकं कर्म बहुभिः क्रियत इति । यद्युच्येत । विरुद्धम् । एकेन कर्मणि कृते द्वितीयः किं कुर्यादिति । अत्रोच्यते । पर्यायेण क्रियायामेवं दोषः । तन्त्रेण तु क्रियायां भवति कश्चित्संभवः । यथा स्यात्सत्त्वदर्शनं तथा भावोऽविभागे स्यात् । यथा, एकैकस्य सत्त्वस्य हस्तिनोऽश्वस्य वा दर्शनमेकैकेन कृत्स्नमभि-

---

एवं प्राप्ते ब्रूमः । ' यस्मैप्रीतिः पुरुषस्य ' इत्यनेन न्यायेनैकैकस्य फलं प्रार्थयमानस्य सत्त्रमुपायो विधीयते, न सत्त्रं प्रति ते विधीयन्ते । कर्त्रभिप्राये क्रियाफल आत्मनेपदं भवति । यदि चैकैकः कर्ता ततो बहुत्वात्कर्तृणां बहुवचनमुपपद्यते । इतरथा परिषद् एकत्वात्कर्तृभेदाभावः, कर्तृभेदाभावाद्बहुत्वमनुपपन्नम् ।

अथ कर्तृत्वे श्रुतं द्रव्येषु कल्प्येत, ततोऽयमेव दोषो यदन्यत्र श्रुतमन्यत्र कल्पितम् । सामादिभिः प्रयोक्ष्यत इति—फलं प्रार्थयतः सत्त्रमुपायो विधीयते । तच्च बहुकर्तृकं फलसाधने समर्थम् । तत्र मया सह भवता यष्टव्यं नान्येनेत्यस्मिन्विषये सामादयोऽवतरन्ति । यद्येकैकस्य कर्तृत्वमितरे संख्यापूरणार्थाः स्युस्ततः कर्तृत्वाभावाद्बहुवचनाभाव इति स एव दोषः । यदुक्तं—प्रयोगभेदाद्बहुवचनाभाव इति । तदुच्यते । स एव प्रयोग एकैकस्य तुल्यः । तत्र न गम्यते विशेष इतरस्य प्रयोगो नेतरस्येति । देवतोद्देशेन द्रव्यस्य यः संकल्पः स एकैकस्याविशिष्टः । एवं च प्रयोगभेदो न लभ्यते ॥ १ ॥

---

१ एकैकः–पा० । २ सत्रेण–पा० । ३ (अ० ४ पा० १ अ० २ सू० २)

निर्वर्त्यते । एवमेव सत्रे तन्त्रभावो भवेत् । सर्वेषां मध्यकं द्रव्यम् । मध्यकस्याऽऽहवनीयस्योपर्यध्वर्युरुपविध्यति । तत्र सर्वे कर्तारस्तन्त्रेण भवन्ति । न चात्रोत्पन्नसंयोगः । उत्पन्नस्यैव तु संख्यया कर्म संयुज्यते । यदि ह्युत्पन्नं संयुज्येत, ततोऽनेकसंबन्धार्थमिति वचनं गम्येत । उत्पत्तिसंयोगे त्वेतन्नास्ति । तस्मादेकैकस्य कृत्स्नेन फलेनाभिसंबन्ध इति ॥ २ ॥

( दर्शपूर्णमासादीनां नियतैककर्तृकत्वाधिकरणम् ॥ २ ॥ )

## [२] प्रयोगे पुरुषश्रुतेर्यथाकामी प्रयोगे स्यात् ॥ ३ ॥ पू०

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेतेति श्रूयते । अत्र संदेहः । किमनियमेन–एको द्वौ बहवो वा यजेरन्, अथवैक एव यजेतेति । ननु तृतीय उक्तं, शास्त्रफलं प्रयोक्तरीति । यदा प्रयोक्तरि, तदा विवक्षितमेकत्वं यथा, तथा वक्ष्यामः । इह तु तदेवाऽऽक्षिप्यते । पुनश्च निर्णेष्यत इति ।

किं प्राप्तम् । यथाकामी प्रयोगे स्यात् । कुतः । पुरुषश्रुतेः । पुरुषः श्रूयते । पुरुषे यागं श्रावयित्वा कृतार्थः शब्दः, एकस्य द्वयोर्बहूनां वा यागं न वारयति । नासौ पुरुषो यागे श्रूयते, यागमभिनिर्वर्तयेत् ,

---

नात्रोत्पन्नसंयोगः । उत्पन्नस्यैव तु संख्यया कर्म संयुज्यते । ‘ ऋद्धिकामाः ’ इत्यत्रोत्पत्तिवाक्य एव कर्तृगामिनी संख्या श्रूयते । यदि गुणवाक्ये श्रूयेत न यागे, तत एकस्यैव क्रियाफलेन संयोगो न स्यात् । तस्मिन्पक्षे न फलेन व्याप्यमानाः स्युरित्युच्चार्यन्ते । किं तर्हि । यागो बहुसंख्याविशिष्टः कार्य इत्येवमर्थमुच्चार्यन्ते ॥ २ ॥

ननु यागनिर्वर्तकत्वेनोपादीयमानत्वाद्विवक्षिता संख्या कुतः संशयः । उच्यते । फलेन व्याप्यमानत्वात्कर्ता प्रधानभूतः । प्रधानभूतस्य चाविवक्षिता संख्या । तत्रासौ नान्तरीयकत्वाद्यागमनुतिष्ठति । तस्यां विवक्षायामविवक्षिता संख्या । अथवा–यागप्रयोग निर्वर्तकत्वेन कर्तोपदिश्यते । उपदेशाच्च विवक्षिता संख्या । किं प्राप्तम् । अविवक्षिता॰ ‘ यजेत स्वर्गकामः ’ इति सामानाधिकरण्यं, स्वर्गेण कर्ता व्याप्यते । भवति व्याप्य॰

---

१ ( अ० ३ पा० ७ अ० ८ सू० १८ ) २ स्वर्गेण कर्ता व्याप्यत इति—स्वर्गेणाहं व्याप्तः स्यामिति कामयिता स्वर्गकामशब्देनोच्यत इत्यर्थः ।

यागेन वा फलमभिनिर्वर्तयेदिति । कथं तर्हि । यागेन फलं प्राप्नुयादिति । यागस्य वा फलनिर्वृत्तेर्वा नाङ्गं पुरुषः। यदि ह्यङ्गमभविष्यद्यागे फलनिर्वृत्तौ वा, तदा संख्या गुणभूता तदङ्गं पुरुषं परिच्छिन्द्यात् । अथ पुनरङ्गभूतं प्रकाशयन्, लक्षणत्वेनैव पुरुषशब्दः संबध्येत, न गुणवचनतया । तत्र चाविवक्षितं संख्यावचनम् । यावानर्थी समर्थश्च तावन्तं सर्वमधिकृत्यैतदुच्यमानं न शक्यते एकेनं वचनेन विशेषयितुम् ।

कथं च पुरुषप्राधान्यम् । न फलोत्पत्त्या किंचित्प्रयोजनमस्ति, न यागोत्पत्त्या । आत्मा तु फलसंबद्धः सर्वस्येष्टः । तदर्थं कर्म कर्तव्यम्। इतरथोच्यमानमपि न क्रियेत । तत्र वचनानर्थक्यं स्यात् । तस्माद्याथाकाम्यं स्यादेको द्वौ बहवो वा यजेरन्निति । तथाच दर्शयति, युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यादिति । तथा एते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्य इति, द्वयोर्बहूनां च यागं प्रदर्शयति ॥ ३ ॥

प्रत्यर्थं श्रुतिभाव इति चेत् ॥ ४ ॥ सि०

इति चेत्—एवं चेद्भवान्पश्यत्यविवक्षितमेकत्वमिति । प्रत्यर्थं श्रुति-

---

मानश्च प्रधानभूतस्ततोऽस्मिन्पदेऽविवक्षिता संख्या यजेतेत्यत्रापि यद्यविवक्षितैव ततः सामानाधिकरण्यमुपपद्यते ; एकत्र विवक्षिता संख्या नेतरत्रेति नास्ति सामानाधिकरण्यम् ।

किं च, सर्वः फलेनाहं व्याप्स्येय, इत्येवमर्थं यतते । तत्रेतरथा फलमहं न प्राप्नुयामित्यर्थाद्यागमनुतिष्ठति । एवं चेदचोदितत्वाद्यागे कथं तस्य संख्या विवक्ष्येत । प्रयोगेऽपुरुषश्रुतेः—प्रयोगे पुरुषस्याश्रवणादित्यर्थः । अथवा—प्रयोगे पुरुषश्रुतेः प्रयोगे पुरुषं श्रावयित्वा कृतार्थः शब्दः । तेन यागः कार्य इति यदीदृश उपदेशो भवेत्ततो निर्वर्तकत्वेन विवक्षिता संख्या स्यात् । न चेदृश उपदेशोऽस्ति ॥ ३ ॥

फलेन व्याप्यमानस्य नान्तरीयकत्वाद्यागे गुणभाव इति, एतन्नोपपद्यते । कथम् ।

---

१ प्रकाशयल्लक्षणत्वेनैव पुरुषेऽभिसंबध्येत—पा० । २ पृथग्वचनेन—पा० । ३ प्रतिपदमिति—स्तोत्रीयाऽऽद्या ऋक्प्रतिपदित्युच्यते । ४ इदं चेत्पश्यसि—प्रत्यर्थं श्रुतिभावः स्यादितिपा० । ५ कृतार्थः शब्द इति—न तु तस्य गुणभावं प्रतिपादयति, तेन यागः कार्य इतीति शेषपूरणम् ।

भावः स्यात्, यागमभिनिर्वर्तयेत्, ततश्च फलं प्राप्नुयादिति । कुतः । एतदुभयं ह्येतस्मादवगम्यते । कतरदत्र जहीम इति नाध्यवस्यामः । तस्मादुभयमपि प्रत्येतव्यम् । आह । नन्वेकार्थवचनता न न्याय्येति । उच्यते । यदवगम्यते तन्न्याय्यम् । उभयं च प्रतीयते । तस्मादुभयार्थवचनतैव न्याय्या । यागं प्रति च गुणभावाद्विवक्षितमेकवचनम् ॥ ४ ॥

### तादर्थ्ये न गुणार्थताऽनुक्तेऽर्थान्तरत्वात्कर्तुः प्रधानभूतत्वात् ॥ ५ ॥

नैतदेवं, तादर्थ्ये पुरुषे प्रधानभूते सति नाङ्गभूतः पुरुषः प्रतीयते । अनुक्ते हि न्याये न प्रतीमः । अर्थान्तरं यतो गुणभावात्प्रधानभावः ।

---

स्वर्गः साध्यो यागः साधनम् । तत्र साध्यसाधनसंबन्धो विधीयते । न ह्यर्थाद्यागः साधनं प्राप्नोति । अतो विधीयमानो निर्वर्तकं कर्तारमपेक्षते, तत्परिच्छेदिकां च संख्याम् । तस्मादस्मिन्पदे विवक्षिता संख्या । पदार्थपूर्वकत्वाच्च वाक्यार्थस्य यादृशोऽर्थः पदवेलायामवगतस्तादृश एवोत्तरेण पदेन संबध्यते । तस्माद्यद्यपि स्वर्गकामपदेनानियता संख्या प्राप्ता, तथाऽप्यनयाऽप्याख्यातनियतविशेषणविशेष्यतया[1] सामानाधिकरण्यमुपपद्यते ।

अथवा—उपादीयमानत्वाद्विवक्षिता संख्या, व्याप्यमानत्वादविवक्षिता[2] । न चान्ययुक्तेन[3] क्रियमाणो यागः फलं साधयति, यदा विवक्षिता स्यादाख्याते संख्या । न च वाक्यभेददोषः । यत्र सकृदुच्चरिते द्वे विवक्षिताविवक्षितत्वे भवतस्तत्र वाक्यभेदः, इह तु भिन्नपदोपादानाद्विवक्षाविवक्षादोषो नास्ति ।

यदुक्तं न यागः कर्तव्य उपदिश्यते, यागेन वा कर्तव्यमिति । उच्यते । यागं कुर्यादिति सत्यं नोपदिश्यते । यागेन कुर्यादिति यदि नोपदिश्येत, ततः साध्यसाधनसंबन्धाभावात्फलं न स्यात् । ततश्च सर्वमेव नोपपद्यते । स्वर्गकाम इति न विधीयते । अनर्थकं वाक्यं स्यात् । तस्माद्विवक्षिता संख्या । सिद्धान्तसूत्रमिदं न सुविवृतम् ॥४॥

फलेन व्याप्यमानत्वात्प्रधानभूतः । प्रधानभूतश्चेदविवक्षिता संख्या । अतो यजे-

---

१ आख्यातनियतविशेषणविशेष्यतया—आख्यातेन या नियता—अवश्यंभाविनी विशेषणविशेष्यता तयेत्यर्थः । अयं भावः । कर्त्रधिकारिणोरैक्य दाख्यातोपात्तकर्तृसंख्याऽर्थादधिकारिणमवच्छिनत्तीति विशेषणविशेष्यभावेनैकार्थवृत्तित्वायुक्तं सामानाधिकरण्यं स्वर्गकामपदेनाऽऽख्यातस्येति ।

२ व्याप्यमानत्वादिति—कामपदेत्विति पूर्वं शेषः । ३ अन्ययुक्तेन—अन्यसंख्यायुक्तेन ।

प्रधानभूतश्चात्र कर्ता । वचनस्यार्थवत्त्वात् । अतो न गुणभावः कर्तुरवकल्पते । चोदनैकत्वात् । एका हि विधायिका चोदना । सा यदि फलोत्पत्तिं यागोत्पत्तिं वा विधत्ते, तदा कर्ता न स्वार्थेन । यदा पुनः स्वार्थेन, तदा यागः फलं वा तादर्थ्येन । न चैतद्यौगपद्येन भवति । स्वार्थ एकस्तदर्थ इतरो वैपरीत्येन वेति । यथोभाभ्यां बाहुभ्यामिषूनस्यति देवदत्त इति गम्यते, न च यौगपद्येन । यदा दक्षिणेनास्यति, तदा सव्येन धनुःपृष्ठं नमयति, न तेनाप्यस्यतीति गम्यते । तत्र व्यापृतत्वात् । एवं यदा पुरुषप्राधान्यं, तदा यागस्य फलस्य वा गुणभावो गम्यते । तत्र व्यापृतत्वान्न तयोः प्राधान्यमपि गम्यते । तस्मान्न यागे फले वा पुरुषस्य गुणभावः । अतो याथाकाम्यं स्यात्, एको द्वौ बहवो वा यजेरन्निति ॥ ५ ॥

अपि वा कामसंयोगे संबन्धात्प्रयोगायोपदिश्येत प्रत्यर्थं हि विधिश्रुतिर्विषाणावत् ॥ ६ ॥

अपि वेति पक्षव्यावृत्तिः । प्रयोगायोपदिश्येत कर्ता, न स्वार्थेन । कथम् । यजेतेत्यस्यार्थः, यागं कुर्यात्, यागेन वा कुर्यादिति । सत्ताभिव्यक्तिमात्रं गम्यते, न फलस्य कर्ताऽऽधाता वा । स्वर्गकामशब्दश्च स्वर्गकाममात्रे वर्तते, न विशेषमवलम्बत आत्मनः परस्य वेति । शब्दप्रमाणकाश्च वयमीदृशेष्वर्थेषु । कथं तर्हि । कामस्याऽऽत्मसंबन्धोऽवगम्यते । संबन्धात् । फलकामोऽनुक्तेऽपि शब्देनाऽऽत्मन एव फलं कामयते, न परस्य । यत्र तूभावर्थौ वक्तव्यौ भवतः, प्रत्यर्थं तत्र विधिः श्रूयते । यथा, कृष्णविषाणया कण्डूयति, चात्वाले कृष्णवि-

तेति या संख्या प्रतीयते सा गुणभावाशे न विवक्षितेत्येतन्न युक्ते न्याये स्यात् । उक्तश्च न्यायो, व्याप्यमानगता संख्याऽविवक्षिता । तद्विरोधादितरदप्यविवक्षितम् ॥ ५ ॥

फलेन व्याप्यमानस्यैकत्वाद्यविवक्षा । स चार्थात्फलेन व्याप्तिमात्मन इच्छति । याऽत्र पदे[1] विवक्षा[2] सा न शास्त्रात् । किं तर्हि । अर्थात् । यजेतेत्येकत्वविवक्षा[3] शास्त्रात् । तत्र यदि द्वे[4] विवक्षिते स्यातां ततोऽर्थान्तरत्वाद्दोषो[5] भवेत् । तस्माद्यः स्वर्गं प्रार्थयमान

१ पदे–स्वर्गकामपदे । २ विवक्षा–फलप्राप्तिं प्रत्यात्मनः प्राधान्यविवक्षेत्यर्थः । ३ यजेतेत्यादि–अयं भावः । यजेतेत्याख्यातोपात्तकर्तृसंख्ययोः क्रियां प्रति गुणत्वं विवक्षितमिति । ४ द्वे–पुरुषस्य गुणप्रधानभावे । ५ अर्थान्तरत्वाद्दोष इति–अनेकार्थत्वाद्वाक्यभेदाख्यो दोष इत्यर्थः ।

षाणां प्राप्स्यतीति । यत्रैवं द्वे श्रुती विधात्र्यौ भवतस्तत्र गुणभावः प्राधान्यं च गम्यते । न त्वत्रैवं द्वे विधायिके श्रुती विद्येते । गुणभूतस्तु पुरुषः श्रूयते भावयेदिति । तत्र यज्यर्थः करणं कर्म वा । संबन्धात्तु पुरुषप्राधान्यं, न कस्यचित्सुखेनोत्पन्नेन प्रयोजनम् । सुखसंबन्धेनाऽऽत्मनस्तु कृत्यम् । तस्मात्संबन्धात्पुरुषप्राधान्यं गम्यते, न श्रुतेः । अतो गुणभूतस्य पुरुषस्य संख्या विवक्षितेति ॥ ६ ॥

अन्यस्य स्यादिति चेत् ॥ ७ ॥

इति चेद्भवान्पश्यति, एवं सति यदि स्वर्गकामोऽन्यस्यापि स्वर्गं कामयमानो भवति । अन्यस्य स्वर्गं कामयमानोऽप्यन्यो यजेत । तत्र पूर्वोक्तो न्यायः प्रत्युद्धृतो भवति, शास्त्रफलं प्रयोक्तरीति ॥ ७ ॥

अन्यार्थेनाभिसंबन्धः ॥ ८ ॥

न परस्य स्वर्गकामो नेत्येवं न यजेत, नाप्यन्यस्य स्वर्गकामशब्दो न वाचक इति । कथं तर्हि । फलमसौ न प्राप्नोतीति । कथं पुनः फलस्याप्राप्तिः । उपग्रहविशेषश्रवणाद्यजेतेति । यत्राऽऽधाने, ब्राह्मणो वसन्तेऽग्निमादधीतेति । तदा तु कामश्रुतावुपग्रहोऽनुवाद एव ॥ ८ ॥

आत्मसंबन्धितया आत्मन इच्छति, तस्य यागोऽभ्युपाय इत्यर्थादवगम्यते । तस्मादनेन प्रकारेण विवक्षितमेकत्वम् । अथवा—यजेतेति भावना प्रतीयते कालोपग्रहनिमित्तादिविशिष्टा । तत्र संख्या गुणभूतस्य पुरुषस्य परिच्छेदिका येनांशेन व्याप्यते तेनांशेनाविवक्षिता । तदुभयमप्यनन्यप्राप्यत्वादुभयमस्मिन्विवक्षितम् ॥ ६ ॥

यदि स्वर्गकामशब्दः परस्याऽऽत्मनो वा यः स्वर्गं कामयते तत्राविशेषेण वर्तते, एवं चेत्परस्यापि स्वर्गमिच्छन्यजेतेति ॥ ७ ॥

आत्मनेपदात्कर्तृगामि क्रियाफलम् । तस्माद्यो न कर्ता तस्य क्रियाफलं नास्ति । सौर्यादीनां त्वाधानात्मनेपदेनाऽऽधानकर्तुः फलं भवति । नन्वाधानस्याग्न्युत्पत्तिरेव फलम् । उच्यते । ज्वलनपचनप्रकाशनादीन्याधातुरनाधातुश्च तुल्यानीति न तत्फलं नियन्तुं शक्यम् । तस्मादाहवनीयेन यानि साध्यन्तेऽपूर्वाणि, तदभिप्रायमात्मनेपदम् । दर्शपूर्णमासज्योतिष्टोमादिषु यदाहवनीयसाध्यं, तत्रानुवादेवाऽऽत्मनेपदम् । यानि त्वनग्निसाध्यानि, 'गोदोहनेन पशुकामस्य' इत्यादीनि तदर्थम् ॥ ८ ॥

१(अ० ३ पा० ७ अ० ८ सू० १८)। २ अर्थादिति—स्वरसादित्यर्थः । ३ तदुभयमपीति—पुरुषस्य गुणत्वं प्रधानत्वं चेत्यर्थः ।

फलकामो निमित्तमिति चेत् ॥ ९ ॥

एवं चेद्भवान् मन्यते, न स्वर्गकामशब्दो न वाचक इत्यन्यो न यजेत, फलाभावान्नास्य याग इति। सूक्तवाकफलार्थं तर्हि यजेत। आशास्तेऽयं यजमानः, आयुराशास्ते, इति प्रयोजयितारं निर्देक्ष्यति होता। फलविधिश्च, सूक्तवाकेन प्रस्तरं प्रहरतीति विधानात्। यदि फलविधिरयं मान्त्रवर्णिकी देवता, ततः सूक्तवाकेन प्रस्तरः प्रहृतो भवति। इतरथाऽदृष्टं कल्प्येत। तस्मादानुषङ्गिकफलार्थमन्यस्य स्वर्गकामोऽन्यो यजेतेति ॥ ९ ॥

न नित्यत्वात् ॥ १० ॥

नैतदस्ति। यस्यैव प्रधानकर्मफलं, तस्यैवाऽऽनुषङ्गिकमपि भवितुमर्हति। एवं स्वार्थेनाऽऽधानं कृतं भवति। न ह्याधानस्य स्वार्थतायामस्ति विशेषः। प्रधानफलं वाऽऽनुषङ्गिकं वा सर्वमेवाऽऽधातरि समवेतुमर्हति। नित्यकाम्यता च विरुध्येत। यद्यायुरादिकामो यजेत, न तर्हि नित्यम्। यदि नित्यं नाऽऽयुरादिकामः तस्मान्नावस्थितो न्यायः प्रत्युद्ध्रियेत। न च पुरुषः प्रधानभूतश्चोद्यते। गुणभावात्तस्य विवक्षितमेकत्वम्। तस्मादेक एव यजेत ॥ १० ॥

कर्म तथेति चेत् ॥ ११ ॥

अथ यदुक्तं, द्वयोर्बहूनां च यागं दर्शयति, युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्। एते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्यः प्रतिपदं कुर्यादिति। द्वियजमानके बहुयजमानके च कर्मणि प्रतिपद्विधाने कर्म तथायुक्तं स्यादिति। तत्परिहर्तव्यम् ॥ ११ ॥

न समवायात् ॥ १२ ॥

नैतदेवम्। समवेतं हि कर्म विद्यते द्वाभ्यां यजमानाभ्यां, बहुभिश्च यजमानैः, वचनेन। यथा, अहीनाः। तेषु प्रतिपद्विधानमर्थवद्भविष्यति तस्मादेको यजेतेति ॥ १२ ॥

[ ९ ॥ १० ॥ ११ ॥ १२ ॥ ]

१ फलार्थितयेति पा०।

( प्रारब्धकाम्यकर्मणः समाप्तिनियमाधिकरणम् ॥ ३ ॥ )

## [३] प्रक्रमात्तु नियम्येताऽऽरम्भस्य क्रियानियम्यत्वात् ॥ १३ ॥ सि०

प्रजाकामो यजेत, ग्रामकामो यजेतेत्येवमादि कर्म समाम्नायते। तत्र संदेहः। किं प्रक्रान्तं नियोगतः समापनीयमुतेच्छया कार्यं हेयं वेति। किं प्राप्तम्। नियोगतः परिसमापयितव्यमिति। कुतः। एवं हि श्रूयते। इदंकामो यजेतेति। एवं तस्याऽऽख्यातस्यार्थमुपदिशन्ति। उपक्रमप्रभृत्यपवर्गपर्यन्तमाहेति। उपक्रमादारभ्य यावत्परिसमाप्तिरित्येतावान् व्यापारविशेषस्तस्यार्थो, न यथा पाकस्त्याग इति। तत्र हि पाकसत्तामात्रं निर्दिश्यते, नाऽऽरभ्य परिसमापयितव्यमिति। एवं चाऽऽख्यातार्थं लौकिका अपि प्रतिपद्यन्ते। तत्र नाऽऽरम्भे पुरुषप्रयत्नश्चोद्यत इति गम्यते। यतश्चोदितं न नियोगत आरभन्ते। नियोगतः पुनः परिसमापयन्ति। तेन नोभे आरम्भपरिसमाप्ती शब्दार्थः। किं तर्हि। परिसमाप्तिः शब्दार्थः। परिसमाप्त्यामर्थप्राप्तत्वादारम्भस्य। तस्मात्परिसमाप्तिः शब्दार्थ इति गम्यते। सा चेच्छब्दार्थः, सा कर्तव्यतया चोद्यते। आरम्भे नास्ति कर्तव्यतावचनम्। तेन न नियोगत आरम्भः। नियोगतस्तु परिसमाप्तिः। तेनोपक्रान्ते कर्मणि यदि वीयात्फलेच्छा, अवाप्नोति वा फलं, तस्यामप्यवस्थायां कर्तव्यमेवोपक्रान्तस्य परिसमापनम्।

कर्तव्यमिति चोद्यते यदिष्टफलम्। नन्वर्थिनो योऽर्थः, सोऽत्र कर्तव्यतयोच्यते। नैतदेवम्। वाक्यार्थो हि स भवति। यागस्य तु कर्तव्यता श्रुत्या गम्यते। तस्माद्ग्रामादिकामेन याग आरब्धः परिसमापनीयः। ग्रामादिकामनावचनं निमित्तत्वेन तदा भवति। निमित्ते चोत्पन्ने यत्कर्तव्यमित्युच्यते तद्विनष्टेऽपि निमित्ते कर्तव्यमेव। उपक्रान्तस्य समापनं कर्तव्यमिति चोद्यते। तद्विनष्टेऽपि निमित्ते कर्तव्यम्। न हि तद्विनष्टमनुत्पन्नं भवति। उत्पत्तिश्च निमित्तं, न भावः।

---

विगतायामपि फलेच्छायां समापनीयमेव कर्म। कुतः। आरम्भो निमित्तं कामश्च। तत्र यथा कामेऽनुष्ठातव्यं तथाऽपगते काम आरम्भस्य विद्यमानत्वान्नैमित्तिकी समाप्तिः कर्तव्या। सा फले विधीयते। यद्यारम्भो विधीयेत, ततः समाप्तिरविहितत्वान्नावश्यं

तस्माद्भीतायामपि फलेच्छायामुपक्रान्तं परिसमापयितव्यम् । क्रियया हि निमित्तमारम्भः । सोऽपि परिसमाप्तेरिति ॥ १३ ॥

फलार्थित्वाद्वाऽनियमो यथाऽनुपक्रान्ते ॥ १४ ॥

वाशब्दः पक्षं व्यावर्तयति । अनियमो वा । कस्मात् । फलार्थित्वात् । फलार्थिनः फलं चिकीर्षमाणस्योपायोऽयं विधीयते, न कर्तव्यता । सा हि विधीयमाना फलस्य वा यागस्य वा स्यात् । फलस्य न तावद्वक्तव्या । न हि यो यत्कामयते तस्य तत्कर्तव्यतोपदेष्टव्या । वेदैवासौ ममैतत्कर्तव्यमिति । उपायं तु न वेद, तमाकाङ्क्षते । इदमुपदिश्यते, याग उपाय इति यागेन क्रियत इति । न च यागस्य कर्तव्यता । प्रत्यक्षविरोधात् । प्रत्यक्षस्तु क्लेशो यागः । यदि यागेनान्यस्य कर्तव्यता, तदा न विरोधः । यागकर्तव्यतायां कलं कल्प्यम् । न च कल्प्यमानस्य प्रमाणमस्ति । कर्तव्योपदेशश्च शक्यादिष्वर्थेषु भवति । तस्मान्न यागः कर्तव्यः । फलकामस्य यदिष्टं तत्कर्तव्यमनूद्य यथाप्राप्तं यागस्य साधनता विधीयते । तेन नावश्यं समापनीयं भवति । यथाऽनुपक्रान्तं नावश्योपक्रमितव्यम्, एवमुपक्रान्तं नावश्यं समापयितव्यम् । यत्तु वाक्यार्थः श्रुत्या बाध्यत इति । यत्र श्रुत्यर्थो न संभवति, तत्र वाक्यार्थो गृह्यत इत्युक्तमेव । तस्मादनियमः ॥ १४ ॥

नियमो वा तन्निमित्तत्वात्कर्तुस्तत्कारणं स्यात् ॥ १५ ॥

आरम्भो हि निमित्तं समाप्तेः । कथम् । तत्कर्तुः कारणं स्यात् । किं कारणम् । सत्यसंकल्पता । यो ह्यारब्धमेवंजातीयकं न समापयति, तं शिष्टा विगर्हन्ते, प्राक्रमिकोऽयम्, असंव्यवहार्य इति । शिष्ट-

---

कर्तव्या । समाप्तौ विधीयमानायामर्थाक्षिप्तत्वादारम्भमध्यौ लभ्येते । तस्मात्समाप्तिः शास्त्रचोदितत्वाद्भीतायामपि फलेच्छायां कार्या ॥ १३ ॥

फलमात्मन इच्छतो याग उपायो विधीयते । वीतायामपि नासावभ्युपायो भवति । अभ्युपेयाभावात्कथमसौ क्रियते । न वाऽऽरम्भो निमित्तम् । यद्वृत्तसम्बन्धयोरभावात् । न च केनाचिच्छब्देनाऽऽरम्भो निर्दिश्यते । कर्तव्योपदेशश्च शक्येष्वर्थेषु भवतीति— यागः शक्यः कर्तुमित्यस्मिन्नर्थे कर्तव्यतावचनस्य कल्पना शक्या कर्तुम् । न तु त्वदीयो यागः कर्तव्य इति ॥ १४ ॥

न स्वाच्छन्द्येन विगर्हन्ते । अशिष्टा एव ते स्युः, यदि विगर्हयेयुर्विना शास्त्रेण ।

विगर्हणा च दोषः । तस्मादारभ्य समापयितव्यम् । आह । शिष्टाः पुनः किमर्थं विगर्हन्त इति । उच्यते । विगर्हन्ते तावत्, किं नो विदितेन कारणेनेति ॥ १५ ॥

( प्रारब्धलौकिककर्मसमाप्तेरनियमाधिकरणम् ॥ ४ ॥ )

[४] लोके कर्माणि वेदवत्ततोऽधिपुरुषज्ञानम् ॥ १६ ॥पू०

केनचिद्गृहमुपक्रान्तं भवति, शकटं, रथो वा । वीताऽस्य फलेच्छा, अवाप्नोति वा फलम् । तत्र संदेहः । किं तेन नियोगतः परिसमापयितव्यमुतेच्छयोत्स्रष्टव्यमपीति । किं प्राप्तम् । लोके कर्माण्येवंजातीयकान्युपक्रम्य परिसमापयितव्यानि । यथैव वैदिकानि तथैव तानि नियोगतः परिसमापनीयानि । कुतः । ततोऽधिपुरुषज्ञानम् । ततस्तत्पुरुषज्ञानं भवितुमर्हति । कुतः । शास्त्रात् । आम्नायते हि तक्ष्णां शास्त्रम् । तत्रापि देवताव्यापारोऽङ्गी क्रियते । पूर्वस्यां दिश्येता देवताः, इतरास्वेता इति । यथा शास्त्रकृते देवताव्यापारे उपक्रम्यापरिसमाप्यमाने शिष्टविगर्हणम्, एवमिहापि भवितुमर्हति ॥ १६ ॥

अपराधेऽपि च तैः शास्त्रम् ॥ १७ ॥सि०

तेषां च लौकिकानामपराधे तैस्तक्षभिः प्रायश्चित्तशास्त्रमाम्नायते । आरे भग्न इन्द्रबाहुर्बद्धव्यः । पायसं च ब्राह्मणो भोजयितव्य इति । प्रायश्चित्तं च यद्यदृष्टार्थं, न शास्त्रादृते । अथ प्रसङ्गपरिहारार्थं, ततोऽप्यादृतमेव तदिति गम्यते ॥ १७ ॥

अशास्त्रा तूपसंप्राप्तिः शास्त्रं स्यान्न प्रकल्पकं तस्मादर्थेन गम्येताप्राप्ते वा शास्त्रमर्थवत् ॥ १८ ॥

तुशब्दः पक्षं व्यावर्तयति । अशास्त्रा त्वेषामुपसंप्राप्तिरिति ब्रूमः । स्मृतेरस्याः शास्त्रं भवताऽनुमीयते । न शास्त्रमन्तरेण स्मृतिः । न च स्मृतिमन्तरेण तक्ष्णां ग्रन्थ उपपद्यत इति । अत उच्यते, भवत्यत्र

---

ततः शिष्टाचारात्स्मृतिः, स्मृतेः श्रुतिः । तैत्तिरीयाणां चानन्यपरं वचनमस्ति । अराभ्य यजेतैवेति सिद्धम् ॥ १९ [ ॥ १६ ॥ १७ ॥ १८ ॥]

---

१ वचनमिति— 'देवताभ्यो वा एष आवृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते, त्रैधातवीयेन यजेत' न देवताभ्य आवृश्च्यते' 'यदि वर्षेत्तावत्येव होतव्यम्' इत्यादिवचनं बोध्यम् ।

स्मृतिः,एवमिदं गृहादिकर्म रमणीयं भवतीति । नास्मात्कर्मणोऽदृष्टं किंचिदिति । या चासौ रमणीयता साऽन्तरेणापि शास्त्रं शक्या ज्ञातुम् । ज्ञात्वा च स्मर्यते । तस्मान्नास्याः स्मृतेः शास्त्रं प्रकल्प्यम् । यद्यन्तरेण शास्त्रं न प्राप्येत, ततः शास्त्रमत्रार्थवदिति प्रकल्प्येत । तस्मान्नेदं शास्त्रोक्तम् । शास्त्रोक्ते च सामिकृते त्यक्तेऽत्यन्तं शिष्टा गर्हन्ते, देवताश्रये च । नन्वत्रापि देवताः परिगृहीताः, अस्यां दिशीयं देवता यक्ष्यतेऽस्यामियमिति । उच्यते । पुरुषमनु देवताः शिष्टाः स्मर्यन्ते, न गृहमनु । तस्माददोष इति ॥ १८ ॥

( निषेधातिक्रमे पुरुषप्रत्यवायाधिकरणम् ॥ ९ ॥ )

[ ५ ] प्रतिषेधेष्वकर्मत्वात्क्रिया स्यात्प्रतिषिद्धानां विभक्तत्वादकर्मणाम् ॥ १९ ॥ पू०

इदं ह्युपदिशन्ति । न कलञ्जं भक्षयितव्यम्, न लशुनं, न गृञ्जनं चेति । तत्र संदेहः । किमेवंजातीयकं फलकामेन न भक्षयितव्यम्, निष्कामेनाऽऽद्यम्, अथवा नियोगतो वर्जयितव्यमेवेति । किं प्राप्तम् । फलार्थिना न भक्षयितव्यम् । अनर्थिनोऽनियम इति । कुतः । नियमो ह्ययमुच्यते, इदं न भक्षयितव्यमिति । एवमुक्ते द्वयमापतति । यदि वाऽभक्षणं कर्तव्यमिति, यदि वा भक्षणं न कर्तव्यमिति । यदि नञ्विशिष्टं भक्षणं कर्तव्यमित्यभ्युपगम्यते, ततोऽभक्षणं श्रुत्या तव्यो विदधाति । नञ् भक्षयतिविशेषणम् । तद्व्यापाराच्च कर्तव्य-

त्वन्मतेन तु प्रतिषेधो मम तु पर्युदास एव । कथम् । 'न कलञ्जं भक्षयितव्यम्' इत्युपश्लेषलक्षणया श्रुत्या भक्षयतेः कर्तव्यता तव्यो विदधाति । नकारश्च कर्मण्यनाहितत्वान्न कर्तव्यतावचनेन संबध्यते । तस्मात्प्रच्युतोऽन्येन संबध्यमानः पर्युदासो भवति । तत्र नायं कलञ्जेन संबध्यते । किं कारणम् । असमस्तत्वात् । सुबन्तयोः समासे सति पर्युदासो भवति नासमासे । अतस्तस्मात्पर्युदस्तो धातुना संबध्यते । तत्र सुबन्तत्वाभावात्समासो नास्ति । तस्मादभक्षणं कलञ्जादिविशिष्टं फलार्थिना कर्तव्यम् ।

अथवा—सर्वपदानि भावनोपनिपातीनि । तत्र यद्ययं स्वार्थवृत्तः संबध्यते, ततो भावनावैपरीत्येन प्रवर्तते । तस्माद्भावनाविरोधात्स्वार्थं हित्वा लक्षणावृत्तः संबध्यते । न

१ भक्षणान्निवर्तितव्यमिति पा० । २ उपश्लेषलक्षणया श्रुत्या—संनिकर्षलक्षणया पदश्रुत्येत्यर्थः ।

तया नञ् न संबध्यते । अथ नञर्थः कर्तव्यस्ततो वाक्येन विधानम् । भक्षयतिश्च नञ्विशेषणम् । श्रुतिश्च वाक्याद्बलीयसी । तस्मादभक्षणं कर्तव्यमिति गम्यते ।

अभक्षणं च भक्षणाभावः । न तस्य कर्तव्यताऽस्ति । तस्माद्यस्तत्र मानसो व्यापारः, स इहोपादिश्यते । येनोपायेन नञ्विशिष्टं भक्षणं भवति । पूर्वं नञ्भक्षयत्योः संबन्धः । ततो विधानम् । यथा, नोद्यन्तमादित्यमीक्षेतेत्येवमादिषु प्रजापतिव्रतेषु कुर्वतः फलम्, अकुर्वतो न फलं न दोषः । एवमिहापि, विभक्तत्वादकर्मणाम् । नात्र कर्म प्रतिषिध्यते । अकर्ममात्रमुपादिश्यते । अन्यद्धि कर्म भक्षणं प्रतिषिध्यमानम्, अन्यदकर्म मानसः संकल्प इति ॥ १९ ॥

शास्त्राणां त्वर्थवत्त्वेन पुरुषार्थो विधीयते तयोरसमवायित्वात्तादर्थ्ये विध्यतिक्रमः ॥ २० ॥ सि०

उपवर्णनापरिहारस्तावदुच्यते । युक्तं यत्प्रजापतिव्रतेषु शास्त्राणामर्थवत्त्वेन पुरुषार्थो विधीयते । तत्र नियमः कर्तव्यतयोपादिश्यते । यश्च

---

च केवलो लक्षणां प्रतिपत्तुं शक्नोति । ततो धातुना संबध्यते तेनैव[2] न्यायेन । अर्थभावनाविरोधात्तस्याः प्रच्युतोऽनन्तरेण धातुना संबध्यते । तस्मादभक्षणं नाम मानसो व्यापारोऽनुष्ठेयः । क्रियां कुर्वन्प्रथमं तावत्संकल्पं करोति, तदुत्तरकालं तस्या प्रवर्तते । स्पर्शनादिक्रिया विप्रकृष्टा, मानसस्तु संकल्पोऽनन्तरः[3] । अतस्तमेवाऽऽतिष्ठते ।

प्रतिषेधेऽपि प्रथमं संकल्पयति, ततो निवर्तते । एवं चोदितत्वान्नान्तरीयकः संकल्पः । यथैवाब्राह्मणमानयेति नकारेण ब्राह्मणजातेरभावः क्रियते, पुरुषजातेर्नाभाव उच्यते । तस्माद्यत्र पुरुषत्वं विद्यते ब्राह्मणत्वं पर्युदस्तं, स आनीयते, एवमिहापि नकारेण भक्षणं पर्युदस्तम् । यस्तु मानसो व्यापारोऽनुस्यूतः सोऽन्तरङ्गत्वात्कर्तव्यतावचनेन संबध्यते । यथा 'नोद्यन्तमादित्यमीक्षेत' । इयांस्तु विशेषः । तत्र शतृप्रत्ययान्नोद्यन्तमित्यनेन निमित्तमभिधीयते । अतस्तत्र नित्यमनुष्ठानम्[4] ॥ १९ ॥

'तस्य व्रतम्' इत्युपक्रम्य 'नोद्यन्तमादित्यमीक्षेत' इति श्रूयते । व्रतमिति च कर्म-

---

१ अकुर्वतः फलं, कुर्वतो न फलं, न दोष इति पा० । २ तेनैव न्यायेनेति—असमस्तत्वात्येन पूर्वोक्तेनैव न्यायेन नञो न कलञ्जान्वयः संभवतीत्यर्थः । ३ अनन्तरः–संनिकृष्टः । ४ नित्यमनुष्ठानमिति–प्रकृतोदाहरणे तु निमित्तश्रुत्यभावाद्वाक्यशेषाभावाच्च विश्वजिन्न्यायेन स्वर्गस्यैव फलत्वात्स्वर्गकामाधिकारा एवंजातीयका इत्याशयः ।

कर्तव्यः स कल्याणोदयः । यो न कर्तव्यः स पापोदयः । कथं पुनः प्रजापतिव्रतेषु नियमः कर्तव्यतया चोद्यत इति । उच्यते । तस्य व्रतमिति प्रकृत्य प्रजापतिव्रतानि समाम्नातानि । व्रतमिति च मानसं कर्मोच्यते । इदं न करिष्यामीति यः संकल्पः । कतमत्तद्व्रतम् । नोद्यन्तमादित्यमीक्षेतेति, यथा तदीक्षणं न भवति, तथा मानसो व्यापारः कर्तव्यः । तस्य च पालनम् । तत्र तस्मात्पुरुषार्थोऽस्तीत्यवगन्तव्यम् । तत्र चैतान्येव प्रकृत्योच्यते, एतावता हैनसाऽयुक्तो भवतीति । एतावता कृतेनायुक्त एनसा भवतीति । अथेह तयोरसमवायित्वम् । इह क्रिया प्रतिषिध्यते, नाक्रियोपदिश्यते । न हि कलञ्जं भक्षयन् प्रतिषेधविधिं नातिक्रामति । इह पुनरादित्यं पश्यन् नातिक्रामति विधिम् । न हि तस्य दर्शनं प्रतिषिद्धम् । नियमस्तत्रोपदिष्टः । यस्तं नियमं करोति, स फलेन संबध्यते । इह तु प्रतिषिध्यते कलञ्जादि ।

कथमवगम्यते । नात्र, तस्य व्रतमिति प्रकृत्य वचनमस्ति, न च न भक्षयितव्यमित्यस्य मानसो व्यापारोऽर्थः । भक्षयितव्यमिति च भक्षणं कर्तव्यं शब्देनोच्यते । नेति तत्प्रतिषिध्यते श्रुत्यैव । एवं प्रसिद्धोऽर्थोऽनुगृहीतो भवति । इतरथा लक्षणा स्यात् । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या न लक्षणा । तस्मादिह प्रतिषेध उच्यते ।

आह । प्रतिषिद्धं नाम, दोषोऽत्र न श्रूयते । तस्मात्प्रतिषिद्धमप्यनुष्ठातव्यमिति । कल्पयिष्यत इति चेन्न । प्रमाणाभावात् । अर्थापत्तिः प्रमाणम् । उपदेशवैयर्थ्यप्रसङ्गादिति यद्युच्येत । नैतदेवम् । व्यर्थोऽपि ह्युपदेशोऽज्ञानात्संभवति । तस्मान्न कल्प्यो दोष इति । उच्यते । सत्यं न कल्पनीयः । किंतु क्लृप्त एव । कथम् । अनन्तरमेवैनं शिष्टा वर्जयेयुः, पतितः कर्मफलेभ्य इति वदन्तः । महांश्चैष दोषो, यच्छिष्टा वर्जयन्ति । तस्मान्नियोगतः कलञ्जादि न भक्षयितव्यमिति । यथा,

नाम । तद्यदि प्रतिषिध्यते, पूर्वमुत्तरेण न संबध्यते । तस्मात्तत्र विरोधान्नञ्प्रत्ययः प्रत्ययानन्तरेण धातुना संबध्यते । इह तु नास्ति व्रतस्थानीयं पूर्ववाक्यम् । अतः श्रुत्या कर्तव्यतावचनेन नञ् संबध्यते । धातुसंबन्धे ह्युभे अपि पदे लक्षणावृत्ते स्याताम् । असमासे च समासोऽध्यारोप्य प्रदर्शनीय इत्येते दोषाः । तथा, नञ्प्रत्य-

न सर्पायाङ्गुलिं दद्यात्, तत्र दोषदर्शनान्नियोगतो न सर्पायाङ्गुलिर्दीयते, कण्टको वा न पादेनाधिष्ठीयते। एवमिदमपीति ॥ २० ॥

( स्मार्तादीनामप्युपनयनोत्तरकालकर्तव्यत्वाधिकरणम् ॥ ६ ॥ )

[ ६ ] तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन् ॥ २१ ॥ पू०

इह स्मार्ताः पदार्था उदाहरणम्। प्रत्युपस्थितनियमाश्चाऽऽचाराः। गुरुरनुगन्तव्योऽभिवादयितव्यश्च। वृद्धवयाः प्रत्युत्थेयः संमन्तव्यश्चेति। तत्र संदेहः। किं जातमात्राणामिमे पदार्था उतोपनीतानामिति। किं प्राप्तम्। अविशेषोपदेशाज्जातमात्राणाम्। कुतः। पुरुषे ते शिष्यन्ते, जातमात्रश्च पुरुषो भवति। तस्माज्जातमात्राणामिमे पदार्था इति ॥ २१ ॥

एवं प्राप्ते ब्रूमः—

अपि वा वेदतुल्यत्वादुपायेन प्रवर्तेरन् ॥ २२ ॥ सि०

अपि वेति पक्षव्यावृत्तिः। उपायेन प्रवर्तेरन्। उपनयनेन सह प्रवर्तेरन्। वेदतुल्यत्वात्। वेदतुल्या हि स्मृतिः। वैदिका एव पदार्थाः स्मर्यन्त इत्युक्तम्। वैदिकाश्च पदार्था उपनयनोत्तरकाले समाम्नाताः। स्मार्ताश्चेमे वैदिका एव। तस्मादुपनयनोत्तरकाला एत इति ॥ २२ ॥

यसंबन्धे सर्वाणि स्वार्थवृत्तानि। शिष्टविगर्हणा चोपायत्वेन वर्णयितव्या। चोदनायां फलाश्रुतेरिति द्वे सूत्रे अस्मिन्नूहेन नेये ॥ २० ॥ [ २१ ॥ ]

न सामान्यतो दृष्टेन शास्त्रे व्यवहारः। येनोपनयनोत्तरकालं वैदिकानि कर्माणि। इयमप्युपनयनोत्तरकालमेव प्रवर्तते स्मृतिः। तस्मात्तत्सामान्यतो दृष्टेन वर्ण्यते। ‘सुरा न पेया’ ‘ब्राह्मणो न हन्तव्यः’ इत्येवमादयो जातमात्रेण न कर्तव्याः। अन्यास्तु ‘प्रागुपनयनात्कामचारवादभक्षाः’ इत्यप्रतिपिद्धत्वात्करिष्यति। उपनयनोत्तरकालमभिवादनप्रत्युत्थानादीन्युपदिश्यन्ते। अतो वेदाध्ययनकाल उपदेशाद्वेदतुल्यत्वादिति। अथवा—विशिष्टकाल एवैते स्मर्यन्ते। स्मृतीनां वेदमूलत्वाद्वेदतुल्यता ॥ २२ ॥

१ ऊहेन नेये इति—अयमाशयः। ‘चोदनायां फलाश्रुतेः—’ ‘अपिवाऽऽम्नानसामर्थ्यात्—’ ( अ० ४ पा० ३ अ० ५ ) इति विश्वजिदधिकरणस्थे द्वे अपि पूर्वोत्तरपक्षसूत्रे विश्वजिदादिष्वश्रुतफलकेष्वपि विधिसामर्थ्यादेव समीहितं फलं कल्पयितव्यमित्येवं प्रतिपादनपरे कलञ्जभक्षणादिष्वश्रुतफलकेषु निषेधस्य निवर्तकत्वासिध्यनुरोधेनैव प्रत्यवायरूपं फलं कल्प्यत इत्यस्मिन्नर्थेऽप्यूहेन योजनीये इति।

( अग्निहोत्रादिकर्मणां विहितकालकर्तव्यत्वाधिकरणम् ॥ ७ ॥ )

[७] अभ्यासोऽकर्मशेषत्वात्पुरुषार्थो विधीयते ॥ २३ ॥ पू०

इदमामनन्ति, यावज्जीवमग्निहोत्रं जुहोति, यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति पुरुषार्थोऽयं यागो विधीयते । नायमभ्यासः कर्मशेष इत्युक्तम्[1] । इहेदानीं संदिह्यते । किं सातत्येन होतव्यमुतासातत्येनेति । किं प्राप्तम् । पुरुषं प्रत्युपदिष्टत्वात्सातत्येन । अयं पुरुषः इति सातत्येनानुष्ठातव्यम् । ननु प्रदोषमग्निहोत्रं होतव्यं, व्युष्टायां प्रातरिति श्रूयते, पौर्णमास्यां पौर्णमास्या[2] यजेत, अमावास्यायाममावास्यया यजेतेति । नैष सर्वाङ्गोपसंहारेण प्रयोगः । अतः कालमात्रे[3] हीने न दोषः ॥ २३ ॥

तस्मिन्नसंभवन्नर्थात् ॥ २४ ॥

नैतदस्ति, यत्, जुहुधि जुहुधीत्येव होतव्यमिति । यथा शक्नोति, तथा जुहुयादित्युच्यते । न च सातत्येन शक्यते । अवश्यमनेनाऽऽहारविहाराः कर्तव्याः । तस्मादर्थाविरुद्धेषु कालेषु सततं होतव्यमिति ॥ २४॥

न कालेभ्य उपदिश्यन्ते ॥ २५ ॥ सि०

न चैतदस्ति, यदुक्तमर्थाविरुद्धेषु कालेषु सततं होतव्यमिति । काल एषः श्रूयते । प्रदोषमग्निहोत्रं होतव्यं, व्युष्टायां प्रातरिति । तथा पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेतेति । तस्मान्न सातत्यमिति । आह । ननु विगुणस्यापि प्रयोगान्न काल आदरणीय इति । अत्रोच्यते । न कालो गुणः । निमित्तं ह्येतदित्युक्तम् । तस्मादन्येषु कालेष्वविहितत्वात्कृतमप्यकृतं स्यात् । तस्मादाश्रितकालस्य यावज्जीवं प्रयोग इति ॥ २५ ॥

दर्शनात्काललिङ्गानां कालविधानम् ॥ २६ ॥

लिङ्गं च भवति, अप वा एष स्वर्गाल्लोकाच्छिद्यते यो दर्शपूर्ण-

---

[ २३ ॥ २४ ॥ २५ ॥ ॥ २६ ॥

---

१ ( अ० २ पा० ४ अ० १ ) इत्यत्रेति शेषः । २ पौर्णमासेन० पा० । ३ कालमात्रेण हीनेन न दोषः । इति पा० ।

मासयाजी सन् पौर्णमासीममावास्यां वाऽतिपातयेदिति । यदि सर्वस्मिन्काले होमस्तदा कस्यातिपत्तिः स्यात् । तस्मादपि न सततमभ्यासः ॥ २६ ॥

( अग्निहोत्रादिकर्मणां निमित्तानुरोधेनाऽऽवृत्त्यधिकरणम् ॥ ८ ॥ )

[८] तेषामौत्पत्तिकत्वादागमेन प्रवर्तेत ॥ २७ ॥ सि०

प्रदोषमग्निहोत्रं होतव्यम्, व्युष्टायां प्रातरिति । तथा, पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजतेति । तत्र संदेहः । किं सकृत्प्रदोषे होतव्यमुत प्रदोषे प्रदोष इति । तथा सकृद्व्युष्टायां प्रातरुत व्युष्टायां व्युष्टायामिति । तथा किं सकृत्पौर्णमास्याममावास्यायां वा, उताऽऽगत आगते काल इति । किं प्राप्तम् । सकृत्कृत्वा कृतार्थः शब्दो, न नियमः पौनःपुन्य इत्येवं प्राप्ते ब्रूमः । आगमेन प्रवर्तेत । आगत आगते काले प्रयोगः कर्तव्य इति । कुतः । तेषामौत्पत्तिकत्वात् । उत्पद्यमानं कर्म कालसंयुक्तमेवोत्पद्यते । तदुक्तं, निमित्तार्थाः कालश्रुतय इति । निमित्ते च संप्राप्ते नैमित्तिकोऽर्थः कर्तव्यो भवति । तस्मादागत आगते काले प्रयोगः कर्तव्यः ॥ २७ ॥

तथा हि लिङ्गदर्शनम् ॥ २८ ॥

अप वा एष स्वर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन् पौर्णमासीममावास्यां वाऽतिपातयेदिति । आगत आगते काले प्रयोगं दर्शयति ॥ २८ ॥

( क्रत्वर्थनैमित्तिकानां निमित्तावृत्तावावृत्त्यधिकरणम् ॥ ९ ॥ )

[ ९ ] तथाऽन्तःक्रतुप्रयुक्तानि ॥ २९ ॥ सि०

भिन्ने जुहोति, स्कन्ने जुहोति, इति दर्शपूर्णमासयोः श्रूयते । तत्र संदेहः । सकृद्भिन्ने स्कन्ने च हुत्वा कृतार्थ उत भिन्ने भिन्ने, स्कन्ने स्कन्ने चेति । तत्राधिकरणातिदेशः । यः पूर्वत्र पूर्वः पक्षः, स इह पूर्वः पक्षः । य उत्तरः स इहोत्तर इति । सकृत्कृत्वा कृतार्थ इति पूर्वः पक्षः । निमित्तत्वादागत आगते काल इत्युत्तरः ॥ २९ ॥

( गुर्वनुगमनादीनां निमित्तावृत्तावावृत्त्यधिकरणम् ॥ १० ॥ )

[१०] आचाराद्गृह्यमाणेषु तथा स्यात्पुरुषार्थत्वात् ॥३०॥ सि०

॥ २७ ॥ २८ ॥ २९ ॥

१ पुनः प्रयोग इति पा० ।

गुरुरनुगन्तव्योऽभिवादयितव्यश्च, वृद्धवयाः प्रत्युत्थेयः संमन्तव्यश्चेति। तत्र संदेहः। किमागत आगते गुरौ, वृद्धवयसि च यदुक्तं तत्कर्तव्यमुत सकृत्कृते कृतार्थतेति। आचारादृह्यमाणेषु तथा स्यात्पुरुषार्थत्वादित्यधिकरणातिदेशः। तत्र यः पूर्वः पक्षः स इह पूर्वः पक्षः, य उत्तरः स उत्तरः। सकृत्कृत्वा कृतार्थ इति पूर्वः पक्षः। निमित्तत्वात्पुनः प्रयोग इत्युत्तरः॥ ३०॥

( ज्योतिष्टोमादीनां त्रैवर्णिकस्य नित्यताधिकरणम्॥ ११॥ )

[११]ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात्॥३१॥ सि०

इदं श्रूयते। सोमेन यजेत, गर्भाष्टमेषु ब्राह्मणमुपनयीत, प्रजामुत्पादयेदिति। तत्र संदेहः। किं नित्यान्येतान्युतानित्यानीति। किं प्राप्तम्। कामसंयोगादनित्यानीति प्राप्ते, उच्यते। ब्राह्मणादीनां सोमादीनि नित्यानीति। कुतः। ऋणवाक्येन हि संयोगो भवति। जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणवा जायते, ब्रह्मचर्येण ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजया पितृभ्य इति। स वै तर्ह्यनृणो यदा यज्वा ब्रह्मचारी प्रजावानिति। ऋणसंस्तवोऽवश्यकर्तव्यानां भवति। तस्मान्नित्यानीति।

ननु लिङ्गमसाधकं, न्याय उच्यतां, यस्यैतद्द्योतकमिति। उच्यते। अकामसंयुक्तान्येषां पृथग्वाक्यानि भवन्ति। वसन्ते वसन्ते ज्योतिषा यजेत, यावज्जीवमग्निहोत्रं जुहोति, यावज्जीवं दर्शपूर्णमासाभ्यां यजेत। तथा, विद्यामधीयीत। तथा, प्रजा उत्पादयितव्येति। एवं नित्यतायाः प्राप्ताया इदं लिङ्गं भवतीति।

अथवा—अयमन्योऽर्थः। ब्राणह्मस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात्। सोमादयो नियताः किं ब्राह्मणस्यैव, राजन्यवैश्ययोरानियताः, उत सर्वेषां नियता इति। किं प्राप्तम्। ब्राह्मणस्यैव नियता नेतरयोरिति। कुतः। एवं श्रूयते। जायमानो ह वै ब्राह्मण इति। ब्राह्मणस्य नियमो दृश्यते, नेतरयोः। ब्राह्मणसंकीर्तनात्। एवं प्राप्ते ब्रूमः।

सर्वेषां नियमः। कुतः। अविशेषेण नियमविधानं यत्तदकामसंयुक्तं वचनं नियामकम्। तदविशिष्टं सर्वेषाम्। तस्मात्सर्वेषां नियम इति।

ननु, जायमानो ह वै ब्राह्मण इति ब्राणस्य संकीर्तनम् । उच्यते । भवत्यस्मिन्वचने ब्राह्मणसंकीर्तनम् । न ह्येतद्वचनं नियमस्य विधायकम् । एतैरकामसंयुक्तैर्वचनैर्विहितस्य नियमस्यानुवादोऽयमवदानस्तुत्यर्थः । तस्मान्नात्र ब्राह्मणसंकीर्तनेन राजन्यस्य वैश्यस्य वाऽनियमो विज्ञायते । ब्राह्मणग्रहणं तु प्रदर्शनार्थम् । जायमानो ब्राह्मणो राजन्यो वैश्यश्चेति । तथा जायमानो जातश्चेति ॥ ३१ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये षष्ठस्याध्यायस्य द्वितीयः पादः ॥

---

अथ षष्ठेऽध्याये तृतीयः पादः ॥

( नित्ये यथाशक्त्यङ्गानुष्ठातुरप्यधिकाराधिकरणम् ॥ १ ॥ )

**[१] सर्वशक्तौ प्रवृत्तिः स्यात्तथाभूतोपदेशात् ॥ १ ॥ पू०**

बह्वृचब्राह्मणे श्रूयते, यावज्जीवमग्निहोत्रं जुहोति, यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति । नित्यमग्निहोत्रं नित्यौ च दर्शपूर्णमासौ । तत्र यदेतत्कामश्रवणादन्यदकामश्रवणं द्वितीयं, तत्र संदेहः । किं यः कात्स्न्येन विधिमुपसंहर्तुं शक्नोति तस्यैवाधिकार उत विगुणमपि तत्प्रयोक्तव्यमिति । एकादशे कामसंयुक्ते प्रथमे श्रवणे चिन्तयिष्यते,

---

॥ ३० ॥ ३१ ॥ ]

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां षष्ठाध्यायस्य द्वितीयः पादः ।

---

यावज्जीविके प्रयोगे चिन्त्यते । किं सर्वाङ्गोपसंहारसमर्थः पुरुषोऽधिक्रियत उतैकदेशोपसंहारसमर्थोऽपीति । ऐकादशे तु कथंभावः सर्वैरङ्गैर्निराकाङ्क्षी क्रियत उतै·

---

१ 'विधेस्त्वेकश्रुतित्वादपर्यायविधानात्'—( अ० ११ पा० १ अ० २ सू० १६ ) इत्यत्र सर्वक्रतुसाधारण्येन, क्रतुकथंभावाकाङ्क्षा सर्वैरङ्गैः पूर्यते न त्वेकैकेनेति सिद्धान्तिते कथमस्मिन्नधिकरणे—एकदेशोपसंहारसमर्थोऽप्यधिक्रियत इति सिद्धान्त इत्येवमेकादशाधिकरणेनास्य विरोधमाशङ्क्य परिहृतं भाष्ये—एकादशे कामसंयुक्त इत्यादिना । तस्याभिप्रायमाह—एकादशेत्वित्यादिना । यद्यपि—एकादशाधिकरणं काम्ये सर्वाङ्गोपसंहारसमर्थस्याधिकारप्रतिपादनार्थं, इह तु नित्ये कतिपयाङ्गयुक्तस्याधिकारप्रतिपादनार्थमित्येवं भाष्यार्थः प्रतिभाति । परंतु—एकादशेऽधिकारचिन्ताया अक्रियमाणत्वात्काम्यमात्रेऽविचाराच्च वार्तिकोक्त एव भाष्यस्याभिप्रायः । एकादशाधिकरणसिद्धान्तं, नित्येषु निमित्तसंबन्धावगतावश्यकत्वानुरोधेन यथाशक्तिक्रियमाणैरप्यङ्गैरस्ति फलसिद्धिरित्येवमपवदितुमिदमधिकरणमिति भावः ।

साङ्गे । इह नित्ये श्रवणे द्वितीय इति । किं प्राप्तम् । सर्वशक्तौ प्रवृत्तिः स्यात्तथाभूतोपदेशात् । यः कार्त्स्न्येन विधिमुपसंहर्तुं शक्नोति, स एवानुतिष्ठेत् । तथाभूतोपदेशात् । यथाभूतं हि तत्कामसंयुक्तं श्रुतं, तथाभूतमेव नित्यमप्युपदिश्यते । तस्मात्सर्वाङ्गोपहारेण प्रयोगः कर्तव्यः । दर्शपूर्णमासशब्दश्च साङ्गस्यैव वाचकः । कथम् । पौर्णमास्याममावास्यायां च साङ्गं विधीयते । यच्च पौर्णमास्यां विहितं, सा च पौर्णमासी । यदमावास्यायां विहितं, सा चामावास्येति । साङ्गममावास्यायां विहितं पौर्णमास्यां च, तस्मात्साङ्गं दर्शपूर्णमासशब्देनोच्यत इति ( जैमिनिर्मन्यते स्म ) ॥ १ ॥

केनापीति, सर्वैरिति सिद्धान्तः । एकादशे स्थित इदमारभ्यते । 'अग्निहोत्रं जुहोति' इत्येवमुत्पन्नस्य विपरिवर्तमानस्य निमित्ते फले च विधानान्न तावत्कर्मान्तरमिदम् । नापि प्रयोगभेदः । अन्तर्गतत्वात्काम्ये नित्यप्रयोगस्य । श्रुतिकृतस्त्वस्ति भेदः । तमेव भेदमाश्रित्य भाष्यकारस्त्वाह—द्वितीये श्रवण इति । सर्वशक्त्यधिकरणसिद्धान्तजनिताशङ्कस्योत्तरमधिकरणमारभ्यते 'काम्येषु चैवमर्थित्वात्' इति । काम्ये च सर्वाङ्गोपसंहारसमर्थस्याधिकारः, तादृशस्य विद्यमानत्वात् । न तु नित्ये तादृशोऽस्ति, सर्वदा यः सर्वाङ्गान्युपसंहर्तुं शक्नोति । तस्मादेकदेशाङ्गोपसंहारसमर्थोऽप्यधिक्रियते । सर्वैरङ्गैः क्रतुर्निराकाङ्क्षी क्रियते । तादृश एव कर्तुर्धर्मत्वेन चोद्यते । तदुक्तं 'तथाभूतोपदेशात्'

अथवा—नामविशिष्टं सर्वैर्निराकाङ्क्षी क्रियते, यथा काम्ये तथा नित्येऽपि । तन्नाम्नस्तुल्यत्वादित्यतः, तथाभूतोपदेशात् ।

अथवा—यथा काम्ये धातोः पूर्वापरीभूतभावनाकरणता सर्वैरङ्गैर्निराकाङ्क्षी क्रियते तथा नित्येऽपीत्यतः 'तथाभूतोपदेशात्' ।

अथवा—यथा काम्यस्य संनिधाविति कर्तव्यतता तथा नित्यस्यापि सन्निधानाविशेषादित्यतः 'तथाभूतोपदेशात्' ।

अथवा—भावनात्मनेपदेतरेतरयोगकारणानां तुल्यत्वात् 'तथाभूतोपदेशात्' । अथवा—पुरुषार्थस्योभयत्र विद्यमानत्वात् 'तथाभूतोपदेशात्' ॥ १ ॥

---

१ चिह्नमध्यस्थः पाठः क्वचिन्नास्ति । २ स्थित इदमिति—क्रत्वर्थभावाकाङ्क्षया सर्वाङ्गग्रहणे स्थित एवेदमधिकरणमित्यर्थः । ३ उत्तराधिकरणेऽपि भाष्यकाराणां विकृतिमात्रोदाहरणं काम्यमात्रोपलक्षणमित्येतत्प्रदर्शयति—सर्वशक्तीत्यादिना । ४ ( अ० ६ पा० ३ अ० २ सू० ८ ) ५ फले चेति पा० ।

**अपि वाऽप्येकदेशे स्यात्प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत्तदर्थत्वात् ॥ २ ॥ सि०**

**अपि वेति पक्षव्यावृत्तिः । अप्येकदेशेऽङ्गानां स्यादेव प्रयोगः । यतः साङ्गस्याप्यनङ्गस्यापि प्रयुज्यमानस्य प्रधानादेवायमर्थो निष्पद्यते । गुणमात्रं सर्वाङ्गप्रयोगेण भवति । को गुणः । साङ्गात्स्वर्गा-**

---

नास्तीतिकर्तव्यता, अपूर्वाभावात् । कथमपूर्वाभावः । फलाभावात् । कथं फलाभावः । निमित्तफलयोरेकत्रासंभवात् । कथमेकत्रासंभवः । निमित्तफलयोरनुपादेयत्वात्ते प्रतिकर्मोपादीयेते । तत्रान्यतरोपादाने कृतार्थत्वादेकं प्रत्युपादीयते । उभयोपादाने वाक्यभेदः । निमित्तस्य श्रुतत्वात्तत्प्रत्युपादीयते ।

ननु भावनावचनस्य किमित्याकाङ्क्षोत्पन्ना न निमित्तेन पूर्यते न यागेन । केन तर्हि । फलेनैव । उच्यते । यदि फलार्थी कर्मणि प्रवर्तेत, तस्य यावज्जीवमित्येतदङ्गत्वेन स्यात् फले चानर्थी न प्रवर्तेतेत्ययं च दोषः । कृत्स्ना चेतिकर्तव्यता स्यात् । 'अपि वाऽप्येकदेशे' इति च विरुध्येत । [1]व्यपदेशभेदश्च न स्यात्, नित्यकाम्ययोः फले सति । अथोच्येत, द्वावंशौ प्रयोजकौ फलांशो निमित्तांशश्च । तत्र [2]श्रुतेन निमित्तांशो विवक्षितः । फलं तु विद्यते । अतो न विरोधो, भिन्नविषयत्वात् । एवं च निमित्तप्रयुक्तमवश्यं कर्तव्यं कर्म । तस्मिन्क्रियमाणे फलं किमिति न कामयत इति ।

एतदप्यनुपपन्नम् । यः स्वर्गं न कामयते बन्धात्मकत्वान्मोक्षार्थी, तस्य कर्मस्वरूप [3]एवं कर्तव्यता, निमित्तसंभवात् । न च सकृच्छ्रुतस्य कंचित्प्रति प्रयोजकता कंचित्प्रत्यप्रयोजकता न्याय्या । तस्मान्निमित्ते कर्मविधानम् । अथोच्येत—क्रियायाः कर्तव्यतोपदेशात्कर्मणः स्वसामर्थ्याच्च फलोत्पादकता । न चान्यत्फलमस्ति यागस्य स्वर्गादृते । तस्मात्क्रियाशक्त्या फलमस्ति । न च शक्तयो वेदेनोत्पाद्यन्त इति ।

एतदप्ययुक्तम् । कथम् । ज्योतिष्टोमदर्शपूर्णमासयोः सकृत्प्रयोगे सर्वफलप्राप्तिः स्यात् । न चेष्यते त्वया । तस्माद्यासु क्रियासु फलं प्रत्यक्षतोऽवगम्यते ताः फलवत्यो नाश्रुतफला वैदिक्यः । न चाकाम्यमानं फलं भवति । अपुरुषार्थत्वात् । कर्तव्यतावचनः पुरुषार्थेनाविनाभूत इति चेत् । प्रयाजादीनामपि पुरुषार्थत्वादनङ्गता स्यात् । न चेष्यते । तस्मान्निमित्तं प्रति कर्ममात्रं विधीयते । अत इतिकर्तव्यताभावः । [4]कथमेकदेशशब्द इति

---

१ व्यपदेशभेद इति—काम्यमिदं नैमित्तिकमिदं चेति व्यपदेशभेद इत्यर्थः । २ श्रुतेनेति—निमित्तस्य स्ववाक्ये श्रुतत्वादित्यर्थः । ३ एवकारेण मुमुक्षोः फलेकर्तव्यता व्यावर्त्यते । कुतः । स्वर्गादिरूपस्य फलस्य शरीरारम्भहेतुतया बन्धाभावात्मकमोक्षपरिपन्थित्वादित्याशयः । ४ सूत्र इति शेषः ।

चेत् । साङ्गस्य वाचकः कृत्स्नशब्दः प्रधानमात्रापेक्ष्यैकदेशशब्दः । अथवा दृष्टार्था[1] या पुरोडाशनिर्वृत्तिस्तामपेक्ष्यैकदेशशब्दः[2] ।

केचित्पुनरेकदेशशब्दो वर्णितः । कथंभावाभावात्प्राकरणिकीतिकर्तव्यता नास्ति । आहवनीयादिवाक्यात्प्रापिताऽस्ति, तामपेक्ष्यैकदेशशब्द इति ।

एतदप्यनुपपन्नम् । अपूर्वप्रयुक्तत्वादाहवनीयादीनाम् । न चापूर्वमस्तीत्युक्तम्। तस्मादग्निमुद्दिश्यामावास्यायां पुरोडाशस्त्यक्तव्य इत्येतावदुपदिश्यते । कथं तर्हीदृशे पुरुषप्रवृत्तिः । प्रत्यवायानुत्पत्त्यर्था । विहिताकरणाद्धि प्रत्यवायः स्मर्यते । पुरुषेण च हितप्राप्तिर्यथेष्यतेऽहितनिवृत्तिरपि तथेष्यते । यथा, लोक उपानद्धारणादिका क्रिया कण्टकपरिहारार्था, एवमिहापि प्रत्यवायपरिहारार्था ।

नन्वेवमप्रत्यवायः फलं स्यात् । उच्यते । फलं तावद्भावः, अप्रत्यवायश्चाभावः । कथमसौ क्रियाफलं स्यात् । आगामिनी प्रत्यवायानुत्पत्तिः फलमिति यद्युच्येत । तन्न । नाकरणमात्रात्प्रत्यवायः । किं तर्हि । विहिताकरणात् । तत्रायमेव विधिः प्रत्यवायानुत्पत्त्यर्थः । कृत्स्नस्य चाकरणात्प्रत्यवाय इतीतरेतराश्रयता[3] । तस्मात्प्रत्यवायानुत्पत्तिः फलमिति नैवंपरा चोदना । कथं तर्हि प्रत्यवायो भवति, क्रियाया अकरणात् । अकरणं करणनिवृत्तिः । अकरणाद्दोषो यः स करणे निवर्तते ।

नन्वकरणनिवृत्तिरेव फलं स्यात् । उच्यते । आत्मव्यतिरेकेण क्रियायाः फलम् । अकरणनिवृत्तिश्च करणं, स क्रियाधर्मः कथं फलं स्यात् । न च प्रत्यवायाभावः फलमित्युक्तमेव । यदि चाप्रत्यवायः फलं स्यात्फलनिमित्तयोरेकत्राभावादिदोष उक्त इति केचिदेवं वर्णयन्ति ।

तत्रोपपद्यते[4] । कथम् । भावनातस्तस्य आकाङ्क्षा उत्पद्यन्ते । किं, केन, कथमिति । तन्निमित्ता चेतिकर्तव्यता । सा चेह विद्यते । तस्मादस्तीतिकर्तव्यता । यदि चास्मिन्[5]यागेन पूर्यते[6], पशुकामादिष्वपि तत्र साधनत्वेन स भविष्यति । तत्र निमित्ताभावादिति चेत् । तन्न । असत्यपि तस्मिन्किमित्याकाङ्क्षोत्पत्तेर्यागेनैव परिपूरणान्न फलान्तरम् । फलनिमित्तयोर्विरोध इति चेत् । अविरोधः, भिन्नवाक्यत्वात्[7] । निमित्तं हि कर्म प्रयुङ्क्ते,

---

१ दृष्टार्था—कर्मस्वरूपनिष्पत्त्यर्था । २ पुरोडाशमनुनिरूप्येति पा० । ३ इतरेतराश्रयता—पूर्वसिद्धे विधौ तद्विहितकर्मातिक्रमात्प्रत्यवायः, प्रसक्तप्रत्यवायपरिहाराय विधिरित्येवमितरेतराश्रय इत्यर्थः । ४ एवं तावत्सिद्धान्त्येकदेशिमतेनाधिकरणमुपवर्ण्य तत्तावदादौ दूषयितु मारभते—तत्रो-पपद्यत इत्यादिना । ५ अस्मिन्—निरपे । ६ पूर्यत इति—किमित्याकाङ्क्षेति शेषः । ७ भिन्नवाक्यत्वादिति—श्रुतं वाक्यं निमित्ते कर्म विदधाति । श्रुतार्थापत्तिकल्पितं च वाक्यान्तरं फले कर्म विदधाति । अतो नास्ति विरोध इति भावः । परमार्थतः प्रकारान्तरेण निमित्तफलयोरविरोधमाह—निमित्तं हीत्यादिना ।

मिनिर्वृत्तिः, प्रधानमात्रादिदमन्यत्फलम् । तस्मात्स्वर्गप्राप्त्यर्थं संपूर्णाङ्गं करिष्यामीत्यारब्धम् । यदि कानिचिदङ्गानि न शक्नोति कर्तुं, तथाऽप्यस्मादेकदेशाङ्गगुणयुक्तात्प्रधानात्फलं भविष्यति । तस्मात्प्रधानमात्र

न कामार्थतां व्यावर्तयति । न हि कर्मणा निमित्तं जन्यते, येन फलोत्पत्तिर्न स्यात् । तस्मिन्निमित्ते कर्म क्रियमाणं किं प्रयोजनमिति पुनरपि फलाभिमुखं भवति ।

फलं न कामयत इति चेत् । उच्यते । न हीदृशः पुरुषोऽस्ति योऽवश्यकर्तव्ये फलं न कामयते । मोक्षार्थीति चेत् । तन्न । तेनाप्यवश्यं पापक्षय एषितव्यः । तस्मिन्नसति मोक्षाभावात् । अमोक्षार्थिनाऽप्यसावेषितव्यः फलाय । इतरथा फलाप्राप्तेः । तस्मान्नित्यानि कर्माणि तदुपायत्वेन चोद्यमानानीतिकर्तव्यतामपेक्षन्ते । वीतायां च फलेच्छायां कर्मण इदमेव फलम् । यदि न नित्ये श्रुत्यनुग्रहाद्यागः कर्मभूतः । ततः सर्वत्राविशिष्टः श्रुत्यनुग्रह इति सर्वत्र कर्मणा न भवति । फलपदानर्थक्यप्रसङ्गात्तु न भविष्यति । साधनत्वेन तस्योपनिपातादिति । यदि च क्रिया स्वशक्त्या स्वतोऽन्यत्किंचिदुत्पादयति ततस्तदेव पदेनोच्यते । न ह्यशकनीयं स उत्पाद्यत्वेन चोदयति । ज्योतिष्टोमस्य सकृत्प्रयोगे सर्वफलप्राप्तिरिति । उच्यते । पच्यादीनां क्रियाणां द्वौ धर्मौ दृष्टौ । एकस्मिन्प्रयोगे एकफलता नियतफलता च । तत्र ज्योतिष्टोमस्य फलचोदनाभिरनियतफलता विहिता । एकस्मिन्प्रयोगे, एकफलता केन वार्यते ।

यदि च फलं नास्ति, करणविभक्तीतरेतरयोगात्मनेपदानामभावप्रसङ्गः । 'भिन्ने जुहोति' इति निराकाङ्क्षत्वात्क्रतुसंबन्धो न स्यात् । आकाङ्क्षोत्तरकालं हि क्रत्वर्थता पुरुषार्थता वा । न च भवत्पक्ष आकाङ्क्षाऽस्ति । निमित्ते श्रुतत्वात् । न ह्याकाङ्क्षा जन्यते क्रतुना । यदुक्तं फलनिमित्तयोरनुपादानादिति । 'भिन्ने जुहोति' इत्यनेनैव तुल्यं, यथैतत्क्रतुं प्रत्युपादीयते निमित्तं च, एवमिदमपि । यथा च त्वत्पक्षे पिण्डपितृयज्ञ एवमिदमपि । भाष्यकारश्च फलमिच्छति, प्रधानादिदमन्यत्फलम् । एकदेशाङ्गयुक्तात्प्रधानात्फलं ( न ) भविष्यतीति वदन् । तथा पिण्डपितृयज्ञे पुत्रकामेष्ट्यां च ।

१ उपनिपातादिति—यदि धात्वर्थस्य कर्मत्वं तदा स्वर्गकामाधिकरणपूर्वपक्षन्यायेन(६-१-१) फलपदस्य द्रव्यपरत्वापातादित्यर्थः । २ अनुपादानादिति—अनुपादेयत्वादित्यर्थः । ३ पुत्रकामेष्ट्यां—जातेष्ट्यामित्यर्थः । तथा च भाष्यकारेण पिण्डपितृयज्ञस्य जातेष्टेश्च निमित्तसंयोगे सत्यपि फलवत्त्वं विश्वजिदधिकरणादौ दर्शितमिति भावः ।

स्य प्रयोगमाह नाङ्गानाम् । दर्शपूर्णमासशब्दकोऽग्निहोत्रशब्दकश्च प्रधानपदार्थोऽन्यान्यङ्गानि तदर्थानीति ॥ २ ॥

**तदकर्मणि च दोषस्तस्मात्ततो विशेषः स्यात्प्रधानेनाभिसंबन्धात् ॥ ३ ॥**

प्रधानातिक्रमे दोषः श्रूयते, अप वा एष स्वर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन्पौर्णमासीममावास्यां वाऽतिपातयेदिति प्रधानातिक्रमे दोषं ब्रुवँस्तस्य नित्यतां दर्शयति ॥ ३ ॥

**कर्माभेदं तु जैमिनिः प्रयोगवचनैकत्वात्सर्वेषामुपदेशः स्यादिति ॥ ४ ॥**

यदुक्तं, नास्ति भेद इमान्यङ्गानि, इमानि प्रधानानीति । प्रयोगवचनैकत्वादिति जैमिनिराह स्म । सर्वेषामुपदेशकः, पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेतेति ॥ ४ ॥

**अर्थस्य व्यपवर्गित्वादेकस्यापि प्रयोगे स्याद्यथा क्रत्वन्तरेषु ॥ ५ ॥**

सूत्रकारो नित्य इतिकर्तव्यतामिच्छति[1] । प्रयाजवदिति दृष्टान्तोपादानात्[2]सिद्धवदङ्गत्वं दर्शयति । कर्तव्यतावचनश्च पुरुषार्थतां न व्यभिचरति । न हि फलमन्तरेण पुरुषः प्रवर्तते । केषुचित्साक्षात्केषुचित्पारम्पर्येण । यदि च धात्वर्थः करणतां जह्यात्प्रयाजादीनामङ्गत्वं न स्यात् । कर्मभूतत्वान्नैतदपेक्षते, किं मया कर्तव्यमिति । अनपेक्षमाणश्च कथमितिकर्तव्यतया संबध्येत । यदि च यत्र फलपदमस्ति तत्रैव धात्वर्थः करणभूतः, उत्पत्तिवाक्ये धात्वर्थस्य कर्मभूतत्वात्, स्वर्गस्य च प्रयोगवाक्ये कर्मत्वेन संबन्धो नास्ति । एवं च कर्मान्तरत्वप्रसङ्गः । करणत्वे तु न दोषः । तस्मादत्र यत्र विधायकस्तत्र तत्र करणता । नित्येऽप्यसौ विद्यते । व्यपदेशश्च कर्तव्यत्वादवश्यकर्तव्यत्वात् । एवं च साङ्गं यावज्जीवं न शक्नोति कश्चिदपि कर्तुमिति कृत्वा यावच्छक्नुयादित्युपनिबध्यते । शक्तस्य कामतो[3] वैगुण्यं स्यात् । काम्ये तु यदा शक्नुयात्[4]तदा प्रवर्तते ॥ २ ॥ [ ३ ॥ ४ ॥

१ इच्छतीति—'अर्थस्य व्यपवर्गित्वादेकस्यापि प्रयोगे स्याद्यथाक्रत्वन्तरेषु' इत्युक्तत्वादिति शेषः । २ दृष्टान्तोपादानादिति—'इष्ट्यावृत्तौ प्रयाजवदावर्तेताऽऽरम्भणीया' ( अ० ९ पा० १ अ० १० सू० ३४ ) इत्यत्रेति शेषः । ३ कामत इति—अङ्गे त्यज्यमान इति शेषः । ४ शक्नुयादिति—संपूर्णमङ्गं कर्तुमिति शेषः ।

एकाङ्गप्रयोगेऽपि स्याद्विगुणादपि फलमित्यर्थः । कुतः । अर्थस्य व्यपवर्गित्वात् । व्यपवृक्तमङ्गेभ्यः प्रधानम् । अग्निहोत्रसंज्ञकाद्दर्शपूर्णमाससंज्ञकाच्च फलमिह भवति । तद्धि कर्तव्यतयोपदिश्यते । यत्पौर्णमास्यामुपदिष्टं, सा पौर्णमासी, यदमावास्यायां, साऽमावास्या । यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवतीति । तस्मादग्नये पुरोडाशोऽग्नीषोमाभ्यां च, आज्यं चाग्नीषोमादिभ्यः पौर्णमास्याम् । आग्नेयसांनाय्यादीनाममावास्यायाम् । यदुक्तं पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेतेति, साङ्गस्य विधानात्साङ्गं दर्शपूर्णमासशब्देनाभिधीयत इति । नैतदेवम् । सिद्धे हि दर्शार्थे पूर्णमासार्थे च साङ्गं फले विधीयते । तस्मान्न साङ्गमग्निहोत्रपदवाच्यं दर्शपूर्णमासपदवाच्यम् । यच्चाग्निहोत्रं तदिह चोद्यते कर्तव्यतया, यौ च दर्शपूर्णमासौ । तस्माद्विगुणमपि कर्तव्यमेवाग्निहोत्रं दर्शपूर्णमासौ च । यथा क्रत्वन्तरेषु–प्रकृतिविकृतिषु परस्य धर्माः परस्य न भवन्ति, एवं न कामसंयुक्तस्य धर्मा नित्यस्य भवितुमर्हन्ति ॥ ५ ॥

## विध्यपराधे च दर्शनात्समाप्तेः ॥ ६ ॥

विध्यपराधेषु च समाप्तिं दर्शयति । तदेव यादृक् तादृक् होतव्यमिति विगुणस्य समाप्तिं दर्शयति ॥ ६ ॥

## प्रायश्चित्तविधानाच्च ॥ ७ ॥

विध्यपराधे च प्रायश्चित्तानि विधीयन्ते, निमित्ते कर्माङ्गभूतानि । यथा, भिन्ने जुहोतीति । विगुणे निष्फले सति कस्याङ्गभूतः प्रयोजनं स्यात् । तस्माद्विगुणानामपि प्रयोगः कर्तव्य इति ॥ ७ ॥

---

॥ ५ ॥ ६ ॥ ]

येषामितिकर्तव्यता नास्ति तेषां प्रायश्चित्तविधानमत्यन्तानुपपन्नम् । सेतिकर्तव्यताके तु नैमित्तिके निमित्ते संजाते वैगुण्यात्तत्परिहाराय होमाख्यमङ्गमुपजायते । तत्क्रियत एव । असत्यां भेदन उपजाते वैगुण्यं नास्ति । तस्मात्प्रायश्चित्तदर्शनं सर्वथाऽनुपपन्नमिति ॥ ७ ॥

---

१ पुरोडाशदानमिति पा० । २ सिद्धे हि दर्शत्वे पौर्णमासीत्वे च साङ्गमिति पा० । ३ असत्यामिति–इतिकर्तव्यतायामिति शेषः ।

(काम्येषु सर्वाङ्गोपसंहारसमर्थस्यैवाधिकाराधिकरणम् ॥ २ ॥)

[ २ ] काम्येषु चैवमर्थित्वात् ॥ ८ ॥ पू०

ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः, सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः, वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकामः, इत्येवमादिषु संदेहः। किं विगुणमपि फलवदुताविगुणमेव फलवदिति। किं प्राप्तम्। काम्येषु चैवं स्यात्—विगुणमपि फलवदिति। कुतः। अर्थित्वात्। यदि विगुणमपि फलवदेवमर्थिमात्रमधिकृतं भविष्यति। अन्यथा सामान्यशब्दोऽन्तरेण विशेषं, विशेषेऽवस्थापितो भविष्यति। असमर्थत्वान्नाधिक्रियत इति चेत्। साङ्गं न समर्थः कर्तुम्। प्रधानमात्रं तु शक्नोति। प्रधानमात्रेऽधिकरिष्यति ॥ ८ ॥

असंयोगात्तु नैवं स्याद्विधेः शब्दप्रमाणत्वात् ॥ ९ ॥ सि०

तुशब्दात्पक्षो विपरिवर्तते। नैवं स्यात्। यदुक्तं विगुणमपि फलवदिति। असंयोगात्प्रधानमात्रस्य फलेन। साङ्गाद्धि फलं श्रूयते प्रधानात्, न केवलात्। तेन यद्यपि केवलमुच्यते, तथाऽपि नैवंजातीयकं तत्कुर्यात्। न केवलस्य फलेन संयोग इति। शब्दप्रमाणकश्चायमर्थो विधीयते। शब्दश्च साङ्गात्फलमाहेति वक्ष्यामः। तस्मान्न विगुणं कर्म कर्तव्यमेवंजातीयकमिति ॥ ९ ॥

अकर्मणि चाप्रत्यवायात् ॥ १० ॥

न चात्र प्रधानमात्रस्याकर्मणि प्रत्यवाय उच्यते, यथा दर्शपूर्णमासयोः। तस्मादपि न विगुणमेवं लक्षणकं कर्म प्रयोक्तव्यमिति ॥ १० ॥

( द्रव्यभेदेऽपि यागाभेदाधिकरणम् ॥ ३ ॥ )

[ ३ ] क्रियाणामाश्रितत्वाद्द्रव्यान्तरे विभागः स्यात् ॥ ११ ॥ पू०

दर्शपूर्णमासयागः पुरोडाशेनोक्तः। स च पुरोडाशो व्रीहिमयः कर्तव्य इति श्रूयते। तत्रैतच्चिन्त्यते। यदि नीवारमयेन पुरोडाशेन यागः क्रियेत, किं स एव यागः स्यादुतान्य इति। किं प्राप्तम्। द्रव्यान्तरे विभागः स्यात्। अन्यो यागः। कुतः। आश्रितत्वात्।

आश्रयभेदाद्धि गम्यते विशेषः। अयमन्यो नीवाराश्रयो व्रीह्याश्रयादिति। आश्रयभेदस्तावद्विस्पष्ट एव। तद्भेदाद्रूपमपि भिन्नं गम्यते। तस्मादन्यो यागो द्रव्यान्तर इति ॥ ११ ॥

अपि वाऽव्यतिरेकाद्रूपशब्दाविभागाच्च गोत्ववदैककर्म्यं स्यान्नामधेयं च सत्त्ववत् ॥ १२ ॥ सि०

अपि वेति पक्षव्यावृत्तिः। ऐककर्म्यं स्याद्द्रव्यान्तरेऽपि। यदा क्रिया भवति चलनं पतनं वा, तदाऽपि तावानेव सोऽर्थः। न च कश्चित्तत्र व्यतिरिक्तो विशेषो हीनो वा। नो खल्वप्यन्यदेव रूपम्। न च शब्दान्तरं वाचकम्। नन्वाश्रयभेदो विस्पष्टः। उच्यते। भिन्नमेव वयमाश्रयं प्रतिजानीमहे, न तु तद्भेदादाश्रितस्य भेदः। अन्यत्वात्। न हि स्रजि वाससि वा भिन्ने तद्भेदात्पुरुषभेदो गम्यते। सोऽपि तस्याऽऽत्मा भिन्न इति चेत्। नैतदेवम्। विशेषमुपलभमानैरेवं शक्यं वक्तुम्। न चास्य विशेष उपलभ्यते।

नन्वयमेव विशेषो यदेको विनष्ट एको वर्तते। न विनष्ट इति यदुच्यते। तन्न। प्रागस्योपलम्भनात्सत्त्वे प्रमाणं नास्ति। तस्माद्विनष्टः। न च प्रत्यभिज्ञायते, ( तद्द्रव्यातिरिक्तः। ) भेदानुलम्भनात्। कथं तर्हि चलतीति प्रत्यय इति चेत्। उच्यते। देशान्तरे संप्रतिपत्तिदर्शनात्। तद्देशान्तरं गच्छदागच्छच्च चलतीत्युच्यते। तत्र गन्ताऽपि प्रत्यक्षो, देशान्तरमपि। तेन गत इति चोच्यते, आगत इति चोच्यते।

---

दर्शपूर्णमासौ यथा कालान्तरदेशान्तरपुरुषान्तरेषु क्रियमाणौ नातिरिच्येते, न न्यूनौ भवतः, एवं द्रव्यान्तरेऽपि। न द्रव्यान्तरेऽपि तावेव दर्शपूर्णमासावित्यस्य प्रत्ययस्य प्रत्यक्षावगतस्य बाधोऽस्ति। शब्दान्तरादीनामभावात्। न हि नीवारैः क्रियमाणस्य शब्दान्तरादिभेदो भवति। येन तदेवेदमिति प्रत्ययो बाध्येत। द्रव्यान्तरेणापि च क्रियमाणे दर्शपूर्णमासाद्यभिधेयताऽस्त्येव। यथा नैव चैत्रीप्रयोगाद्वैशाखीपयोगो भिद्यते। तेन तौ दर्शपूर्णमासाभिधेयतां न जहीतः। तथा तत्सामान्यान्नीवारैरपि क्रियमाणयो-

---

१ भिन्नो गम्यत इति चोदिति पा०। २ नन्वयमेवविशेषः— इत्यारभ्य 'आगत इति चोच्यते' इत्यन्तो ग्रन्थो विनष्टाविनष्टप्रत्ययभेदात्क्रियाया भेदप्रतिपादनपरो ज्ञेयः। ३ भेदानुपलम्भनादिति—विनष्टस्य रूपाद्भेदेन स्थिरस्य रूपानुपलम्भनादित्यर्थः।

सत्यं, विनष्टादविनष्टोऽन्यः । योऽपि त्वसावन्यः, सोऽपि यजतिशब्दवाच्य एव । यजतिसामान्यं न भिद्यते। न च शब्देन नोच्यते। तस्माद्योऽपि नीवारैर्यागं कुर्यात्तेनापि चोदितमेव कृतम् । चोदितं च कुर्वत ईप्सितं भवति, नापूर्वकृतम् । नामधेयं च दर्शयति, दर्श इति वा पूर्णमास इति वाऽस्यैव सामान्यस्य नामधेयं, न व्यक्तीनाम् । किं प्रयोजनं चिन्तायाः । उत्तरेणाधिकरणेनैतद्विचार्यते ॥ १२ ॥

( श्रुतद्रव्यापचारे नित्यकर्मणः प्रारब्धकाम्यकर्मणश्च प्रतिनिधिना समापनाधिकरणम् ॥ ४ ॥ )

## [ ४ ] श्रुतिप्रमाणत्वाच्छिष्टाभावे नाऽऽगमोऽन्यस्याशिष्टत्वात् ॥ १३ ॥ पू०

अग्निहोत्रादीनि नित्यानि कर्माण्युदाहरणम् । तेषु श्रुतद्रव्यापचारे भवति संदेहः । किं प्रतिनिधिमुपादाय प्रयोगः कर्तव्य उत तदन्तं कर्मोत्स्रष्टव्यमिति । किं प्राप्तम् । शिष्टस्याभावे नाऽऽगमोऽन्यस्य । तदन्तमेवोत्स्रष्टव्यम् । कुतः । अशिष्टत्वात् । यद्व्रीहियवगुणकं श्रुतं फलवत्, तन्नीवारगुणकं क्रियमाणमफलकं भवति । तस्मात्तदन्तमेवोत्स्रष्टव्यमिति ॥ १३ ॥

## क्वचिद्विधानाच्च ॥ १४ ॥

क्वचिद्विधीयते । यथा, यदि सोमं न विन्देत्पूतीकानभिषुणुयादिति। यदि च प्रतिनिधिमुपादाय प्रयोगः कर्तव्यः स्यात्, न विधीयेत । विधीयते तु । तस्माद्यच्च न विधीयते, न तत्र प्रतिनिधिरिति ॥ १४ ॥

## आगमो वा चोदनार्थाविशेषात् ॥ १५ ॥ सि०

आगमो वा प्रतिनिधेयस्य द्रव्यस्य । कुतः। चोदनार्थाविशेषात् । यज-

---

रस्त्येव । तस्यैव सामान्यं फले चोद्यत इति चेत् । तदयुक्तम् । न हि साज्ञादिवत्सामान्यमत्राभिव्यज्यमानमुपलभ्यते । किं तर्हि । षडाग्नेयादयो व्यक्तिविशेषा उत्पन्नाः फले विधीयन्ते । दर्शपूर्णमासशब्दवाच्याश्च व्यक्तय एव । अतो द्रव्यान्तरेणापि क्रियमाणे व्यक्त्यन्तरबुद्धिर्नोपजायते ॥ १२ ॥

व्रीह्यभावे तदन्तमेवोत्स्रष्टव्यम् । नियमफलसंपत्ती हि यथाश्रुताद्भवतः । तस्माच्छ्रुताभावे तदन्तोत्सर्गः ॥ १३ ॥ [ १४ ॥ ]

' आग्नेयोऽष्टाकपालः ' इतीयं चोदना नीवारैरपि संपादयितुं शक्यते।

तिचोदनाचोदितो ह्यर्थो न विशिष्यते व्रीहिभिर्नीवारैर्वा क्रियमाणः। यागश्चावश्यकर्तव्यो नित्येष्वनित्येषु च प्रारब्धेषु ॥ १५ ॥

## नियमार्थः क्वचिद्विधिः ॥ १६ ॥

अथ यदुक्तं, क्वचिद्विधानादिति। उच्यते। नियमार्थः क्वचिद्विधिः।

---

प्रारब्धमवश्यं समापनीयमिति नियमोऽस्या एव चोद्यते। या च नियमेनार्थाद्द्रव्यमाकाङ्क्षति, सा श्रुतेरेकवाक्यता प्रतिपद्यमानाऽर्थप्राप्तं बाधते। श्रुताभावे या प्राप्तिः सा केन निवार्येत। तस्मादागमः कर्तव्यः ॥ १५ ॥

एतदयुक्तम्। उत्पत्तिवाक्यशिष्टत्वात्सोमस्य नास्ति प्रतिनिधिः। कथम्। उत्पत्तिवाक्ये यद्रूपमवगतं तद्रूपमेव प्रयोगवाक्येनारूपेण फले विधीयते। नीवारैः क्रियमाणे, उत्पत्तिवाक्ये यद्रूपं तन्न भिद्यते। इह तु सोमेन विना भिद्यते। तस्मात्तद्रूपभेदः। रूपभेदाच्च शब्दान्तरम्। यत्र ह्यगुणा चोदना भवति, वाक्यान्तरेण वा गुणस्तत्र तदभाव उत्पत्तिचोदनासंपत्त्यर्थं द्रव्यमुपादीयते। यथोत्पत्तेः स्थितस्य यागस्यावगतः प्रतिनिधिः। सोमे तु यस्मिन्नेव क्षणे प्रत्ययेन परामर्शो यागस्य, द्रव्यस्यापि तस्मिन्नेव। अतः पूर्वमनुत्पन्नत्वादपेक्षा नास्ति। अपेक्षाक्षिप्तश्च प्रतिनिधिः। नियमार्थो विधिरित्येतदप्ययुक्तम्। न हि सुसदृशे सति, ईषत्सदृशः पक्षेऽपि प्राप्तः। तस्मादप्राप्तो विधीयमानो न नियमार्थो भवतीति।

अत्रोच्यते। प्रक्रान्तमवश्यं समापनीयम्। तस्मात्सोमाभावे द्रव्यान्तरमुपादेयम्। यजेतेत्येतद्यत्किंचिद्द्रव्यमपेक्षमाणं सोमेनेति पदान्तरेण निराकाङ्क्षी क्रियते। यथा वाक्यं वाक्यान्तरेण व्रीहिभिरिति। एवं चेत्पदान्तरवाक्यान्तरनाश्रयोर्न विशेषोऽस्ति। अपेक्षायास्तुल्यत्वात्। अथ यदुक्तं, सोमकल्पितस्योत्पन्नत्वाच्छुद्धस्य प्रत्ययव्यापार एव नास्ति, तत्र कुतः पदान्तरापेक्षा। उच्यते। पदार्थपूर्वकत्वाद्वाक्यार्थस्यापेक्षया विना संबन्ध एव नास्ति। अन्यदिदानीमेतदेकस्य पूर्वकालः परामर्श एकस्य समकाल

---

१ प्रारब्धमिति—अनेन नैवं भ्रमितव्यं, प्रारब्धेष्वेव प्रतिनिधिरिति। किं तु नैमित्तिकमनारब्धमपि प्रतिनिधिमुपादाय कर्तव्यमेवेत्यस्योपलक्षणार्थं ज्ञेयम्। २ प्राप्तिरिति—अर्थाद्द्रव्यप्राप्तिरित्यर्थः। ३ प्रयोगवाक्येनारूपेणेति—'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिना स्वतोऽरूपेण सतेत्यर्थः। ४ युक्त्यन्तरेणापि प्रकृते प्रतिनिधिपक्षं चोदयति—यत्रेत्यादिना। यत्र—'उद्भिदा यजेत पशुकामः' इत्यादिषु। ५ वाक्यान्तरेण वेति—दर्शपूर्णमासयोरिति शेषः। ६ यथोत्पत्तेरिति—उत्पत्तिवाक्यावगतरूपापरित्यागेनेत्यर्थः। ७ नास्तीति—नतरामुत्पन्नस्य, सहैव द्रव्येणोत्पत्तेरिति पूरणम्।

सोमाभावे बहुषु सदृशेषु प्राप्तेषु नियमः क्रियते । पूतिका एवाभिषोतव्या इति । तस्मात्प्रतिनिधिमुपादाय प्रयोगः कर्तव्य इति ॥ १६ ॥

तन्नित्यं तच्चिकीर्षा हि ॥ १७ ॥

कथं पुनरिदमवगम्यते, नियमार्थमेव तद्वचनमिति । उच्यते । यतः प्राप्ताः पूतीकाः । कथं च ते प्राप्ताः । तच्चिकीर्षा हि । तत्र सादृश्यं चिकीर्षेत्येतद्वक्ष्यामः[1] । तच्चिकीर्षया च प्राप्ताः पूतीकाः । तस्मात्तन्नित्यं,

इति । एकस्य पूर्वकालेन संबन्ध एकस्य समकालेनेति न कश्चिद्विशेषः । अपेक्षा तावदस्ति । अपेक्षाक्षिप्तश्च प्रतिनिधिः ।

अपि च सोमो नैव यागसाधनं, किं तु तदुपलक्षितो रसः । स चाविशिष्टः पूतीकेष्वपि । तस्मान्नास्ति रूपभेदः । एवं च शब्दभेदो नास्ति । अतो नामधेयमविरुद्धम् । एवं च दशमे वक्ष्यति[2], पश्वाकृत्युपलक्षितं हृदयादि हविरिति । इहापि स तुल्यः ।

अथोच्येत—सोमाकृत्युपलक्षितो यो रसः, स यागसाधनं न पूतीकाकृतिकः । दर्शपूर्णमासयोरपि शक्यं वदितुं व्रीह्याकृत्युपलक्षितमवदानं यागसाधनं, न तु नीवाराकृत्येति न वैषम्यम् । अथ यदुक्तमभावे विधिरिति । उच्यते । यन्न कदाचिदपि प्राप्नोति स विधिः[3] । यथा 'अग्निहोत्रं जुहुयात्' इति । पूतीकाः कदाचित्प्राप्नुवन्ति । तस्माद्युक्तमुक्तं 'नियमार्थः क्वचिद्विधिः' इति ।

यदि विधिः स्यादिन्द्रवाय्वादिभिर्न संबन्धः[4] स्यात् । कथम् । सोमरसग्रहणे ता[5] यागसंबन्धिन्यो, न साक्षात् । द्रव्याश्रितो यः संस्कारः स तद्द्रव्याभावे न भवति । न च पूतिकाः सोम इत्यनेनांशेन गृह्यन्ते । यथा नीवारा व्रीह्यंशेन । न च विकल्पेनोपदिश्यन्ते व्रीहियववत् । अभावविध्यभ्युपगमात् । न च कार्यापत्तिः[6] । प्रत्यक्षविधानात् । तस्मान्नास्ति देवतासंबन्धः । सत्यप्यपूर्वप्रयुक्तत्वे द्वाराभावान्न धर्मसंबन्धः । उत्पत्तिवाक्यशिष्टेन[7] प्रतिनिधिमनिच्छतोऽभावे विधानं प्रतिनिधिनियमश्च न स्यात् । कर्मान्तरं तथा प्रसज्येत । प्रक्रान्तं न समाप्येतेति ॥ १६ ॥

१ वक्ष्याम इति—'सामान्यं तच्चिकीर्षा हि' ( अ० ६ पा० ३ अ० ११ सू० २७ ) इत्यत्र यत्र मुख्यद्रव्यसादृश्यं तदेवोपादातव्यं यतो मुख्यद्रव्यचिकीर्षा, इत्यर्थके सूत्र इति शेषः । २ वक्ष्यतीति—( अ० १० पा० ७ अ० १ सू० २ ) इत्यत्र भाष्यकार इति शेषः । ३ विधिरिति—कर्मव्युत्पत्त्या विधेय इत्यर्थः । ४ संबन्ध इति—यागस्येति पूर्वं शेषः । ५ सोमरसग्रहणे ता इति—यत इन्द्रवाय्वादिदेवताः सोमरसग्रहणे श्रुता अतस्तत्साधनकयागसंबन्धिन्यो भवन्ति न साक्षादिति भावः । ६ कार्यापत्तिरिति—स्थानापत्तिरूपोऽतिदेश इत्यर्थः । ७ शिष्टेनेति—भावप्रधानो निर्देशः । उत्पत्तिवाक्यशिष्टत्वेन हेतुनेति यावत् ।

वचनमेतन्नियमाय नित्यमिति गम्यते ॥ १७ ॥

( देवताग्निशब्दक्रियाणामपचारे प्रतिनिध्यभावाधिकरणम् ॥ ५ ॥ )

[५] न देवताग्निशब्दक्रियमन्यार्थसंयोगात् ॥ १८ ॥ सि०

देवताः—आग्नेयोऽष्टाकपाल इत्येवमाद्याः । अग्निः—यदाहवनीये जुहोति तेन सोऽस्याभीष्टः प्रीतो भवतीति । शब्दः—मन्त्रः, बर्हिर्देव सदनं दामीत्येवमादिः । क्रियाः—समिधो यजति, तनूनपातं यजतीत्येवमाद्याः । तत्र संदेहः । देवताग्निशब्दक्रियाणामपचारे प्रतिनिधिरुपादेय उत नेति । किं प्राप्तम् । पूर्वाधिकरणन्यायेन प्रतिनिधायान्यत्, प्रयोगः कर्तव्य इत्येवं प्राप्ते,

ब्रूमः । न देवताग्निशब्दक्रियाणामपचारे प्रतिनिधिना भवितव्यमिति । कुतः । अन्यार्थसंयोगात् । प्रतिनिधीयमानमन्यद्देतेभ्यः । अन्यच्च तेषामर्थं न शक्नुयात्कर्तुम् । कश्च तेषामर्थः । देवता तावदुद्देशेनार्थं साधयति । अग्निमुद्दिश्याष्टाकपालः पौर्णमास्याममावास्यायां च त्यज्यते । यच्चान्येषु हविःषु विहितं, न ततो दर्शपूर्णमासौ भवतः । तत्रान्याद्दिश्यमाना न श्रुताया उद्देश्याया अर्थं कुर्यात् । न ह्यन्यस्यामुद्दिश्यमानाया दर्शपूर्णमासौ भवतः । तस्मान्न देवता प्रतिनिधीयते ।

तथा, यदाहवनीये जुहोतीत्याहवनीयापचारे नान्योऽग्निः प्रतिनिधातव्यः । अन्यद्वा द्रव्यमिति । कुतः । अन्यार्थसंयोगात् । प्रतिनिधीयमानमाहवनीयकार्ये न वर्तते । कथम् । अदृष्टमाहवनीयस्य कार्यम् । आहवनीयस्योपरि त्यज्यमाने यद्भवति, न तदन्यस्योपरि । न हि यजतिशब्देन सामर्थ्यात्तद्गृह्यते, यस्योपरि त्यज्यते । न ह्युपरि त्यज्यमानस्य देशः किंचिदुपकरोतीति । तस्मान्नाग्नेः प्रतिनिधिः ।

तथा मन्त्रापचारे नान्यो मन्त्रः प्रतिनिधीयते । कुतः । अन्यार्थसंयोगात् । मन्त्रस्य ह्येतत्प्रयोजनं, यत्स्मारयति क्रियां साधनं वा ।

---

[ १७ ॥ ]

अर्थो वाचिकया श्रुत्योच्यमानो देवतात्वं प्रतिपद्यते नान्यथा । तद्वाचकस्याभावे च कथमर्थो देवता स्यात् । नीवारैस्तण्डुलनिर्वृत्तिः प्रत्यक्षा, न देवतात्वम् । किं च—सदृशं प्रतिनिधातव्यं, देवताभावश्च शब्दनाशः । अतो देवताशब्दं स्मृत्वोत्तरकालं स्यादुपादानं, तत्तु मुख्येनैव सिद्धम् । मन्त्रेऽप्येष एव प्रसङ्गः ।

असति स्मरणे न क्रिया संवर्तेत । तदपचरिते मन्त्रे यदि तस्यार्थेऽन्यं शब्दमुच्चारयति, पूर्वं प्रतीतेऽर्थे शब्दमुच्चारयेन्न शब्देनार्थं प्रतीयात् । अथ प्रतीतमपि पुनः प्रतिनिधिशब्दोच्चारणेन प्रतीयाच्छब्दात्प्रतीतिं कुर्यात् । एवं च प्रतिनिधिशब्दोच्चारणानुरोधोऽनर्थकः स्यात् । न हि शब्देन प्रत्यापयितव्यमिति किंचित्प्रमाणमस्ति । यदस्ति, तद्विशेषणैवानेन शब्देन बर्हिरादिनेत्येवम् । तदभावे शब्दान्तरानुरोधोऽनर्थकः स्यात् । तस्मान्न शब्दस्य प्रतिनिधिः ।

क्रियापचारे न क्रियान्तरं प्रतिनिदध्यात् । अन्यार्थसंयोगात् । समिद्यजिमन्तौ दर्शपूर्णमासौ कर्तव्यौ । तावन्यस्यां क्रियमाणायां न तद्वन्तौ भवतः । तस्मात्क्रियायां न प्रतिनिधिरिति ॥ १८ ॥

देवतायां च तदर्थत्वात् ॥ १९ ॥

देवतायामपरो विशेषो येन न प्रतिनिधीयते । देवता नाम यदर्थं किंचिच्चोद्यते सा । अन्या तस्याः स्थाने प्रतिनिधीयमाना न देवता स्यात् । चोदिता हि देवता भवति, नाचोदिता । संबन्धिशब्दश्चैषः । या यदर्थं चोद्यते, सा तस्यैव देवता, नान्यस्य । देवतेति संबन्धिशब्दो न जातिशब्दः । तस्मादपि न देवतायाः प्रतिनिधिरिति ॥ १९ ॥

( प्रतिषिद्धमाषादेः प्रतिनिधित्वाभावाधिकरणम् ॥ ६ ॥ )

[६] प्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः ॥ २० ॥ सि०

अथ यत्प्रतिषिद्धम्, अयज्ञिया वै वरकाः कोद्रवाः, अयज्ञिया वै माषा इति । किं तच्छ्रुतद्रव्यापचारे प्रतिनिधातव्यमुत नेति । किं

---

इयांस्तु विशेषः । अर्थेन स्मृतेन[1], न मुख्येन न सदृशेन प्रयोजनमस्ति । न च शब्देन स्मरणं कर्तव्यमिति । किं तर्हि । आम्नानसामर्थ्यादुपद्रष्ट्रादिनिवृत्तिर्मन्त्रनियमात् । तदभावादुपद्रष्ट्रादि केन वार्यते । आहवनीयो यागहोमाभ्यामनाक्षिप्तोऽदृष्टोपकारित्वाद्वचनाद्विधीयते । तयोरभावे नास्त्याक्षेपः । आक्षेपाभावाच्च न प्रतिनिधिः । यत्प्रयाजादिभिः क्रियते तदन्या क्रिया करिष्यतीति नास्ति[2] प्रमाणम् । हन्त्यादीनां दृष्टार्थत्वादस्ति । ' अन्यार्थसंयोगात् ' इति किमुक्तं भवति । प्रतिनिधिकारणासंयोगादिति यावत् ॥ १८ ॥ [ १९ ॥ ]

वरकादेः श्रुतद्रव्यचिकीर्षयोपादानम्[3] । न तेषामङ्गत्वेन विधानम् । अङ्गत्वं च

---

१ स्मृतेनेति—प्रयोजनमस्तीत्यनेन संबध्यते । २ अस्तीति–प्रतिनिधिरिति शेषः । ३ उपादानमिति–श्रुतव्रीह्यादिद्रव्यावयवाः सन्तीति वरकादिरुपादीयत इति भावः ।

प्राप्तम् । प्रतिनिधेयमिति । आगमो वा चोदनार्थाविशेषादिति । एवं प्राप्ते ब्रूमः । प्रतिषिद्धं च न प्रतिनिधातव्यमिति । अविशेषेण ह्येतदुच्यते, न यज्ञार्हा माषा वरकाः कोद्रवाश्चेति । यज्ञसंबन्ध एषां प्रतिषिध्यते । नैते यज्ञाङ्गभावं नेतव्या इति । प्रतिनिधीयमानाश्चाङ्गभावं नीताः स्युः । तस्मान्नैते प्रतिनिधातव्या इति ॥ २० ॥

( स्वामिनः प्रतिनिध्यभावाधिकरणम् ॥ ७ ॥ )

## [ ७ ] तथा स्वामिनः फलसमवायात्फलस्य कर्मयोगित्वात् ॥ २१ ॥ सि०

अग्निहोत्रादीनि कर्माण्युदाहरणम् । तेषु स्वामिन्यपचरति संदेहः । किमन्यः प्रतिनिधातव्यो नेति । किं प्राप्तम् । प्रतिनिधातव्य इति । कुतः । आगमो वा चोदनार्थाविशेषादिति । एवं प्राप्ते, ब्रूमः ।

तथा स्वामिनः स्यात् । कोऽर्थः । न प्रतिनिधिः । कुतः । फलसमवायात् । योऽर्थी स्वत्यागेन ऋत्विजः परिक्रीणीते, यश्च स्वं प्रदेयं त्यजति स स्वामी । यदि स प्रतिनिधीयते, स्वामिना यत्कर्तव्यं तत्सर्वं कुर्यात् । तत्सर्वं कुर्वन् स्वाम्येव स्यान्न प्रतिनिधिः । स एव हि फलेन संबध्यते । य उत्सर्गं करोति, स फलवान्भवति । तदुक्तं, शास्त्रफलं प्रयोक्तरीति[1] । तस्मान्न स्वामिनः प्रतिनिधिरिति ॥ २१ ॥

( सत्रे कस्यचित्स्वामिनो मरणे प्रतिनिध्युपादानाधिकरणम् ॥ ८ ॥ )

## [८] बहूनां तु प्रवृत्तेऽन्यमागमयेदवैगुण्यात् ॥२२॥ सि०

---

प्रतिषिध्यते । तस्माद्वरकाद्युपादेयम् । एवं प्राप्ते ब्रूमः । अर्थाद्यदत्र यज्ञसाधनं प्राप्तं तत्तत्र प्रतिषिध्यते ॥ २० ॥

यदा प्रतिनिधीयमानो दक्षिणादानं हविःप्रदानं च करोति तदा स एव मुख्यः स्यात् । यदा द्रव्यपरित्यागं कृत्वाऽन्यत्र व्यापृतो भवति, तत्र यानि क्रत्वर्थानि तेष्वध्वर्युरेव प्रतिनिधित्वेन कर्ता । पुरुषसंस्काराणां च क्रत्वर्थत्वान्न वैगुण्यम् । यानि च ब्रह्मचर्यादीनि फलग्रहणयोग्यतायाः कारणानि, तानि बहिरवस्थितेन क्रियमाणानि क्रतोरुपकारकाण्येव । तस्मादेकत्र[3] विद्यमानत्वादितरत्रासंभवादनुपपन्नः[4] प्रतिनिधिः । मृते तु नैव प्रतिनिध्याशङ्काऽस्ति ॥ २१ ॥

---

१ ( अ० ६ पा० ३ अ० ४ सू० १५ ) । २ (अ० ३ पा० ७ अ० ८ सू० १८) । ३ एकत्र विद्यमानत्वादिति—आज्यावेक्षणादावध्वर्योर्विद्यमानत्वादित्यर्थः । ४ इतरत्रासंभवादिति—दक्षिणादानादौ प्रतिनिधेरसंभवादित्यर्थः ।

सत्राण्युदाहरणं, सप्तदशावराः सत्रमासीरन्निति । तेषु कस्मिंश्चि-त्स्वामिनि, अपचरति संदेहः । किं तत्रान्यः प्रतिनिधातव्य उत नेति । किं प्राप्तम् । न स्वामिनः प्रतिनिधिरिति । एवं प्राप्ते,

ब्रूमः । बहूनां यजमानानां प्रवृत्ते कर्मणि, अपचरिते कस्मिंश्चित्स्वा-मिनि, अन्यमागमयेत् । कुतः । एवमवैगुण्यं भवतीति । स्वामिगता सप्तदशादिसंख्या तत्राङ्गम् । तया विना कर्म विगुणम् । तत्संपादना-यान्य आगमयितव्यः । ननु स्वामिगता संख्या, न चागम्यमानः स्वामीति वक्ष्यामः । तेनाशक्यैव सा संख्योपादातुमिति । उच्यते । स्वामिगता न हि भविष्यति । न हि सा शक्या कर्तुमिति । इदं तु शक्यं कर्तुम् । ये स्वामिनां पदार्थास्त इह सप्तदशावरैः कर्तव्या इत्येत-दुपपादितं भविष्यति । तस्मात्प्रतिनिधातव्यं तत्रेति ॥ २२ ॥

( सत्रे प्रतिनिहितस्य स्वामित्वाभावाधिकरणम् ॥ ९ ॥ )

## [ ९ ] स स्वामी स्यात्तत्संयोगात् ॥ २३ ॥ पू०

तस्मिन्नागम्यमान इदानीं संदेहः । किमसौ स्वामी, उत कर्मकर इति । किं प्राप्तम् । स स्वामी स्यात् । कस्मात् । तत्संयोगात् । तेन [1]स्वामित्वेन संयोगः । यो ह्यसावानीयते, स स्वामी क्रियते । स्वामिनि, अपचरितेऽन्यो यदि स्वामी क्रियते, ततः स प्रतिनिधिः कृतो भवति । तस्मात्स्वामीति ॥ २३ ॥

---

आसीरन्निति कर्तृगताऽनियमेन संख्या प्राप्ता ' सप्तदशावराः ' इत्यनेन नियम्यते । फलेन व्याप्यमानः कर्ता भवति । तत्रान्य आनीयमानः क्रियाफलेन न संबध्यते । अतस्तत्फलाभावात्कर्तृगतसंख्यापूरणं नास्ति । अपि च—देवतोद्देशेन द्रव्यत्यागं कुर्वत इयं संख्या । न चाऽऽनीयमानो द्रव्यत्यागं करोति । तस्य प्रथममेव कृतत्वात् । अत आनीयमानः स्वामिगतां कर्तृगतां त्यक्तृगतां च संख्यामसमर्थः पूरयितुम् । तस्मान्न प्रतिनिधिः । आरब्धसमाप्तिस्त्वविशिष्टैव ।

एवं प्राप्ते ब्रूमः । आरब्धमवश्यं समापनीयं यथाश्रुतमेव । तत्राऽऽनीयमानः स्वा-मिगतां संख्यां न पूरयति । यस्तु क्रियते, तस्य पदार्थे कर्तृत्वं शक्नोति प्रतिपत्तुमिति । तस्मादनेनांशेनावश्यमुपादेयः ॥ २२ ॥

एतस्मिंश्च स्थित [2]उत्तरेऽधिकरणे यो विचारः स [3]नैव ॥ २३ ॥

---

१ स्वामित्वेनेति पा० । २ उत्तरेऽधिकरण इति—पूर्वाधिकरणे स्थित्वा, इदमधिकरणमुत्त-रशब्देन निर्दिशति । ३ नैवेति—उत्तिष्ठतीति शेषः ।

## कर्मकरो वा भृतत्वात् ॥२४॥सि०

कर्मकरो वा स स्यात् । कुतः । भृतत्वात् । भृतो ह्यसौ तैः शिष्टैः स्वामिभिः प्रयुक्तः । परिक्रीयमाणो न स्वामी भवति । यः फलं प्राप्नोति, स स्वामी । यः परस्योपकारे वर्तते, स कर्मकरः । नैवासौ फलं प्राप्नोति । कुतः । यो ह्यारभ्य परिसमापयति, स फलवान् । एष ह्याख्यातार्थः । स ह्युपक्रमप्रभृत्यपवर्गपर्यन्तमाह ।

ननु तेऽपि तत्र विगुणं कुर्वन्ति । सप्तदशानां स्वामिनामभावात् । तस्मात्तेऽपि न स्वामिनः । नो चेत्स्वामिनः, न फलं प्राप्नुवन्ति । उच्यते । न सप्तदशावराः फलसमवाये भवेयुरिति श्रूयते । न संख्या फलपरिग्रहे गुणभूता । किं तर्हि । पदार्थेषु । सप्तदशावरैर्यजमानाः पदार्थाः कर्तव्या इति । ते च प्रतिनिहितेन क्रियन्ते । अफलत्वेऽपि च सत्यं संकल्पं कर्तुमन्यमानयन्ति । आनीयमानस्य च न तेन प्रयोजनम् ॥ २४ ॥

## तस्मिंश्च फलदर्शनात् ॥ २५ ॥

तस्मिंश्च दिष्टां गतिं गते फलं दर्शयति, यो दीक्षितानां प्रमीयेत, अपि तस्य फलमिति । तस्मात्कर्मकर इति ॥ २५ ॥

( सत्रे प्रतिनिहितस्य स्वामिधर्मत्वाधिकरणम् ॥ १० ॥ )

## [ १० ] स तद्धर्मा स्यात्कर्मसंयोगात् ॥ २६ ॥ सि०

बहूनां कस्मिंश्चिदपचरिते प्रतिनिधेयोऽन्य इत्येतत्समाधिगतम् । इदमिदानीं तत्र संदिग्धम् । किमसौ स्वामिधर्मा स्यादुत ऋत्विग्धर्मा । किं प्राप्तम् । ऋत्विग्धर्मा । कुतः । परार्थे हि स यजति । यश्च परार्थे यजति, स ऋत्विगिति । एवं प्राप्ते, ब्रूमः । स तद्धर्मा स्यात् । स्वामिधर्मा । तस्य हि कार्ये श्रूयते । यश्च यस्य कार्यमधितिष्ठति स तद्धर्मैः संबध्यते । यथा स्रुवधर्मैः स्वधितिरिति । २६ ॥

( श्रुतद्रव्यापचारे तत्सदृशस्यैव प्रतिनिधिनियमाधिकरणम् ॥ ११ ॥ )

## [ ११ ] सामान्यं तच्चिकीर्षा हि ॥ २७ ॥ सि०

---

[ ॥ २४ ॥ ]

तस्मिंश्च फलदर्शनादिति । फलमरूपोऽसामर्थ्यवान् । सत्यपि फले मृतस्य प्राप्त्यभावादितरस्य कर्मकरत्वादपि नास्ति फलसंबन्धः ॥ २५ ॥ [ २६ ॥ ]

श्रुते द्रव्येऽपचरति प्रतिनिधिमुपादाय प्रयोक्तव्यमिति स्थितम् । तत्र संदेहः । किं यत्किंचिद्द्रव्यमुपादाय प्रयोगः कर्तव्य उत सदृशमिति । किं प्राप्तम् ? यत्किंचिदुपादायेति । एवं प्राप्ते, ब्रूमः । सामान्यं यत्र गृह्यते, तदुपादातव्यं, सदृशमिति । कुतः । सर्वे ह्याकृतिवचनाः शब्दाः । आकृतिश्च यद्यप्यङ्गभावेन श्रूयते, तथाऽपि न साक्षात्तस्याः क्रियां प्रत्यङ्गभावः । यत्तु, क्रियासाधनं द्रव्यमर्थादङ्गभूतं प्राप्तं तत्परिच्छिन्दती क्रियायामङ्गभावं याति । व्यक्तेश्चाऽऽकृत्या विशेषाः परिच्छिद्यन्ते । ते विशेषा अङ्गभूताः । अथ तस्यामाकृतावपचरितायामर्थप्राप्तं द्रव्यं ग्रहीतव्यमेव । यस्मिंश्च सदृशे गृह्यमाणे तेषां विशेषाणां केचित्संगृहीता भवन्ति, स तत्र लाभो लभ्यत इति तत्सदृशं द्रव्यमुपादातव्यं भवति । तस्माद्व्रीहीणामपचारे नीवाराः प्रतिनिधेया इति ॥ २७ ॥

---

अष्टाकपालादिचोदना येन केनचिन्निर्वर्त्यते । तत्र किं सादृश्योपादानेन । अथोच्येत—व्रीहिचोदनानुग्रहार्थं सादृश्योपादानम् । उच्यते । व्रीहिचोदनायां फलार्थिनः प्रवर्तामहे, न तस्याः स्वरूपानुग्रहार्थं शक्यं वक्तुं, नीवारास्तत्फलं साधयन्तीति । यदि साधयेयुर्विकल्पेरन् । तस्मान्न सादृश्योपादानम् ।

एवं प्राप्ते ब्रूमः । फलार्थिना यथाश्रुतं प्रक्रान्तं, तत्र व्रीह्यभावे फलाभावात्तदन्तोत्सर्गे प्राप्ते वचनात्प्रारभ्य यजेतैवेति समाप्तिर्विधीयते। सा च यादृशः [1]प्रक्रान्तस्तादृशस्य। तत्र व्रीह्याकृतिर्यागस्य साधनं द्रव्यं परिच्छिन्दत्यङ्गतां प्रतिपद्यते यथा, एवं तद्गता विशेषा दीर्घशूकत्वादयस्तानपि परिच्छिनत्ति । तत्र यद्यपि नीवा- तेर्व्यक्तिश्चान्या तथाऽप्यन्ये बहवो धर्माः समानाः । ते श्रुतसंपत्तयेऽवश्यमुपादे- - नधिकं तन्नान्तरीयकत्वादुपादीयते । तत्र कर्तव्यतोपदेशात्फलेन भवितव्यम् । सोमयागस्य यत्फलमवगतं तदत्राप्यनुपपद्यते । अवश्यकर्तव्ये [2]सौकर्यात् । विप्रकर्षान्न दर्शपूर्णमासफलानुषङ्गः । अनाकाङ्क्षितत्वाच्च ।

अथवा—कर्तव्यतानियमः । स च गुणस्तस्य यन्मनसि विपरिवर्तते तत्साधयति । वीतायां फलेच्छायां पापक्षयादि । अक्षीणायां तु यत्संनिहितम् । स चानाश्रितो न शक्नोति साधयितुमिति प्रक्रान्तं कर्माऽऽश्रयति । तच्च साङ्गं प्रक्रान्तम् । तत्र व्रीह्याकृतिर्व्यक्तिर्वा केवलासंभवान्नीवारेषूपादीयमानेषु परित्यज्यते । शिष्टं तु यथाश्रुतमेवाऽऽश्रयत्वेन गृहीतम् ॥ २७ ॥

---

१ व्रीह्याकृतिव्यक्तिभ्यामिति शेषः । २ सौकर्यादिति—बुद्धिसंनिधानादित्यर्थः ।

( द्रव्यापचारे वैकल्पिकद्रव्यान्तरानुपादानाधिकरणम् ॥ १२ ॥ )

## [१२] निर्देशात्तु विकल्पे यत्प्रवृत्तम् ॥२८॥ सि०

अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः, यो दीक्षितो यदग्नीषोमीयं पशुमालभत इति। तत्र श्रूयते, खादिरे पशुं बध्नाति, पालाशे बध्नाति, रौहितके बध्नातीति। तत्र कदाचित्खादिरगुणके प्रयोग आरब्धे खादिरो विनष्टः। तत्र संदेहः। किं वैकल्पिकस्योपादानमुत खदिरसदृशस्येति। किं प्राप्तम्। वैकल्पिकस्येति। कुतः। स हि श्रुतः। खदिरसदृशो न श्रूयते। तस्माद्वैकल्पिकस्योपादानमिति। एवं प्राप्ते, ब्रूमः।

विकल्पे यत्प्रवृत्तं, तत्सदृशमुपादेयम्। यत्प्रवृत्तं यस्मिन् प्रयोगे, तन्निर्दिष्टं, तदङ्गभूतं, वैकल्पिकमनङ्गम्। [1]आश्रितखादिरे प्रयोगे पलाशरौहितकावनङ्गभूतौ। तौ न शक्येते यदा खादिरस्तदैव कर्तुम्। अशक्यं चाश्रुतम्। तस्मादाश्रितखादिरे प्रयोग इतरौ नोपादेयौ। अनङ्गभूतत्वात्। खदिरस्य सदृशमन्वेषितव्यमिति ॥ २८ ॥

### अशब्दमिति चेत् ॥ २९ ॥

इति चेत्पश्यसि, खदिरसदृशमुपादेयमिति। अशब्दमेव कृतं भवति। तस्माच्छब्दवत्त्वाद्वैकल्पिकमुपादेयम् ॥ २९ ॥

### नानङ्गत्वात् ॥ ३० ॥

नैतदेवम्। अनङ्गं तस्मिन्प्रयोगे वैकल्पिकम्। आश्रितखादिरो हि स प्रयोगो यो निर्दिष्टः। तस्य निर्देशादितरावश्रुतौ। ननु निर्देशाभावेऽङ्गभावविरोधः। तेन श्रुताविति। किमतो यद्येवं, यदोपात्तस्याभावस्तदा श्रवणम्। नैतदेवम्। नैमित्तिकं हि तथा प्रतिज्ञायेत। सति वचने निमित्ते, असति खादिरे, इतरौ श्रुताविति। तत्र को दोषः। स एवापेक्षितोऽनपेक्षितश्चेति विरोधो भवेत्। संस्काराश्च खादिरे कर्तव्याः। खदिरसदृशे तद्बुद्ध्या गृह्यमाणे श्रुतबुद्ध्या कृता भवन्ति। [2]वैकल्पिकेन तु श्रुतेनासंबद्धाः। तस्मादुपात्तसदृशो ग्राह्य इति ॥ ३० ॥

( पूतीकानां सोमप्रतिनिधित्वाधिकरणम् ॥ १३ ॥ )

## [१३] वचनाच्चान्याय्यमभावे तत्सामान्येन प्रतिनिधिरभावादितरस्य ॥ ३१ ॥ सि०

[ २८ ॥ २९ ॥ ३० ॥

१ आश्रिते खदिरे—इति पा०। २ वैकल्पिकेन च ते न संबद्धा इति पा०।

इदमामनन्ति, यदि सोमं न विन्देत पूतीकानभिषुणुयादिति । तत्र संदेहः । किमयमभावे निमित्ते विधिरुत प्रतिनिधिनियम इति । किं प्राप्तम् । अभावे विधिरिति । कुतः । विधानात् । न हि प्रतिनिधिर्विधीयते । साध्यसिद्ध्यै साधनं स्वयमेवोपादीयते । इदं तु विधीयते । तत्कल्पान्तरपक्षेऽर्थवद्भवति । तस्मान्न प्रतिनिधिरित्येवं प्राप्ते, ब्रूमः ।

प्रतिनिधिः स्यात् । कुतः । विनष्टे हि साधने साध्यसिद्ध्यर्थं साधनान्तरमुपादीयते । श्रुतस्याभावात् । नन्वन्याय्याः पूतीकाः । अन्यद्धि सदृशतरमस्तीति । तदुच्यते । वचनात् । सदृशे प्राप्ते, बहुषु वाऽसदृशेषु पूतीका अल्पसदृशा नियम्यन्ते । कथम् । तद्धि प्रक्रान्तं कर्मावश्यं कर्तव्यम् । तस्यामवस्थायामन्तरेणैव वचनं प्रतिनिधेयं द्रव्यान्तरं प्राप्तमेव । प्राप्ते वचनं न विधिरिति गम्यते । प्राप्तस्यानुवादो भवितुमर्हति । किमर्थमनुवाद इति चेत् । उच्यते । अल्पसादृश्यमप्राप्तम् । तद्विधानार्थमनुवादः । प्रयोजनं पक्षोक्तम् । प्रतिनिधिपक्षे सोमसदृशस्योपादानं पूतीकविनाशे । द्रव्यान्तरविधौ पूतीकसदृशमुपादेयम् ॥ ३१ ॥

( प्रतिनिध्यपचारे श्रुतद्रव्यसदृशस्यैव प्रतिनिधित्वाधिकरणम् ॥ १४ ॥ )

## [१४] न प्रतिनिधौ समत्वात् ॥ ३२ ॥ सि०

इदं विचार्यते । श्रुते द्रव्य उपात्तेऽपचरिते प्रतिनिधिमुपादाय प्रयोगः प्राप्तः । यदा सोऽपि विनष्टः प्रतिनिहितस्तदा किं प्रतिनिधिसदृशमुपादेयमुतोपात्तस्य विनष्टस्येति । किं प्राप्तम् । प्रतिनिहिते विनष्टे तत्सदृशमुपादेयं पूर्वेण न्यायेनेत्येवं प्राप्ते, ब्रूमः ।

प्रतिनिधौ न स्यात्प्रतिनिधिरिति । कुतः । समत्वात् । यथैवासौ पूर्वः प्रतिनिहितः श्रुतचिकीर्षया, न प्रतिनिधिचिकीर्षया । एवमयमपि श्रुतचिकीर्षया, न प्रतिनिधिचिकीर्षया । तस्मान्न प्रतिनिधिसदृशमुपादेयम् । उपात्तनष्टस्यैव सदृशोऽन्वेषितव्य इति ॥ ३२ ॥

---

॥ ३१ ॥ ३२ ॥

---

१ यदि न सोमं विन्देदिति पा० । २ बहुषु वासदृशेष्विति पा० । ३ अल्पसादृश्या इति पा०।

( श्रुतप्रतिनिध्यपचारेऽपि मुख्यद्रव्यसदृशस्यैव प्रतिनिधित्वाधिकरणम् ॥१५॥ )

[१५] स्याच्छ्रुतिलक्षणे नियतत्वात् ॥ ३३ ॥ पू०

अथ श्रुतिलक्षणे कथम् । यथा, यदि सोमं न विन्देत्पूतीकानभिषुणुयादिति । पूतीकेषु विनष्टेषु पूतीकसदृशमुपादेयमुत सोमसदृशमिति । किं प्राप्तम् । स्याच्छ्रुतिलक्षणे प्रतिनिधौ, प्रतिनिधिसदृशस्योपादानं कर्तव्यम् । सोमाभावे[1] पूतीकव्यक्तयो विहिताः । स चायं श्रुतः सोमाभावे । तस्मात्पूतीकव्यक्तय उपादेया इति ॥ ३३ ॥

न तदीप्सा हि ॥ ३४ ॥ सि०

नैतदेवम् । न हि पूतीकव्यक्तीनामीप्सा । पूतीकेषु यत्सोमसादृश्यं, तन्नियम्यते । तथा हि पूतीकविधानं दृष्टार्थम् । असदृशविधानेऽदृष्टं कल्प्येत । अतो यस्मिंस्तदपूतीकसदृशेऽपि द्रव्ये भवति तद्गृहीतव्यं, न पूतीकसादृश्यमाद्रियेतेति ॥ ३४ ॥

( मुख्यापचारे पुनर्मुख्यप्राप्तौ तस्यैवोपादानाधिकरणम् ॥ १६ ॥ )

[१६] मुख्याधिगमे मुख्यमागमो हि तदभावात् ॥३५॥ सि०

अथ यत्र विनष्टे श्रुते प्रतिनिधिमुपादातुं प्रस्थितो मुख्यमेवोपलभते, तत्र किं प्रतिनिधिमेवोपाददीत, उत तमेव मुख्यमिति । किं तावत्प्राप्तम् । प्रतिनिधिमुपादास्य[2] इत्येवं संकल्पितवानसौ प्रतिनिधिमुपाददान एव सत्यसंकल्पो भवति । तस्मात्प्रतिनिधातव्यं तेने[3]त्येवं प्राप्ते, ब्रूमः । मुख्याधिगमे तमेवोपाददीत । अभावे हि श्रुतस्यानुकल्पः प्रतिनिधिः । श्रुते हि सकला व्यक्तयः । प्रतिनिधौ विकलाः । अथ यदुक्तं, संकल्पभेददोष इति । श्रुतेष्वसौ, शिष्टविगर्हणायां वा ॥ ३५ ॥

(प्रतिनिधिना कृते च कार्ये श्रुतद्रव्यलाभेऽपि तदनुपादानाधिकरणम् ॥१७॥)

[१७] प्रवृत्तेऽपीति चेत् ॥ ३६ ॥ पू०

अथाग्निहोत्रादिषु कर्मसु श्रुतद्रव्यापचारे प्रतिनिधावुपात्ते कृतेषु केषुचित्संस्कारेषु यदि तदेव श्रुतमुपलभ्येत । किं श्रुतमुपादीयेत, उत

---

॥ ३३ ॥ ३४ ॥ ३५ ॥]

केषुचित्संस्कारेषु कृतेष्वनभिनिर्वृत्ते प्रयोजने श्रुतमेवोपादातव्यं, न संस्काराणामनु-

---

१ सोमाभावः, इति पा० । २ प्रतिनिधिरुपादातव्य इति । एवं संकल्पितवानसाविति पा० । ३ तेनेति क्वचिन्नास्ति ।

तेनैव प्रतिनिहितेन समापयितव्यमिति । किं प्राप्तम् । श्रुतमुपादीयेत प्रवृत्तेऽपि। तदुक्तम्, आगमो हि तदभावादिति । तस्मान्न प्रतिनिधा-तव्यमिति ॥ ३६ ॥

नानर्थकत्वात् ॥ ३७ ॥ सि०

नैतदेवम् । येन हि खदिराभावे कदरे पशुर्नियुक्तो भवति, अथ खादिरमुपलभते, प्रवृत्तेऽर्थे किं खादिरेण कुर्यात् । अर्थार्थं हि खदिरोपादानं, न खदिरोपादानार्थमेव । तस्मान्न श्रुतमुपादीयेत ॥ ३७ ॥

( द्रव्यसंस्कारविरोधे द्रव्यस्यैवोपादानाधिकरणम् ॥ १८ ॥ )

[१८] द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात् ॥ ३८ ॥ सि०

प्रवृत्ते पशुकर्मणि, यूपकालेऽस्ति महत्कदरद्रव्यं तक्षणादिसंस्कारक्षमम् । अस्ति खदिरद्रव्यमनेवंजातीयकम् । तत्र किमुपादेयमिति । संस्कारा न परिलोप्स्यन्त[1] इति कदर उपादीयेतेत्येवं प्राप्ते, ब्रूमः । द्रव्यसंस्कारविरोधे द्रव्यं प्रत्याद्रियेरन्, न संस्कारान् । कुतः । तदर्थत्वात् । संस्कारा हि द्रव्यं कर्मयोग्यं कुर्वन्ति । तत्र संस्कारपरिलोपे द्रव्यमपि तावद्गृह्यते । द्रव्याभावे न द्रव्यं, न संस्काराः । द्रव्यं तेषां द्वारम् । वचनप्रामाण्यात् । तदभावे नष्टद्वारा नापूर्वं गच्छेयुः । तस्मात्खादिरमुपाददीरन्निति ॥ ३८ ॥

( कार्यासमर्थे मुख्यद्रव्ये प्रतिनिधेरेवोपादानाधिकरणम् ॥ १९ ॥ )

[ १९ ] अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्ते-र्द्रव्याणामर्थशेषत्वात् ॥ ३९ ॥ सि०

अस्ति यूपकाले खदिरलता पशोरप्रागल्भ्ये[2] न समर्था । कदरद्रव्यं तु तत्समर्थम् । तत्र संदेहः । किमुपादेयं खदिरद्रव्यमुत कदरद्रव्यमिति । खदिरद्रव्यमित्याह । तद्धि श्रुतम् । तदुपाददानः शास्त्रविहितं करोति । प्रतिनिधावश्रुतकारी स्यात् । तस्मान्न प्रतिनिधातव्यमित्येवं प्राप्ते,

---

शेषः । द्रव्यगुणत्वात् । तस्माद्येऽभिनिर्वृत्ताः संस्कारास्तेषामावृत्तिः स्यात् । एवमिदं सिद्धान्तसूत्रं भवति । पूर्वपक्षस्तूत्प्रेक्ष्यः ॥ ३६ ॥

एतदपि सिद्धान्तसूत्रमुत्प्रेक्ष्य पूर्वपक्षकम् । अथवा 'प्रवृतेऽपीति चेत्' कृते प्रयोजने श्रुतमाम्नयितव्यमिति । एतस्योत्तरं 'नानर्थकत्वादिति' ॥ ३७ ॥ [ ३८ ॥

---

१ परिलुप्यन्त इति पा० । २ पशोः प्रागल्भ्ये नासमर्थेति पा० ।

ब्रूमः । अर्थद्रव्यविरोधेऽर्थं प्रत्यादर्तव्यम् । तदर्थं हि द्रव्योपादानं, नियोजनादप्रागल्भ्यं पशोर्भविष्यतीति, न द्रव्यमेवोपादीयेतेति । कदरमुपाददानो द्रव्यश्रुतिं बाधते । अर्थं त्वनुगृह्णाति । खदिरलतामुपाददान उभयं बाधते । तस्मात्कदरद्रव्यमुपादेयम् । द्रव्याभावे हि तदुत्पत्तिः, प्रतिनिधेरुत्पत्तिरुक्ता । द्रव्याण्यर्थं प्रति शेषभूतानि ॥ ३९ ॥

( प्रधानमात्रसमर्थमुख्यद्रव्यलाभे तस्यैवोपादानाधिकरणम् ॥ २० ॥ )

[ २० ] विधिरप्येकदेशे स्यात् ॥ ४० ॥ पू०

सन्ति व्रीहयः, यावन्तो द्व्यवदानमात्रं निर्वर्तयन्ति । तथा सन्ति नीवाराः शेषकार्याणामपि पर्याप्ताः । तत्र किमुपादेयमिति । किं प्राप्तम् । अप्येकदेशे द्व्यवदानमात्रेऽपि निर्वर्त्यमाने प्रतिनिधिरुपादेयः । किं कारणम् । शेषकार्याणां संपत्तिर्भविष्यतीति ॥ ४० ॥

अपि वाऽर्थस्य शक्यत्वादेकदेशेन निर्वर्तेतार्थानाम-विभक्तत्वाद्गुणमात्रमितरत्तदर्थत्वात् ॥ ४१ ॥ सि०

अपि वेति पक्षव्यावृत्तिः । एकदेशेन व्रीहीणां प्रधानमात्रं निर्वर्तयितव्यम् । कुतः । अर्थस्य शक्यत्वात् । योऽत्रार्थो, येन कार्यं तत्तावन्निर्वर्त्यते । शेषकार्याणि यदि न शक्यानि, नाङ्गानुरोधेन प्रधानस्य गुणो बाधितव्यः । तद्ध्यङ्गं, यत्प्रधानस्योपकरोति, न यदपकारे वर्तते । तत्र च शेषकार्याणि क्रियमाणानि प्रधाने व्रीहित्वं गुणं विहन्युः । व्रीहित्वं च प्रधाने साक्षादङ्गभूतं श्रूयते, व्रीहिभिर्यजेतेति । तस्मान्न तेष्वनुरोधः कार्यः । असति ह्यङ्गप्रधानविभाग एतदेवं स्यात् । अस्ति ह्यसौ । तस्मान्न प्रतिनिधिरिति । तथा चान्यार्थदर्शनमपि भवति, तदेव यादृक् तादृग् होतव्यमिति ॥ ४१ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये षष्ठस्याध्यायस्य तृतीयः पादः ॥

---

॥ ३९ ॥ ४० ॥ ४१ ॥ ]

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां षष्ठाध्यायस्य तृतीयः पादः ॥

अथ षष्ठेऽध्याये चतुर्थः पादः ॥

( उत्पन्नहविर्नाशे हविरन्तरोपादानाधिकरणम् ॥ १ ॥ )

[ १ ] शेषाद्द्व्यवदाननाशे स्यात्तदर्थत्वात् ॥ १ ॥ पू०

दर्शपूर्णमासयोः श्रूयते, यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवतीति । तत्र यदि द्व्यवदानमात्रमुद्धृतं व्यापद्यते, किं शेषात्पुनरवदेयं, नेति भवति संशयः । किं प्राप्तम् । द्व्यवदाननाशे शेषात्पुनरवदेयम् । कुतः । तदर्थत्वात् । अग्न्यर्थं हि तद्धविः । अग्नये यागो निर्वर्तयितव्य इति । तदवदाने विनष्टे यागः कर्तव्य एवावतिष्ठते । प्रयोजनं च यागेन । स चाऽऽग्नेयेन क्रियमाणः श्रुत एवाभिनिर्वर्तितो भवतीति किमिति न क्रियेत । तस्माच्छेषादवदातव्यमिति ॥ १ ॥

निर्देशाद्वाऽन्यदागमयेत् ॥ २ ॥ सि०

अथवाऽन्यद्धविरागमयेत्, न शेषादवदातव्यम् । कुतः । निर्देशात् । निर्देशो हि भवति । मध्यात्पूर्वार्धादवदेयमिति । द्व्यवदानं च होमसंबद्धं, द्व्यवदानं जुहोतीति । तत्रान्यच्छिष्टं मध्यस्य पूर्वार्धस्य विशेषणार्थम् । यच्च तद्धोमसंयुक्तं तद्विनष्टम् । तच्छेषेण क्रियमाणममध्येनापूर्वार्धेन च कृतं स्यात् । नन्ववत्ते यच्छिष्टं ततो मध्यात्पूर्वार्धा

---

यद्याग्नेयचोदना द्व्यवदाननिष्ठा, ततस्तद्विनाशे शिष्टस्यानाग्नेयत्वाद्द्रव्यान्तरमुत्पाद्यम् । अथ सकलनिष्ठा, ततः शिष्टस्याऽऽग्नेयत्वात्तत एव ग्रहीष्यत इति केचिदेवं संशयमाहुः । अन्ये पुनरेवमाहुः । ' आग्नेयोऽष्टाकपालो भवति ' इति यद्यग्निमुद्दिश्य त्यज्यते, एवमस्याऽऽग्नेयतोपपद्यते । एवमन्यथानुपपत्त्या कृत्स्नस्य यागार्थता । मध्यपूर्वार्धयोर्वचनेन यागार्थत्वादन्यथानुपपत्तिः क्षीयते । अतो मध्यपूर्वार्धयोर्वचनेन यागार्थतायां स्थितायामिह चिन्ता । मध्यपूर्वार्धावयवोपलक्षितं होमसाधनं, नष्टेऽपि मध्यपूर्वार्धावयविन्युपलक्षणत्वेन विद्यमानत्वादवदेयम् । कृत्स्नस्य मध्यपूर्वार्धे इति चेत् । तन्न । शास्त्रार्थत्वात् । ' यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुः ' इति कृत्स्ननाशे दोषे वाऽऽज्यस्य प्रतिनिधित्वम् । न चेह कृत्स्ननाशः ॥ १ ॥

विशिष्य मध्यपूर्वार्धे निर्दिश्येते । कथम् । प्रमाणवेलायां यावान्द्विरङ्गुष्ठपर्वमात्रेऽपलक्षितः स यागसाधनम् । एवं चेत्कृत्स्नमध्यपूर्वार्धे इति शास्त्रार्थ एवायम् । इतर-

---

१ कर्तव्यतयेति पा० । २ प्रमाणवेलायामिति—शास्त्रप्रवृत्तिवेलायामित्यर्थः ।

ग्रहीष्यते। उच्यते। कृत्स्नस्य यन्मध्यं पूर्वार्धं च तच्चोदितं, नेतरस्य।

अथवा निर्देशादिति। विनष्टे ह्यन्यद्द्रव्यं निर्दिश्यते। यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुर्वाऽपहरेयुर्वाऽऽज्येन ता देवताः परिसंख्याय यजेरन्निति, हविषो नाश आज्यं प्राप्तम्। तेन न शेषादवदातव्यमिति।

अपर आह। शेषनिर्देशादिति। निर्दिश्यते हि तच्छिष्टमपरेभ्यः शेषकार्येभ्य इति। तन्नोपपद्यते। न हि तानि शेषकार्याणि हवींषि प्रयोजयन्ति। न चानिर्वृत्तप्रयोजनं हविरन्यत्र प्रतिपाद्यम्। तस्मान्नायमर्थः ॥ २ ॥

( शेषकार्यार्थमवत्तद्रव्यनाशे शेषकार्यलोपाधिकरणम् ॥ २ ॥ )

[२] अपि वा शेषभाजां स्याद्विशिष्टकारणत्वात् ॥ ३ ॥ सि०

अथ स्विष्टकृदर्थमवत्तं यदि विनश्यति तत्र किं शेषादवदेयमुत नेति। किं प्राप्तम्। पुनः शेषादवदेयमिति। कुतः। नात्र कृत्स्नस्योत्तरार्धादवदीयते। कस्य तर्हि। संनिहितस्य। सति हि प्रयोजने संनिहितस्यावदेयमिति। तस्मादवदीयमाने श्रुतं कृतं भवति। तस्माच्छेषादवदेयमिति।

एवं प्राप्ते, ब्रूमः। शेषभाजां स्याल्लोपः। कुतः। विशिष्टकारणत्वात्। विशिष्टं हि कारणं तस्यावदाने, कथं प्रतिपाद्येतेति। प्रतिपत्तिश्च विविक्तकरणेनोपकरोति। तस्य विविक्तकरणाय प्रतिपाद्यमानस्य नियमोऽयं स्विष्टकृद्धोमेन प्रतिपादयितव्यः। तथा हि स प्रतिपा-

---

थाऽनाशे उपलक्षणं, नाशे तूपलक्ष्यमिति वैरूप्यम्। एकरूपेण शास्त्रेण भवितव्यम्। तस्मादुपलक्षणत्वेनेतरन्निर्दिश्यते ॥ २ ॥

स्विष्टकृदन्यप्रयुक्तस्य ग्राहकः। एवं चेत्संनिहितं परकीयं ग्रहीष्यति। किमतः। उच्यते। यदि प्रयोजकः स्याद्यादृशं प्रयुक्तं तादृशस्याभावान्न पुनः शिष्टादवदेयम्। यत्तु द्रव्यं संस्कार्यं तस्य विद्यमानत्वात्पुनरवदानेन संस्कारः किमिति न क्रियते। न चात्रावयव्युपलक्षणार्थः। किं तर्हि। संस्क्रियतेऽसावित्येवं प्राप्ते, ब्रूमः।

विशिष्टो देशः संस्कार्यत्वेनापेक्षितः। तस्याभावात्कः प्रतिपत्तिं प्रयुञ्जीत। अपूर्व-

---

१ अन.शे—द्रव्यवदानानाशे। २ किमत इति—यतोऽयं स्विष्टकृदादिः परप्रयुक्तद्रव्योपजीवी न स्वातन्त्र्येण द्रव्यं प्रयुङ्क्ते, अतो गृहीतद्रव्यनाशे लोपः सिद्ध एव स्विष्टकृदादेरिति किमस्मादधिकरणात्कृत्यमित्यर्थः। ३ उपलक्षणार्थ इति—स्विष्टकृदवदानोपलक्षणार्थ इत्यर्थः।

दितो भवति । स यदि होमायोद्धृतो विपद्येत, कृते विवेके न पुनर्ग्रहणं प्रयोजयेत् । प्रतिपाद्यमानश्च स्विष्टकृद्धोमेन प्रतिपादयितव्य इति । प्रतिपाद्यमानाभावाल्लोप एव स्विष्टकृतः स्यात् । प्रधाने कृते शिष्टं सर्वशेषकार्यसाधारणम् । तत्रैकस्योद्धृते शिष्टमन्यत्र प्रतिपादनीयम्॥३॥

( शेषभक्षण ऋत्विङ्नियमाधिकरणम् ॥ ३ ॥ )

## [३] निर्देशाच्छेषभक्षोऽन्यैः प्रधानवत् ॥४॥ पू०

स्तो दर्शपूर्णमासौ । तत्र भक्षाः, प्राशित्रचतुर्धाकरणशंयुवाककालाः । तेषु संदेहः । किमन्य एव तेषां भक्षयितार उत प्रकरणगताः पुरुषा इति । किं प्राप्तम् । शेषभक्षोऽन्यैरप्रकरणस्थैः कर्तव्यः । कुतः । निर्देशात् । निर्दिश्यन्ते ह्यध्वर्य्वादय इडाभक्षे, यजमानपञ्चमा इडां भक्षयन्तीति । सर्वेषु भक्षयितव्येषु प्राप्तेषु परिसंख्यानार्थो निर्देशः क्रियते । इडामेवैते भक्षयेयुरिति । यथा, आग्नेयोऽष्टाकपाल इति सर्वस्मिन्नवयविनि यागानियमे प्राप्ते द्रव्यवदानमात्रं श्रूयते । स विधिर्न, प्राप्तत्वात् । नानुवादोऽनर्थकत्वात् । परिसंख्या त्वर्थवत्त्वाय । एवमेषां परिसंख्येति । अपि च यदि प्रकृता एव भक्षयेयुः, अश्वमेधे दोषः स्यात् । बहुत्वाद्भक्षाणां, भक्षयन्तो म्रियेरन् ॥ ४ ॥

## सर्वैर्वा समवायात्स्यात् ॥ ५ ॥ सि०

सर्वैर्वा प्रकृतैरेव भक्ष्येत । तद्धि भक्षणं पुरुषसंस्कारार्थम् । पुरुषाः संस्कृताः प्रचरिष्यन्तीति । तेषु विनिगमनाया अभावाद्यावन्तः प्रक-

---

मिति चेत् । न । द्रव्यप्रतिपादनानुनिष्पाद्यत्रापूर्वम् । अतस्तदप्रयोजकम् । द्रव्यप्रतिपत्तिश्चिकीर्षिता, न यागनिर्वृत्तिरिति ॥ ३ ॥

भक्षो निर्वर्तयितव्यः । तस्मिन्यथासमाख्यं कर्तृषु प्राप्तेषु परिसंख्या क्रियते, इडामेवैते भक्षयेयुरिति । अनिर्ज्ञातकर्तृकेषु भक्षेषु पूर्वपक्षोत्थानम् ॥ ४ ॥

द्रव्यसंस्कारत्वाद्यजमानोऽप्राप्तो विधीयते । वाक्यप्रकरणसमाख्याभिरेभिर्भक्षयितव्यमित्यस्यापि नियमस्य दृष्टमेव प्रयोजनम् । कर्तृणां कियत्यपि तृप्तिरुपजायते । तदनुनिष्पाद्यपेक्षयाऽऽह, तद्धि भक्षणं पुरुषसंस्कारार्थमिति । याज्ञिकैर्विवेकमगृहीत्वा,

---

१ अभियागाय प्राप्ते-पा०। २ अनिर्ज्ञातकर्तृकेषु भक्षेषु—शंयुवाककालभक्षेष्वित्यर्थः। ३ विवेकमिति–भक्षणक्रियाप्रयोजनं द्रव्यसंस्कारः, भक्षणे कर्तृनियमप्रयोजनं तु कर्तृसंस्कार इति विवेकमित्यर्थः।

रणे समवेतास्ते सर्वे भक्षयेयुरिति ॥ ५ ॥

निर्देशस्य गुणार्थत्वम् ॥ ६ ॥

अथ यदुक्तं, निर्देशादिति । गुणार्थः सः । अन्ये कर्मकरत्वादेव प्राप्ताः । तत्र यजमानस्तेषां पञ्चमो वचनान्निर्दिश्यते । तस्माप्त्यर्थं चेदं वचनम् । ततो न परिसंख्या ॥ ६ ॥

प्रधाने श्रुतिलक्षणम् ॥ ७ ॥

यत्तु द्व्यवदानमात्रं प्रधाने निर्दिश्यते, तद्वचनप्रामाण्यात्परिसंख्यानार्थम् । न हि तत्र कस्यचिदपूर्वस्य विधिः । इह यजमानो विधीयते । विधिपरिसंख्यासंशये विधिर्ज्यायान् । तत्र स्वार्थे शब्दः । परिसंख्यायां त्रयो दोषाः, स्वार्थहानमस्वार्थपरिग्रहः प्राप्तबाधश्चेति । तस्मात्प्रकृता एव भक्षयेयुरिति ॥ ७ ॥

अर्थवदिति चेत् ॥ ८ ॥

अथ यदुक्तम्—अश्वमेधे विरोधः स्याद्बहुत्वाद्भक्षाणामिति । तत्परिहर्तव्यम् ॥ ८ ॥

न चोदनाविरोधात् ॥ ९ ॥

अश्वमेधे न सर्वे भक्षयिष्यन्ति । अर्थात्सर्वं भक्षयन्तोऽश्वमेधं न समापयेयुः । तत्राश्वमेधश्रुतिः प्रत्यक्षा । सा विरुध्यमाना चोदकप्राप्तं सर्वभक्षणं बाधते । प्रकृतौ तु न विरोधः । तस्मात्सर्वं प्रकृता भक्षयेयुरिति ॥ ९ ॥

( एकदेशभेदनादावपि प्रायश्चित्ताधिकरणम् ॥ ४ ॥ )

[ ४ ] अर्थसमवायात्प्रायश्चित्तमेकदेशेऽपि ॥ १० ॥ सि०

स्तो दर्शपूर्णमासौ । तत्राऽऽम्नन्ति, भिन्ने जुहोति, स्कन्ने जुहोतीति । तत्र संदेहः । किं कृत्स्ने भिन्ने, स्कन्ने च प्रायश्चित्तमुतैकदेशेऽपि भिन्ने, स्कन्ने चेति । किं पुनः सर्वभिन्नं, किमेकदेशभिन्नमिति । चूर्णीकृतमयोग्यं प्रयोजनाय, तत्कृत्स्नभिन्नम् । यच्छकले विगतेऽपि

---

भक्षाः पुरुषसंस्कारा इत्युक्तम् ॥ ९ ॥ [ ६ ॥ ७ ॥ ८ ॥ ९ ॥ ]

कृत्स्नभिन्ने प्रायश्चित्तम् । कुतः । तस्य भिदुरद्रव्यस्य परस्परसंघर्षणादवश्यंभावी कियानपि मात्रापनयः । तस्यावर्जनीयत्वान्नित्यता प्रसज्यते । भिन्नमिति भिदिक्रियोपसर्जनीभूतं निष्ठया द्रव्यमभिधीयते । तदेवमुपसर्जनं भवति यत्कृत्स्नं व्याप्नोति । तस्मान्नैकदेशे भिन्ने होम इति ।

---

१ भिदिक्रियोपसर्जनीभूतम्—भिदिक्रिया, उपसर्जनीभूता यस्य तादिति व्युत्पत्त्या भिदिक्रियोपसर्जनकमित्यर्थः ।

प्रयोजनसमर्थं तदेकदेशभिन्नमिति । किं प्राप्तम् । एकदेशभिन्नेऽपि प्रायश्चित्तम् । कस्मात् । अर्थसमवायात् । समवेतं तत्र भेदनम् । एकदेशभिन्नमपि भिन्नमिति । एवं प्राप्ते निमित्ते नैमित्तिकं कर्तव्यं भवति ॥ १० ॥

न त्वशेषे वैगुण्यात्तदर्थं हि ॥ ११ ॥

तुशब्दः पक्षं व्यावर्तयति । नाशेषेऽपि भिन्ने प्रायश्चित्तं स्यात् । विनष्टसंस्कारार्थं हि प्रायश्चित्तम् । कुतः । एतद्भेदनवता प्रयोजनमस्ति, न होमेन । तेन संस्कृतेन प्रयोगः करिष्यत इति प्रायश्चित्तं क्रियते । न च तेन चूर्णीकृतेन प्रयोगः शक्यते कर्तुम् । तस्मात्प्रायश्चित्तमनर्थकम् । एकदेशभिन्नेन तु संस्कृतेन शक्यते प्रयोगः । तस्मादेकदेशभिन्ने प्रायश्चित्तं स्यादिति ॥ ११ ॥

स्याद्वा प्राप्तनिमित्तत्वादतद्धर्मो नित्यसंयोगान्न हि तस्य गुणार्थेनानित्यत्वात् ॥ १२ ॥

स्याद्वा प्रायश्चित्तं कृत्स्नभिन्नेऽपि । कुतः । प्राप्तनिमित्तत्वात् । प्राप्तं हि निमित्तं भेदनम् । प्राप्ते च निमित्ते नैमित्तिकं कर्तव्यम् । यच्चोक्तं

---

एवं प्राप्ते ब्रूमः । संघर्षणे संघृष्टमिति बुद्धिर्भवति, न भिन्नमिति । भेदनं कदाचिद्भवति । तस्मादेकदेशकृत्स्नभिन्नयोरुभयत्र भिन्नबुद्धेः संभवादुभयत्रापि होमः । यदुक्तं भेदनविशिष्टं द्रव्यं प्रधानमिति । उच्यते । विशेषण एव निमित्तप्रत्यये जाते किमर्थं विशेष्यं यावद्गम्यते, अर्थाद्द्रव्यं लक्ष्यते न शब्दात् । तस्माद्भेदश्चेदुपजातो होमश्चेति ॥ १० ॥

एकदेशभेद एव होमः । कुतः । भिन्न इति द्रव्यप्रधानो निर्देश इत्युक्तमेव । भेदनेन द्रव्ये दोष उत्पन्नः । स होमेन प्रतिसंधीयते । निर्हृतदोषं च यागयोग्यं भवति । सकलभेदे चायोग्यत्वात्तदर्थे होमः सन्ननर्थकः स्यात् । भिन्न इति सप्तमी द्वितीयार्थे, भिन्नं द्रव्यमिति[1] । एवं च वाक्येन होमस्य संबन्धः[2], संनिपत्योपकारिता च । निमित्तत्वे प्रकरणेन संबन्धः । स दुर्बलः । आरादुपकारकः सन्नसंयुक्त उपकुर्यात् । अयमपि दोषः ॥ ११ ॥

कपालार्थे होमेऽश्रुतिनिमित्तकानां दर्शपूर्णमासापूर्वं निमित्तम्[3] । यावद्दर्शपूर्णमासापूर्वं निमित्तं तावन्नैमित्तिकेन भवितव्यम् । निमित्तेन[4] प्रयोजितत्वाद्धोमस्य । भेदनं च तत्र

---

१ भिन्नं द्रव्यमिति—होमेन संस्कुर्यादिति शेषः । २ संबन्ध इति—उद्देश्यसंबन्ध इत्यर्थः । ३ निमित्तमिति—अनुष्ठापकमित्यर्थः । ४ निमित्तेनेति—दर्शपूर्णमासापूर्वेणेत्यर्थः ।

ऽव्यापन्नसंस्कारार्थं प्रायश्चित्तमिति। नायं तस्य धर्मः। कुतः। नित्यसंयोगात्। नित्यवद्धोमः। अनित्यं हि भेदनम्। न हि नित्यमनित्यस्योपकर्तुं चोद्यते। यदि नित्यं दर्शपूर्णमासयोरङ्गं नानित्यस्योपकाराय। कुतः। कदाचिदनित्यं नैव स्यात्। तत्र कथं तस्योपकारकं भवेत्। तत्र को दोषः। न शक्यं नित्यस्योपकर्तुम्। तेन नित्यमुपकुर्यादिति वचनं प्रलाप एव। अथ नैमित्तिकं, न दोषो भवति। तस्मादस्मत्पक्ष एव। अस्मिन्पक्षे यदा भिन्नं, तदा होमः। यदा न भिन्नं तदा नैव होमो विधीयते। भवदीये पक्षे भवति दोषो नित्यानित्ययोर्नास्ति संबन्ध इति। तस्माद्भिन्नमात्रे प्रायश्चित्तमिति॥ १२॥

**गुणानां च परार्थत्वाद्वचनाद्व्यपाश्रयः स्यात्॥ १३॥**

असति वचने न[1] गुणो गुणार्थो भवितुमर्हति। प्रकरणतः सर्वं प्रधानार्थम्। भिन्नमपि होमोऽपि। न च भिन्नमाधारभावेनोपदिश्यते।

---

कदाचित्। तत्रोप[2]कार्यस्यानित्यत्वात्, प्र[3]योजकस्य नित्यत्वान्नित्यानित्यसंयोगविरोधः। भेदनस्य निमित्तत्वे भिन्नेन होमे प्रयुक्तेऽपूर्वस्य तादर्थ्यमित्यदोषः। सप्तमी च निमित्तत्वेन यथाश्रुता। निमित्त[4]तादर्थ्ययोर्नित्यत्वादस्ति संबन्धः। यथा जीवननिमित्तं होमं प्रयुङ्क्ते, स दोषोपघातार्थः। तत्र जीवनस्य पुरुषदोषस्य च विद्यमानत्वादविरुद्धः संबन्धः। द्वयोरप्यनित्ययोरस्ति संबन्धः। यथा ब्रह्महत्याद्यनित्यं निमित्तं[5] पुरुषदोषश्च। तत्र प्रायश्चित्तं ब्रह्महत्याप्रयुक्तं दोषनिर्घाताय च। तस्मादुपकार्ये विद्यमानेऽस्ति संबन्धः। इहोपकार्यं कदाचित्। न शक्यं नित्यस्योपकर्तुमिति। होमो न शक्नोति नित्यमुपकर्तुम्। उपका[6]र्यस्याभावात्। तेन नित्यमुपकुर्यादिति—दर्शपूर्णमासापूर्वं ब्रवीति, नित्यमुपकुर्यादिति—प्रयु[7]ञ्जानम्। तस्मात्कपालविशिष्टं भेदनं निमित्तम्॥ १२॥

प्रकरणात्प्रधानार्थो होमः। भिन्नमपि प्रयु[8]ञ्जानं प्रणाड्या तदर्थमेव। न च कपालार्थत्वेन होमस्य प्रतिपादकं वचनमस्ति। द्वितीयाविभक्तेरभावात्। न च भिन्नस्य प्रत्यक्षतो दोष उपलभ्यते। येन दोषनिर्घातार्थो होमः स्यात्। न च भिन्नमाधार-

---

१ न गुणा गुणार्था भवितुमर्हन्तीति पा०। २ उपकार्यस्य—होमोपकार्यस्येत्यर्थः। ३ प्रयोजकस्य—अपूर्वस्येत्यर्थः। ४ निमित्ततादर्थ्ययोरिति—निमित्तशब्देनानुष्ठापकमुच्यते, तादर्थ्यशब्देन च फलं, एवं च यत्र तयोर्नित्यत्वं तत्र नानयोरविरुद्धः संबन्ध इत्यर्थः। ५ तन्निमित्तं—पा०। ६ उपकार्यस्याभावात्–उपकार्यस्य भिन्नस्य नित्यमभावादित्यर्थः। ७ प्रयुञ्जानमिति—होमं प्रयुञ्जानमपूर्वमिति शेषः। ८ प्रयुञ्जानमिति—होममिति शेषः।

भिन्नस्याऽऽधारभावे हि न होमान्तरं विधीयेत । प्रधानस्यैव हि तदा भिन्नो गुण इति गम्यते । तत्राऽऽहवनीयसंयोगो बाध्येत । वचनाद्विकल्प इति चेन्न । निमित्तत्वेन संभवात् । होमस्य च श्रुत्या विहितत्वात् । यदा होमो विधीयते, तदा श्रुत्या । यदा भिन्नो गुणस्तदा वाक्येन । तस्मान्नाऽऽधारो भिन्नः । यदुच्येत, निमित्तपक्षेऽपि न होमान्तरं, प्रकृतस्यैव होमस्य निमित्तं विधीयेतेति । तन्न । अनुपादीयमानं हि निमित्तमित्युच्यते । यदि हि विधीयेत, निमित्तमेव तन्न स्यात् । यदि च यस्यापि निमित्तं सोऽप्युद्दिश्येत, तत्र द्वयोरुद्दिश्यमानयोः संबन्ध एव न स्यात् । न चात्र भेदनं कुर्यादिति विधीयते । भेदने निर्वृत्ते यदन्यच्छ्रूयते, तद्विधीयते ॥ १३ ॥

त्वेनोपदिश्यते । श्रुतिसंभवमात्रेणोपन्यस्यते । संभवति हि सप्तमी निमित्ते, आधारे च । आधारः सत्नाग्न्यादीनां स्यात् । तेषामेव विपरिवर्तमानत्वात् , नाङ्गानाम् । न च कर्मान्तरम् । आहवनीयसंयोगो बाध्येतेति । पाक्षिकं बाधमाह, न नित्यं बाधमभिप्रेत्याऽऽह । वचनाद्विकल्प इति चेत् । अयुक्तोऽयं विकल्पः । भिन्नस्य प्रकरणसंबन्धात् । आहवनीयस्य चानारभ्याधीतत्वात् । तद्यथा पाञ्चदश्येन साप्तदश्यं बाध्यते, एवमिहापि । किं चाऽऽहवनीयस्यान्यत्र[1] कृतार्थत्वाद्भिन्नस्य त्वन्यत्रानवकाशत्वात्तदुपमर्देनैव[2] निवेशः । तस्माद्विकल्पाभिधानमभ्युपेत्यवादेन ।

केचिदाहुः । युक्त एवायं विकल्पः । उभयोर्वाक्येन जुहोतिसंबन्धात् । न प्रकरणात्किंचिदभ्यधिकम् । तत्र सामिधेनीसंबन्धे[3], आनर्थक्यादपूर्वसंबन्ध एषितव्यः । तत्रैकस्य प्रकरणेन क्लृप्तः, इतरस्य कल्प्य इति विप्रकर्षात्पाञ्चदश्येन साप्तदश्यं बाध्यते । कृतार्थत्वात्[4] । तदर्थत्वे च न शास्त्रं नियमेन कारणम् । अनुग्राह्यत्वाच्छास्त्रस्य[5] । प्रमाणाद्यस्य बाधो गम्यते स बाध्यते । इह जुहोतिशब्दः समानः, अधिकरणविभक्तिश्च सप्तमी । तस्माद्विकल्पः ।

ननु 'पदे जुहोति' इत्यत्र तुल्यत्वान्नाऽऽहवनीयबाधः । उच्यते । उत्पत्तिवाक्यशिष्टेन वाक्यान्तरशिष्टं बाध्यते । पदं चोत्पत्तिवाक्यशिष्टम् । किं च होमेनाऽऽधारस्यानपेक्षितत्वाद्वाक्येनासौ नीयमानो ये शुद्धा होमास्ताननूद्याऽऽहवनीय आधारो विधीयते, न य आधारकलुषिताः ॥ १३ ॥

१ अन्यत्र—होमान्तरेषु । २ तदुपमर्देनैवेति—आहवनीयस्यैकान्ततो बाधेनैवेत्यर्थः । ३ सामिधेनीसंबन्धे—पाञ्चदश्यादेः सामिधेनीमात्रसंबन्धे । ४ कृतार्थत्वादिति—विकृतिषु कृतार्थत्वान्न साप्तदश्यशास्त्रमनर्थकमिति भावः । ५ अनुग्राह्यत्वादिति–शास्त्रमनुग्राह्यमिति न कोऽपि यतते । अपि तु समीहितप्राप्तये । अतो साप्तदश्यस्य विकृत्यर्थत्वे च शास्त्रं न कारणमिति तस्य प्रकृतिसंबन्धबाधवद्विकृतिसंबन्धोऽपि प्रमाणबलादेव, न शास्त्रानुग्रहार्थं इत्याशयः ।

भेदार्थमिति चेत् ॥ १४ ॥

अथोच्येत, एवमुपायं तत्कपालं संधीयते । गायत्र्या त्वा शताक्षरया संदधीतेति तत्कपालं संदध्यामिति । तत्र वक्ष्यामः ॥ १४ ॥

नाशेषभूतत्वात् ॥ १५॥

न भेदनस्य शेषभूतं युज्यते, न तत्संधातुं शक्यते होमेन मन्त्रेण वा । मृदाऽपि संधीयमानस्य भिन्नबुद्धिर्नैवापेयात् ॥ १५ ॥

अनर्थकश्च सर्वनाशे स्यात् ॥ १६ ॥

सर्वनाशे च श्रूयते, भिन्नं कपालमप्सु प्रहरतीति । तत्रानर्थकः संस्कारः । ननु तत उद्धृत्योपधायिष्यते । नेति ब्रूमः । अन्यदुपदधातीति ह्यामनन्ति । तस्मान्नैमित्तिकं कर्माङ्गं, भिन्ने जुहोतीति ॥ १६ ।

( सर्वपुरोडाशक्षामे प्रायश्चित्ताधिकरणम् ॥ ९ ॥ )

[५] क्षामे तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वात् ॥ १७ ॥ सि०

दर्शपूर्णमासयोः श्रूयते—अथ यस्य पुरोडाशौ क्षायतस्तं यज्ञं वरुणो गृह्णाति । यदा तद्धविः संतिष्ठेत, अथ तदेव हविर्निर्वपेत् । यज्ञो हि यज्ञस्य प्रायश्चित्तिरिति । तत्र संदेहः । किं सर्वक्षामे प्रायश्चित्तमुतैकदेशक्षाम इति । किं प्राप्तम् । प्राप्तनिमित्तत्वात्कृत्स्ने वैकदेशे वा । एवं प्राप्ते ब्रूमः । क्षामे तु सर्वदाहे स्यादिति । तुशब्दः पक्षं व्यावर्तयति, क्षामे सर्वदाहे प्रायश्चित्तं स्यात् । कुतः । एकदेशस्यावर्जनीयत्वात् । न शक्यत एकदेशक्षामो वर्जयितुम् । नियतमग्निसंयोगे दाह्यस्य सूक्ष्मा अवयवाः क्षीयन्ते । तप्तेषु च कपालेष्वधः पाकार्थं पुरोडाशोऽधिश्रीयते, उपरि चाङ्गारा अभ्युह्यन्ते । तदवर्जनीयम् । निमित्तत्वेनापि श्रूयमाणं नित्यमेव स्यात् । तत्र यस्येति निमित्तश्रवणमविवक्षितं स्यात् । तस्मात्सर्वक्षामे प्रायश्चित्तमिति ॥ १७ ॥

[ १४ ॥ १९ ॥ १६ ॥ १७ ॥

१ गायत्र्या संदधीत–इति पा० । २ कपालं संदध्यामिति पा० । ३ शेषभूतत्वादिति मुद्रितपुस्तकेषु पाठः । ४ प्रवहन्तीति पा० । ५ निमित्तत्वात् । इति पा० । ६ न शक्य इति पा० । ७ नियमेनाग्निसंयोगे ह्यस्य सूक्ष्मा इति पा० ।

दर्शनाद्वैकदेशे स्यात् ॥ १८ ॥

न चैतदस्ति, सर्वदाहे प्रायश्चित्तमिति, एकदेशे क्षायति भवितुमर्हति। निमित्तं ह्युपसंप्राप्तं क्षाणं नाम। एकदेशक्षाणमपि क्षाणमेव। यदि तत्र न क्रियते, श्रुतं न क्रियेत। न चैतद्युक्तम्। अपि च दर्शयति, यदा तद्धविः संतिष्ठते, अथ तदेव हविर्निर्वपेदिति, तेनैव हविषा संस्थानं दर्शयति। तत्सर्वक्षाणे नावकल्पते। तस्मादेकदेश एव क्षायति प्रायश्चित्तमिति ॥ १८ ॥

अन्येन वैतच्छास्त्राद्धि कारणप्राप्तिः ॥ १९ ॥

वाशब्दः पक्षं व्यावर्तयति। न चैतदस्ति, यदुक्तमेकदेशे क्षायति प्रायश्चित्तमिति। किं तर्हि। कृत्स्नक्षाम एव प्रायश्चित्तम्। उपसंप्राप्तं हि निमित्तं यच्छास्त्रोक्तं, पुरोडाशो क्षायत इति। कृत्स्नस्य क्षतिर्नावयवस्य। न चैकदेशक्षामे। तस्यावर्जनीयत्वात्। अथ यदुक्तं, क्षामेण हविषा समाप्तिर्दृश्यते, यदा तद्धविः संतिष्ठेतेति। उच्यते। संस्थाने निमित्ते प्रायश्चित्तम्। यदाऽप्यन्येनापि हविषा तत्संस्थाप्यते, तदाऽपि प्रायश्चित्तमिति न दोषः ॥ १९ ॥

तद्धविःशब्दान्नेति चेत् ॥ २० ॥

एवं चेदुच्यते, अन्येन हविषा यदा संस्थाप्यत इति। नैवम्। तद्धविःशब्दात्। तद्धविःशब्दोऽत्र भवति। यदा तद्धविः संतिष्ठेतेति। अत्रान्येन हविषा संस्थाप्यमाने तद्धविःशब्दो नावकल्प्येतेति ॥२०॥

स्यादन्यायत्वादिज्यागामी हविःशब्दस्तल्लिङ्गसंयोगात् ॥२१॥

स्यादिज्यगामी हविःशब्दः। तद्धविः संतिष्ठेत तद्धविष्कं कर्म संतिष्ठेतेति। ननु मुख्याभावे गौणो गृह्यते, नान्यथेति। उच्यते। मुख्याभाव एवायम्। कथम्। यदा संतिष्ठेत तत्कर्म, तेन हविषेति वाक्यं भिद्येत। अवाचकं च स्यात्। कर्मैव हि संतिष्ठते, न हविः। तेन संस्थानं निमित्तम्। तद्धविरित्यनुवादः। अनुवादश्चेदन्यहविष्केऽपि कर्मणि संस्थिते प्रायश्चित्तमिति गम्यते। कथं पुनर्हविःशब्दः कर्मणि वर्तेत इति। तल्लिङ्गसंयोगात्। हविःसंबद्धं कर्म हविःशब्देन हविःसंबन्धादवगम्यते। यथा प्रसह्यकारितया देवदत्तसंबद्धया लक्ष्यते सिंहः। एवं हविषाऽपि कर्म लक्ष्यते। तस्मात्कृत्स्नक्षामे प्रायश्चित्तमिति ॥२१॥

१८ ॥ १९ ॥ २० ॥ २१ ॥ ]

१ ह्युभयं प्राप्तमिति पा०। २ एकदेशेऽपीति पा०।

( हविरार्त्यधिकरणम् ॥ ६ ॥ )

## [ ६ ] यथाश्रुतीति चेत् ॥ २२ ॥ पू०

**दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति श्रूयते। तत्रेदमस्ति वचनं, यस्योभयं हविरार्तिमार्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदिति। तत्र संदेहः। किमुभयस्मिन्नार्ते पञ्चशरावो निर्वप्तव्य उतान्यतरस्मिन्निति। किं प्राप्तम्। इति चेत्पश्यसि, एवंजातीयक एकस्याऽऽर्ताविति। तत्र ब्रूमः। उभयोरिति। कुतः। यथाश्रुति भवितुमर्हति। यद्यच्छ्रूयते, तदवगम्यते। उभयोश्चाऽऽर्तौ श्रूयते। श्रूयमाणं च विवक्षितुं न्याय्यम्।**

---

प्रत्ययः प्रातिपदिकार्थमवश्यमुच्चारणीयः। न केवलं प्रातिपदिकं स्वार्थे वर्तते। इहोभयस्य नान्यदुच्चारणे प्रयोजनमस्ति। तस्माद्विवक्षितम्। अपर आहुः। द्वितीयया तादर्थ्ये प्रतिपादिते संमार्गः कथं विनियुज्यत इति, किं ग्रहमात्र उतैकस्मिन्निति। इह किमुभयेनाधिक्रियते, उतैकेनापीति। द्वितीया संमार्गस्य तादर्थ्यं प्रतिपादयन्ती किं ग्रहमात्रे प्रतिपादयति, उतैकस्य। तस्मात्तत्र शेषभावः। इहाधिकारश्चिन्त्यते। एवं कैश्चिदपुनरुक्ततोक्ता।

सा चेयमयुक्ता। कथम्। ' यस्य पुरोडाशौ क्षायतः ' इतीदमप्यत्रोदाहरणम्। तत्रापि न विभक्तेर्वचनमेवैकं प्रयोजनमिति द्वित्वाविवक्षा। न वाऽस्य प्रसादात्तत्राविवक्षा। उपचयत्वेन तत्रायमायातः। इत्थं विनियुज्यते, इत्थमधिकार इति विकल्पमात्रम्।

तस्मादन्यथा वर्ण्यते। निमित्तमात्रं चिन्त्यते। तच्चोद्दिश्यते। उद्दिश्यमानस्य च विशेषणमविवक्षितमिति स्थितमेव। उभयपदं किं निमित्तसंनिपाति, उत नेति। पूर्वपक्षवादी मन्यते। यथाऽऽर्तिहविषोः श्रवणात्तयोरभावे नास्ति निमित्तमेवमुभयपदश्र-

---

१ अन्यदिति—हविर्विशेषणत्वादन्यदित्यर्थः। २ एकस्येति—इति तत्र चिन्तेति पूरणम्। ३ एवं तावत्प्रकारद्वयेन, ग्रहैकत्वाधिकरणेनास्याधिकरणस्यापौनरुक्त्ये कैश्चिदुक्ते तत्राऽऽद्यप्रकारं तावद्दूषयति—सा चेयमित्यादिना। ४ न वाऽस्येति—ग्रहैकत्वाधिकरणे विशेषणाविवक्षायां, न च विभक्तेर्वचनमेकं प्रयोजनमित्यस्य प्रसाद एव मुख्यो हेतुः, अपि त्वभ्युच्चयमात्रत्वेनायं तत्रोपात्तः। य एव तु मुख्यो हेतुर्वाक्यभेदरूपः सोऽत्राप्यविशिष्ट इति तावन्मात्रेण पौनरुक्त्यपरिहारोऽशक्य एवेति हृदयम्। ५ ( अ० ३ पा० १ अ० ७ ) इत्यत्रेति शेषः। ६ उभयपदमिति—उभयार्तिर्निमित्तमुत हविरार्तिरिति प्रकृतचिन्ता, ग्रहैकत्वाधिकरणे तु ग्रहे विशेषणमेकत्वं संभवति नेति। अतो नानयोरधिकरणयोः पौनरुक्त्यमित्याकूतम्।

इतरथा यावदेव हविरिति तावदेवोभयं हविरिति स्यात् । तस्मादुभयोरार्त्यां पञ्चशराव इति ॥ २२ ॥

न तल्लक्षणत्वादुपपातो हि कारणम् ॥ २३ ॥ सि०

नैतदेवम्[1]। उपपातो हि, आर्तिसंबद्धं द्रव्यं, तत्कारणम् । तस्य लक्षणं हविरार्तिः । तद्व्यस्तं समस्तं च निमित्तम् । न ह्युभयशब्देन शक्यं विशेष्टुम् । विशेष्यमाणे हि वाक्यं भिद्येत, हविष आर्तौ पञ्चशरावः । स चोभयस्य हविष इति ।

आह । यदि विशेषणं न मृष्यते, हविषाऽपि ते विशेषणं न प्राप्नोति । तदभिधीयते । मृष्यामहे हविषा विशेषणम् । अविशेष्यमाणेऽनर्थकं स्यात् । यस्याऽऽर्तिमार्छेदित्यविशेषे यत्किंचिदिति गम्यते । तत्र सर्वस्यैव किंचिदार्तिमृच्छति । अन्ततश्चरितं निमिषितं चिन्तितमिति । तत्र यस्येति निमित्तवचनं नित्येऽनुपपन्नं गम्येत । तस्मादवश्यमार्तिर्विशे-

षणात्तदभावे नास्ति निमित्तम् । अथवा——यस्येत्यस्मात्सामान्येन बुद्धावुपजातायां किं यस्य, तत आह——उभयमिति । किमुभयमिति, हविरित्युक्तेऽनिराकाङ्क्षत्वादार्छतावुच्चरिते निमित्तप्रत्ययो निराकाङ्क्षी भवति । अतः सर्वं विवक्षितम् ॥ २२ ॥

नैमित्तिकप्रयोगवचनो यथैव पञ्चशरावमपेक्षत आत्मसिद्ध्यर्थमेवं निमित्तमपि । तत्र यन्निमित्तासंनिपाति, तदनपेक्षितत्वादविवक्षितम् । उभयमिति चासंनिपाति । कथम् । 'यस्य हविरार्तिमार्छेत्' इत्येतावति निमित्तप्रत्यये जाते नैमित्तिकेन गृहीतेऽन्यस्यानपेक्षितत्वादविवक्षा । 'हविरार्तिमार्छेत्' इत्यनूद्य पञ्चशरावो विधीयते, तच्चोभयमित्युभयं[2], ततो वाक्यभेदो ग्रहैकत्वन्यायेन[3] ।

आह—विशेषणं यदि न मृष्यत इति। यद्युभयशब्दस्याऽऽर्छतिना संबन्धो नेष्यते हविषोऽपि मा भूत्संबन्ध इति, विशेषणशब्देन संबन्धमभिधत्ते । क्रियान्यपदगणो निमित्तत्वं प्रतिपद्यत इति विवेकमगृहीत्वा चोद्यते । मृष्यामहे हविषा विशेषणमिति । हविरार्तिसंबन्धादृते निमित्तप्रत्ययाभावो[4] हविर्विशेषणमिति । परपक्ष उभयथा निराक्रियत इति हविर्विशेषणं ब्रवीति ।

१ नैतदेवमुभयार्तौ । किं तर्हि । आर्तिसंबद्धं द्रव्यमिति पा० । २ तच्चोभयमिति—तच्च हविरुभयमिति हविरनुवादेनोभयं विधीयते, ततो हविःशब्दस्य विधिप्रत्ययस्य चाऽऽवृत्तेर्वाक्यभेदः स्यादित्यर्थः । ३ ( अ० ३ पा० १ अ० ७ ) अन्तर्येनेति शेषः । ४ निमित्तप्रत्ययाभाव इति—युक्तः, अत इत्यध्याहारेण पूरणम् ।

इष्या। सा च हविषा विशेष्यते। तथा हविरार्तिसंबन्धनिर्वृत्तिनिमित्तं पञ्चशरावस्य। शक्नोति हि श्रुत्या तं संबन्धं वक्तुम्। हविरुभयसंबन्धं तु वाक्येन ब्रूयात्। दुर्बलं च वाक्यं श्रुतेः।

ननु हविरार्तिसंबन्धोऽपि वाक्येनैव। उच्यते। आर्तिनिर्वृत्तिरपि तत्र गम्यते। सा च श्रुत्या। हविरुभयसंबन्धेऽत्यन्तं श्रुतिरेव हीयते। तस्मान्न तत्संबन्धो निर्वर्त्यमानो निर्दिश्यत इति। कथं तर्ह्युभयशब्दः। उभयमिति नित्यानुवादः। एकस्मिन्नप्यार्तेऽपरस्मिन्नपि। तस्मादुक्तं, यस्योभयं हविरार्तिमार्च्छेदिति।

अथ कस्मान्न पदद्वयविशिष्टाऽऽर्तिर्निमित्तं प्रतीयत इति, यस्योभयगुणविशिष्टं हविरार्तिमार्च्छेदिति। अत्रोच्यते। कथं तावद्भवान् मन्यते—विशिष्टेनार्थेन विशिष्टाऽऽर्तिर्निमित्तमिति। आह।

परमार्थतस्त्वार्तिरेव हविषो विशेषणम्। तथा हविरार्तिसंबन्धनिर्वृत्तिर्निमित्तं पञ्चशरावस्य। शक्नोति हि श्रुत्या तत्संबन्धं वक्तुं, हविरुभयसंबन्धं तु वाक्येन ब्रूयात्। कर्तव्यतावचनो यस्मात्परः श्रूयते तस्यैव कर्तव्यतामाह। सा च कारकैर्विना नाऽऽत्मानं प्रति लभत इति कारकेष्वपि व्याप्रियते। फलनिमित्ते क्रिययाऽऽकाङ्क्ष्येते इति ते प्रति क्रियां विदधाति। यद्धविषो विशेषणं तन्नासौ[1], न तत्साधनमिति प्रत्ययेन न परामृश्यते। एवं चेदार्तिविशिष्टेन हविषा निमित्तत्वस्य उपनायते। नैमित्तिकप्रयोगवचनेन तावन्मात्रस्यैवापेक्षितत्वात्। यदन्यत्पदान्तरमुदीक्ष्यते, तद्विलम्बितत्वाद्वाक्यम्।

अथवा—आर्च्छेदिति यस्मात्परः श्रुतस्तस्य निमित्तभावमाह। तत्र केवलश्रुतिपरिग्रहे निमित्तव्याघात इत्यार्च्छतिना हविषि विशेष्यमाणे श्रुतिर्न हीयते। यथा धात्वर्थेऽन्यत्र[2] विधीयमाने। हविरुभयसंबन्धे तु न धात्वर्थो विधीयते[3] न सोऽन्यत्र। तस्मादुभयपदं निमित्तकर्तव्यतावचनेन नापेक्षितं न नैमित्तिकेनातोऽविवक्षितम्। अथ कस्मान्न पदद्वयविशिष्टाऽऽर्तिर्निमित्तं प्रतीयत इति। यथा हविःशब्दाम्नानाद्विशेषणविशेष्यभावः परमार्थश्रुतित्यागेन, एवमुभयपदाम्नानाद्यादृशी श्रुतिस्तादृश्येव ग्राह्या। तस्मादार्त्यौ द्वे अपीतरेतरयुक्ते विशेष्येते। अथवा—आर्तिर्विशेषणमित्येवं विवेकमगृहीतवान्। कियत्तु गृहीतम्, आर्तिनिर्वृत्तिरपि तत्र गम्यत इति, तस्माद[4]ार्तिर्विशिष्टा तत्र

१ नासाविति—न क्रियेत्यर्थः। २ अन्यत्रेति—'व्रीहीन्प्रोक्षति' इत्यादावित्यर्थः। ३ न धात्वर्थो विधीयत इति—न धात्वर्थो निमित्ततयाऽभिधीयत इत्यर्थः। ४ तस्मादिति—पूर्वस्मात्सिद्धान्तग्रन्थादित्यर्थः।

विशिष्टार्थस्य संनिधानाद्विशिष्टोऽर्थ आर्तिसंनिहितः । किं पुनः स्यात्, यद्येवं भवेत् । तत उभयविशिष्टाऽऽर्तिर्निमित्तमिति गम्यते ।

अत्रोच्यते । इदं तावद्देवानांप्रियः प्रष्टव्यः । यस्यापि हि विशिष्टार्थ आर्तिसंनिहितो भवति, किं तस्याविशिष्टो दण्डैः पराणुद्यते । किमतो यत्र पराणुद्यते । एतदतो भवति । अविशिष्टगताऽप्यार्तिर्निमित्तं पञ्चशरावस्य भवति । ननूभयशब्दो हविर्विशेक्ष्यति । न । हविःशब्देनासंबध्यमानस्तत्र शक्नोति विशेष्टुम् । आनन्तर्यात्संभन्त्स्यते, तर्हि तथाऽपि न समर्थः । न ह्यसौ निवृत्तिं प्रयोजयति । आह । विशेषवचनत्वात्तन्निवर्तको भविष्यति । यथा शुक्ला गौरानीयतामित्येवमभिहिते न कृष्णामानयन्ति । शुक्लशब्द एनां गां कृष्णादिभ्यो निवर्तयति ।

उच्यते । विषम उपन्यासः । न तत्र गवाकृत्या द्रव्यं लक्षयित्वा तस्याऽऽनयनमुच्यते । तत्रापि चेदेवमभविष्यत्, नैवैनां शुक्लशब्दो व्यशेक्ष्यत । उभयविशेषणविशिष्टं तु तत्राऽऽनयनं प्रधानमुच्यते । इह पुनरार्तिहविष्लक्षिते द्रव्ये पञ्चशरावः कर्तव्यः । किं पुनः कारणम् । प्रधानभूत आख्यातार्थे संहत्य विशेषणं भवति, परार्थे पुनर्वियुज्येति । उच्यते । प्रधानभूते, आकृतिर्गुणो वा तत्संबन्धार्थमुच्यते, तत्रोभयविशेषणविशिष्ट एकस्माद्वाक्यादवगम्यते । तद्विशिष्टं च कृत्वा कृती भवति । अन्यतरविशिष्टं कुर्वन्नश्रुतं कुर्यात् । यत्र पुनराकृतिलक्षिते द्रव्य आख्यातार्थः कीर्त्यते, तत्र सर्वेष्वेव तज्जातीयेषूक्तो भवति । न तत्रैकस्मिन्निर्वृत्ते कृती मन्येत । अपरस्मिन्नपि ह्याकृतिलक्षिते तदुक्त-

---

निमित्तमिति । एवं चेद्यद्येकेन विशेष्यमाणाऽप्यार्तिनिर्वृत्तिरस्ति, एवं द्वितीयेनाप्यार्तिनिर्वृत्तिरस्त्येव, न श्रुतिर्हास्यते ।

अत्रोच्यते । इदं तावद्देवानांप्रियः प्रष्टव्य इत्यादिनाऽन्तर्णीताभिप्राय इदानीं प्रतिपादयति । कर्म, निमित्तं चोदिश्य धात्वर्थस्तत्र विधीयते । तद्विशेषणं न तत्क्रियाङ्गमित्यतस्तस्याविवक्षोक्ता । इहाऽऽर्तिविशिष्टं द्रव्यं निमित्तं, तद्व्यस्तमपि हविराकृतिलक्षितं समस्तमपि । तस्माद्यद्धविराकृतिकं तस्य तस्य निमित्तता शब्देन प्रतिपाद्यते ।

---

१ उभयार्थेन विशिष्टेति पा० । २ प्रत्याययतीति पा० । ३ कर्तव्य इति क्वचिन्नास्ति । ४ वियुज्येत पा० । ५ कृतमिति पा० । ६ कर्म—कर्मपदेन फलं संस्कार्यं च विवक्षितम् ।

मेव। तत्रोक्तम्, अप्रतिषिद्धं च किमिति न क्रियेत। आख्यातार्थे पुनः प्रधाने न तस्याऽऽकृतिलक्षितेन संबन्धः। तत्र तदाकृतिकान्तरेऽनुपसंह्रियमाणेऽपि कृतमेव प्रधानम्। सगुणं च प्रधानं भवति। न च किंचिच्छ्रुतं हीयेतेति। तस्मात्तत्र विशेषणं युक्तं, न त्विह तथा। इह हि हविराकृतिकस्य द्रव्यस्याऽऽर्तौ पञ्चशराव इत्युक्तम्। तन्न शक्यं विशेषवचनेन प्रतिषेधावाचकेन निवर्तयितुम्।

अपि चोभयशब्दे हविषा संबध्यमानेऽपि नैवोभयविशिष्टाऽऽर्तिः प्रतीयते। किं कारणम्। हविषोभयशब्दः संबध्यते, न, आर्तिमार्छेदित्यनेन पदेन। तत्र संनिहितेऽप्युभयशब्दे हविःशब्दस्य यावानर्थः, तावतैवाऽऽर्तिः संबध्यते। अविशिष्टश्च तत्रार्थः। तस्मान्नोभयविशिष्टाऽऽर्तिर्निमित्तमिति।

अथाऽऽर्त्याश्रयविभक्तियोगादुभयशब्दस्य, उभयविशिष्टाऽऽर्तिरित्युच्यते। तन्न। विभक्तिसंयोगो हि हविर्विशेषणमुभयशब्दं शक्नुयात्कर्तुं, समभिव्याहारात्। नाऽऽर्तिविशेषणम्। न ह्यस्याऽऽर्त्या हविर्वि-

---

यथा गौर्न पदा स्प्रष्टव्य इति यो यो गौः स स पदा न स्पृश्यते, एवमिहापि। अपि चोभयशब्दे हविषा संबध्यमानेऽपि नैवोभयविशिष्टाऽऽर्तिः प्रतीयतेति, 'ननूभयशब्दो हविर्विशेक्ष्यति' इत्यनेन गतार्थस्य किमर्थं पुनरुपन्यासः।

उच्यते। आर्त्या संबध्यमानो हविर्विशेक्ष्यतीत्युक्तम्। यथा शुक्लो गौरानीयतामिति गां संबध्यमानां शुक्लोऽर्थाद्विशेषयन्कृष्णादिनिवृत्तिं करोति। एवं दृष्टान्तदार्ष्टान्तिकयोस्तुल्यत्वे चोदिते, इतरो विवेकं कथयति। क्रियाप्राधान्ये तस्या विधीयमानत्वाद्विशेषणं विवक्षितम्। गुणभूतायां तु यत्प्रधानस्य विशेषणं तदविवक्षितम्। इह तु हविषा पूर्वं संबन्धमूरीकृत्य निराकरोति। आर्छेतिना हविः परामृश्यते, नोभयशब्दो विद्यमानोऽपि। अथाऽऽर्त्याश्रयविभक्तियोगादिति—अनेनैकविभक्तिमानन्तर्यमेकवाक्यत्वं चोपन्यस्यते। आर्तेर्हविराश्रयस्तत्र या विभक्तिः सेतरत्रापि। तस्माद्यथा

---

१ तस्यार्थ इति पा०। २ न ह्यस्य हविर्विशिष्टस्याऽऽर्त्या समभिव्याहारोऽस्ति पा०। ३ संबध्यमानामिति—आनयतिक्रिययेति शेषः। ४ दृष्टान्तदार्ष्टान्तिकयोस्तुल्यत्व इति—उपादेयोद्देश्यविशेषणयोस्तुल्यत्वे चोदित इति यावत्। ५ तदेवं पूर्वग्रन्थेन प्रथममार्त्या संबध्यमानस्योभयपदस्य पश्चाद्धविःसंबन्ध आशङ्क्य निरस्त इत्येवं भाष्याभिप्रायमुपवर्ण्याधुनाऽपि चेत्यादिभाष्याभिप्रायमाह—इह त्वित्यादिना।

शिष्टस्य समभिव्याहारोऽस्ति । अथोच्यते । असत्यपि समभिव्याहार आर्तिशब्दसंनिधानात्तद्विशिष्टैवाऽऽर्तिः प्रत्येष्यत इति । तन्न । असत्यां ह्याकाङ्क्षायां संनिधानमकारणं भवति । यथा, भार्या राज्ञः, पुरुषो देवदत्तस्येति । एकवाक्यगतत्वात्तद्विशिष्टं गम्यत इति चेत् । नैतदेवम् । एकस्मिन्नपि वाक्ये तदवयवभूतस्यानपेक्षितस्य नैव भवति संबन्धः । यथा, अश्वेन व्रजति, श्वेतेन पटेनाऽऽवृत इति, नानपेक्षितस्याश्वस्य श्वैत्यं विशेषणं भवति ।

अथोच्यते, आर्तिविशिष्टेन हविषोभयस्य संबन्ध इति । तदपि नोपपद्यते । न हि, आर्तिमार्छेदिति हविर्विशेषणत्वेनोपादीयते ।

---

विभक्त्या हविरुच्चार्यमाणं संबध्यते, तेनैवोभयमपि संभन्त्स्यते । यथा च मनसि विपरिवर्तमानयाऽऽर्त्या हविः संबध्यत एवमुभयमपि । विपरिवृत्तेस्तुल्यत्वात् । एकवाक्यगते चोभे अपि, आनर्थक्यादुभयशब्दस्य ।

यद्येवं मन्यस इत्युपन्यस्य परिहरति । एकविभक्तियोगाद्धविषा संबन्धः स्यान्नाऽऽर्त्या । यथा भार्यया संबध्यमानो राजाऽऽनन्तर्येऽपि न पुरुषेण संबध्यते, निराकाङ्क्षत्वात् , एवमुभयपदम् । यथा श्वैत्यं पटेन संबध्यमानमेकवाक्यत्वेऽपि नाश्वविशेषणं, तेनानपेक्षितत्वात् । एवं हविष आर्त्या संबद्धत्वादुभयपदस्य नाऽऽर्छतिना संबन्ध इति । तद्[3]युक्तम् । अनेन वाक्येन संबन्धित्वेनावधृतत्वात् । अपि चोभयशब्दोऽपि हविषा संबध्यते, न हविःस्वरूपेण । किंतु येनाऽऽर्तेराश्रयो हविः । तस्मादार्त्याऽनुरक्तेन हविषा संबध्यते । यथा व्रीहिषु प्रोक्षणमपूर्वीयांशेन । एवं चेदुभयविशिष्टाऽऽर्तिरिति युक्तम् ।

उच्यते । तत्र प्रकरणादपूर्वीयांशता शक्या लक्षयितुं, व्रीहिस्वरूप आनर्थक्यात् । इह तु प्रकरणस्थानीयस्याभावादशक्या लक्षणा । पूर्वमार्छतिना संबन्धस्ततस्तदनुरक्तस्योभयेनेति, [4]एवं च लक्षणा भवेत् । एवं च हविषो द्विरुच्चारणाद्वाक्यभेदः । एवमार्त्यनुरागे निराकृते, अथोच्येताऽऽर्तिविशिष्टेन हविषोभयस्य संबन्धः—इत्यनेन ग्रन्थेनानुरक्तेन हविषा संबन्धः कस्मान्न भवतीति । एवं च पूर्वदोषद्वयं परिहृतं भवति, नाऽऽर्छतिना संबन्धः शुद्धेन हविषेति । इतर आह—नाऽऽर्छेदिति हविर्विशेषणत्वे-

---

१ उभयशब्दस्य० पा० । २ उभे इति—आर्तिरुभयत्वं चेत्यर्थः । ३ तदयुक्तमिति—यदेतदधुना हविःसंबन्धनिराकाङ्क्षस्योभयपदस्य, नाऽऽर्छतिना संबन्ध इत्युक्तं तदयुक्तमित्यर्थः । ४ एवं चेति—पूर्वोक्तप्रकारेण भवन्ती लक्षणा भवेदित्यर्थः ।

किं तर्हि । पञ्चशरावस्य निमित्तत्वेन । हविरार्तेरुभयपञ्चशराव- संबन्धे यौगपद्येनाभ्युपगम्यमाने वाक्यं भिद्येत । अथ हविराकृतिलक्षि- तेन संबद्धमार्छेदिति पुनर्हविर्विशिष्टेनोभयशब्देन संबध्येत । तथाऽपि वाक्यं भिद्येत । तस्मान्नोभयविशिष्टाऽऽर्तिर्निमित्तम् । आह । यथैवाऽऽ- ख्यातार्थप्राधान्य उभयविशेषणविशिष्टोच्यत इति नान्यतरविशिष्टा निमित्तं गम्यते, एवमितरस्मिन्नपि पक्ष उभयविशेषणविशिष्टा सोच्यत इति । यद्यपि स्वेनाऽऽत्मनाऽविशिष्टा, तथाऽप्यन्यतरविशिष्टा भवन्ती न निमित्तं भवितुमर्हतीति, को वा विशेष इति । तदभिधीयते । मत्पक्ष उपादेयत्वेन विशेषणद्वयं, त्वत्पक्षे पुनर्लक्षणत्वेन ।

आह । किमतो यल्लक्षणत्वेन । उच्यते । एतदतो भवति । हविराकृत्या लक्ष्यते द्रव्यं, तस्य किंचिद्वक्तव्यमिति । तदलक्षितमुच्यमानं न विज्ञायेत कस्य स्यादिति । अथवा सर्वस्यैव द्रव्यस्येति गम्येत । तस्मिन्नुभयस्मिन्नपि निर्दिष्टे सति तस्याऽऽश्रयं लक्षयितुं हविराकृ- तिरुच्यते । तत्र द्वयमापतति । यद्धविराकृतिकं तदार्तमिति, यद्वा यद्धविराकृतिकं, तदुभयमिति । यदि तावद्यद्धविराकृतिकं

---

नोपादीयत इति ।

नन्वेतदयुक्तम् । आर्तिर्हि विशेषयन्ती निमित्ततां प्रतिपद्यते । विपरीते विशेषण- विशेष्यभावेऽवश्यंभावित्वादार्तेर्नित्यत्वप्रसङ्गान्निमित्तत्वव्याघातः ।

उच्यते । नायं हविर्विशेषणत्वनिराकरणपरः । किं तर्हि । परमताभिप्रायेण, हविर्न विशेषयति । कथं तूभयपदेन हविः संबध्येतेत्यनेनांशेन विशेषयति । अथ हविराकृति- लक्षितेन संबद्धम् । उभयमित्यध्याहारः । अस्मिन्पक्षे हविर्विशेषणमुभयं विशेष्यं, तदुत्तरकालं हविरनुरक्तमुभयमार्छतिना संबध्यते । एवमपि स एव वाक्यभेदः । तत्र वचनव्यक्तीरुपन्यस्यन्नाख्यातस्य गुणप्रधानविवेकमाह । प्रधानभूत आख्याते विशेषणं विवक्षितं, गुणभूतेऽविवक्षितं, शब्दवृत्तेनाविधीयमानं परार्थमुच्चार्यते । तेनायमर्थः । यत्राऽऽख्यातार्थः स्वविधानार्थमुच्चार्यते, तत्र विवक्षितं विशेषणम् । यत्र परविधानार्थ- मुच्चार्यते, यथा 'दध्ना जुहोति' इति दधिसंबन्धविधानार्थं होम उच्चार्यते, तत्र द्वितीय- पदसंबन्धो नास्ति । वाक्यभेदप्रसङ्गात् ।

---

१ उभयविशिष्टा—पा० । २ तदुच्यते—पा० । ३ प्यविशिष्टे पा० । ४ प्रधानभूते—विधेयभूते । ५ अभिधीयमानं—पा० ।

तदार्तमित्यपेक्ष्यते, ततो हविराकृतिकमुभयमनुभयं वाऽऽर्ते निमित्तं गम्यते ।

अथ यद्धविराकृतिकं तदुभयमिति ततो नाऽऽर्तिर्हविषा विशेष्यते । हविषाऽविशेष्यमाणायामार्तावुभयशब्दो हविर्विशेष्यतीति नैतदवकल्पते । कथमिति । एवं किल विशेष्येत, यद्धविराकृतिकमुभयमिति । तत्र पुनर्वक्तव्यं यद्धविराकृतिकमुभयं, तच्चेदार्तमिति । कथं तेन विशिष्टेनाऽऽर्तिः संबध्येतेति । पुनश्चोभयहविःशब्दावार्तिविशेषणार्थमुच्चार्येयाताम् । अथ पुनरुच्चारणं न क्रियते । तथा यद्यपि हविःशब्दस्तन्त्रेणाऽऽर्त्युभयाश्रयलक्षणत्वे नोच्चार्येत । तथाऽप्यविशिष्टमार्तेर्लक्षणं स्यात्, अविशिष्टमुभयस्य । विशिष्ट इष्टे पुनरुच्चारणं कर्तव्यम् । तत्र वाक्यभेदः । एवमुभयशब्दो यद्यार्छतिना संबध्येत, न हविर्विशिष्टं स्यात् । तत्राविशिष्टस्य हविष आर्तिर्निमित्तं स्यात् । अथ हविःशब्देन संबध्येत, पुनरार्तिसंबन्धार्थं हविःशब्दसहितमुच्चार्येत। तच्चेदिति वा सर्वनाम्ना निर्दिश्येत । तत्र स एव वाक्यभेदः ।

उपादेयत्वे पुनर्नान्योन्यविशेषणत्वेन प्रयोजनम् । द्वयमप्यार्तिं विशेष्टुमुच्चार्येत । तत्र नान्यतरविशिष्टाऽऽर्तिर्निमित्तं भविष्यति । लक्षणत्वे त्वन्यतरविशिष्टा भवतीत्येष विशेषः ।

अपि च, सर्वस्यैव पदस्य पदान्तरसंबन्धे सति च, शब्दादृते तृतीयेन पदेन सत्यां गतौ संनिहितेनापि संबन्धो न युक्तः । न हि भवति, भार्या राज्ञः, पुरुषो देवदत्तस्येत्यत्र राजा पुरुषविशेषणम् । असत्यां तु गतावुपादेयस्यानेकस्यापि प्रधानेन संबन्धोऽवकल्पते व्यवहितेनापि। व्यवधानादर्थो बलीयानिति । लक्षणत्वे तु लक्षणद्वयसंनिपातेऽवश्यं हेयेऽन्यतरस्मिन्, व्यवहितो गुणो वा हातव्यो भवति ॥ २३ ॥

---

एवं विवेके कथिते वचनव्यक्तय उपन्यस्यन्ते । प्रथमं हविःशब्दस्तन्त्र्यते । एवमुभयशब्दो यद्यार्छतिना संबध्यते, न हविर्विशिष्टं स्यादित्यनेनाऽऽर्तिपदं तन्त्र्यते । अथ हविःशब्देन संबध्यत इति— उभयमित्यध्याहृत्योभयशब्दस्तन्त्र्यते । ततो दोषो वाजपेयाधिकरणोक्तः ॥ २३ ॥

---

१ न पुनश्च–पा० । २ लक्षणार्थे नोच्चार्येत–पा० । ३ लक्षणार्थे नोच्चार्येत–पा० । ४ ( अ० १ पा० ४ अ० ५ ) इत्यत्रोक्त आवृत्तिलक्षणो वाक्यभेदरूपो दोषः प्रसज्यत इत्यर्थः ।

( होमाभिषवोभयकर्तुर्भक्षणाधिकरणम् ॥ ७ ॥ )

## [ ७ ] होमाभिषवभक्षणं च तद्वत् ॥ २४ ॥ पू०

ज्योतिष्टोमे श्रूयते, हविर्धाने ग्रावभिरभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि ( भक्षान् ) भक्षयन्तीति । तत्रान्येन वचनेनाभिषव उक्तो यजतिना होमः । तौ तावन्न विधीयेते । न च तयोः क्रमः । अर्थादेव हि स प्राप्तः । तस्मादेककर्तृकं होमाभिषवाभ्यां भक्षणं विधीयते । अभिषवे कृते होमे च तत्कर्तृभिर्भक्षणं कर्तव्यमिति । तत्र एष संदेहः । किमुभयं यः कुर्यात्स एव भक्षयेदुतान्यतरेणापि भक्षणमिति । किं प्राप्तम् । होमाभिषवभक्षणं च तद्वत् । तद्वदेव स्यात्, यद्वद्विष आर्तिः । कथम् । नैतदेवं संबध्यते, अभिषुत्य ततो हुत्वा ततो भक्षयेदिति । नानेनाभिषवस्य होमस्य च क्रमः कीर्त्यते, अभिषुत्य ये जुह्वति, ते भक्षयन्तीति । वाक्यं ह्येवं भिद्येत । अभिषुत्य भक्षयन्ति, हुत्वा भक्षयन्तीति । तस्माद्धोमाभिषवयोः परस्परेण संबन्धो नास्तीत्येकेनापि भक्षणं संबध्येत । अपरेणापि, अभिषुत्य भक्षयन्तीति । तस्मादन्यतरेण निमित्तेन भक्षणं भवतीति ॥ २४ ॥

---

सत्यपि पदार्थाभिधाने[1] होमाभिषवयोः क्रमो न विधीयते, अर्थप्राप्तत्वात् । ननु यागहोमयोर्भिन्नत्वाद्धोमो विधीयते । उच्यते । वाक्यान्तरेण[2] विहितत्वादविधेयः । ' सदसि भक्षान्भक्षयन्ति ' इत्यप्यविधेयम् । अर्थप्राप्तत्वाद्देशस्य । प्रत्यक्त्वमपि[3] । होमोत्तरकालं भक्षणं, होमोत्तरकालं प्रत्यगागमनम् । उभयस्य क्रमो न विधीयते । भक्षोऽभिषवकर्तुर्होमकर्तुश्च विधीयते । कर्तृसंस्कारत्वाद्भक्षस्य, साहित्यमविवक्षितम् । ननु ' अभिषुत्य ' इति साकाङ्क्षत्वादुत्तरेण क्त्वान्तेन सह संबध्यते । एवं चेदुभयविशिष्टेन कर्त्रा संबन्धाद्भक्षस्य नैकक्रियाकर्तुर्भक्षः ।

उच्यते । नास्ति क्त्वान्तानां परस्परसंबन्धः । कुतः । यस्मादभिषुत्येति साकाङ्क्षम् । उत्तरमपि क्त्वान्तत्वादेव साकाङ्क्षम् । तस्मान्निराकाङ्क्षीकरणसमर्थं तदभिलषति । सर्वान्त्येन संबन्धः । एवं चेदभिषुत्य हुत्वा भक्षयन्तीति नास्ति संबन्धः । प्रत्येकेन संबन्धे क्रियमाणे वाक्यभेदः ॥ २४ ॥

---

१ पदार्थाविधाने—पा० । २ वाक्यान्तरेणेति—' प्रहुंर्जुहोति ' इति वाक्यान्तरेणेत्यर्थः, भाष्यस्ययजतिपदं वाक्यान्तरोपलक्षणमित्याशयः । ३ प्रत्यक्त्वमपि—अर्थप्राप्तत्वादविधेयमित्यनुषङ्गः ।

उभाभ्यां वा न हि तयोर्धर्मशास्त्रम् ॥ २५ ॥ सि०

उभाभ्यां वा निमित्ताभ्यां भक्षयेत् । न भक्षणं होमाभिषवयोर्धर्मो विधीयते । किं हि स्यात् । यदि तयोर्धर्मो विधीयेत ततो होमाभिषवौ प्रधानमिति भक्षणं गुणः, प्रतिप्रधानं भिद्येत । अथ पुनरुभाभ्यां निमित्ताभ्यां भक्षणं विधीयते । तस्मिन् विहित एकोऽर्थो विहितो भवति । तेनैकं वाक्यम् । तदेतावति पर्यवसितं भवति, अभिषुत्य हुत्वा भक्षयन्तीति । तत्रैतदवान्तरं वाक्यं, हुत्वा भक्षयन्तीति । न च महावाक्ये सति, अवान्तरवाक्यं प्रमाणं भवति । पदान्तरस्य बाधनात् । यथा, नोद्यन्तमादित्यमीक्षेतेति प्रतिषेधो गम्यते महावाक्यात्, अवान्तरवाक्यादीक्षणविधानम् । तस्मादन्यतरनिमित्तं भक्षणमश्रुतम् । महावाक्यादिदमवगम्यते द्वे निमित्ते भक्षणस्येति । भक्षणं चान्यथा कुर्वञ्छ्रुतं परित्यजेत् । तस्मादुभाभ्यां निमित्ताभ्यां भक्षणमिति ॥ २५ ॥

( उभयाग्निनाशे पुनराधानरूपप्रायश्चित्ताधिकरणम् ॥ ८ ॥ )

[ ८ ] पुनराधेयमोदनवत् ॥ २६ ॥ पू०

अग्निहोत्रे श्रूयते, यस्योभावग्नी अनुगतौ, अभिनिम्लोचेत्, यस्य वाऽभ्युदियात्पुनराधेयमेव तस्य प्रायश्चित्तिरिति । तत्र संदेहः । किमन्यतरानुगमने पुनराधेयमुतोभयानुगमन इति । किं प्राप्तम् । पुनराधेयमोदनवत्स्यात् । यथा पञ्चशरावोऽन्यतरस्याऽऽर्तौ भवति, एवं पुनराधेयमन्यतरानुगमने भवितुमर्हति, वाक्यभेदप्रसङ्गादिति । यथा, इह यक्ष्ये, इह सुकृतं करिष्यामीत्येवमेवाभिसंबन्ध इति ॥ २६ ॥

---

भक्षस्य द्रव्यसंस्कारत्वेन विधिना कर्तुर्गुणभावः । तस्मादुभयक्रियासंयुक्तता विवक्षिता । अत उभयनिमित्तो भक्षः ॥ २५ ॥

यस्योभावनुगताविस्यनुगमनमग्निं प्राप्नुवन्निमित्तम् । तस्य यत्स्वपदगतं पदान्तरगतं वा विशेषणं तदविवक्षितमित्युक्तम्[2] । इहापि स एव न्यायः । ' इह यक्ष्ये, इह सुकृतं करिष्यामि' इत्याग्निद्वयदर्शनात्सिद्धान्तग्रन्थोऽयम ॥ २६ ॥

---

१ निमित्ताभ्यामिति क्वचिन्नास्ति । २ उक्तमिति—ग्रहैकत्वाधिकरणे, हविरार्त्यधिकरणे चेति शेषः ।

द्रव्योत्पत्तेर्वोभयोः स्यात् ॥ २७ ॥ सि०

द्रव्ये विनष्टे तस्यैव द्रव्यस्योत्पत्तिरत्र प्रायश्चित्तम् । तस्य इदं प्रयोजनं, कथं द्रव्यं भवेदिति पुनराधानं क्रियते । तत्रैष धर्मो, द्वावग्नी सहोत्पद्येते, न पृथक्त्वेन । तत्रान्यतरानुगमने न शक्यत एक एवाऽऽधातुम् । विगुणं हि स्यात् । अथ द्वितीयमप्यादधीत, स यदि तावदाहवनीयः । तत्राऽऽहवनीयोऽन्यो होमार्थो विद्यत एवेति न स होमाय स्यात् । यश्च होमार्थमुत्पाद्यते स आहवनीयः, यत एष संस्कारः । संस्कारशब्दश्चैकेनापि संस्कारेण विना न भवति । एषोऽपि च संस्कारो यद्धोमार्थता । यदाहवनीये जुहोतीति हि श्रूयते । तदेकस्मिन्ननुगते, एकस्मिन्नाधीयमाने वैगुण्यं, द्वयोरपि वैगुण्यमेव । तस्मान्नैकस्मिन्ननुगते पुनराधेयमशक्यत्वादिति ॥ २७ ॥

( हविरार्तौ कर्मान्तरविधानाधिकरणम् ॥ ९ ॥ )

[ ९ ] पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्यात् ॥ २८ ॥ पू०

दर्शपूर्णमासयोः श्रूयते, यस्योभयं हविरार्तिमार्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदिति । तत्र संदेहः । किं हविष्यार्ते पञ्चशरावः प्रतिनिधिरुत निमित्ते, कर्मान्तरमिति । कथं प्रतिनिधिः, कथं कर्मान्तरमिति । यद्येवमभिसंबन्धो भवति, पञ्चशरावं निर्वपेत्कुर्यादिति, ततः सांनाय्यस्य कार्ये पञ्चशरावः प्रतिनिधिरिति । अथ न पञ्चशरावो निर्वपतिना,

---

आहवनीयस्यालौकिकत्वाद्यथा ब्राह्मणवसन्तादिसद्भावेनाऽऽत्मलाभः, एवं गार्हपत्येन सहोत्पत्त्याऽऽत्मलाभो न केवलस्य । एवं गार्हपत्यस्यापि । कार्यार्था चोत्पत्तिः । साऽन्यस्मिन्विद्यमाने न घटते । अथ सहोत्पाद्यते, इतरस्य च त्यागः । अविद्यमान उत्पाद्यते । स च विद्यत एव । उत्पन्नस्य यावज्जीवं धारणम् । परित्यागे दोषः श्रूयते । किं चाविद्यमानसहोत्पत्त्याऽऽहवनीयोत्पत्तिः शास्त्रादवगता, नेतरथा । तस्मान्नैमित्तिकं सदुभयानुगमे पुनराधेयम् ॥ २७ ॥

द्रव्यविनाशे द्रव्यमभिलषतः प्रकृतस्यौदनः पञ्चशरावपरिमितो द्रव्यं विधीयते । एव-

---

१ द्रव्योत्पत्तेश्चोभयोः—पा० । २ द्वयोरपि हि—पा० । ३ हविरार्तौ—पा० । ४ गार्हपत्यस्यापीति—आहवनीयेन सहोत्पत्तिर्न केवलस्येत्यर्थः । ५ उत्पद्यते—पा० । ६ दोषः श्रूयत इति—' वीरहा वा एष देवानां योऽग्निमुद्वासयते ' इत्यादिनेति शेषः ।

किंतु देवतया संबध्यते, पञ्चशरावमैन्द्रं कुर्यादिति, ततो निमित्ते यजतिर्विधीयते। किं तावत्प्राप्तम्। पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्यात्। पञ्चशरावः सांनाय्यस्य प्रतिनिधिः। कुतः। द्रव्यश्रुतेः। द्रव्यस्य निर्वापे श्रवणं, नेन्द्रसंबन्धे। कुतः। एवं निर्वापविधिर्भविष्यति तत्र श्रुतिर्विधायिका। इतरथा द्रव्यदेवतासंबन्धे वाक्यं स्यात्। तत्र दुर्बलं श्रुतेः। तस्मात्प्रतिनिधिरिति॥ २८॥

**चोदना वा द्रव्यदेवताविधेरवाच्ये हि॥ २९॥ सि०**

निमित्ते वाऽङ्गभूतं कर्मान्तरं यजतिः, द्रव्यदेवताविधेः। द्रव्यदेवतमिह श्रूयते, पञ्चशरावमैन्द्रं कुर्यादिति। इतरथा हि, ऐन्द्रमिति प्रमादपाठोऽवगम्येत। ऐन्द्रमाहेन्द्रयोर्वाऽयथार्थानुवाद ऐन्द्रमिति स्यात्। अवाच्ये हि ते देवते। ऐन्द्रशब्देनेन्द्रो महेन्द्रश्च न शक्योऽनुवदितुम्। विशेषणत्वे वाक्यभेदः। ननु श्रुतिर्बलीयसीत्युक्तम्। सत्यमेवम्। किं त्वितरस्मिन्पक्षे बाध्यतेतरां श्रुतिः। ऐन्द्रशब्दस्यातन्त्रत्वात्।॥२९॥

(नैमित्तिकपञ्चशरावयागस्य दर्शाङ्गताधिकरणम्॥ १०॥)

**[१०] स प्रत्याम्नेत्स्थानात्॥३०॥ पू०**

स एष नैमित्तिको यागः, किममावास्यां प्रत्याम्नेत्, नेति। किं प्राप्तम्। स प्रत्याम्नेत्। स एष यागोऽमावास्यां प्रत्याम्नातुमर्हति। कुतः। स्थानात्। यागे विनष्टे याग एष श्रूयमाणो यदि न नष्टस्याङ्गं, ततोऽर्थवान् भवति। अथाङ्गं, निष्प्रयोजनस्यार्थे क्रियमाणं निष्प्रयोजनमेव भवितुमर्हति। विगुणं च निष्प्रयोजनमेव। विनष्टमामावास्य-

---

मपेक्षितः संबन्धः। कर्मान्तरेऽनपेक्षितत्वाददृष्टं कल्प्यम्। एवं चोदनस्याऽऽनन्तर्यलक्षणया श्रुत्या न्याय्यैव कर्तव्यता॥ २८॥

देवतापरिमाणयोरप्राप्तत्वादनेकगुणविधानात्कर्मान्तरम्। द्रव्ये चासति प्रतिनिधिर्भवति। विद्यते च लौकिकं पयः॥ २९॥

अमावास्याभावो द्रव्याभावात्। ततः किम्। आह। कर्माभावेन प्रतिषेधो लक्ष्यते। प्रतिषेधेन स्वकार्यम्। पञ्चशरावोऽपि दर्शाभावे विधीयमानः प्रयोजनाभिलाषी। तस्मा-

---

१ विधिः—पा०। २ निमित्ते वा यजतिः कर्मान्तरं, द्रव्यदेवताविधिः—पा०। ३ इन्द्रशब्देन—पा०। ४ कर्तव्यता—विधेयतेत्यर्थः। ५ प्रतिषेध इति—अकर्तव्यतारूप इत्यर्थः। ६ प्रतिषेधेनेति—अकर्तव्येन च कर्मणा स्वकार्ये फलं लक्ष्यत इत्यर्थः।

मिति प्रत्यक्षम् । इदमपि कर्तव्यमिति शाब्दम् । यद्विनष्टं तन्निष्फलमिति न कर्तव्यम्। इदं च कर्तव्यमिति प्रत्याम्नायोऽवगम्यते ॥ ३० ॥

अङ्गविधिर्वा निमित्तसंयोगात् ॥ ३१ ॥ सि०

अङ्गं वैतद्विधीयते । हविष आर्तौ निमित्ते यागः श्रूयते । तत्र त्रयमापतति । यद्वा निमित्ते स्वतन्त्रं, कल्प्यं फलम् । यद्वा, अमावास्याया यत्कार्यं तदस्य । यद्वा तस्याङ्गमिति । स्वातन्त्र्यं तावन्न । कल्प्यत्वात्फलस्य । नामावास्यायाः कार्ये । किं कारणम् । अश्रवणात् । नैवं श्रूयते, तस्याः कार्ये वर्तेत इति । कर्तव्योपदेशेनापि नान्यतमाध्यवसानम् । त्रिष्वपि पक्षेषु विवक्षितेषु कर्तव्योपदेशोऽवकल्प्यते । नन्वेवमभिसंबन्धो भविष्यति—यस्योभयं हविरार्तिमार्च्छेत्स एतेन यागेन साधयेत्, यत्साधयितुकामः । किं चासौ साधयितुकामो, यदमावास्यायाः फलमिति ।

अत्रोच्यते । फलपदेन संबन्धाभावात्संबन्धस्य विधायकं वाक्यम् । श्रुत्या च यागकर्तव्यता विधीयते । सा च वाक्याद्बलीयसी । तस्मान्न तत्कार्ये वर्तेत इति । किं तर्हि प्रयोजनम् । तस्या अमावास्याया अङ्गम् । नन्वेतदपि नास्ति तस्या अङ्गमिति । तत्रोच्यते । तत्संबन्धेन समाम्नानात्तत्प्रयोगवचनेन गृह्यते । दर्शपूर्णमासाभ्यां फलं साधयेत्सर्वैरङ्गैः सह । अस्यां चाऽऽर्तावेष याग इतिकर्तव्यतेति । तस्मादेवमवगम्यते, विनष्टे हविष्यामावास्यं यत्र शक्नोति स्वकार्यं कर्तुं, तदनयेतिकर्तव्यतया सहितं शक्नोतीति । तस्मान्निमित्ते कर्माङ्गमिति ॥३१॥

---

दभावेन यल्लक्ष्यते तत्साधयन्नेकवाक्यता दर्शे नयति । फलसाधनस्य नाङ्गं भवति । अयथाश्रुतकरणे फलवत्त्वाभावः । फलवत्त्वाभावादङ्गत्वाभावः । अफलसाधनस्य यदङ्गं तदनर्थकम् ॥ ३० ॥

आरब्धं कर्मावश्यं समापनीयम् । तस्माद्दर्शकर्मणो नास्त्यभावः । तद्भावात्कार्यस्य लक्षक नास्ति । न दर्शं प्रतिषिध्य पञ्चशरावो विधीयते । यथा[३] गिरं प्रतिषिध्येरापदम् । तत्रेरापदस्य गिरापदकार्यं लक्षयति प्रतिषिध्यमानम् । एवमिह नास्ति । तस्मात्पञ्चशरावविधावपि कार्यापत्तेरभावाद्दर्शस्थानापत्तिर्नास्ति । यथाश्रुताकरणाद्दोष उपजायते । तन्निर्घातापेक्षायां विधीयमानं तद्दोषप्रतिसमाधानार्थत्वेनैकवाक्यतां याति ॥ ३१ ॥

---

१ नान्यतमाध्यवसानं त्रिष्वेषु पक्षेषु । तेषु च पक्षेषु— पा० । २ आमावस्यं—पा० ।
३ यथेति—' न गिरा गिरेति ब्रूयात्, ऐरं कृत्वोद्गेयम् ' इत्यादिनेति शेषः ।

( सत्रसंकल्पानन्तरं सत्रमकुर्वतः सत्रफलार्थतया विश्वजिद्विधानाधिकरणम् ॥ ११ ॥ )

## [११] विश्वजित्त्वप्रवृत्ते भावः कर्मणि स्यात् ॥३२॥ सि०

एतदाम्नायते, सर्वाभ्यो वा एष देवताभ्यः, सर्वेभ्यः पृष्ठेभ्य आत्मानमागुरते, यः सत्रायाऽऽगुरते, स विश्वजिताऽतिरात्रेण सर्वपृष्ठेन सर्ववेदसदक्षिणेन यजेत, सर्वाभ्य एष देवताभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानं निष्क्रीणीते, इति । सत्रायाऽऽगूरणे निमित्ते विश्वजिच्छ्रूयते । तत्र संदेहः । किं सत्रायाऽऽगूर्य यः सत्रं प्रयुङ्क्ते, तस्य विश्वजित्, उत यो न प्रयुङ्क्ते तस्येति । किं तावत्प्राप्तम् । यश्च प्रयुङ्क्ते, यश्च नेत्यविशेषात् । अथवा प्रयुञ्जानस्येति । कुतः । निमित्ते कर्माङ्गमेवं-जातीयकमित्युक्तम् । तदप्रयुज्यमानस्य कथमङ्गं स्यादिति ।

एवं प्राप्ते ब्रूमः । विश्वजित्त्वप्रवृत्ते भवेत् । सत्रस्य क्रियाया अभावे विश्वजित् । किं कारणम् । एवं हि श्रूयते, यः सत्रायाऽऽगुरते स विश्वजिताऽतिरात्रेण यजेतेति । यः सत्रं करिष्यामीत्येवमागुरते स विश्वजिता यागेन साधयेदिति । यदर्थमसौ सत्रं कर्तुमिच्छति, तदर्थ-मिति गम्यते । कथम् । य आगुरते, स तेन यजेत, यागेन निर्वर्तये-दिति वाक्यार्थो गम्यते, न यागं निर्वर्तयेदिति । कुतः । यागस्य गुणत्वेन श्रवणात् । कथं तस्य गुणत्वम् । तृतीयानिर्देशात् । प्राधान्ये

---

फलमात्मसंबन्धि, कर्मापीत्येवमभिसंधाय पुमान्प्रवर्तते । अतश्च 'सत्रायाऽऽगूर्य' इति सत्रफलमागूर्येत्यर्थः । तत्र फल आगूः कृते विश्वजिदुपायत्वेन विधीयते । सत्र-फलमागूर्य विश्वजिता तत्साधयेदिति । एवं च यदि विश्वजिता तत्साधितं, न सत्रे णार्थः । अथ सत्रेण, न विश्वजिता । तुल्यकार्यत्वाद्विकल्पः । अथवा यः सत्रेण फलं करिष्य इति संकल्पयति, तस्य सत्रकर्तव्यताशक्तौ यत्फलमभिप्रेतं तस्मिन्विश्वजिद्वि-धीयते । सत्रमागूर्य विश्वजितं कुर्यादिति वाक्यार्थः । आगोरणमात्र एकस्य द्वे भिन्ने प्रयोजने स्याताम् । तत्र विवक्षाभेददोषः । सत्रायेत्येका, फलायेत्यपरा । अङ्गपक्षे यागोऽऽरणस्य प्राप्तत्वादागूर्येत्यवाच्यम् । यथाऽन्येष्वङ्गेषु 'यः सत्रायाऽऽगुरते' इति

---

१ विश्वजिदप्रवृत्ते—पा० । २ अगोरणे—पा० । ३ विकल्प इति—एवं च सत्रेऽप्रवृत्तस्यैव विश्वजिदित्येवं केषांचनाभिप्रायः सूचितः । ४ स्वाभिप्रायमाह—अथवेति ।

हि फलं कल्प्येत । इतरस्मिंस्तु पक्षे प्रत्यक्षाद्वा वचनात्फलावगमः ॥ ३२ ॥

निष्क्रयवादाच्च ॥ ३३ ॥

एवं तत्र श्रूयते, सर्वाभ्यो वा एष देवताभ्यः सर्वेभ्यः पृष्ठेभ्य आत्मानं निष्क्रीणीत इति । निष्क्रयद्वारेण च संस्तवः प्रवृत्ते न युज्यते । तस्मादप्रवृत्ते विश्वजिदिति । अथ कस्मान्नैवमभिसंबन्धः क्रियते, आगूर्य सत्राय विश्वजिता यजेतेति । विश्वजितः सत्रस्य च संबन्धो विज्ञायते, आगूरणवेलायामिति । नैवम् । आगूरणाविशेषणं हि सत्रं, सत्रविश्वजित्संबन्धे व्यवहितकल्पना स्यात् । श्रुतिश्च पुरुषेण विश्वजितं संबन्धयति, विश्वजिता यजेत पुरुष इति । न सत्रेण, सत्रस्य विश्वजिद्याग इति, आगूर्येति च । एवं श्रवणमर्थवद्भवति । सत्राङ्गत्वे त्वर्थप्राप्तं न वक्तव्यम् । न चाऽऽगूर्य यजेतेत्यागूरणानन्तर्यं शक्यं विधातुम् । अशब्दार्थो हि तदाऽऽश्रीयेत । समानकर्तृकता हि शब्दवती । पूर्वकालभावस्य चार्थप्राप्तत्वान्न वक्तव्यता । तस्मादागूर्येत्यत्रैव विश्वजितोऽभिसंबन्धः । स चेत्, य आगूर्य न सत्रेण यजेत, तस्य विश्वजिदिति ॥ ३३ ॥

( व्रतस्य वत्साद्युपलक्षितकालविधानाधिकरणम् ॥ १२ ॥ )

[ १२ ] वत्ससंयोगे व्रतचोदना स्यात् ॥ ३४ ॥ पू०

दर्शपूर्णमासयोः श्रूयते, बर्हिषा वै पौर्णमासे व्रतमुपयन्ति, वत्सैरमावास्यायामिति । तत्र संदेहः । किं वत्ससाधनकं व्रतं विधीयत उत व्रतस्य काल इति । अथ वत्सो व्रताङ्गमिति । किं प्राप्तम् । वत्ससाधनकं व्रतं विधीयत इति । अमावास्यायां वत्सैर्व्रतं कुर्यादिति वत्सव्रतसंयोगोऽपूर्वः, स विधीयते । तस्मिंश्च विधीयमान उभयमपि विहितं भवति, वत्सो व्रतं च ॥ ३४ ॥

---

नोच्यते तथाऽत्रापि ॥ ३२ ॥ [ ३३ ॥ ]

एतदौपोद्घातिकम् । अनेन कालेन कस्मिन्पक्षेऽधिकार इति ॥ ३४ ॥

---

१ सत्रायेति च सत्र—पा० । २ तथाऽत्रापीति–नोच्येतेति शेषः । एवं च सत्रमागूर्य—सत्रसंकल्पं कृत्वा तत्कर्तुमशक्नुवतो विश्वजिद्विधीयत इति ज्ञेयम् । ३ औपोद्घातिकमिति—स्थितेऽस्मिन्नधिकरणे कालनिधाने, 'कालश्चेत्संनयत्पक्षे' इत्युत्तराधिकरणचिन्ता संगच्छते, नान्यथेति भावः ।

काले वोत्पन्नसंयोगाद्यथोक्तस्य ॥ ३५ ॥ सि०

यथोक्तस्य वा वचनान्तरेण प्राप्तस्य व्रतस्य कालोऽयं विधीयते। कुतः। उत्पन्नसंयोगात्। उत्पन्नसंयोगोऽयं व्रतस्य, नोत्पत्तिसंयोगः। कथम्। अमाषममांसं बहुसर्पिष्कं व्रतं व्रतयतीति विहितं पूर्वं व्रतम्। अप्रज्ञातश्च कालः। तस्मात्कालविधिरिति ॥ ३५ ॥

अर्थापरिमाणाच्च ॥ ३६ ॥

न च शक्योऽत्रार्थः परिमातुं, वत्सेन व्रतमुपयन्तीति। किं वत्सोऽत्र व्रतयितव्यः, एवं वत्सेन व्रतमुपगतं भवति। किं वत्सेन हस्तस्थानीयेन व्रतयितव्यमिति, एवं तदुपेतं भवति। उत वत्सं संनिधायान्यदेतदुपेयादिति, नैव व्यवतिष्ठते शास्त्रार्थः। करणं ह्येतन्निर्दिष्टम्। नेतिकर्तव्यता। एतावदुक्तं, वत्ससाधनं व्रतं कुर्यात्। कथमित्येतद्विशेषाकाङ्क्षमेवावतिष्ठेत। नैवार्थः परिच्छिद्यते, व्रते किं वत्सेन क्रियत इति। अथवा यद्वा तद्वेति। तथा वत्सो व्रतेन संबध्यमान इष्टः स्यादुपप्रार्थतामापद्येत। परार्थतां चास्य द्योतयति विभक्तिस्तृतीया। साधकतमे हि सा भवति। तस्मादपि कालार्थः संयोगः ॥ ३६ ॥

वत्सस्तु श्रुतिसंयोगात्तदङ्गं स्यात् ॥ ३७ ॥

यदुक्तं, विहितत्वाद्व्रतस्यानुवाद इति। सत्यमेवम्। यत्तूक्तं, कालविधानार्थ इति। तन्न। वत्सस्तदङ्गत्वेन विधीयते। कुतः। श्रुतिसंयोगात्। वत्सेऽङ्गे विधीयमाने श्रुतिर्निमित्तं, काले लक्षणाशब्दः स्यात्। श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या। तस्मादङ्गं वत्स इति ॥ ३७ ॥

कालस्तु स्यादचोदना ॥ ३८ ॥

कालस्त्वेष निर्दिश्यते, न वत्सोऽङ्गं विधीयते। नैषा चोदना, बर्हिषा वै पौर्णमासे व्रतमुपयन्ति। वत्सैरमावास्यायामिति। कथमवगम्यते। विधिनैकवाक्यत्वात्। परस्ताच्च विधिः समाम्नायते। पुरा वत्सानामपाकर्तोर्दम्पती अश्नीयातामिति। यद्येषोऽपि विधिः स्याद्वाक्यं भिद्येत। अनुवादश्च तथाभूतस्यार्थस्य भवति। न च वत्सा-

[ ३९ ॥ ॥ ३६ ॥ ३७ ॥

१ न शक्येतार्थः परिमातुम्—पा०। २ सत्यमेतत्—पा०।

ङ्गता प्राप्ता । प्राप्तस्तु कालः ॥ ३८ ॥

अनर्थकश्च कर्मसंयोगे ॥ ३९ ॥

न च शक्यो वत्सोऽत्र व्रतयितुम् । कर्मसंयोगे वत्सेन नार्थः शक्यते कश्चित्कर्तुम् । तस्मादपि न वत्सोऽङ्गम् ॥ ३९ ॥

अवचनाच्च स्वशब्दस्य ॥ ४० ॥

न चैतदुच्यते, विभ्रस्य अर्पितं वत्सं व्रतयिष्यत इति । न चास्यार्थस्य स्वशब्दः श्रूयते । वत्स इत्याकृतिशब्दो मासे न वर्तते । तस्मादपि काल इति ॥ ४० ॥

( सांनाय्येऽप्रवृत्तस्यापि व्रतनियमाधिकरणम् ॥ १३ ॥ )

[१३] कालश्चेत्संनयत्पक्षे तल्लिङ्गसंयोगात् ॥ ४१ ॥ पू०

कालार्थः संयोग इत्येतत्समधिगतम् । इदानीं संदेहः । किं संनयत्पक्ष एव कालः, उतासंनयतोऽपीति । किं प्राप्तम् । संनयत्पक्षे । कुतः । एवं श्रूयते, पुरा वत्सानामपाकर्तोरिति । न चासंनयतो वत्सापाकरणमस्ति । तस्मात्संनयत्पक्ष एव कालः । अपाकरणं लिङ्गमिति ॥ ४१ ॥

कालार्थत्वाद्वोभयोः प्रतीयेत ॥ ४२ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । न संनयत्पक्ष एव । असंनयतोऽप्येष कालः स्यात् । कुतः । कालार्थत्वात् । न वत्सापाकरणेन व्रते किंचित्प्रयोजनमस्ति । कालेन तु प्रयोजनम् । येन च तत्र प्रयोजनं, स लक्ष्यते । कथं पुनर्वत्सापाकरणं कालार्थमिति । परार्थत्वात् । पयसे हि तेऽपाक्रियन्ते । तथा हि दृष्टार्थता भवति । इतरथाऽदृष्टार्थता स्यात् । तस्मान्नोपादेयत्वेन वत्सापाकरणं श्रूयत इति । यत्तूक्तं, तल्लिङ्गसंयोगात्संनयत्पक्ष एवेति । तन्न । असंनयतोऽपि कालाहानात् । यस्यापि न सांनाय्यं, तस्यापि वत्सापाकरणमेव न स्यात्, न तु वत्सापाकरणकालोऽपि । कालेन च नः प्रयोजनं, न वत्सापाकरणेन । यथा शङ्खवेलायामागन्तव्यमिति । यस्मिन्नपि ग्रामे शङ्खो नाऽऽध्मायते तस्मिन्नपि शङ्खाध्मानकालोऽस्तीति, नाऽऽगमनं परिहास्यते । एवमिहाप्यसत्यपि वत्सापाकरणे तत्काले विद्यमाने व्रतं तस्मिन्काले न परिहास्यत इति ॥ ४२ ॥

॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ]

१ अप्राप्ता—पा० । २ अप्राप्तस्तु—पा०

( प्रस्तरप्रहरणकाले शाखाप्रहरणाधिकरणम् ॥ १४ ॥ )

## [ १४ ] प्रस्तरे शाखा श्रयणवत् ॥ ४३ ॥ पू०

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति । तत्र श्रूयते, सह शाखया प्रस्तरं प्रहरतीति । तत्र संदेहः । किं शाखा प्रस्तरस्याङ्गभूता, अङ्गप्रयोजनसंबन्धस्तयोः । अथ कालार्थः संयोगः, प्रस्तरप्रहरणकाले शाखा प्रहर्तव्येति । किं प्राप्तम् । प्रस्तरे शाखा श्रयणवत् । प्रस्तरस्याङ्गभूता शाखा । कुतः । सह शाखया प्रस्तरं प्रहरतीति । सहयुक्तेऽप्रधाने तृतीया विभक्तिर्भवति । सा च शाखायां तृतीया । तस्मात्प्रस्तरस्य शाखा गुणभूता । प्रस्तरे च द्वितीया । सहयोगे च तृतीया गुणतो, द्वितीया प्रधानतः । ननु न शाखया प्रस्तरस्य कश्चिदुपकारः क्रियते । सत्यं न दृष्टं क्रियते, किं त्वदृष्टं क्रियते । श्रयणवत् । यथा, पयसा मैत्रावरुणं श्रीणातीति द्वितीयातृतीयासंयोगाददृष्टश्चोपकारो गम्यते । एवमिहापीति ॥ ४३ ॥

## कालविधिर्वोभयोर्विद्यमानत्वात् ॥ ४४ ॥ सि०

कालविधिर्वा स्यात् । कुतः । उभयोर्विद्यमानत्वात् । प्रस्तरस्तावत्स्रुग्धारणार्थः प्राप्तो विद्यते । तस्य प्रहरणमपि विशिष्टे काले वाक्यान्तरेण विहितम् । ततः शाखायाः प्रतिपादनार्थं तस्यैतत्पुनर्वचनम् । उच्यते । भवतु प्रस्तरस्य पुनर्वचनम् । शाखा त्वत्र विधीयत इति । उच्यते । उभयोरपि विद्यमानत्वात् । शाखाऽपि हि पूर्वं विहिता वत्सापाकरणार्था । इदानीं पुनः किं गुणभूता चोद्यते, उत प्रतिपाद्यत इति ।

---

वत्ससंयोगप्रसङ्गेनाऽऽरभ्यते । अथवा—शाखाप्रहरणे काधिकार इति संबन्धः । ननु चतुर्थे प्रतिपत्तिः शाखाप्रहरणमिति स्थितम् । उच्यते । प्रस्तरस्य प्रतिपत्तावपि जुह्वादेरङ्गभावो दृष्टः । तेनेहापि तद्वदेव संभवेत् । तत्कथमित्याशङ्कायां युक्तस्तन्निराकरणार्थ आरम्भः ॥ ४३ ॥

कालविधिर्वोभयोर्विद्यमानत्वात् । ननु च 'सहयुक्तेऽप्रधाने' इति सहयोग एव तृतीया । उच्यते । यद्येवं, ततः शाखाया अपि यजौ गुणभावः प्रस्तरवत्स्यात् ।

---

१ ( अ० ४ पा० २ अ० ४ सू० ११ ) इत्यत्रेति शेषः । २ शङ्कानिराकरणपरं सूत्रं पठति–कालविधिर्वेति । ३ पा० सू० ( २-३-१९ ) ।

प्रतिपाद्यमानायां दृष्टं प्रयोजनम् । देशवियोगात्प्रचरितुमवकाशः स्यात् । या च यावती च मात्रा देशान्तरसंयोगस्य न दृष्टं किंचिदस्ति । तस्मात्प्रहरणं प्रतिपत्तिस्तस्याः । तस्मात्परतः प्रयोजनाभावात्कालनियमः क्रियते । ननु तृतीयाऽप्रधाने भवति, सा च शाखायाम् । अत्रोच्यते । याऽसौ शाखायां तृतीया, सा द्वितीयार्थे । या च प्रस्तरे द्वितीया, सा तृतीयार्थे । कथमवगम्यते । संहयोग एषः, एकस्मिन् काल उभयमपि प्रहर्तव्यमिति । अत्र यस्य निर्ज्ञातः कालस्तस्यानुवादः । यस्य त्वनिर्ज्ञातस्तस्य विधिः । शाखायाश्चानिर्ज्ञातः, प्रस्तरस्य निर्ज्ञातः । तस्य पुनरुच्चारणमनिर्ज्ञातार्थम् । तदप्रधानम् । इतरस्योच्चारणं प्रधानम् । प्राधान्यं च द्वितीयार्थः । तत्र तृतीया । पारार्थ्यमपि तृतीयार्थः । तत्र द्वितीया । तस्मादयथार्थे विभक्तिवचनम् ॥ ४४ ॥

## अतत्संस्कारार्थत्वाच्च ॥ ४५ ॥

न च शाखया प्रस्तरस्योपकारो दृष्टः क्रियते । काष्ठं दह्यमानस्य तृणस्य नोपकारे वर्तते । तृणं तु काष्ठस्योपकुर्यात् । तस्मान्न शाखा प्रस्तरार्था ॥ ४५ ॥

## तस्माच्च विप्रयोगे स्यात् ॥ ४६ ॥

किं भवति प्रयोजनं, यदि प्रस्तरस्य गुणभूता तथाऽपि प्रस्तरप्रहरणकाले शाखा प्रक्षिप्स्यत इति । उच्यते । यदि प्रस्तरस्य प्राहियमाणस्याङ्गभूता शाखा, ततो विना प्रस्तरेण न प्रहर्तव्या भवति । प्रधानाङ्गभूता विनाऽपि प्रस्तरेण प्रहर्तव्या । अस्माभिरुक्तं प्रस्तरकाले

---

यथा 'सूक्तवाक एव याज्या प्रस्तर आहुतिः' । एवं चेन्न कालार्थता । उच्यते । प्रस्तरे सूक्तवाकस्य निर्देशात्, अथवा—प्रस्तरस्य यज्यङ्गत्वेन निर्देशाद्याजिरूपम् । अन्यथा याज्यादीनि न स्युरिति । नैवमत्र । अतः प्रहरतिमात्रे शुद्धे सहयोग इति सूक्तम् ॥ ४४ ॥ [ ४१ ॥ ]

यदि प्रस्तरस्य गुणभूता शाखा, ततो विना शाखया प्रस्तरो न प्रहर्तव्य इति व्याख्येयम् । पौर्णमास्यां प्रस्तरः शाखां प्रयोजयेत् । सिद्धान्ते विनैव शाखया प्रहर्तव्यः । अथवा—अन्यथा व्याख्येयमुदाहरणम् । प्रातःसवनीयेषु प्रस्तरं विना न प्रहर्तव्या

---

१ तस्मात्प्रयोजनवत्त्वात्कालनियमः क्रियते—पा० । २ सहयोगे एकस्मिन्—पा० । ३ प्रतिपाद्यते—पा० । ४ पौर्णमास्यामिति शेष. । ५ यथाश्रुतं वा भाष्यं व्याख्येयमित्याह—अथवेति ।

प्रहर्तव्येति। तस्माच्च विप्रयोगे स्यात्—तस्मादेव कारणात्प्रस्तरविप्रयोगेऽपि शाखायाः प्रहरणं स्यादिति ॥ ४६ ॥

**उपवेषश्च पक्षे स्यात् ॥ ४७ ॥**

यथा पूर्वः पक्षः, तथा सति सांनाय्ये सति, असति च शाखा विद्यत इति, उपवेषः सति चासति च स्यात्। यथा तु सिद्धान्तः, तथा सांनाय्यपक्षे शाखा सती हि प्रतिपाद्यत इति। तत्रैवोपवेषो नान्यत्रेति ॥ ४७ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये षष्ठस्याध्यायस्य चतुर्थः पादः ॥

---

अथ षष्ठेऽध्याये पञ्चमः पादः ॥

( अभ्युदितेष्ट्यधिकरणम् ॥ १ ॥ )

**[ १ ] अभ्युदये कालापराधादिज्याचोदना स्याद्यथा पञ्चशरावे ॥ १ ॥ पू०**

इदमामनन्ति, वि वा एनं प्रजया पशुभिरर्धयति, वर्धयत्यस्य भ्रातृव्यं, यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात्, स त्रेधा तण्डुलान्विभजेत्, ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं, ये क्षोदिष्ठास्तान्विष्णवे

---

शाखा पूर्वपक्षे। सिद्धान्ते प्रहर्तव्येति[3] ॥ ४६ ॥ [ ४७ ] ॥

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां षष्ठाध्यायस्य चतुर्थः पादः ॥

---

'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात्, ये मध्यमास्तानग्नये दात्रेऽष्टाक॰

---

१ अभ्युदेति—पा०। २ येऽणिष्ठाः—पा०। ३ प्रहर्तव्येति—अयमाशयः। सवनीयेषु हविःषु सवनीयपशुतन्त्रं प्रसज्यत इति द्वादशे वक्ष्यते। अतः पाशुक एव प्रस्तरः सवनीयानां नान्यः। तस्य च प्रहरणं 'तदाद्युत्कर्षन्यायेन' आग्निमारुतादूर्ध्वमनूयाजेषूत्कृष्यमाणेषूत्कृष्टं तृतीयसवने। शाखा च सवनीयहविरन्तर्गतपयस्यार्थमुत्पादिताऽपूर्वत्वाद्वेदिकरणन्यायेन नोत्कृष्यते। अतः सा प्रातःसवन एव प्रहर्तव्या विनाऽपि प्रस्तरेणेति भवति सिद्धान्ते प्रयोजनम्। पूर्वपक्षे तु गुणभूता शाखा 'प्रधानं नीयमानं हि तत्राङ्गान्यपकर्षति' इति न्यायेनोत्कृष्टव्येति साकं प्रस्तरेण प्रहर्तव्या भवेदिति।

शिपिविष्टाय श्रृते चरुमिति । तत्र संदेहः । किं कालापराधे यागान्तरमिदं चोद्यत उत तेष्वेव प्रकृतेषु कर्मसु निमित्ते देवतापनयन इति । किं प्राप्तम् । अभ्युदये यः कालापराधस्तत्रेज्याचोदना स्यात् । कथम् । पुरोडाशमग्नये दात्रे मध्यमान्कुर्यात्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधनि चरुं कुर्यात्, क्षोदिष्ठान्विष्णवे शिपिविष्टाय श्रृते चरुमिति । यजतिस्तु द्रव्यफलभोक्तृसंयोगादिति, यागविधानं गम्यते । यथा पञ्चशरावे द्रव्यदेवतासंबन्धेन कर्मान्तरं गम्यते । यथा पशुकामेष्ट्यां, यः पशुकामः स्यात्सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्, ये स्थविष्ठास्तानग्नये सनिमतेऽष्टाकपालं निर्वपेत्, ये मध्यमास्तान् विष्णवे शिपिविष्टाय श्रृते चरुम्, येऽणिष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुमिति । एवमिहापीति । अपि च, न प्रकृते द्रव्ये देवता श्रूयते । शृते चरुमिति हि तत्र भवति वचनम् । न चाभ्युदयकाले श्रपणं कृतमस्ति । तस्मात्कर्मान्तरम् ॥ १ ॥

## अपनयो वा विद्यमानत्वात् ॥ २ ॥ सि०

देवतापनयो वा । कुतः । विद्यमानत्वात् । विद्यन्ते हि कर्माणि

---

पालम्' इति च द्वे एते वाक्ये । अर्थभेदात्[२] तयोः संबन्ध[३] इति केचिद्वदन्ति । तन्न । 'अर्थैकत्वादेकं वाक्यम्' इत्युक्तं[४], निमित्तनैमित्तिकत्वेन चैकोऽर्थः । न चाभ्युदयो विधीयते । इदानीं 'यस्य हविर्निरुप्तम्' इति पञ्चपदविशिष्टं निमित्तम् । न च तावन्निमित्तं नैमित्तिकेन संगच्छते । यावानाश्रयस्तावानपेक्ष्यते, यथा[५] हविष आर्तिः ।

उच्यते । सर्वमपेक्षितम् । अभ्युदयस्य तावत्कर्ता विवक्षितः । नाविशिष्टोऽभ्युदयो निमित्तं भवति । पुरस्तादिति नित्यानुवादः[६] । पश्चाद्दर्शनं नाभ्युदयः । न च कदाचिच्चन्द्रमा नोदेतीति हविःप्रक्रमेण विशेष्यते । अतः सर्वमीप्सितं विवक्षितम् । एवं[७] विशोध्य विचार्यते, किं कर्मान्तरं किं वा दर्शस्य विशेषमात्रमिति । यागे च विधीयमाने नानेकगुणविधानं दुष्करम् । प्रकृते तु गुणविधाने वाक्यभेदः स्यात् ॥ १ ॥

विद्यन्ते हि कर्माणि प्रकृतानि । कतमानि तानि । उच्यते । श्रूयते ह्यत्र, 'त्रेधा

---

१ (अ० २ पा० ३ अ० ५ सू० १४ ।) २ अर्थभेदात्—पृथगाख्यातश्रवणादित्यर्थः । ३ संबन्ध इति—निमित्तनैमित्तिकभावरूपो विवक्षितः । ४ इत्युक्तमिति—(अ० २ पा० १ अ० १४ सू० ४६) इत्यत्रेति शेषः । ५ यथेति—'यस्योभयं हविरार्तिमार्छेत्' इत्यत्रेति शेषः । ६ नित्यानुवाद इति—चन्द्रमसोऽभ्युदयस्य नियतदिक्त्वादिति हेतुपूरणम् । ७ एवं तावन्निमित्तं विचार्य नैमित्तिकं विधेयं किमिति विचार्यत इत्याह—एवमिति ।

प्रकृतानि । तेषु विद्यमानेषु पुनर्देवतासंबन्धो हविषो नोपपद्यते । यस्यानुपपत्त्या यागः कल्प्येत । तस्मान्न यागान्तरम् । तेष्वेव हविःषु देवतान्तराणि विधीयन्ते ॥ २ ॥

तद्रूपत्वाच्च शब्दानाम् ॥ ३ ॥

देवतापनयसरूपाश्चामी शब्दा भवन्ति । ये मध्यमास्तेषां देवतान्तरं विधीयते । तत्र द्रव्यं प्राप्तम् । अप्राप्ता देवता विधीयते । कथं पुनर्देवताविधानार्थे नानेकगुणविधानदोषो जायेतेति । उच्यते । नैवात्रानेको गुणो विधीयते कस्मिंश्चिद्वाक्ये । त्रेधा तण्डुलान् विभजेदित्यत्र तावद्विभागमात्रं विधीयते । अन्यत्सर्वमनूद्यते तस्माददोषः । ये मध्यमास्तेषामग्निर्देवता विधीयते, अन्यत्पुरोडाशाद्यनूद्यते । ये स्थविष्ठास्तेषां दधिसहितानामिन्द्रो देवताऽस्मिन्वाक्ये विधीयते । तत्रार्थप्राप्ता-

---

तण्डुलान्विभजेत् ' इति । अत्र त्रेधेत्यनुवादः । त्रित्वाद्दर्शयागानाम् । तण्डुलानित्यपि प्रदर्शनं, विभागस्यै दर्शनात् । अन्यथाऽनेकार्थविधानाद्वाक्यभेदः स्यात् । न च विशिष्टविधानमत्र युक्तं, कल्पनाभयात् । अतो, विभजेत् , किं³—संयुक्तम् । किंच संयुक्तम्—द्रव्यदेवतं, केन संयुक्तं— यागेनेति । अतो विभागोत्तरकाले शुद्धयागा विद्यन्ते प्रकृताः । इदानीं निर्वपेदिति भावना द्रव्यदेवतागुणविशिष्टा यागमन्तरेणानाश्रेया यागं कल्पयति, प्रकृतं वोपादत्ते । तत्र कल्प्यात्प्रकृतप्रत्ययो बलवान् । प्रकृतसंबन्धविधानाच्च प्रथमभावनायाः प्रथमो यागः । उत्तरौ तूत्तरयोः ॥ २ ॥

नैवात्रानेको गुणो विधीयते । किं तर्हि । विद्यमानस्य हविषो मध्यमविभागाग्निदातृत्वविशिष्टा भावना प्रकृतयागसंबद्धा विधीयते । तथोत्तरे । दधिस्थविष्ठचर्वाधारेन्द्रप्रदातृत्वविशिष्टा, पयःक्षोदिष्ठविष्ण्वादिविशिष्टा । मध्यमादिश्रवणात् । एवं चार्थानामविभागः । भाष्यन्त्याविरुयासया वर्ण्यते । अत्र प्रकृतेषु यागेषु द्रव्ये चाविभक्ते देवताविभागमात्रं विधीयते । तथाभूतस्य च देवतान्तरं विधीयते । तत्रार्थप्राप्ता श्रपणे सति

---

१ प्रदर्शनमिति—संयुक्तद्रव्यदेवतोपलक्षणमित्यर्थः । २ विभागस्य—विधेयस्येति शेषः । ३ किमिति–किमित्यपेक्षायामित्यर्थः । ४ अनाश्रया—अनाश्रया सती, अनुपपद्यमानाऽर्थादिति शेषः । ५ मध्यमादिश्रवणादिति—' ये मध्यमाः ' इत्यादिभिस्त्रिभिर्वाक्यैरित्यर्थः । ६ एवं तावद्भावनाविध्यभ्युपगमादनेकेषामप्यर्थानामेकेनैव विधिना विधानसंभवाद्वाक्यभेदः परिहृतो भवतीत्याह—एवं चेत्यादिना । ७ अधुना भावनान्तरविधिपक्षमनभ्युपगम्य यथाभाष्यमधिकरणं वर्ण्यत इत्याह—भाष्येत्यादिना ।

श्रपणे सति चरुता, सह सप्तम्यर्थेनार्थप्राप्तेनैवास्मिन्वाक्येऽनूद्यते । ये क्षोदिष्ठास्तेषां शृतसहितानां विष्णुः शिपिविष्टो देवता विधीयते, अन्यत्सर्वमनूद्यते । तस्माददोषः ॥ ३ ॥

आतञ्चनाभ्यासस्य दर्शनात् ॥ ४ ॥

आतञ्चनाभ्यासं च दर्शयति। कथम् । एवं श्रूयते —यदि बिभीयादभि मोदेष्यतीति महारात्रे हवींषि निर्वपेत् । फलीकृतैस्तण्डुलैरुपासीत । अर्धे दधि हविरातञ्चनर्थं निदध्यात् । अर्धं न । यद्यभ्युदियात्तेनाऽऽतञ्च्य प्रचरेत् । यदि न । प्रातरेतेन ब्राह्मणान्भोजयेदिति । यदि कर्मान्तरमुपादेयत्वेन तदा तण्डुला दधि शृतं च । तस्माल्लौकिकान्युपादेयानि । न ह्येष तदा प्रकृतानां व्यापारः । तत्राविनष्टे दधनि, अपरेद्युरामावास्ये क्रियमाणे विद्यते दधीति नाऽऽतञ्चनमावर्तेत । तस्यामेनाभ्युदितेष्टौ दधि विद्यत इति नाऽऽतञ्चनं स्यात् । अथ निमित्ते देवतापनयस्ततस्तस्मिन् दधनि चरुः कृत इति, पुनरामावास्ये दोहे आतञ्चनेन कार्यम् । एवमातञ्चनाभ्यासस्य दर्शनं देवताविधाने युज्यत इति ॥ ४ ॥

अपूर्वत्वाद्विधानं स्यात् ॥ ५ ॥

अथ यदुक्तं, यथा पशुकामेष्ट्यां कर्मान्तरं, यः पशुकामः स्यात्सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यादिति । तत्परिहर्तव्यम् । तत्रोच्यते । युक्तं यत्तत्र कर्मान्तरविधानम् । कुतः । अपूर्वत्वात् । न तत्र कश्चित्पूर्वप्राप्तो यागो विद्यते । सोऽमावास्यामिष्ट्वेति हि परिसमाप्ते तस्मिन्निदमारभ्यते। तत्र द्रव्यदेवतासंयुक्तो निर्वपतिशब्दो नान्तरेणोत्सर्गं, द्रव्यदेवतयोः संबन्धो घटत इति यजतिं गमयति । न त्विहैवम् । इह हि यागः प्रकृतो गम्यते । तस्मिन्नेव विद्यमानस्य द्रव्यस्य देवतासंबन्धमात्रं विधीयत इति न दोषो भवति ॥ ५ ॥

पयोदोषात्पञ्चशरावेऽदुष्टं हीतरत् ॥ ६ ॥

---

चरुतेति । सत्यमेतत् । दध्नस्तु श्रपणमेव न प्राप्नोति । उच्यते । वचनाच्छ्रपणं 'सह श्रपयति' इति । ननु श्रपणमनूद्य सहत्वं विधीयते । लाघवात्सहत्वं प्राप्तमेव । अनेन तु दध्न एव श्रपणं विधीयते । अर्थप्राप्ता चरुता सप्तम्यर्थश्च ॥ ३ ॥ [ ॥ ४ ॥ ॥ ५ ॥

---

१ विद्यते—पा०।

अथ यदुपवर्णितं, यथा पञ्चशरावे कर्मान्तरं विधीयते, एवमिहापीति । तत्परिहर्तव्यमिति । अत्रोच्यते । युक्तं पञ्चशरावे कर्मान्तरम् । दुष्टं हि तत्र द्रव्यम् । यस्य देवता विधीयते, तत्रावश्यं द्रव्यमुपादेयत्वेन चोदयितव्यम् । तस्मिन्नुपादीयमाने देवतान्तरे चापूर्वः संबन्धो विधीयते, तद्यागान्तरं भवतीति । इतरदिह द्रव्यमदुष्टम् । तदनूद्य प्रकृते यागे देवता विधीयत इत्युक्तम् । तस्माददोष इति ॥ ६ ॥

सांनाय्येऽपि तथेति चेत् ॥ ७ ॥

एवं चेत्पश्यसि, सांनाय्येऽपि दोषः। तदपि ह्यभ्युदये तत्कालापभ्रंशाद्दुष्टमिति ॥ ७ ॥

न तस्यादुष्टत्वादविशिष्टं हि कारणम् ॥ ८ ॥

नैतदेवम् । पञ्चशरावे हि दुष्टं द्रव्यम् । इह तादृशमेवावतिष्ठते । ननु कालापभ्रंशेन दुष्टम् । न दुष्यति । अविशिष्टं हि कारणम् । अभ्युदये प्रायश्चित्तविधानं दुष्टेऽप्युपपद्यते । कालापराधेनादुष्टेऽपि तत् । अकाले ह्यभिप्रवृत्तस्य शक्यते देवताविधानं, न तु विनष्टस्य ॥ ८ ॥

लक्षणार्था शृतश्रुतिः ॥ ९ ॥

अथ यदुक्तं, न प्रकृते द्रव्ये देवता श्रूयते, शृते चरुमिति तत्र भवति वचनम् । न चाभ्युदयकाले श्रपणं कृतमस्तीति । तत्परिहर्तव्यम् । अत्रोच्यते । लक्षणार्थेयं शृतश्रुतिः । धर्मलक्षणार्था, शृते–शृतसहचरितधर्मक इति ॥ ९ ॥

( उपांशुयाजेऽपि देवतापनयाधिकरणम् ॥ २ ॥ )

[२] उपांशुयाजेऽवचनाद्यथाप्रकृति ॥ १० ॥ पू०

तस्मिन्नेवाभ्युदये संशयः । किमुपांशुयागेऽपि देवतापनयो भवे-

---

॥ ६ ॥ ७ ॥ ८ ॥ ]

धर्माधिकं पयः शृतमित्युच्यते । श्रपणेन च सहचरिता धर्मा यस्मिंन्वत्सापाकरणादयः । तदिदं शृतसहचरितधर्मकं पयः ॥ ९ ॥

उपांशुयाजः पौर्णमास्यामेव, नामावास्यायामिति वक्ष्यति । न चेयं कृत्वाचिन्तेति

---

१ कालापराधेऽदुष्टेऽपि—पा० । २ यस्मिन्निति—यस्मिन्पयसि श्रपणसहचरिता धर्मा विद्यन्ते तत्पयः शृतशब्देनोच्यत इत्यर्थः । ३ ( अ० १० पा० ८ सू० ५४ ) इत्यत्रेति शेषः ।

येति। किं प्राप्तम् । उपांशुयाजे यथाप्रकृति स्यात् । कस्मात् । अवचनात् । यथा, अमीषु वचनं, मध्यमानामग्नये दात्रे पुरोडाशः, स्थविष्ठानामिन्द्राय प्रदात्रे दधनि चरुः, क्षोदिष्ठानां विष्णवे शिपिविष्टाय शृते चरुरिति । नैतदुपांशुयाजेऽस्ति । तस्मात्स यथादेवतं स्यात् ॥१०॥

अपनयो वा प्रवृत्त्या यथेतरेषाम् ॥ ११ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । उपांशुयाजस्याप्यपनयः। केन कारणेन । प्रवृत्त्या । अकाले तन्त्रप्रवृत्तिर्देवतापनयस्य कारणम् । कुतः । न ह्यत्राभ्युदये सति तण्डुला विभागार्थमुपादीयन्ते । किं तर्हि । अभ्युदितस्य हविषो विभाग उच्यते । अभ्युदयेनापराद्धस्येति । कथमवगम्यते । यस्याभ्युदियादित्यविशेषश्रवणात् । सर्वस्यैव ह्यपराधेनाभ्युदेति । अपराधश्चाकाले तन्त्रप्रवृत्तिः । एवं च सति न तद्धाविस्तण्डुलैः शक्यं विशेष्टुम् । तस्मादुपांशुयाजस्यापि विभागः । त्रेधा तण्डुलान् विभजेदिति हि, अनेन वाक्येन देवतापनयः क्रियते । विधिर्ह्यत्र, विभजेदिति । विभागं कुर्यादित्यर्थः । कथमिति । विभागविशेषपराण्युत्तराणि वाक्यानि । इदमिदं च द्रव्यमस्यै देवतायै, इदमिदं चास्या इति । यस्य द्रव्यस्य विशेषविभागो नास्ति, तस्यापि विभजेदिति सामान्यविभागः । तस्माद्यथैवेतरेषां विभाग एवमुपांशुयाजस्यापीति ।

---

वृत्तिकारोऽभिलषति । अधिकरणारम्भो न युज्यते । युक्तो वा, बह्वृचब्राह्मणे स्पष्टेन वाक्येन[1] विहितत्वादुपांशुयाजस्य । कथं तर्हि दाशमिकमनपेक्ष्य वचनम् । न्यायमात्रमेतत्[2] ॥ १० ॥

अकाले तन्त्रप्रवृत्तौ नैमित्तिकं विधीयते । विभजेदिति—अत्र व्युपसर्गः कर्मव्यतिहारार्थीयः । अन्योन्यं देवताविशेषं प्रति द्रव्यस्य भजनं कर्तव्यमित्यर्थः । एवं विशब्दः श्रुत्यर्थवृत्तो भवति । धातुना च प्रत्ययस्याविप्रकर्षः । एवमन्योन्यसंबन्धभजनं कुर्यादिति सामान्यवचनेन विभाग उपांशुयाजद्रव्यस्य, मध्यमादिवद्विशेषवचनाभावात् । अस्मिन्पक्षे चतुर्गृहीतं त्रिष्वपि यागेषु विभागेन प्रक्षेप्तव्यम् । सोऽस्य सामान्यविभागः ।

---

१ वाक्येनेति—' अथ यत्संनयत्सांनाय्यस्यान्तरेणोपांश्वाज्यस्य यजति, तस्योक्तं ब्राह्मणम् ' इत्यनेनेति शेषः । २ न्यायमत्रमेतदिति—दाशमिकोपान्त्याधिकरणं वचनाभावं कृत्वाचिन्तया बोध्यमित्याशयः ।

अथवा, उपांशुयाजद्रव्यात्पूर्वेण वाक्येनापनीता देवता । न तदपरेण वाक्येन देवतान्तरेण संयोजितम् । तस्मात्प्रहीणमेव तत् ॥ ११ ॥

( अनिरुप्तेऽप्यभ्युदितेष्ट्यनुष्ठानाधिकरणम् ॥ ३ ॥ )

[ ३ ] निरुप्ते स्यात्तत्संयोगात् ॥ १२ ॥ पू०

अस्मिन्नेवोदाहरणे संशयः । किं यदि निरुप्तेऽभ्युदयोऽवगम्यते, तदाऽभ्युदितेष्टिरुतानिरुप्तेऽपीति । किं प्राप्तम् । निरुप्तेऽवगतेऽभ्युदितेष्टिः स्यात् । कुतः । तत्संयोगात् । निर्वापसंयोगो हि भवति, यस्य हविर्निरुप्तमिति । तस्मादनिरुप्ते नैतद्विधानमिति ॥ १२ ॥

प्रवृत्ते वा प्रापणान्निमित्तस्य ॥ १३ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । अकाले तन्त्रप्रवृत्तिमात्रे स्यादेतद्विधानम् । प्राप्तं हि तावत्येव निमित्तं, यस्य हविरभ्युदेतीति हविर्ग्रहणं लक्षणत्वेन । यस्य हविरभ्युदेतीति हविर्लक्षित उदयो निमित्तं, प्रवृत्तं हविर्लक्षयति, नोदासीनम् । तस्मात्, हविरभ्युदेतीत्युच्यमाने प्रवृत्तं हविरभ्युदेतीति गम्यते । न हि तत्, निरुप्तमित्येतेन शक्यं विशेषयितुम् । भिद्येत हि तदा वाक्यम् । यस्य[1] हविर्निरुप्तमित्येवमनपेक्ष्यमाणे

अथवेति—अस्मिन्पक्षे विभजेदिति विभागार्थीयो विशब्दः श्रुतिवृत्तः । व्यतिहारपक्षे तु संयुक्तस्य कारकस्य विभागेनोत्तरसंयोगं लक्षयेत् । लक्षणा च लौकिकी सत्यां गतावयुक्ता । ननु वियोगो भजनं च विरुद्धावर्थौ न शक्यौ परस्परेण विशिष्टौ विधातुम् । उच्यते । विशब्दार्थं केवलं विधास्यामः । ननु वाक्यार्थः स्यात् । सत्यमेतत् । विशिष्टविधानात्तु लघुतरोऽसौ, यो धात्वर्थे वियोगविधिः । अनपराद्धस्य[2] यथाप्रकृति द्रव्यदेवताभजने प्राप्ते, अपराधे[3] निमित्ते नैमित्तिको भजनवियोगः शिष्यते । तत्र देवताभ्योऽपनीतेषु[4], कृते नैमित्तिके यस्य द्रव्यस्य पुनः संयोगवचनमस्ति, देवतान्तरेण युक्तं तत् । यस्य तु नास्ति, प्रहीणं तत् । न च चतुर्गृहीतसंयोगोऽस्ति[5] । तस्मात्प्रहीणमुपांशुयाजकर्मेति ॥ ११ ॥

आर्त्यां[6] पदान्तरगतो गुणो विचारितः । इह पदान्तरगता क्रिया विचार्यते, एतावान्भेदः ॥ १२ ॥

१ यस्य हविर्निरुप्तं नानिरुप्तमित्येवमपेक्ष्यमाणे हविरभ्युदेतीति न शक्यते विधातुम्—पा० । २ अनपराद्धस्य—पुरुषस्येति शेषः । ३ अपराधे—कालापराधे । ४ अपनीतेष्विति—सर्वहविःष्विति शेषः । ५ चतुर्गृहीतसंयोग इति—चतुर्गृहीतस्योपांशुयाजद्रव्यस्य देवतान्तरसंयोगो न चास्तीत्यर्थः । ६ आर्त्यामिति—( अ० ६ पा० ४ अ० ६ ) हविरार्त्यधिकरण इति शेषः ।

हविरभ्युदेतीति शक्यते विधातुम् । तस्मादनिरुप्तेऽपीष्टिरिति ॥ १३ ॥

लक्षणमात्रमितरत् ॥ १४ ॥

अथ यदुक्तं, निरुप्तसंयोगो भवति, यस्य हविर्निरुप्तमिति । लक्षणमात्रमेतन्निरुप्तमिति । कस्मिंश्चित्पदार्थे तस्य प्रवृत्त इत्यर्थः ॥ १४ ॥

तथा चान्यार्थदर्शनम् ॥ १५ ॥

अन्यार्थोऽपि चैतमर्थं दर्शयति, स यद्यगृहीतं हविरभ्युदियात्, प्रज्ञातमेव । तदेषा व्रतचर्या । यत्पूर्वेद्युर्दुग्धं दधि हविरातञ्चनं तत्कुर्वन्ति, प्रतिमुञ्चन्ति वत्सान्, तानेव तत्पुनरपाकुर्वन्ति, तानपराह्णे पर्णशाखयाऽपाकरोति । तद्यथैवादः प्रज्ञातमामावास्यं हविरेवमेव तत्, यद्यु व्रतचर्या वा नोदाशंसेत, गृहीतं वा हविरभ्युदियादितरथा तर्हि कुर्यात्, एतानेव तण्डुलान्सुफलीकृतानिति, अगृहीते हविष्यन्यं विधिं ब्रुवन् गृहीतेऽप्यनिरुप्ते वाऽभ्युदये प्रायश्चित्तं दर्शयति ॥ १५ ॥

( अनिरुप्तेऽप्यभ्युदये वैकृतीभ्य एव निर्वापाधिकरणम् ॥ ४ ॥)

[ ४ ] अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्याश्मरथ्यस्तण्डुलभूतेष्वपनयात् ॥ १६ ॥ पू०

प्रवृत्तमात्रं निमित्तमिति स्थितम् । नैमित्तिकस्तु देवतापनयो देवतान्तरसंयोगश्च, किं निर्वापोत्तरकालं तण्डुलावस्थे हविषि कर्तव्यः, निर्वापस्तु प्राकृतीभ्य एव स्यात्, ज्ञातेऽभ्युदये, उत वैकृतीभ्य एवेति संशयः । किं तावत्प्राप्तम् । अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्याश्मरथ्य आचार्यो मन्यते स्म । कुतः । तण्डुलभूतेष्वपनयात् । तण्डुलभूतेष्वपनयः श्रूयते, यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति, त्रेधा तण्डुलान् विभजेदिति । अभ्युदयावगमादनन्तरं तण्डुलविभागमाह । सोऽतण्डुलभूतेषु नावकल्पते । तस्मादनिरुप्ते तण्डुलाभावादनपनीता देवताः प्राकृत्य इति प्राकृतीभ्य एव निर्वपेदिति ॥ १६ ॥

व्यूधर्वभाग्भ्यस्त्वालेखनस्तत्कारित्वाद्देवतापनयस्य ॥ १७ ॥ सि०

तुशब्दः पक्षं व्यावर्तयति । व्यूधर्वं या भजन्ते कर्म, ताभ्यो निर्वपेदित्यालेखन आचार्यो मन्यते स्म । कुतः । तत्कारित्वाद्देवतापनयस्य । यस्मादकाले तन्त्रप्रवृत्तिकारितो देवतापनयस्तस्मादपनीता देवतेति व्यूधर्वभाग्भ्यो निर्वप्तव्याः ॥ १७ ॥

---

[ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

(अर्धनिरुप्ते चन्द्राभ्युदये तूष्णीमवशिष्टनिर्वापाधिकरणम् ॥ ५ ॥)

[ ५ ] विनिरुप्ते न मुष्टीनामपनयस्तद्गुणत्वात् ॥ १८ ॥ पू०

अथ प्रारब्धे चतुर्मुष्टिनिर्वापेऽपरिसमाप्ते भवति संशयः—यन्निरुप्तं तन्निरुप्तमेव । अवशिष्टं किं प्राकृतीभ्यो निर्वप्तव्यं, किं वैकृतीभ्यः, उत तूष्णीमेवेति । किं प्राप्तम् । विनिरुप्ते सामिनिरुप्त इत्यर्थः । न तत्र देवतापनयः स्यात् । कुतः । तद्गुणत्वात् । निर्वापस्य गुणो देवता, न मुष्टीनाम् । स च निर्वापस्तद्देवताकः । कुतः । चतुःसंख्यापूरणार्थत्वादभ्यासमात्रं कर्तव्यम् । तच्चाभ्यासमात्रं पुनः क्रियते, पूर्वमेव कृते तस्मिन्निर्वापे न देवताऽपनीता । स एवायं पुनः क्रियते । पुनरपि क्रियमाणस्यानपनीतैव देवता भवितुमर्हतीति प्राकृतीभ्य एव निर्वप्तव्यम् । न चोत्तरो मुष्टिः पृथक्पदार्थो, येन देवतापनयो भवेत् । कृतस्य निर्वापस्य संख्यापूरणमेतात्क्रियते । तस्मादनपनय इति ॥ १८ ॥

अप्राकृतेन हि संयोगस्तत्स्थानीयत्वात् ॥ १९ ॥

न प्राकृतीभ्यो निर्वप्तव्यम् । काभ्यस्तर्हि । वैकृतीभ्यः । कुतः । अप्राकृतेन देवताविशेषेण संयोगः श्रूयते, नाधिकृतेन । त्रेधा तण्डुलान् विभजेदिति, प्राकृतीभ्य आच्छिद्य वैकृतीभ्यो निर्वप्तव्यो विधीयते । ता इदानीं तत्स्थानीयाः । तस्माद्विनिरुप्ते निवृत्ता देवताः, अन्या अन्याश्चोपजाताः । तस्माद्वैकृतीनां संयोगेन निर्वापशेषः कर्तव्य इति ॥ १९ ॥

अभावाच्चेतरस्य स्यात् ॥ २० ॥ सि०

अभावादितरस्यार्धस्य देवतासंयुक्तस्य, न निर्वापो भवति देवतासंयुक्तः । यदि निर्वापेऽर्धोऽन्यदेवत्योऽर्धोऽप्यन्यस्यै देवतायै, नैव

---

॥ १८ ॥ १९ ॥ ]

तुशब्दार्थे चशब्दः । इतरथा चशब्दः समुच्चयं वदेत् । स चायुक्तः । न हि पूर्वोक्ते कस्यचिदभावो हेतुत्वेन[१] । अपि च प्राकृतीभ्यो निर्वापपदार्थमाश्रित्य प्रथमे मुष्टौ संयोगो निर्वृत्तः । तस्याभ्युदयेन निमित्तेन विभजेदिति विभाग उच्यते । पदार्थ इति कृत्वा संयुक्तः[२] पूर्वम् । इदानीमेकदेशो वियोज्यते । शक्यते च वियोक्तुम् । वियोगस्य संयुक्तमात्राश्रयत्वात् । न चान्यया देवतया संयोगः शक्यते कर्तुं, पदार्थाश्रयत्वात्तस्य । मुष्टिशे-

---

१ हेतुत्वेनेति—संभवतीति शेषः । २ संयुक्त इति—प्राकृतीभिर्देवताभिर्निर्वाप इति शेषः ।

निर्वाप इतरदेवताकः प्राकृत इतरदेवताको वा । तस्मात्तूष्णीमेव निर्वप्तव्यम् । अवश्यमन्यतरत्र संकल्पभेदो भवति ॥ २० ॥

( असंनयतोऽप्यभ्युदये प्रायश्चित्ताधिकरणम् ॥ ९ ॥ )

[ ९ ] सांनाय्यसंयोगान्नासंनयतः स्यात् ॥ २१ ॥ पू०

अभ्युदितेष्टिरेवोदाहरणम् । तत्र श्रूयते, दधनि चरुम्, शृते चरुमिति । तत्र संदेहः । किं संनयतो भवत्यभ्युदये प्रायश्चित्तमुताविशेषेणेति । किं प्राप्तम् । संनयतोऽभ्युदये प्रायश्चित्तम् । कुतः । सांनाय्यसंयोगात् । सांनाय्यसंयोगो हि भवति । शृते चरुम्, दधनि चरुमिति । शृताद्यभावान्नासंनयतो भवितुमर्हति । वैगुण्यं हि तथा स्यात् ॥ २१ ॥

औषधसंयोगाद्वोभयोः ॥ २२ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । उभयोरपि स्यात् । न केवलस्य संनयतः । कुतः । औषधसंयोगात् । ये मध्यमा ये स्थविष्ठा ये क्षोदिष्ठा इति भवत्यौषधसंयोगः । स च शक्योऽसंनयताऽपीति । तस्मान्नासति कारणेऽसंनयतो निवर्तेत । अत उभयोरपि पक्षयोः प्रायश्चित्तमिति ॥ २२ ॥

वैगुण्यान्नेति चेत ॥ २३ ॥

इति यदुक्तम्, असंनयतो दध्नः शृतस्य चाभावात्तदधिकरणता नास्ति । तस्माद्वैगुण्यं तस्मिन्पक्ष इति । तत्परिहर्तव्यमिति ॥ २३ ॥

नातत्संस्कारत्वात् ॥ २४ ॥

नैतदेवम् । न हि दध्यधिकरणं चरोः श्रपणे श्रूयते । किंतु यथा स्थविष्ठा इन्द्राय प्रदात्रे, एवं दध्यपि देवतासंबन्धार्थं विधीयते, न चरुसंबन्धार्थमिति । भिद्येत हि तथा वाक्यं, स्थविष्ठा देवतायै, दधनि च ते कर्तव्या इति । सप्तमीसंयोगस्तु प्राप्तेऽर्थेऽनुवादः । तस्मादविवक्षितं

---

षश्च पदार्थैकदेशः । तस्मात्प्राकृतनिवृत्तेर्वैकृतासंयोगाच्च तूष्णीं निर्वापः । अन्यत्रापि बहुवयये पदार्थेऽयमेव न्यायः । यथा प्रदाने, तस्याप्यनुवचनप्रैषयाज्यादयोऽन्यथा: ॥ २० ॥ [ २१ ॥ २२ ॥ २३ ॥ ]

भिद्येत हि तथा वाक्यमिति—स्वार्थपरार्थवद्भावापेक्षमेतदुच्यते । देवतासंबन्धेऽस्य स्वार्थता, चरुसंबन्धे परार्थतेति । सप्तम्यर्थोऽनुवाद इति । कथमेतत् । एतत्तावद्दर्शकमेव निमित्तेऽन्यथाकारम् । तत्र पयः स्वैर्धर्मैर्धर्मवत् । औषधस्यापि श्रपणं स्वैरेव धर्मैः

तेषां साहित्यम् । लक्षणत्वेन हि ते श्रूयन्त इति । न हि पयो दधि च नास्तीति स्थविष्ठादीनां न देवतापनयो भवति । असंनयतोऽप्यर्थादप्सु श्रपयिष्यत इति ॥ २४ ॥

( सत्राय प्रवृत्तमात्रस्य व्युत्थाने विश्वजिद्विधानाधिकरणम् ॥ ७ ॥ )

## [७] साम्युत्थाने विश्वजित्क्रीते विभागसंयोगात् ॥२५॥ पू०

इदमामनन्ति, यदि सत्राय दीक्षितानां साम्युत्तिष्ठेरन्, सोममपभज्य विश्वजिताऽतिरात्रेण सर्वस्तोमेन सर्वपृष्ठेन सर्ववेदसदक्षिणेन यजेरन्निति । तत्र संदेहः । किं क्रीतराजकस्योत्थाने विश्वजिदुत प्रवृत्तमात्रस्येति । किं प्राप्तम् । साम्युत्थाने विश्वजित्क्रीते स्यात् । कुतः । विभागसंयोगात् । सोममपभज्य विश्वजिता यजेरन्निति । ये ह्यक्रीते राजन्युत्तिष्ठन्ति, तेषां सोमविभागाभावाद्वैगुण्यं स्यात् । तस्मात्क्रीतराजका उत्तिष्ठन्तो विश्वजितं कुर्युः ॥ २५ ॥

---

प्रणीतादिभिर्भवत् । तयोः प्रत्यक्षेण चोदनावाक्येन भिन्नमेव श्रपणमुपदिश्यते । कुतः साहित्यं, येनार्थप्राप्तः सप्तम्यर्थो भवेत् । दध्नस्तु श्रपणमपि नास्ति । तस्य दूरत एव नष्टः सहभावः ।

अथोच्येत, पयसः पूर्वमवदाय तत्र चर्ववदानं निक्षिप्यते, एवं पयसि दधनि च भविष्यतीति । तदपि न । न ह्येतदवदाने श्रूयतेऽभ्युदयेन निमित्तेन । किं तर्हि । विभागोऽभ्युदये विधीयते । न च वचनमन्तरेण दधि पयो वा चरोः शक्यं पूर्वमवदातुम् । तस्मादेवमेतद्विज्ञेयम् । अभ्युदितेष्टिप्रकरणे सहश्रपणविधातृवाक्यमस्ति 'सह श्रपयति' इति । अतः साहित्ये क्रियमाणेऽर्थप्राप्तः सप्तम्यर्थोऽनुवादः । विशिष्टविधानं तु निःसरणोपायत्वेन भवति । स्थविष्ठानिन्द्राय प्रदात्रे दधनि चरुमिति पञ्चपदविशिष्टा भावना विधीयते । यागस्तु धात्वर्थः संनिहित एव । यदि संनिहितो न स्यात्कर्मान्तरं भवेत् । अस्ति तु सः । एवं भाष्यकारेण नाङ्गीकृतं बह्वर्थत्वाद्वाक्यभेदसरूपमेवेति कृत्वा ॥२४॥

विश्वजिदयं सत्रफलार्थः, सत्रापरिसमाप्तिदोषोपघाताय वा, न तु स्वर्गफलाय, अश्रवणात् ॥ २५ ॥

---

१ दीक्षिता अथ—पा० । २ भिन्नमेव श्रपणमिति—औषधस्य कपालेषु, पयसस्तूखायां श्रपणमुपादिश्यत इत्यर्थः । ३ एवमिति—कृते, इति शेषः । ४ भविष्यति—चरुरिति पूर्व शेषः । ५ एतदिति—दध्नः पयसो वाऽधिकरणत्वमित्यर्थः । ६ भाष्यकारेण किमिति विशिष्टभावनाविधिपक्षो नाभ्युपगत इति चेत्तस्याभिप्रायमाह—बह्वर्थत्वादिति—विशिष्टविधेरप्यर्थाद्विशेषणविधायकत्वावश्यंभावाद्गौरवलक्षणवाक्यभेदान्न मुक्तिरित्याशयः ।

प्रवृत्ते वा प्रापणान्निमित्तस्य ॥ २६ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति। प्रवृत्तमात्रस्योत्थाने स्यात्। कुतः। प्रापणान्निमित्तस्य। साम्युत्थानं निमित्तं विश्वजितः। तच्च प्राप्तम्। न च तच्छक्यं विशेषयितुं, क्रीते यदि साम्युत्थानमिति ॥ २६ ॥

आदेशार्थेतरा श्रुतिः ॥ २७ ॥

अथ यदुक्तम्, अक्रीते राजन्युत्तिष्ठन्तो विभागाभावाद्द्विगुणं कुर्युरिति। तत्परिहर्तव्यम्। अत्रोच्यते। न विभागो विधीयते। भिद्येत हि तथा वाक्यम्। साम्युत्थाने विश्वजिता यजेरन्, सोमस्य तु विभागं कृत्वेति। तेन, अपभज्येत्यनुवादः। कथं प्राप्तिरिति चेत्। अर्थादुत्तिष्ठतां विभागो भवति धनस्य। सोऽयं सर्वद्रव्याणां विभागः सोमविभागेन लक्ष्यते। सोमं विभज्यान्यानि च द्रव्याणीति, आदेशार्थेतरा श्रुतिर्भवति। तस्मात्क्रीते चाक्रीते च राजन्युत्तिष्ठतां विश्वजिदिति ॥ २७ ॥

( ज्योतिष्टोमस्य द्वादशदीक्षानियमाधिकरणम् ॥ ८ ॥ )

[ ८ ] दीक्षापरिमाणे यथाकाम्यविशेषात् ॥ २८ ॥ पू०

ज्योतिष्टोमं प्रकृत्य श्रूयते, एका दीक्षा, तिस्र उपसदः, पञ्चमी प्रसुत इति। तिस्रो दीक्षाः, द्वादश दीक्षा इति बहूनि दीक्षापरिमाणान्याम्नातानि। तेषु संदेहः। किमनियमो, यद्वा तद्वा परिमाणमुपादेयमुत द्वादश दीक्षा इति। किं प्राप्तम्। दीक्षापरिमाणे यथाकामी स्यात्। नास्ति नियमः। कुतः। अविशेषात्। न कश्चन विशेष उपादीयते।

[ ॥ २१ ॥ २७ ॥ ]

अत्रायुक्तः सिद्धान्तो वर्णितः। सत्यमत्र नित्यवदाम्नानं हेतुः, न तु 'द्वादशरात्रीर्दीक्षितो भृतिं वन्वीत' इत्यस्य वाक्यस्य। कस्य तर्हि। 'एका दीक्षा' इत्येवमादीनाम्। तानि हि नित्यवत्समाम्नातानि प्रकरणे, किमित्युत्कृष्यन्ते। तुल्यप्रमाणवतां च विकल्पः। आह—न तर्हि नित्यानि।

उच्यते। प्रकृत्यपेक्षं नित्यत्वम्। यदि विकल्प्यते, कथं भृतिवननवाक्यम्। आह—उत्कृष्यतां, को वा हेतुरत्र भवतो येन बहून्युत्कृष्यन्त एकं नोत्कृष्यते वरं बहूनामनुत्कर्षः, प्रकरणानुग्रहात्।

१ अत्र—सिद्धान्ते। २ प्रकृत्यपेक्षमिति—ज्योतिष्टोमापेक्षं नित्यत्वं नानुष्ठानापेक्षमित्याशयः।

तस्माद्यत्किंचित्परिमाणमुपादेयमिति ॥ २८ ॥

द्वादशाहस्तु लिङ्गात्स्यात् ॥ २९ ॥ सि०

द्वादशाह एव परिमाणमुपादीयेत । कुतः । लिङ्गात् । सामर्थ्यादित्यर्थः । किं सामर्थ्यम् । द्वादश रात्रीर्दीक्षितो भृतिं वन्वीतेति नित्यवदाम्नायते, न पाक्षिकम् । तदेव नित्यं कुर्वन्न शक्नोत्यन्यत्परिमाणमुपादातुम् । तस्माद्द्वादशाह एव परिमाणं नियम्येत । अन्यानि परिमा-

---

अपि चैकादिवाक्यान्यपि प्रकरणाज्ज्योतिष्टोमस्य । भृतिवननवाक्यमपि । न च तुल्यप्रकरणेनान्यतमेनान्यतममुत्क्रष्टुं शक्यते । अयं चाप्यनुवाद एव । यद्ययं विधीयेत वाक्यं भिद्येत । कथम् । भृतिवननं तावदर्थप्राप्तम् । न हि तेन विना परिक्रयः संभवतीति, तत्तावन्न विधेयम । 'द्वादश रात्रीः' इत्येतदपि नैव । सन्त्येव तस्य द्वादश रात्रयः 'द्वादश दीक्षाः' इति वचनात् । नित्यवद्द्वादश रात्रय इत्येतदपि नैव । एकादिवाक्यानर्थक्यभयात् । दीक्षितो दीक्षाऽस्य संजातेत्येतदपि नैव । संजातैव हि तस्य दीक्षा, आग्नावैष्णवादिभिः । किं तर्हि । भृतिवननस्योपपदस्य च संबन्धो विधीयते । तत्र यदि तावद्भृतिवननं कुर्याद्द्वादश रात्रीरिति ततो नित्यानित्यसंयोगः, नित्यवद्भृतिवननमनित्या द्वादश रात्रयः ।

अथ रात्रावेव भृतिवननं कस्मान्न विधीयते । उच्यते । वाक्यं भिद्येत, रात्रिषु भृतिवननं कुर्यात्तच्च द्वादशस्विति । अथ रुद्रात्रिषु भृतिवननं तद्द्वादशस्विति ततो विशिष्टानुवादः । यदि त्वन्यः पक्षः, [२]यद्भृतिवननं कुर्याद्दीक्षित इति, ततो न दोषः । विधेयं चैतत् । तद्धि दीक्षितस्य न प्राप्नोति । द्वादश रात्रीरिति चानुवादः पाक्षिकः । लक्षणा वा, दीक्षितकालसंबन्धेनेति । तस्मादियमेवावधारणा दीक्षापरिमाणे याथाकामीति ॥ २८ ॥

[३]द्वादशाहस्तु लिङ्गात्स्यात् । द्वादशाहे ज्योतिष्टोमीयदीक्षापरिमाणे याथाकाम्यं प्राप्तं, तत्र संदेहः । तथैवेहोत नियमः । अविशेषाद्याथाकामीति प्राप्तम् । 'द्वादशा-

---

१ नित्यवद्द्वादश रात्रय इत्येतदपि नैवेति—नित्यं च द्वादश रात्रय एवाऽऽश्रयितव्याः, न तु कदाचिदप्येकरात्रादय इत्येवं परिसंख्याऽपि नैव विधातुं शक्यत इत्यर्थः । २ यद्भृतिवननं कुर्याद्दीक्षित इति—अयमर्थः । यदृत्विक्परिक्रयार्थं द्रव्यं केनापि प्रकारेण प्राप्नुयात्तद्दीक्षितः सन् भृतिवननेनैव प्राप्नुयादिति । ३ 'दीक्षापरिमाणे यथाकाम्यविशेषात्' इति सूत्रं भाष्यमनादृत्योत्सूत्रपूर्वपक्षेण सिद्धान्तपरत्वेन व्याख्याय 'द्वादशाहस्तु लिङ्गात्स्यात्' इत्येतत्सूत्रमधिकरणान्तरपरतया व्याचष्टे वार्तिककारः ।

णानि विकृतौ भविष्यन्तीति नैषामानर्थक्यमिति ॥ २९ ॥

( माघ्याः पौर्णमास्याः पुरस्ताच्चतुरहे गावामयनिकदीक्षाविधानाधिकरणम् ॥ ९ ॥ )

[ ९ ] पौर्णमास्यामनियमोऽविशेषात् ॥ ३० ॥ पू०

गवामयने श्रूयते, पुरस्तात्पौर्णमास्याश्चतुरहे दीक्षेरन्निति । तत्र संदेहः । कस्याः पौर्णमास्या इति । किं प्राप्तम् । पौर्णमास्यामनियम इति । कुतः । अविशेषात् । नात्र कश्चिद्विशेषवचनः शब्द उपादीयते ॥ ३० ॥

आनन्तर्यात्तु चैत्री स्यात् ॥ ३१ ॥

तुशब्दः पक्षं व्यावर्तयति । नैतदनियम इति । चैत्री पौर्णमासी तु भवेत् । कुतः । आनन्तर्यात् । पौर्णमासीमुक्त्वाऽनन्तरं वाक्यशेषे चैत्री संकीर्त्यते । पुरस्तात्पौर्णमास्याश्चतुरहे दीक्षेरन् । ऋतुमुखं वैषा पौर्णमासी संवत्सरस्य, या चैत्री पौर्णमासीति । अत्र, संदिग्धेषु वाक्यशेषादिति चैत्री नियम्येत ॥ ३१ ॥

माघी वैकाष्टकाश्रुतेः ॥ ३२ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । न चैतदस्ति चैत्रीति । किं तर्हि । माघीति । कुतः । एकाष्टकाश्रुतेः । क्रये ह्येकाष्टकाश्रुतिर्भवति । तेषामेकाष्टकायां क्रयः संपद्यत इति । तस्मान्माघ्याः पुरस्ताच्चतुरहे दीक्षितस्यैकाष्टकायां क्रयः शक्यते कर्तुं, न चैत्र्याः । तदेतत्सामर्थ्यं नाम लिङ्गं तद्वाक्यस्य बाधकं भवति । तस्मान्माघी पौर्णमासीति ॥ ३२ ॥

अन्या अपीति चेत् ॥ ३३ ॥

इतिचेत्पश्यसि, माघी पौर्णमासी, एवमेकाष्टकायां क्रयः संपत्स्यत इति । तन्न । सर्वा अप्यष्टम्य एकाष्टकाः, द्वादशैकाष्टका इति । तेन न दोषः ॥ ३३ ॥

---

हस्तु लिङ्गात्स्यात्' । किं लिङ्गम् । 'षट्त्रिंशदहो वा एष यद्द्वादशाहः' इति । न चायं विधिः, अन्यस्तुतित्वात् । अपि च दीक्षावाक्ये 'द्वाभ्यां लोमावद्यति' इति षड्द्विकाननुक्रम्य[2] द्वादशत्वं स्तौति । तस्मात्, द्वादश द्वादशाहे दीक्षाः ॥२९॥[३०॥ ॥ ३१ ॥ ३२ ॥ ३३ ॥

---

१ ( अ० १ पा० ४ अ० १३ सू० २४ )। २ षड्द्विकानिति—'अभीन्धत एव दीक्षाभिः' इत्यनेन दीक्षाबहुत्वं विधाय 'द्वाभ्यां लोमावद्यति, द्वाभ्यां त्वचं, द्वाभ्यामसृक्, द्वाभ्यां मांसं, द्वाभ्यामस्थि, द्वाभ्यां मज्जानम्' इत्येवं श्रूयमाणानित्यर्थः ।

न भक्तित्वादेषा हि लोके ॥ ३४ ॥

नैतदेवं, भाक्तो ह्यन्यास्वष्टमीष्वेकाष्टकाशब्दः। एषा हि मुख्या, या माघ्यां वृत्ता। मुख्यगौणयोश्च मुख्ये संप्रत्ययः। तस्मान्माघ्येव पौर्णमासीति ॥ ३४ ॥

दीक्षापराधे चानुग्रहात् ॥ ३५ ॥

एकाष्टकायां दीक्षेरन्। एषा वै संवत्सरस्य पत्नी, यदेकाष्टका, इत्युक्त्वा पुनः, चतुरहे पुरस्तात्पौर्णमास्या दीक्षां विधाय, तेषामेकाष्टकायां क्रयः संपद्यते। तेनैकाष्टकां न छंबट् कुर्वन्तीति, दीक्षातः प्रच्युतामेकाष्टकां क्रयेण तु गृह्णन् [1]माघ्याः पौर्णमास्या अधिकारं दर्शयति। अस्यां च माघ्यामष्टम्यामभिजियमानायां भवति मन्त्रः—

यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवाऽऽयतीम्।
संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली ॥

अष्टकायै सुराधसे स्वाहा, इति। याऽसौ माघ्यष्टमी, तामेकाष्टकां दर्शयति ॥ ३५ ॥

उत्थाने चानुप्ररोहात् ॥ ३६ ॥

उत्थाने चानुप्ररोहं दर्शयति। तानुत्तिष्ठत ओषधयो वनस्पतयोऽनूत्तिष्ठन्तीति, वसन्त उत्थानं दर्शयति। तस्मिन्नोषधयो वनस्पतयश्चोत्तिष्ठन्ति। तस्मादपि सा नियम्यते ॥ ३६ ॥

अस्यां च सर्वलिङ्गानि ॥ ३७ ॥

आर्ता वा एते संवत्सरस्याभिदीक्षन्ते य एकाष्टकायां दीक्षन्ते, इति। आर्ता यस्मिन्काले भवन्ति, स आर्तः कालः। शीतेन चाऽऽर्ता भवन्ति। तस्मान्माघ्यष्टम्येकाष्टकेति। तथा, व्यस्तं वा एते संवत्सरस्याभिदीक्षन्ते, य एकाष्टकायां दीक्षन्ते, इति। अयनपरिवृत्तिर्व्यस्तशब्देनोच्यते। तथा, अपो नाभिनन्दन्तोऽवभृथमभ्यवयन्ति, इति चैत्र्यां दीक्षिता अभिनन्दन्तोऽभ्यवेयुः। तस्मादपि माघी पौर्णमासीति ॥ ३७ ॥

॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

१ माघ्याः पुरस्ताच्चतुरहे दीक्षां दर्शयति—पा०।

( दीक्षाकालोत्कर्षेऽग्निहोत्रादीनामुत्कर्षाधिकरणम् ॥ १० ॥ ) )

[ १० ] दीक्षाकालस्य शिष्टत्वादतिक्रमे नियतानामनुत्कर्षः प्राप्तकालत्वात् ॥ ३८ ॥ पू०

इदं श्रूयते, तस्माद्दीक्षितो न ददाति, न पचति, न जुहोतीति। ज्योतिष्टोमे समामनन्ति, तिस्रो दीक्षा इत्येवमादि। यदि तु दैवान्मानुषाद्वा प्रतिबन्धाद्दीक्षाकाल उत्कृष्यते, तत्र संदेहः। किं दानहोमपाकानामुत्कर्ष उत नेति। किं प्राप्तम्। अनुत्कर्षः। नियता हि दानहोमपाकाः, यावज्जीवमग्निहोत्रं जुहोतीत्येवमादिभिः श्रुतिभिः। तेषामपवादो, येष्वहःसु साङ्गो ज्योतिष्टोमो विहितस्तावन्त्यहानि मुक्त्वाऽन्येष्वहःसु कर्तव्याः। ज्योतिष्टोमविधानकालात्परतोऽप्रतिषिद्धाः। तस्मात्कर्तव्याः। प्राप्तो हि तेषां काल इति ॥ ३८ ॥

उत्कर्षो वा दीक्षितत्वादविशिष्टं हि कारणम् ॥ ३९ ॥ सि०

वाशब्दात्पक्षो विपरिवर्तते। यदुक्तं नैषामुत्कर्ष इति। नैतदेवम्। उत्क्रष्टव्याः। कुतः। दीक्षितत्वात्। दीक्षितस्य ते प्रतिषिद्धाः, न दीक्षितो यस्मिन्काले। लक्षणा ह्येवं स्यात्। यथा तु वयं ब्रूमस्तथा श्रुतिः कारणम्। प्राक् चावभृथादयं दीक्षित एव। अविशिष्टं हि कारणम्। यदेव ज्योतिष्टोमविधानकाले, तदेवातिक्रान्तेऽपि। उभयत्र हि दीक्षितत्वं हि कारणम्। तस्मात्तेषामुत्कर्ष इति ॥ ३९ ॥

( ज्योतिष्टोमोत्कर्षे प्रतिहोमाननुष्ठानाधिकरणम् ॥ ११ ॥ )

[ ११ ] तत्र प्रतिहोमो न विद्यते यथा पूर्वेषाम् ॥ ४० ॥ सि०

तत्रोत्कृष्यमाणे ज्योतिष्टोमे, अकृतेषु होमेषु किं परिसंख्याय होमाः कर्तव्या उत नेति। किं प्राप्तम्। परिसंख्याय होमाः क्रियेरन्। किं कारणम्। अवश्यकर्तव्यतया हि ते विहिता होमाः। अतिपन्ना अपि कर्तव्या एव। तथा ह्येषामवश्यकर्तव्यताऽनुगृहीता भविष्यति। प्रधानमात्रं तु नियतं, नात्र कालानुरोधः कर्तव्यः। नदीवेगस्थानीयत्वात्। यद्यप्यतिक्रान्ताः कालाः। अतिक्रान्तानां परिसंख्याय प्रधानमात्राणि कर्तव्यानि। यथाऽवश्यकर्तव्यं भुक्तिभृतकदानादि[1] यद्यतिक्रान्तं भवति,

॥ ३८ ॥ ३९ ॥

[1] भक्तदानादि—पा०।

तत्परिसंख्याय क्रियते, एवमिदमपीति । एवं प्राप्ते ब्रूमः । तत्र प्रतिहोमो न विद्यते । यथा पूर्वेषाम् । कर्तव्यमकृत्वा कुर्यात्, नाकर्तव्यम् । अकर्तव्याश्चैते । प्रतिषिद्धत्वात् । यथा पूर्वेषामसति कालातिक्रमेऽकृतानां न प्रतिहोम एवमेषामपीति ॥ ४० ॥

कालप्राधान्याच्च ॥ ४१ ॥

कालप्राधान्यं च भवति । निमित्तत्वेन तस्य श्रुतत्वात् । तदभावे विहितमेव न भवति । प्रधानमात्रं यद्यपि नियम्येत, तथाऽपि निमित्ते काले । स च नदीवेगस्थानीयः कालोऽतिक्रान्तः । अतो न प्रतिहोमः कर्तव्य इति ॥ ४१ ॥

( उदवसानीयोत्कर्षेऽपि प्रतिहोमाननुष्ठानाधिकरणम् ॥ १२ ॥ )

[ १२ ] प्रतिषेधाच्चोर्ध्वमवभृथादिष्टेः ॥ ४२ ॥ सि०

ऊर्ध्वमवभृथात्, आ उदवसानीयाया इष्टेर्ये होमास्तेष्वतिपन्नेषु दैवेन मानुषेण वा प्रतिबलेन, भवति संशयः । किं प्रतिहोमः कर्तव्य उत नेति । किं प्राप्तम् । कर्तव्य इति । उन्मुक्तदीक्षो हि स तदा भवति । दीक्षाणामुन्मोचनार्थो ह्यवभृथः । तस्मात्कर्तव्यास्ते न कृता इति । एवं प्राप्ते ब्रूमः । ऊर्ध्वमवभृथात्, आ उदवसानीयाया इष्टेः, अतिपन्नानां न प्रतिहोमः स्यात् । कुतः । प्रतिषेधात् । प्रतिषेधो हि भवति, एतया पुनराधेयसंमितयेष्ट्वाऽग्निहोत्रं होतव्यमिति । प्रागुदवसानीयाया होमस्य प्रतिषेधः । यावदुदवसानीयोत्कृष्यते, तावत्प्रतिषेधः । एवं श्रुतिः । इतरथा लक्षणा स्यात् । तस्मादकर्तव्याः । ते न कृता इति न स्यात्प्रतिहोम इति ॥ ४२ ॥

( प्रतिहोमपक्षे सायमग्निहोत्रप्रभृत्यारम्भानुष्ठानाधिकरणम् ॥ १३ ॥ )

[ १३ ] प्रतिहोमश्चेत्सायमग्निहोत्रप्रभृतीनि हूयेरन् ॥ ४३॥ सि०

एतेष्वेवोदाहरणेषु भवति संशयः । किं प्रतिहोमे सायमग्निहोत्रप्रभृतीन्यारभ्येरन्, उत प्रातरग्निहोत्रप्रभृतीनीति । ननु नास्त्येव प्रतिहोम इति स्थितम् । उच्यते । अस्तीति कृत्वा चिन्तयामः । कृत्वा चिन्तेयम् । अन्येषु सदृशन्यायेषूदाहरणेष्वस्याः प्रयोजनमस्तीति चिन्त्यते । किं प्राप्तम् । अनियमः । अर्थकृतत्वात् । एवं प्राप्ते ब्रूमः । यदि प्रतिहोमः क्रियते, सायमग्निहोत्रादारभ्यातिपन्नानि, तेनैवाऽऽनुपूर्व्येण प्रतिहोतव्यानीति ॥ ४३ ॥

॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥

( षोडशिसंस्थे प्रातरग्निहोत्रप्रभृति प्रतिहोमानुष्ठानाधिकरणम् ॥ १४ ॥ )

[१४] प्रातस्तु षोडशिनि ॥ ४४ ॥ सि०

षोडशिसंस्थे ज्योतिष्टोमेऽतिपन्नेषु होमेषु संदेहः । किं सायमग्निहोत्रेण प्रतिहोतव्यमुत प्रातरग्निहोत्रेणेति । किं प्राप्तम् । सायमग्निहोत्रेणेति पूर्वस्मिन्नधिकरण उक्तम् । उत्सर्गेण सर्वत्रैवमिति प्राप्तम् । तथा प्राप्त उच्यते । प्रातस्तु षोडशिनि । षोडशिसंस्थे प्रातरग्निहोत्रप्रभृतीन्यतिपन्नानीति प्रातरग्निहोत्रादेव समारभ्याणीति ॥ ४४ ॥

( भेदनादिनिमित्तकहोमानां दर्शपूर्णमासमात्राङ्गताधिकरणम् ॥१५॥ )

[१५] प्रायश्चित्तमधिकारे सर्वत्र दोषसामान्यात् ॥ ४५ ॥ पू०

दर्शपूर्णमासयोः श्रूयते, भिन्ने जुहोति, स्कन्ने जुहोतीति । तत्र किं दर्शपूर्णमासयोरेवैतत्, भिन्ने स्कन्ने च प्रायश्चित्तमुत यत्र भिद्यते स्कन्दति चेति । किं प्राप्तम् । प्रकरणे यत्प्रायश्चित्तमेवंजातीयकं किंचिदुत्पन्नं तत्सर्वत्र, यत्र यत्र भिद्यते स्कन्दति वा, तत्र तत्र स्यात् । कस्मात् । दोषसामान्यात् । समानं निमित्तं स्कन्दनं भेदनं वा । स एवात्र दोष इत्यभिप्रेतम् । प्रकरणाद्दर्शपूर्णमासयोः प्रायश्चित्तम् । वाक्यादन्यत्रापि । प्रकरणाच्च वाक्यं बलीयः । तस्मात्सर्वत्र स्कन्ने, भिन्ने च प्रायश्चित्तमिति ॥ ४५ ॥

प्रकरणे वा शब्दहेतुत्वात् ॥ ४६ ॥ सि०

प्रकरण एव भिन्ने, स्कन्ने वा प्रायश्चित्तम् । कुतः । शब्दहेतुत्वात् । तेन प्रकृतेनार्थेन सहैकवाक्यता, एषां होमानाम् । ततो होमवतो यागस्य प्रत्यापने प्रकृतो यजेतेति शब्दो हेतुः । एवं चेत्तदुपकारेणार्थवान्भविष्यतीति । इतरथा विना वाक्येन फलं कल्पयितव्यं स्यात् । तस्माद्वाक्यं फलाभावेनैव बाधितमिति कृत्वा प्रकरणमनुग्रहीतव्यमिति ॥ ४६ ॥

अतद्विकारश्च ॥ ४७ ॥

न च तद्विकारोऽग्निहोत्रं, ज्योतिष्टोमो वा । न दर्शपूर्णमासविकारः । यदि तद्विकारो भवेत्, तत्रापि स्कन्ने भिन्ने वा प्रायश्चित्तं स्यादिति ॥ ४७ ॥

---

॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥

( व्यापन्नशब्दार्थनिर्णयाधिकरणम् ॥ १६ ॥ )

[ १६ ] व्यापन्नस्याप्सु गतौ यदभोज्यमार्याणां तत्प्रतीयेत ॥ ४८ ॥ सि०

व्यापन्नमप्सु प्रहरतीति श्रूयते । किं व्यापन्नमित्युच्यत इति । तदभिधीयते । व्यापन्नं दूषितं, येन कार्यं न क्रियते । किं तत् । यदभोज्यमार्याणां केशकीटावपन्नम्, अन्येन वोपघातेनोपहतं, तद्व्यापन्नमिति॥४८॥

( अपच्छेदयौगपद्येऽपि प्रायश्चित्तविधानाधिकरणम् ॥ १७ ॥ )

[१७] विभागश्रुतेः प्रायश्चित्तं यौगपद्ये न विद्यते ॥ ४९ ॥ पू०

ज्योतिष्टोमे प्रस्तोतृउद्गात्रोरुद्गातृप्रतिहर्त्रोर्वा यत्र युगपदपच्छेदः, किं तत्र प्रायश्चित्तं स्यान्नेति भवति संशयः। किं तावत्प्राप्तम् । प्रायश्चित्तं यौगपद्ये न विद्यते । कुतः । विभागश्रुतेः । विभक्तेऽपच्छेदे प्रायश्चित्तमामनन्ति। अपच्छेदश्चायं विभागः । स उभाभ्यां साध्यते । इह चैकेन साध्यमाने श्रूयते प्रायश्चित्तमुद्गात्रा प्रतिहर्त्रा वा । न च यदपरेण सह क्रियते, तत्केवलेन कृतं भवति । यदि हि केवलेन कृतं स्यात्, केन कृतेऽपरः किं कुर्यात् । तस्मान्न युगपदपच्छिन्नयोः प्रायश्चित्तमिति ॥ ४९ ॥

स्याद्वा प्राप्तनिमित्तत्वात्कालमात्रमेकम् ॥ ५० ॥ सि०

स्याद्वा प्रायश्चित्तं यौगपद्येऽपि । प्राप्तं हि निमित्तमपच्छेद उद्गातुः प्रतिहर्तुश्च। यत्र हि द्वयोरपच्छेदस्तत्र द्वावप्यपच्छिन्नौ, एकोऽप्यपरोऽपि। संयुक्तस्य हि पृथग्भावोऽपच्छेदः । स चोभयस्थोऽपि । एकेनापि तत्रापच्छेदः क्रियतेऽनपेक्ष्यापरमपरेणापि । कालमात्रं तु तत्रैकम् । न च कालैक्यादपच्छेदयोरैक्यं भवति । तस्मात्प्रायश्चित्तं युगपदपच्छेदेऽपि ॥ ५० ॥

( अपच्छेदयौगपद्येऽदाक्षिण्यसर्वस्वदाक्षिण्ययोर्विकल्पाधिकरणम् ॥ १८ ॥ )

[१८] तत्र विप्रतिषेधाद्विकल्पः स्यात् ॥५१॥ सि०

यद्युद्गातृप्रतिहर्त्रोर्युगपदपच्छेदो भवति, तत्र संदेहः । किमदाक्षिण्यं, सर्वस्वं वेति भवति विकल्प उत समुच्चय इति । किं प्राप्तम् ।

---

॥ ४८ ॥ ४९ ॥ ॥ ५० ॥

---

१ न तत्र ज्ञायते किं व्यापन्नमप्सु प्रतीयेतेत्युच्यत इति—पा० । २ पृथग्भावः—पा० ।

तत्र विप्रतिषेधाद्विकल्पः स्यात् । विरुद्धौ ह्येतौ कल्पौ, सर्वस्वमदाक्षिण्यं च । तस्माद्विकल्पो भवितुमर्हति ॥ ५१ ॥

प्रयोगान्तरे वोभयानुग्रहः स्यात् ॥ ५२ ॥

वाशब्दः पक्षं व्यावर्तयति । न चैतदस्ति, विकल्प इति । उभयोर्विधानात् । सर्वाङ्गोपसंहारी प्रयोगवचन एवमुपपद्यते । विकल्पे हि पक्षे बाधः । तस्मात्समुच्चयः । अथ यदुक्तं, विरोधाद्विकल्प इति । उच्यते । प्रयोगान्तरे वोभयानुग्रहः स्यात् । तेन पुनर्यजेतेत्युच्यते । द्विस्तस्य प्रयोगः । तत्रैकस्मिन्प्रयोगे, एकः कल्पः । अन्यस्मिन्नपरो भविष्यति । एवमविरोधः । तस्मादुभयं प्रायश्चित्तमिति ॥ ५२ ॥

न चैकसंयोगात् ॥ ५३ ॥

न चैतदेवम् । कुतः । एकसंयोगात् । स एव यागः पुनः क्रियेत । यद्यन्यतरेण विना वैगुण्यमित्यवधार्येत । सर्वस्वे क्रियमाणेऽदाक्षिण्याभावाद्विगुणः स्यात् । नान्यस्मिन्प्रयोगे क्रियमाणेऽन्यः प्रयोगोऽनुगृह्यते । न चादाक्षिण्यस्य सर्वस्वदानस्य च प्राधान्यम् । गुणवता प्रयोगेण कर्म संबन्धयितव्यम् । तस्माद्विकल्पः ॥ ५३ ॥

(अपच्छेदपौर्वापर्ये परनिमित्तकप्रायश्चित्तानुष्ठानाधिकरणम् ॥ १९ ॥)

[१९] पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् ॥ ५४ ॥ सि०

यत्राऽऽनुपूर्व्येण भवत्यपच्छेदस्तत्र किं पूर्वनिमित्तं प्रायश्चित्तमुतोत्तरनिमित्तमिति भवति संशयः । किं प्राप्तं, पूर्वस्य बलीयस्त्वम् । पूर्वापच्छेदे यन्नैमित्तिकं प्राप्तं, तस्मिन् सति तद्विरुद्धं न शक्यं कर्तुम् । न चाशक्यमुपदेशार्हं भवति । पूर्वविज्ञानं प्राप्तमिति न संशयः । तस्मात्तदविरोधेनान्यत्कार्यं न विरुद्धम् । क तर्हि तत्स्यात् । यत्र केवलं निमित्तम् । तस्मात्पूर्वविज्ञानं बलवत् ।

एवं प्राप्ते ब्रूमः । पौर्वापर्ये पूर्वदौर्बल्यं स्यात् । कुतः । आख्यातेन हि योऽर्थः कर्तव्य इत्युच्यते, तत्रैतदनुबद्धं, यथा शक्यते तथेति ।

---

॥ ५१ ॥ ५२ ॥ ५३ ॥ ]

पौर्वापर्योत्पत्तावपि निमित्तयोस्तन्नैमित्तिकप्राप्तौ पूर्वेण न्यायेन विकल्प इति पूर्वः

तत्पूर्वविज्ञानबाधेन शक्यते, नान्यथा । तेन पूर्वविज्ञानं बाधित्वेदं कर्तव्यमिति भवति शब्दार्थः । ननु पूर्वविज्ञान इदमुपपद्यते, यदन्यद्विरोधकं विज्ञानं भविष्यति, तन्मिथ्येति । अभूतं हि तत्र शक्यमाश्रयितुमिदं नाम तदिति । न चाप्रतिषिद्धे तस्मिन्न पूर्वविज्ञानं संभवति । तस्मादप्रतिषिद्धं भविष्यति । यदा तु तद्भवति, तदा पूर्वविज्ञानं बाधमानमेवोत्पद्यते । तदिदानीं बाधितं न शक्नोत्युत्तरं बाधितुमिति । प्रकृतिवत् । यद्धि प्राकृतं वैकृतेन बाध्यते, तत्राप्येतदेव कारणम् । नाबाधित्वा पूर्वविज्ञानं वैकृतं संभवतीति । प्राकृतं च पूर्वम् । यतो विकृतौ तदपेक्षा ।

प्रत्यक्षत्वाद्वैकृतमानुमानिकं प्राकृतं बाधत इति चेत् । प्रत्यक्षत्वेऽपि सति नैव बाधेत, यदि यथावर्णितोऽयमाख्यातार्थो न भवेत् । सति पूर्वविज्ञानेऽशक्यत्वात्प्रत्यक्षं प्राकृतं बाधेतैव । तस्मात्परबलीयस्त्वं न्याय्यमेवेति ॥ ५४ ॥

---

पक्षः । अत्र पूर्वबलीयस्त्वेन पक्षान्तरम् । ततस्तद्दौर्बल्यात्परबलीयस्त्वमिति सिद्धान्तः । यद्वत्पूर्वं नित्यं परेण नैमित्तिकेन बाध्यते तद्वन्नैमित्तिकविज्ञानं परेण नैमित्तिकविज्ञानेन बाध्यते । अत इहोत्पन्नस्य पूर्वविज्ञानस्य, विद्यमानशब्दस्योत्तरेण विज्ञानेन स्मृत्या प्रत्यवमृश्य विरुध्यमानस्य चतुर्थे क्षणे बाधो भवति । यथाशक्त्यनुबन्धादाख्याते । परं त्वनुत्पन्नत्वेनासत्त्वादपर्यालोच्यत्वादविरुद्धत्वादबाध्यम् । इहैवंलक्षणो बाधः ।

श्रुतिलिङ्गादिविरोधे प्रमाणानुत्पत्तिलक्षणो बाधः । उपक्रमवशेनोपसंहारशब्दार्थकल्पनायां लक्षणापरिग्रहेण शब्दार्थविज्ञानस्य धर्मबाधः । नित्यनैमित्तिकयोर्नित्यकाम्ययोः प्राकृतवैकृतयोश्च पौर्वापर्यनैमित्तिकन्यायेन पूर्वबाधः । सामान्यविशेषेषु सामान्याश्रयस्य विशेषे लक्षणया कार्यप्राप्तिः । विशेषाश्रयस्य तु श्रुत्या । श्रुत्या च लक्षणाप्राप्तं बाध्यते । तत्र वाच्यसंबन्धविज्ञानबाधः । वैकल्पिकयोस्त्वेकनिमित्ताश्रयणात्, अपूर्वं हि धर्माणां प्रयोजकं निमित्तं चेति पौर्वापर्याभावादितरेतरबाधनम् । इह तु पौर्वापर्ये पूर्वदौर्बल्यमिति ॥ ५४ ॥

---

१ पूर्वविज्ञानं बाधित्वा—पा० । २ पूर्वबलीयस्त्वेनेति—पूर्वं हि विज्ञानमसंजातविरोधित्वया निराबाधमुत्पद्यते । परं तु विज्ञानं संजातविरोधि नोत्पत्तुमर्हति । अतः श्रुतिलिङ्गादिवत्पूर्वबलीयस्त्वमित्याशयः । ३ तत्र वाच्येति—वाच्यसंबन्धनिमित्तस्य विज्ञानस्य—लक्षणाजनितस्य श्रौतविज्ञानेन बाध इत्यर्थः । ४ एकनिमित्ताश्रयणादिति—इतरेतरबाधनमिति वक्ष्यमाणेन संबध्यते ।

( उद्गात्रपच्छेदस्य परत्वे तन्निमित्तकपुनःप्रयोगे सर्वस्वदानाधिकरणम् ॥२० ॥)

## [२०] यद्युद्गाता जघन्यः स्यात्पुनर्यज्ञे सर्ववेदसं दद्याद्यथेतरस्मिन् ॥ ५५ ॥ सि०

यदा प्रतिहर्तुः पूर्वमपच्छेदस्तत उद्गातुः, तत्रादाक्षिण्येनेष्ट्वा पुनर्यष्टव्यम् । तत्र संदेहः । पुनर्यागे किं द्वादशशतं दातव्यमुत सर्वस्वमिति । किं प्राप्तम् । द्वादशशतम् । कुतः । एवं ह्याम्नायते, तत्र तद्दद्यात्, यत्पूर्वस्मिन् दास्यं स्यादिति । पूर्वस्मिंश्च प्रयोगे ज्योतिष्टोमदक्षिणैव प्राप्ता । तस्माद्द्वादशशतमिति ।

एवं प्राप्ते ब्रूमः । तत्र पुनर्यज्ञे सर्वस्वं दद्यात् । यथेतरस्मिन्, पूर्वस्मिन्नहनि सर्वस्वम् । कथं तत्र सर्वस्वमिति चेत् । प्रतिहर्तुरपच्छेदात् । प्रतिहर्तर्यपच्छिन्ने द्वादशशतं बाधित्वा सर्वस्वं दास्यं भवति । ननु पूर्वस्मिन्नहनि द्वादशशतमप्यसौ दास्यन्नासीत् । सत्यं, सर्वस्वदानेन तूभयं प्रदत्तं भवति । तस्मात्तद्देयम् । नन्ववागपि द्वादशशतात्सर्वस्वम् । नैतदेवम् । अङ्गीकृते द्वादशशते सर्वस्वमभ्यधिकं भवति । अपि च पूर्वस्मिन्नहनि नैव द्वादशशतं दास्यं भवति । एतावद्धि दास्यमित्युच्यते, यस्योत्तरकाले तावद्दास्यं भवति । न च पूर्वस्मिन्नहनि द्वादशशतं दीयते । तस्मान्न तद्दास्यमित्यवगम्यते । मिथ्याबुद्धिः सा, तत्त्वेन व्यवहारः ।

ननु च सर्वस्वमपि प्रतिषिद्धं भवति । तदप्यसौ न दास्यमिति । साऽप्यस्य मिथ्याबुद्धिः । नेत्याह । साभ्यासस्य ज्योतिष्टोमस्य प्रयोगः । तत्र प्रथमप्रयोगेऽदाक्षिण्यविरोधात्सर्वस्वं बाध्यते । द्वितीयप्रयोगे तद्दानं चोद्यते । तत्र विरोधो नास्ति । तस्यैव यज्ञस्य स एव

---

द्वादशशतं सर्ववेदसेन बाधितं न तद्दास्यं भवति । सर्ववेदसमप्यदाक्षिण्येन प्रतिषिद्धं, तदपि वा दास्यं न भवतीति साम्ये परिचोदिते परिह्रियते । बाधो हि परिमाणान्तरोपदेशेन प्रतिषेधेन वा संभवति । न च परिमाणान्तरं चोद्यते । न च सर्ववेदसं प्रतिषिध्यते । ननु 'अदक्षिणः संस्थाप्यः' इति दक्षिणाप्रतिषेधः । न । यथा न गृह्णाति षोडशिनमिति । अदक्षिणस्य संस्थापनं निर्वृत्तिः कथ्यमानाऽन्यथा न संभ-

---

१ तावद्दानं—पा० । २ तद्दास्यन्भवति—पा० । ३ परिचोदित इति—भाष्यकारेण, ननु च सर्वस्वमित्यादिना—मिथ्याबुद्धिरित्यन्तेन ग्रन्थेनेति शेषः ।

प्रयोगः । प्रतिहर्ता च तस्मिन्नपच्छिन्न इति द्वादशशतं बाधित्वा सर्वस्वमेव दास्यं भवति । तस्मात्सर्वस्वं तत्र देयमिति ॥ ५५ ॥

( अहर्गणे, उद्गातुरपच्छेदवदहरावृत्त्यधिकरणम् ॥ २१ ॥ )

[२१] अहर्गणे यस्मिन्नपच्छेदस्तदावर्तेत कर्मपृथक्त्वात्॥५६॥सि०

अहर्गणे यदा भवति कस्मिंश्चिदहन्युद्गातुरपच्छेदस्तदा संदेहः । किं कृत्स्नोऽहर्गण आवर्तेत उत तदेवाहरिति । किं प्राप्तम् । कृत्स्नोऽहर्गणः । कुतः । अपरैरहोभिर्विनाऽसौ विगुणो भवति । तस्मादहर्गण एवाऽऽवर्तेतेति । एवं प्राप्ते ब्रूमः । यस्मिन्नपच्छेदस्तदेवाऽऽवर्तेत । कुतः । कर्मपृथक्त्वात् । पृथगेतानि कर्माणि, नान्यदहरन्यस्य गुणभूतम् । इष्टेति च यागं परिसमाप्येति गम्यते, न साङ्गमिति । यान्यहरन्तराणि साहाय्येनोपकरिष्यन्ति, विद्यन्त एव तानि । अतः साहाय्यं करिष्यन्तीति । तस्मात्तदेवाऽऽवर्तेत ॥ ५६ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये षष्ठस्याध्यायस्य पञ्चमः पादः ॥

---

अथ षष्ठेऽध्याये षष्ठः पादः ॥

( सत्रेषु समानकल्पानामेवाधिकाराधिकरणम् ॥१॥ )

[१] संनिपातेऽवैगुण्यात्प्रकृतिवत्तुल्यकल्पा यजेरन् ॥ १ ॥ सि०

सत्राण्युदाहरणम् । सप्तदशावराः सत्रमासीरन्, य एवं विद्वांसः

---

भवतीति दक्षिणानिवृत्तिः कल्प्यते, न शब्दात् । साम्यासत्वात्क्रतोरुभयं संभवति । तस्मान्नार्थात्सर्ववेदसानिवृत्तिरिति । अनिवृत्तौ तु प्रतिहर्त्रपच्छेदात्सर्ववेदसं दास्यं भवति । तस्य प्रयोगान्तरे निक्षेपः[३] क्रियते ॥ ५५ ॥ [ ५६ ॥ ]

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां षष्ठाध्यायस्य पञ्चमः पादः ॥

---

सिद्धान्तोपक्रममिदमधिकरणम् । भिन्नकल्पानामधिकार इति पूर्वपक्षः । 'एवंकामाः

---

१ विना तदा विगुणं—पा० । २ ततः—पा० । ३ निक्षेपः क्रियत इति—' तत्र तद्दद्यात्, यस्पूर्वस्मिन्दास्यं स्यात् ' इत्यनेन वचनेनेति शेषः ।

सत्रमासते, य एवं विद्वांसः सत्रमुपयन्तीति । तत्र संदेहः । किं समानकल्पानां भिन्नकल्पानां च सहाधिकार उत समानकल्पानामेवेति । के पुनः समानकल्पाः । राजन्यात्रिवध्र्यश्ववसिष्ठवैश्यशुनकानां कण्वकश्यपसंकृतीनां नाराशंसो द्वितीयः प्रयाजः । तनूनपादितरेषाम् । एवं केचिन्नाराशंसकल्पाः, केचित्तनूनपात्कल्पाः । तत्र किं तावत्प्राप्तम् । संनिपाते बहूनां यजमानानां, य एव तुल्यास्त एव सह सत्रमासीरन् । कुतः । अवैगुण्यात् । इतरथा यस्य कल्पो नोपसंह्रियेत तस्य वैगुण्यं स्यात् । यथा प्रकृतावेव विना साद्गुण्येन फलाभाव एवमिहापीति ॥ १ ॥

वचनाद्वा शिरोवत्स्यात् ॥ २ ॥

वाशब्दात्पक्षो विपरिवर्तते । न चैतदस्ति, भिन्नकल्पानामनधिकार इति । तेऽप्यधिक्रियेरन् । कुतः । अविशेषात् । अविशेषेण सर्वेषां यजमानानां प्राप्तिः । न च भिन्नकल्पानां प्रतिषेधः । ननु वैगुण्यं भिन्नकल्पानाम् । अत्रोच्यते । वचनात् । सामान्यवचनेन भिन्नकल्पा अपि गृहीताः । तत्र शिरोवद्बाधः स्यात् । यथा, पुरुषशीर्षमुपदधातीति वचनसामर्थ्याच्छवशिरसां स्पर्शनं स्मृतिविप्रतिषिद्धमपि क्रियते, एवमिहापि । अथवा, आशिरवत् । यथा ऋतपेये, घृतव्रतो भवतीति वचनाद्व्रतदुहि निवृत्तायामन्यामाशिरे गां कल्पयन्ति । एवमेतदपि वचनाद्भविष्यति ॥ २ ॥

---

सत्रमासीरन् ' इति सामान्यवचनप्राप्तेः । वासिष्ठादीनां कर्तृणां नाराशंसो द्वितीयः प्रयाज इति । पूर्वपक्षवाद्यभिप्रायः । तत्र संनिपातेऽतत्कर्तृत्वान्निमित्तविघातादनङ्गं नाराशंसः । तत्कर्तृत्वाद्वावासिष्ठानाम् । तैरपि क्रियमाणेन नाराशंसेनेतरेषाम् । अत्रासत्राण्यप्यनेककर्तृकाण्युदाहरणमेव ॥ १ ॥ [ ॥ २ ॥ ]

---

१ इतरेषामिति—अवासिष्ठानामपि फलसिद्धिरिति पूर्वः पक्ष इति शेषः । सिद्धान्तस्तु, 'वासिष्ठादीनां नाराशंसो द्वितीयः प्रयाजः ' इत्यत्र स्वामित्वपरा षष्ठी । एवं च वासिष्ठोद्देशेन तदभिलषितफलसाधनीभूतदर्शपूर्णमासाङ्गभूतद्वितीयप्रयाजद्वारा नाराशंसमन्त्रविधानान्नाराशंसमन्त्रयुक्त एव क्रतुर्वासिष्ठादीनां फलसिद्धयै पर्याप्नोति, तनूनपाद्युक्त एवेतरेषामिति पर्यवसानान्न भिन्नकल्पानामधिकार इति । २ उदाहरणमेवेति—एवं च भाष्ये सत्रग्रहणमुपलक्षणार्थं ज्ञेयमित्यभिप्रायः ।

न वाऽनारभ्यवादत्वात् ॥ ३ ॥

नैतदस्ति, यदुक्तं भिन्नकल्पानामप्यधिकार इति । समानकल्पा एवाधिक्रियेरन् । कुतः । अवैगुण्यात् । अथ यदुक्तं, वचनाद्वैगुण्येनापि सेत्स्यतीति । तन्न । अनारभ्यवादत्वात् । तद्धि वचनात्प्रकल्प्यते, यस्मिन्न-कल्प्यमाने वचनमनर्थकं भवति । यदि ह्यारभ्य भिन्नकल्पानेन्दुच्येत, ततो वचनमनर्थकं भवतीति भिन्नकल्पानामपि सत्रमभ्युपगम्येत, न त्वारभ्य भिन्नकल्पानेतदुच्यते । समानकल्पेष्वर्थवत्ताऽस्य वचनस्य भविष्यति । तस्मान्न भिन्नकल्पानामधिकार इति ॥ ३ ॥

स्याद्वा यज्ञार्थत्वादौदुम्बरीवत् ॥ ४ ॥

स्याद्वा भिन्नकल्पानामधिकारः । कुतः । यज्ञार्थत्वात्कल्पस्य । वसिष्ठादीनां नाराशंसकल्पो यज्ञस्य साधकः । स च यज्ञः सर्वेषां साधारणः । परकल्पेनापि सिद्धः सिद्धो भवति । यथा, यजमानेन संमितामौदुम्बरीं परिवासयन्तीति यस्य कस्यचित्परिमाणेन सिद्धो यज्ञोऽन्येषामपि सिद्धो भवति । उच्यते । ननु प्रयाजस्य वाक्येन पुरुषसंबन्धः । स च प्रकरणमाप्तां यागार्थतां बाधिष्यत इति । नेति ब्रूमः । फलं हि तदा कल्पयितव्यम् । नन्वितरथाऽप्यदृष्टमवश्यं कल्पनीयम् । तत्रोच्यते । सत्यं कल्पनीयम् । प्रमाणेन तु प्रयोगवचनैकवाक्येन । द्वितीये तु पक्षे कल्पयित्वा शब्दं, तेनैकवाक्यता स्यात् । अथोच्यते । कंचित्समाम्नातेन सहैकवाक्यता भविष्यति । तथाऽप्यप्रकृतेन व्यवहितेन च कल्प्यमाना प्रकृतकल्पनाया गुरुतरा स्यात् ॥ ४ ॥

न तत्प्रधानत्वात् ॥ ५ ॥

नैतदेवम् । तत्प्रधानत्वात् । पुरुषार्थो ह्येष कल्पः । कथम् । वासिष्ठादीनां नाराशंसो यज्ञाङ्गमिति । यच्च यस्य यज्ञाङ्गं, तेन सह फलदं कर्म तस्य भवति । तेनैवमभिसंबन्धः क्रियते । वासिष्ठादीनां नाराशंसेन सहितं कर्म फलदं भवतीति ॥ ५ ॥

[ ॥ ३ ॥ ४ ॥ ५ ॥

१ वैगुण्येऽपि—पा० । २ सिद्धयै—पा० । ३ संमायौदुम्बरीं—पा० । ४ त्वदीये—पा० । ५ नाराशंसकल्पेन—पा० ।

औदुम्बर्याः परार्थत्वात्कपालवत् ॥ ६ ॥

अथ यदुपवर्णितं यथौदुम्बरी तथेहेति । परार्थत्वादौदुम्बर्याः, यजमानो गुणत्वेन श्रूयते । ननु तत्रापि प्रयोगवचनः पुरुषप्राधान्यं कुर्यात् । नैष दोषः । एकेनापि यजमानेन संमिता सेयं सर्वेषां यजमानसंमिता भवति । न त्विहैकस्य कल्पे संगृहीते सर्वेषां संगृहीतो भवति । तस्मादौदुम्बर्याः पारार्थ्यं, कपालवत् । यथा, पुरोडाशकपालेन तुषानुपवपतीति परार्थकपालेन तुषा उपवप्तव्या इत्युपादीयते । एवमेतदपीति ॥ ६ ॥

अन्येनापीति चेत् ॥ ७ ॥

एवं चेद्भवान्पश्यति, यजमानेन संमानं तत्प्रयोजनं, न स्वेनान्येन वा यजमानेनेति । तथा प्रयोगान्तरे यो यजमानस्तेनापि संमानं प्राप्नोति ॥ ७ ॥

नैकत्वात्तस्य चानधिकाराच्छब्दस्य चाविभक्तत्वात् ॥ ८ ॥

अत्रोच्यते । न प्रयोगान्तरस्य यजमानः प्रसज्यते । न तु यजमानशब्दे कश्चिद्विशेषः, यतो यजमानशब्दाद्व्यवस्था स्यात् । किं तर्हि । एकत्वस्य विवक्षितत्वान्न द्वाभ्यां याजमानानि कर्तव्यानीति नान्य आनीयते । आह । अन्य एव तर्हि सर्वयाजमानेषु भवतु । नैवम् । कामिनं ह्यधिकृत्य साङ्गस्य यागस्य वचनम् । यजमानशब्दश्चाविभक्त इहौदुम्बर्याः संमाने । तस्मान्नान्यो भविष्यति ॥ ८ ॥

संनिपातात्तु निमित्तविघातः स्याद्बृहद्रथंतरवद्विभक्तशिष्टत्वाद्वसिष्ठनिर्वर्त्ये ॥ ९ ॥

तुशब्दः पक्षं व्यावर्तयति । बहुषु यजमानेषु संनिपातान्निमित्तविघातः स्यात् । कुतः । विभक्तशिष्टत्वात् । वसिष्ठनिर्वर्त्ये प्रयोगे नाराशंसो नैमित्तिकः । अन्यस्मिंस्तनूनपान्नैमित्तिकः । यत्रेदानीमुभये कर्तारःससहायेन, तत्र निर्वृत्तिर्न केवलेन । तस्मान्न केवलः कर्ता ।

---

॥ १ ॥ ७ ॥ ८ ॥

---

१ पारार्थ्यमौदुम्बर्याः—पा० । २ तत्स्वेन—पा० ।

न चेद्वसिष्ठः केवलः कर्ता, तर्हि तन्निमित्तं तत्र न कर्तव्यम् । न चेतरन्निमित्तम्, उभयोरप्यन्योन्येन विघातः । बृहद्रथंतरवत् । तद्यथा, बृहद्रथंतरं पृष्ठं भवतीति न बृहत्साधनकं न रथंतरसाधनकमिति, नैव तत्र बृहन्निमित्तं भवति, न रथंतरं वा । एवमिहापीति ॥ ९ ॥

अपि वा कृत्स्नसंयोगादविघातः प्रतीयते स्वामित्वेनाभिसंबन्धात् ॥ १० ॥

अपि वेति पक्षं व्यावर्तयति । कृत्स्नं प्रति केवलस्य कर्तृत्वेन संयोगो भवति । तस्मादविघातो नैमित्तिकानाम् । कथं पुनः कार्त्स्न्येन कर्तृत्वम् । स्वामित्वेनाभिसंबन्धात् । कर्म प्रति स्वामित्वेन केवलानां वसिष्ठादीनामभिसंबन्धो भवति । कर्म पुरुषाणामुपकारकम् । तद्धयेकैकस्य शक्नोति फलं निर्वर्तयितुम् । तस्मादेकैकः कृत्स्नस्य कर्तेति तन्नैमित्तिकं सर्वं प्राप्नोति । यथा तुण्डमात्रे दीयतामिति । यद्यपि सा तुण्डदपित्रयोर्माता, तथाऽपि तस्यै दीयते । कार्त्स्न्येन हि तस्य सा माता भवति । न हि व्यासज्यते मातृत्वम् । तद्वदिहापि द्रष्टव्यम् । तस्मादसमानकल्पानामनधिकारः ॥ १० ॥

साम्नोः कर्मवृद्धयेकदेशेन संयोगे गुणत्वेनाभिसंबन्धस्तस्मात्तत्र विघातः स्यात् ॥ ११ ॥

अथ यदुक्तं, बृहद्रथंतरवदिति तत्परिहरणीयम् । बृहद्रथंतरयोः साम्नोर्नैमित्तिककर्मवृद्धयेकदेशेन संयोगो भवति । तत्र ह्युभयोः साधकत्वं नैकस्य । स्तोत्रैकदेशेन तु तत्र साम्नोः संबन्धो न कृत्स्नेन स्तोत्रेण । गुणत्वेन हि तत्र साम श्रूयते । स्तोत्रं प्राधान्येन । तस्मात्तत्र विघातः स्यात् ॥ ११ ॥

( कुलाययज्ञे भिन्नकल्पयोरप्यधिकाराधिकरणम् ॥ २ ॥ )

[२] वचनात्तु द्विसंयोगस्तस्मादेकस्य पाणित्वम् ॥ १२ ॥ पू०

इदं समामनन्ति, एतेन राजपुरोहितौ सायुज्यकामौ यजेयातामिति । तत्र संदेहः । किं राज्ञो द्वौ पुरोहितौ यजेयातामुत राजा च पुरोहितश्चेति ।

॥ ९ ॥ १० ॥ ११ ॥ ]

अभिन्नकल्पानामधिकार इति पूर्वत्र स्थितम् । इह राजपुरोहिताविति भिन्नकल्पयोरधिकार इति प्रतिपादयितुमधिकरणम् । राजपुरोहिताविति किमयं षष्ठीतत्पुरुषैकशेष

किं प्राप्तम् । राज्ञो द्वौ पुरोहिताविति । कुतः । पुरोहितशब्दात्परं द्विवचनं श्रूयते, तच्छब्दवाच्यस्य द्वित्वं शक्नोति वदितुम् । पुरोहितश्च तच्छब्दवाच्यः श्रुत्या, न राजा । पुरोहितवचनः पुरोहितशब्दः । लक्षणया युगपदधिकरणवचनतायां हि तद्भवति । नन्वेकस्य द्वौ पुरोहितौ न स्तः । पुरोहितं वृणीत इति ह्युपादीयमानस्य विवक्षितमेकत्वमिति । उच्यते । वचनादेतद्भविष्यति । किं हि वचनं न कल्पयेत् । एतेनैव कारणेन द्वौ भविष्यतः । यथा वचनेन, अञ्जलिना जुहोतीत्येकस्यैव द्वौ पाणी भवतः, यद्यपि सव्योऽप्राप्तस्तथाऽपीति ॥ १२ ॥

अर्थाभावात्तु नैवं स्यात ॥ १३ ॥ सि०

तुशब्दात्पक्षो विपरिवर्तते नैवं स्यात् । द्वौ पुरोहिताविति । कुतः । अर्थाभावात् । नैवायमर्थोऽस्ति । द्वौ पुरोहिताविति । एकस्य राज्ञ एक एव पुरोहित उपादेयत्वेन हि श्रूयते पुरोहितं करोतीति, एकत्वं विवक्षितम् । ननु वचनादित्युक्तम् । उच्यते । न तु वचनादेतच्छक्यम् । संस्कारनिमित्तत्वात्पुरोहितशब्दस्य । क्रियमाणोऽपि न पुरोहितः स्यात् ॥ १३ ॥

अर्थानां च विभक्तत्वान्न तच्छ्रुतेन संबन्धः ॥ १४ ॥

अर्थानां च विभक्तत्वं श्रूयते । तेजःसंस्तवो ब्राह्मणस्य, वीर्यसंस्तवो राजन्यस्य । ताभ्यां वर्णाभ्यां तेन तेन फलेन संबन्धोऽनूद्यते । तस्मादपि न द्वौ पुरोहितावेकस्य राज्ञ इति ॥ १४ ॥

पाणेः प्रत्यङ्गभावादसंबन्धः प्रतीयेत ॥ १५ ॥

अथ यदुक्तम्, एतस्मादेव कारणादेकस्यैव पुरुषस्य द्वौ पाणी

---

उत कृतैकशेषेणोत्तरपदेन तत्पुरुष उत समानाधिकरणैकशेष उत द्वंद्व इति संशयः । तत्र न तावत्कृतसमासस्यैकशेषः, राजशब्दानर्थक्यात् । राज्ञ एव हि स भवति । न च कृतैकशेषेणोत्तरपदेनेति, भाष्य एवोक्तम् । न समानाधिकरणैकशेषः, राज्ञोऽपुरोहितत्वात् । द्वंद्वोऽस्त्विति सिद्धान्तः । भिन्नकल्पयोरिहाधिकारः ॥ १२ ॥ [ १३ ॥ ॥ १४ ॥

---

१ व्यावर्त्यते—पा० । २ उत्तरपदेनेति—उत्तरपदेन तत्पुरुष इति द्वितीयपक्षोऽपि न च युक्तः । कुतः । एकस्य राज्ञः पुरोहितद्वयासंभवरूपोत्तरस्य भाष्य एवोक्तत्वादित्यर्थः ।

भवत इति। युक्तं तत्र। पाणेः प्रत्यङ्गभूतत्वात्। अञ्जलौ प्रत्यङ्गभूतो दक्षिणस्य पाणेः सव्यः पाणिः। तेन विनाऽञ्जलिरेव न भवति। न हि द्वाभ्यां दक्षिणाभ्यामञ्जलिरित्युच्यते। तस्माद्राजा च पुरोहितश्च स्यात्। ननु तत्र राजपुरोहितश्च राजपुरोहितश्च राजपुरोहितौ यजेयातामिति। उच्यते। न तौ सायुज्यकामौ भवतः। स राजा पुरोहितेन सहैककार्यो भवति, न तु पुरोहितः पुरोहितेन। उभावपि तौ हि राजानमभिचरन्तौ पुरोहिताविरयुच्येते। न हि तमिच्छन्तौ। संस्कारशब्दो हि पुरोहित इति। ननु लक्षणा भवति भवत्पक्षे। उच्यते। श्रुत्यभावे लक्षणयाऽपि व्यवहारो भवति। यथा, अग्नौ तिष्ठति, अवटे तिष्ठतीति। तस्माद्राजा च पुरोहितश्च राजपुरोहिताविति ॥ १५ ॥

( सत्रेषु ब्राह्मणानामेवाधिकाराधिकरणम् ॥ ३ ॥ )

## [३] सत्राणि सर्ववर्णानामविशेषात् ॥१६॥ पू०

इह सत्राण्युदाहरणम्। य एवं विद्वांसः सत्रमासते, य एवं विद्वांसः सत्रमुपयन्तीति। तत्र संदेहः। किं सत्राणि त्रयाणामपि वर्णानामुत ब्राह्मणानामेवेति। किं प्राप्तम्। सत्राणि सर्ववर्णानां भवेयुरिति। कस्मात्। अविशेषात्। न हि कश्चिद्विशेष आश्रीयते। अमीषां वर्णानां सत्राणि भवन्ति, अमीषां नेति। तस्मात्त्रयाणामपि वर्णानामधिकार इति ॥ १६ ॥

## लिङ्गदर्शनाच्च ॥ १७ ॥

इतश्च पश्यामः, त्रयाणां सत्राणीति। कुतः। लिङ्गदर्शनात्। किं लिङ्गं भवति। एवमाह, बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्येति, द्वादशाहे भवति वचनं

---

॥ १९ ॥ ]

'ये यजमानास्त ऋत्विजः' इत्येवं पदानुपूर्व्यम्। तत्र यजमानर्त्विक्शब्दयोः पृथगर्थसिद्धयोः सामानाधिकरण्यानुपपत्त्या, एकेन लक्षणार्थेन भवितव्यम्। तत्र मुख्यत्वाद्यजमानशब्दः श्रुतिवृत्तो जघन्यत्वादार्त्विक्शब्दो लक्षणार्थः। यच्छब्दतच्छब्दानुद्देशप्रतिनिर्देशकाविति को वाक्यार्थ इति चिन्त्यते। तत्र यजमानानामुद्दिष्टप्रतिनिर्दिष्टानामार्त्विज्यं विधीयत इति पूर्वः पक्षः।

---

१ इतीति—स्थिते, इति शेषः।

ब्रह्मसामविधानपरम् । तस्मिन् राजन्यवैश्यानां दर्शनं भवति । तस्मादपि सर्ववर्णानामधिकार इति ॥ १७ ॥

ब्राह्मणानां वेतरयोरार्त्विज्याभावात् ॥ १८ ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । न चैतदस्ति, त्रयाणामपि वर्णानामधिकार इति । किं तर्हि । ब्राह्मणानामेव स्यात् । कुतः । इतरयोरार्त्विज्याभावात् । इतरयोर्हि वर्णयो राजन्यवैश्ययोरार्त्विज्यं प्रतिषिद्धम् । स्वयमेवाऽऽर्त्विज्येन विना विगुणत्वम् । तस्माद्ब्राह्मणानामेव स्यात् ॥ १८ ॥

वचनादिति चेत् ॥ १९ ॥

इति चेत्पश्यसि, राजन्यवैश्ययोर्वैगुण्यमापद्यत इति । वचनाद्यजमानाः सन्त ऋत्विजो भविष्यन्ति, ये यजमानास्त ऋत्विज इति । के पुनर्यजमानाः । ये सत्रफलं कामयमानाः सत्रकर्मणि प्रवृत्तास्ते राजन्या अपि वैश्या अपि तेषामृत्विक्कर्म विधीयते । तत्रैवं स्यात् । येषामार्त्विज्यं शक्यं कर्तुं तेषामेव, तद्ब्राह्मणानां शक्यम् । प्रतिषिद्धं हि राजन्यवैश्यानां, न तेषामिदमार्त्विज्यविधानमिति । नैतदेवम् । यथैव ब्राह्मणानां यजमानानामप्राप्तं वचनप्रामाण्याद्भवति, एवमब्राह्मणानामपि यजमानानां वचनप्रामाण्यादेव भवितुमर्हतीति । तस्मादार्त्विज्यसंस्कृता राजन्यवैश्या अपि सत्रमासीरन्निति ॥ १९ ॥

---

सिद्धान्तस्तु—सर्वे वर्णा उद्दिष्टप्रतिनिर्दिष्टाः[1], यजमाना आर्त्विज्यस्य कर्तृत्वेन विधीयन्ते । तदिह प्रधानम् । तस्य च द्वौ धर्मौ, अन्यकर्तृकता ब्राह्मणकर्तृकता च । तत्राऽन्यकर्तृकता व्यावर्त्यते । ब्राह्मणकर्तृकतां स्वधर्मं, कर्तृणां यजमानानां धर्मवशेन त्रैवर्णिकत्वेन न जहाति । तदुक्तम् 'अङ्गगुणविरोधे च तादर्थ्यात्'[2] इति ॥ १६ ॥ ॥ १७ ॥ ॥ १८ ॥ १९ ॥

---

१ उद्दिष्टप्रतिनिर्दिष्टा इति—सत्रं सत्रमासीरन्नित्यत्र विशेषाश्रवणात्सर्वे वर्णा यजमानत्वेनोद्दिष्टाः प्रकृते निर्दिष्टा इत्यवभाति, किं तु 'ये यजमानास्त ऋत्विजः' इत्यत्राऽऽर्त्विज्योद्देशेन यजमानाः कर्तृत्वेन विधीयन्ते । अन्यथा प्राकृतपदार्थानां यजमानसंस्कारकतया विधानेऽप्राकृतकार्यकारित्वापत्तेरित्याशयः । २ ( अ० १२ पा० २ अ० ९ सू० २७ ) प्रधानगुणेनाऽङ्गगुणस्य विरोधे प्रधानगुण एवानुग्राह्यः, अङ्गानां प्रधानार्थत्वादिति सूत्रार्थः । प्रकृतोदाहरणे चाऽऽर्त्विज्यस्याङ्गभूतं ब्राह्मणकर्तृकत्वं, कर्तृत्वेनाऽऽर्त्विज्येऽङ्गभूतानां यजमानानां गुणभूतं त्रैवर्णिकत्वमिति ।

न स्वामित्वं हि विधीयते ॥ २० ॥

नैतदेवम् । स्वामित्ववदनेन वचनेन विधीयते । एवंकामाः सत्रमासीरन्निति विधीयते, नाऽऽर्त्विज्यम् । अथ, ये यजमानास्त ऋत्विज इत्यनेन वचनेन विहितमार्त्विज्यमिति । उच्यते । तदपि न । कथम् । नात्रैषा वचनव्यक्तिः । ये यजमाना इत्युद्देश्यपदम्, ऋत्विज इति विधेयपदम् । तथा हि सति, आर्त्विज्यमङ्गं यजमानसंस्कारकं विधीयेत, न यजमाना आर्त्विज्यस्याङ्गम् । तत्र प्राकृतार्थता नैषामार्त्विज्यानां स्यात् । संस्कारश्चादृष्टः कल्प्येत । स च यजमानविषय इति पुनरदृष्टम् । तस्मान्न यजमानानां सतामार्त्विज्याः पदार्था विधीयन्ते । किं तर्हि । आर्त्विजानां पदार्थानामनन्यकर्तृकता । एषा च वचनव्यक्तिः । ऋत्विज इत्युद्देश्यपदम् । त इति विधीयते । ये यजमानास्त एव ऋत्विजो भवन्ति, नान्य इत्यार्त्विजेषु पदार्थेषु यजमानाः कर्तारो विधीयन्ते । प्रत्याम्नानात् । अन्ये निवर्तन्ते । एवं सति प्राकृतप्रयोजना एव आर्त्विजाः पदार्थाः । न यजमानसंस्कारोऽदृष्टो विधीयत इति । यजमानकर्तृकल्पनायामप्येषामदृष्टमिति यदि कल्प्येत, तत्र ब्रूमः । इतरस्मिन्नपि पक्षे यजमानविषयः सोऽदृष्टः संस्कार इत्यवश्यं कल्पनीयम् । यश्चोभयोः पक्षयोर्दोषो न तमेकश्चोद्यो भवति ॥ २० ॥

गार्हपते वा स्यातामविप्रतिषेधात् ॥ २१ ॥

गार्हपते पदार्थे राजन्यवैश्यौ भविष्यतः । न च तत्राऽऽर्त्विजेन प्रयोजनम् । तस्मादविप्रतिषेधस्तेषामिति ॥ २१ ॥

न वा कल्पविरोधात् ॥ २२ ॥

न चैतदस्ति, गार्हपते वा पदार्थे राजन्यवैश्याविति । कल्पविरोधो हि स्यात् । यजमानचमसः सोममय एकेषां, फलचमसमय एकेषाम् । तथा, ब्रह्मसाम बार्हद्गिरं ब्राह्मणानां, पार्थुरश्मं राजन्यानां, रायोवाजीयं वैश्यानाम् । तस्माद्गार्हपते निवेश इत्येतदपि नास्ति ॥ २२ ॥

॥ २० ॥ २१ ॥ २२ ॥

१ वचनव्यक्तिः । य ऋत्विजस्ते यजमाना इति । अत्र ऋत्विज इत्युद्देश्यपदं, यजमानास्त इति विधीयते—पा० । २ गार्हपत्ये वा—पा० । ३ गार्हपत्ये—पा० ।

## स्वामित्वादितरेषामहीने लिङ्गदर्शनम् ॥ २३ ॥

अथ यदुक्तं, लिङ्गदर्शनादिति । तत्परिहर्तव्यम् । अत्रोच्यते । अहीनमेव सत्रशब्देन वक्ष्यति । यतः स्वामित्वमृत्विजां विधीयते । अत ऋत्विजां स्वामित्वाद्राजन्यवैश्यानां सत्रं नावकल्पत इति । तस्मादहीने लिङ्गदर्शनम् ॥ २३ ॥

( सत्रे वैश्वामित्रतत्समानकल्पानामेवाधिकाराधिकरणम् ॥ ४ ॥ )

## [ ४ ] वासिष्ठानां वा ब्रह्मत्वनियमात् ॥ २४ ॥ पू०

एतत्समधिगतं ब्राह्मणानामेव सत्रं, न राजन्यवैश्यानामिति । अथेदानीमिदं संदिग्धं, किं सर्वेषां ब्राह्मणानामुत वासिष्ठानां सः, उत भृगुशुनकवसिष्ठान्वर्जयित्वाऽन्येषामिति । किं प्राप्तम् । सर्वेषामविशेषात् । न हि कश्चिद्विशेष आश्रीयते, अमीषां ब्राह्मणानां सत्रममीषां नेति । तस्मात्सर्वेषामिति । एवं प्राप्ते ब्रूमः । वासिष्ठानां ब्रह्मत्वस्य नियमात् । वासिष्ठानां सत्रं स्यान्नान्येषाम् । कुतः । ब्रह्मत्वस्य नियमो भवति, वासिष्ठो ब्रह्मा भवतीति । अतो वासिष्ठानां तत्समानकल्पानां च सत्रं स्यादिति ॥ २४ ॥

## सर्वेषां वा प्रतिप्रसवात् ॥ २५ ॥

सर्वेषां वा सत्रं स्यात् । अविशेषात् । ननु वासिष्ठो ब्रह्मेत्युच्यते । नेत्याह । पुनः प्रतिप्रसूयते, य एव कश्चन स्तोमभागमधीयीत स एव ब्रह्मा भवेदिति । वासिष्ठोपदेश इदानीं किमर्थ इति चेत् । स्तोमभागप्रशंसार्थः । स्तोमभागानधीयानोऽवासिष्ठोऽपि वासिष्ठकार्ये समर्थः कर्तुमिति ॥ २५ ॥

## विश्वामित्रस्य हौत्रनियमाद्भृगुशुनकवसिष्ठानामनधिकारः ॥ २६ ॥ सि०

भृग्वादीनामनधिकारः स्यात् कुतः । वैश्वामित्रस्य हौत्रं नियम्यते, विश्वामित्रो होता भवतीति । तस्माद्वैश्वामित्राणां, तैश्च समानकल्पानामधिकार इति ॥ २६ ॥

---

॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

( सारस्वतभिन्नसत्रेष्वाहिताग्नीनामेवाधिकाराधिकरणम् ॥ ५ ॥ )

[ ५ ] विहारस्य प्रभुत्वादनग्नीनामपि स्यात् ॥ २७ ॥ पू०

सत्राण्येवोदाहरणम् । य एवं विद्वांसः सत्रमासते, य एवं विद्वांसः सत्रमुपयन्तीति । तेषु संदेहः । किं साग्नीनामनग्नीनां च तानि भवन्ति, उत साग्नीनामेवेति । किं प्राप्तम् । साग्नीनामनग्नीनां च । कुतः । विहारस्य प्रभुत्वात् । प्रभवति हि परकीयोऽपि विहारः सर्वेषामुपकर्तुम् । क्रत्वर्थो हि तेन सिध्यति । स यदीयेन तदीयेन वा सिद्धिमुपैति । तस्मादनग्नीनामपि भवितुमर्हतीति ॥ २७ ॥

सारस्वते च दर्शनात् ॥ २८ ॥

सारस्वते च सत्रे भवति दर्शनम् । परस्थैर्वा एते स्वर्गं लोकं यन्ति, येऽनाहिताग्नयः सत्रमासत इति । अनाहिताग्नीनां सत्रं दर्शयति । तस्मादपि सर्वेषाम् ॥ २८ ॥

प्रायश्चित्तविधानाच्च ॥ २९ ॥

प्रायश्चित्तं विधीयते, अग्नये विविचयेऽष्टाकपालं पुरोडाशं निर्वपेत्, यस्याऽऽहिताग्नेरन्यैरग्निभिरग्नयः संसृज्येरन्निति । संसर्गेऽग्नीनां प्रायश्चित्तं दर्शयति । स एवं स्यादनाहितैः, नान्यथा । तस्मादप्यनग्नीनां सत्राणीति ॥ २९ ॥

साग्नीनां वेष्टिपूर्वत्वात् ॥ ३० ॥ सि०

साग्नीनां वा सत्राणि, नानग्नीनाम् । कस्मात् । इष्टिपूर्वत्वात् । इष्टिपूर्वत्वं सोमानामाम्नातम् । दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति ज्योतिष्टोमस्येष्टिपूर्वत्वम् । तच्चोदकपरम्परया सत्राणि प्रति प्राप्तम् । तस्मान्नानग्नीनां तानि भवेयुरिति ॥ ३० ॥

स्वार्थेन च प्रयुक्तत्वात् ॥ ३१ ॥

स्वार्थेन चाग्नयः प्रयुक्ताः । कथम् । उपग्रहविशेषात् । उपग्रहविशेषो हि भवति, अग्नीनादधीतेति । तस्मादन्यस्याग्निभिरन्यस्य न सिद्धिः, यद्यपि क्रत्वर्था अग्नय इति ॥ ३१ ॥

॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥

१ कर्तव्यो हि—पा० ।

संनिवापं च दर्शयति ॥ ३२ ॥

सावित्राणि होष्यन्तः संनिवपेरन्निति । तेनापि साग्नयः सत्राण्युपासत इति गम्यते । एवं लिङ्गपरिहारावशिष्टेऽधिकरणेऽन्यच्चिन्त्यते ॥ ३२ ॥

( सत्रे साधारणपात्राणामधिकाराधिकरणम् ॥ १ ॥ )

[६] जुह्वादीनामप्रयुक्तत्वात्संदेहे यथाकामी प्रतीयेत ॥ ३३ ॥ पू०

किं जुह्वादीनि पात्राणि कस्यचिदेव यजमानस्योपादाय प्रयोगः कर्तव्य उतान्यानि साधारणानि कर्तव्यानीति। अस्मिन्संशये, उच्यते। किं प्राप्तम् । जुह्वादिषु यथाकामी भवेत् । यस्य कस्यचिदेव यजमानस्योपादाय प्रयोगः कर्तव्यः । कुतः । न हि स्वं पात्रं यजमानः प्रयुङ्क्ते । स्वेन पात्रेण प्रयोगः कर्तव्य इति । तस्मात्परकीयपात्रैरन्ये यजेरन्निति ॥ ३३ ॥

अपि वाऽन्यानि पात्राणि साधारणानि कुर्वीरन् विप्रतिषेधाच्छास्त्रकृतत्वात् ॥ ३४ ॥ सि०

अपि वेति पक्षव्यावृत्तिः । नैतदेवम् । अन्यानि हि पात्राणि साधारणानि कर्तव्यानि । कस्मात् । विप्रतिषेधात् । विप्रतिषेधो हि भवति । कदाचित्तानि पात्राण्युपात्तानि भवेयुः । अथ मरणं कस्यचिद्यजमानस्याऽऽपद्येत, तत्र विप्रतिषेधः स्यात्, आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति । यदि तं तैर्दहेयुरितरेषां यज्ञो विरुध्येत । अथ तैर्यज्ञं समापयेयुरितरस्य शरीरसंस्कारः परिलुप्येत । अन्येषु पुनः साधारणेषूपादीयमानेषु न किंचिदपि विरुध्येत । तस्मात्तथा कार्यमिति ॥ ३४ ॥

प्रायश्चित्तमापदि स्यात् ॥ ३५ ॥

अथेदानीं पूर्वोक्तस्य लिङ्गस्य परिहार उच्यते। प्रायश्चित्तमस्मत्पक्षेऽप्यवकल्पिष्यते । कथम् । अरण्ये कान्तारे गच्छतां स्थितानां वा दस्युभयात्, श्वापदभयाद्वा त्रासे जाते दावाग्निना वा संसृज्येरन्, मिथो वा स विषयः प्रायश्चित्तस्य भविष्यतीति ॥ ३५ ॥

३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ]

१ उपात्तानि भवेयुरुत—पा° । २ शरीरसंस्काराः परिलुप्येरन्—पा° ।

( श्रुतसाप्तदश्यासु विकृतिषु वर्णत्रयाधिकाराधिकरणम् ॥ ७ ॥ )

[७]पुरुषकल्पेन वा विकृतौ कर्तृनियमः स्याद्यज्ञस्य तद्गुणत्वादभावादितरान्प्रत्येकास्मिन्नधिकारः स्यात् ॥ ३६ ॥ पू०

अध्वरकल्पा उदाहरणम् । आग्रयणेष्टिः पशुरित्येवंलक्षणकानि कर्माणि । येषु सप्तदश सामिधेन्यस्तेषु संदेहः । किं त्रयाणामपि वर्णानामेभिः कर्मभिरधिकार उत वैश्यस्यैवेति । किं प्राप्तम् । एतस्यां विकृतौ पुरुषकल्पेन कर्ता नियम्येत । कुतः । यज्ञस्य तद्गुणत्वात् । यज्ञोऽयमध्वरकल्पादिरेतत्संख्यागुणकः । इयं च संख्या वैश्यस्योक्ता, सप्तदशानुब्रूयाद्वैश्यस्येति । तेन वैश्य एवैतत्कर्म कृत्स्नं कर्तुं समर्थः । सप्तदशगुणकमेतत्कर्म । तच्च साप्तदश्यमवैश्येन क्रियमाणमसाधु । इतरान्प्रति हि तन्न चोद्यते । तेन यजेतेत्यसामर्थ्याद्ब्राह्मणक्षत्रियावनाधिकरिष्यतीति ॥ ३६ ॥

लिङ्गाच्चेज्याविशेषवत् ॥ ३७ ॥

लिङ्गं च भवति, यथा वैश्यस्य साप्तदश्यमिति, सप्तदशो वै वैश्य इति । तेन[१] नावैश्यस्य साप्तदश्यम् । अतो वैश्यस्यैवंजातीयकानि कर्माणि । यथा, इज्याविशेषो वैश्यस्य भवति, वैश्यो वैश्यस्तोमेन यजेतेति । वैश्यसंबन्धात् । एवं साप्तदश्यं तस्यैवेति ॥ ३७ ॥

न वा संयोगपृथक्त्वाद्गुणस्येज्याप्रधानत्वादसंयुक्ता हि चोदना ॥ ३८ ॥ सि०

न चैतदस्ति । पृथगेतौ संयोगौ । एकं वाक्यं, सप्तदश वैश्यस्यानुब्रूयादिति । वाक्यान्तरमध्वरकल्पादिषु, सप्तदशानुब्रूयादिति । स च गुण इज्याप्रधानो भवति, नेज्या गुणार्था । किमतो यद्येवं, यत्रेज्या तत्र तद्गुणेन भवितव्यम् । न यत्र गुणस्तत्रेज्यया, वैश्यस्य

---

' सप्तदश वैश्यस्यानुब्रूयात् ' इति साप्तदश्यस्य वैश्यः कर्ता विधीयत इति पूर्वपक्षवाद्यभिप्रायः, तद्वन्त्यध्वरकल्पादीनि नान्यः शक्नोति कर्तुमिति ॥ ३६ ॥ [ ३७ ॥ ]

---

१ तेन वैश्यस्य—पा० ।

गुणानुरोधेनेज्याऽपि । त्रयाणां वर्णानामिज्या । सा तत्र गुणमाकर्ष-[1]तीति । अपि चेज्यागुणभूतस्यापरा चोदना,[2] न सा वैश्यसंयुक्ता । सा त्ववैश्यकं गुणं प्रत्याययति । प्रथमं सवैश्यकमिति चेन्न । वैश्यस्य प्रधानत्वात् । प्रधानभूतस्तत्र वैश्यः श्रूयते । तस्मात्सर्वाधि-कारः ॥ ३८ ॥

## इज्यायां तद्गुणत्वाद्विशेषेण नियम्येत ॥ ३९ ॥

अथ यदुक्तं, वैश्यस्तोमे यथा तथेहापीति । युक्तं तत्र । इज्या वैश्यस्य श्रूयते । तत्र वाचनिकेनैव विशेषेण नियम्येत । तस्मा-त्तत्रादोष इति ॥ ३९ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये षष्ठस्या-ध्यायस्य षष्ठः पादः ॥

अथ षष्ठेऽध्याये सप्तमः पादः ॥

( विश्वजिति सर्वस्वदाने पित्रादीनामदेयत्वाधिकरणम् ॥ १ ॥ )

## [१] स्वदाने सर्वमविशेषात् ॥ १ ॥ पू०

इदमामनन्ति विश्वजिति, सर्वस्वं ददातीति । तत्र संदेहः । किं यावत्किंचित्स्वशब्देनोच्यते, यथा माता पितेत्येवमाद्यपि, तत्सर्वं[3] देयमुत यत्र प्रभुत्वयोगेन स्वशब्दस्तदेव देयमिति । किं प्राप्तम् । अवि-शेषात् । माता पितेत्येवमाद्यपि दातव्यम् । ननु दानमित्युच्यते स्वत्व-निवृत्तिः, परस्वत्वापादनं च । तत्र पित्रादीनामशक्यं स्वत्वं निवर्तयि-तुम् । न हि कथंचित्पिता न पिता भवति । उच्यते । सत्यं नासौ न पिता भवति । शक्यते तु परविधेयः कर्तुम् । परस्वत्वापादनं च दानं ददा-तेरर्थः[4] । अर्थाच्च स्वत्वत्यागः । तस्मात्सर्वं देयमिति ॥ १ ॥

---

वैश्यस्य साद्यद्रव्यमुपकारकं विधीयत इति सिद्धान्तः ॥ ३८ ॥ [ ३९ ॥ ]

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां षष्ठाध्यायस्य षष्ठः पादः ॥

[ ॥ १ ॥

---

१ गुणमाकाङ्क्षतीति–पा० । २ अपि च या गुणस्यापरा चोदना–पा० । ३ सर्वे—पा० । ४ ददातेरर्थ इति क्वचिन्नास्ति ।

### यस्य वा प्रभुः स्यादितरस्याशक्यत्वात् ॥२॥ सि०

वाशब्देन पक्षो विपरिवर्तते। यस्य प्रभुत्वयोगेन स्वत्वं तदेव देयं नेतरत्। कस्मात्। प्रभुत्वयोगिनः शक्यत्वात्। इतरस्य चाशक्यत्वात्। न हि पित्रादीनां शक्यते स्वत्वं परित्यक्तुम्। ननु चोक्तं परविधेयीकरणं तस्य शक्यमिति। उच्यते। प्रभुत्वयोगिनः स्वस्यात्र दीयमानस्य सर्वत्वमुच्यते। नाप्रभुत्वयोगिनः स्वस्य दानम्। न चैतन्न्यायं, यत्पित्रादीनां परिचारकत्वम्। यस्य चैतन्न्याय्यमपि भवेत्स दद्यादपि। अत्राऽऽह। ननु यत्र स्वशब्दो वर्तते तद्देयमित्युक्ते पित्रादयो दातव्या गम्यन्ते। तस्मात्तान्प्रति प्रभुत्वाय स्मृतिं बाधित्वाऽपि यतितव्यमिति।

अत्रोच्यते। स्वशब्दोऽयमात्मीयधनज्ञातीनां प्रत्येकं वाचको न समुदायस्य। तत्राऽऽत्मीये सर्वतायां कृतायां कृते शास्त्रार्थे, नाशक्येषु[1] ज्ञातिषु सर्वता कल्पनीया, नापि स्मृतिर्बाधितव्या। आपि च गवादीनामात्मीयानां चोदकेन प्राप्तौ सत्यामवश्यमात्मीयगता सर्वतोपादेया। तस्यां चोपात्तायां कृतः शास्त्रार्थ इति ज्ञातीनामुपादाने न किंचित्कारणमस्ति। तस्मान्न पित्रादयो[2] देयाः। तस्माद्यत्रैव प्रभुत्वयोगेन स्वत्वं, तदेव देयमिति॥ २॥

( विश्वजिति भूमेरदेयत्वाधिकरणम्॥ २॥ )

### [ २ ] न भूमिः स्यात्सर्वान्प्रत्यविशिष्टत्वात्॥ ३॥ सि०

अत्रैव सर्वदाने संशयः। किं भूमिर्देया नेति। का पुनर्भूमिरत्राभिप्रेता। यदेतन्मृदारब्धं द्रव्यान्तरं पृथिवीगोलकं[3] नाम, न क्षेत्रमात्रं मृत्तिका वा। तत्र किं प्राप्तम्। अविशेषाद्देया। प्रभुत्वसंबन्धेन हि तत्र स्वशब्दो वर्तते। शक्यते च मानसेन व्यापारेण स्वैस्वत्वं[4] निवर्तयितुमिति। एवं प्राप्ते ब्रूमः। न भूमिर्देयेति। कुतः। क्षेत्राणामीशितारो मनुष्या दृश्यन्ते, न कृत्स्नस्य पृथिवीगोलकस्येति। आह। य इदानीं सार्वभौमः स तर्हि दास्यति। सोऽपि नेति ब्रूमः। कुतः।

॥ २ ॥

१ अशक्यज्ञातिषु—पा०। २ मातापित्रादयः—पा०। ३ पृथिवीगोलकं,—पा०। ४ स्वस्य स्वता—पा०।

यावता भूमिभागेन सार्वभौमो भूमेरीष्टे, तावताऽन्योऽपि । न तत्र कश्चिद्विशेषः । सार्वभौमस्य त्वेतदधिकं, यदसौ पृथिव्यां संभूतानां व्रीह्यादीनां रक्षणेन निर्विष्टस्य कस्यचिद्भागस्येष्टे, न भूमेः । तन्निर्विष्टाश्च ये मनुष्यास्तैरन्यत्सर्वप्राणिनां धारणचंक्रमणादि यद्भूमिकृतं, तत्रेशित्वं प्रति न कश्चिद्विशेषः । तस्मान्न भूमिर्देया ॥ ३ ॥

( विश्वजिति, अश्वादीनामदेयत्वाधिकरणम् ॥ ३ ॥ )

## अकार्यत्वाच्च ततः पुनर्विशेषः स्यात् ॥ ४ ॥ सि०

विश्वजित्येव संदेहः । किमश्वादयो देया नेति । किं प्राप्तम् । सर्वस्य विहितत्वाद्देया अश्वा इति । एवं प्राप्ते ब्रूमः । यस्य च दानमकार्यं, तन्न देयम् । यथाऽश्वानाम् । तेषां हि दानमकार्यम् । एष हि विशेषोऽश्वानामन्येभ्यो द्रव्येभ्यो यदेषां दानं प्रतिषिध्यते, न केसरिणो ददाति, नोभयतोदतः प्रतिगृह्णातीति, विश्वजित्येव समाम्नायते । तस्मान्नाश्वा देया इति ॥ ४ ॥

( विश्वजिति विद्यमानस्यैव स्वत्ववतः सर्वस्य दानाधिकरणम् ॥ ४ ॥ )

## [ ४ ] नित्यत्वाच्चानित्यैर्नास्ति संबन्धः ॥ ५ ॥ सि०

विश्वजित्येव संदेहः सर्वस्वं ददाति, इति किमर्जयितव्योपकरणानि यावन्ति मनुष्यस्य, यावन्ति च शक्नोत्युपार्जयितुं, सर्वाणि तानि दद्यात्कृतभाण्डकानि, उत यान्येवास्य विद्यन्ते तानि सर्वाणि देयानि, नाविद्यमानानि कर्तव्यानीति । कुतः संशयः । उभयथा वचनव्यक्तेः संभवात् । यदि वैवं वचनं व्यज्यते, यानि सर्वाणि स्वानि । कानि तानि । यानि पुरुषस्योपकारकाणि शयनादीनि, तानि सर्वाणि दद्यादिति विधीयते । यद्वा यानि स्वानि पुरुषस्य दाने शक्यानि, तानि सर्वाणीति सर्वस्वं विधीयते । यदि दानं विधीयते, ततोऽप्राप्तदानानां कृतभाण्डकानामपि दानम् । अथ सर्वता विधीयते, ततो विद्यमानानामेव । किं तावत्प्राप्तम् । कृतभाण्डकानि देयानीति । तथा दानविधाने श्रुतिरनुगृह्यते । इतरथा वाक्यम् । तयोश्च श्रुतिर्बलीयसी । तस्मात्कृतभाण्डकानि देयानीति ।

---

३ ॥ ४ ॥

---

१ भोगेन—पा० । २ तन्निर्विष्टाश्च ये मनुष्यास्तैरन्यत्, इत्यन्तो ग्रन्थः क्वचिन्नास्ति । ३ धारणविक्रमणादि—पा० । ४ न भूमेर्दानम्—पा० । ५ कृतभाण्डादीनि—पा० । ६ अथ तानि सर्वाणीति सर्वता—पा० ।

एवं प्राप्ते ब्रूमः । नित्यत्वाच्चानित्यैर्नास्ति संबन्धः । चशब्दोऽन्वादेशे । नाश्वा दातव्या इत्युक्तम् । कृतभाण्डकानि च न देयानीति । नित्यं हि विश्वजिति दानं चोदकेन प्राप्तमनूद्यते। अनित्यानि च कृतभाण्डकानीति न शक्यानि सर्वाणि विश्वजिति क्रियमाण उपसंहर्तुम् । तत्र कृतभाण्डकानां केषाचिदुत्पत्तिं विश्वजिति दानं प्रतीक्षेत । नैमित्तिकं तत्स्यान्न नित्यम् । नित्यवच्च तच्चोदकेन विधीयते, न निमित्तसंयोगेन । तस्मादवश्यमेतदभ्युपगन्तव्यं, साकल्यं देयानां प्राप्तानां विधीयत इति । श्रुत्यसंभवे च वाक्यार्थो ग्रहीतव्य एव भवति । तस्मान्न कृतभाण्डकानि दातव्यानि ॥ ५ ॥

( विश्वजिति धर्मार्थसेवकशूद्रस्यादेयत्वाधिकरणम् ॥ ५ ॥ )

## [ ५ ] शूद्रश्च धर्मशास्त्रत्वात् ॥ ६ ॥ सि०

विश्वजित्येव संदिह्यते । किं परिचारकः शूद्रो देयो नेति । किं प्राप्तम् । सर्वस्यै स्वस्य विहितत्वाद्देय इति । एवं प्राप्ते ब्रूमः । शूद्रश्च न देय इत्यन्वादेशः । कुतः । धर्मशास्त्रत्वात् । धर्मशासनोपनतत्वात्तस्य । एवमसौ तस्मै त्रैवर्णिकायोपनत इमं शुश्रूषमाणो धर्मेण संभत्स्यस्य इति । सोऽन्यस्मै दीयमानो नेच्छेदपि । न चानिच्छतस्तस्य स प्रभवति । न च बलात्स्वीकर्तव्यः । यस्त्वन्यायेन स्वीकुर्यात्स दद्यादपि । धर्मोपनतमात्रेण तु न शक्यो दातुम् ॥ ६ ॥

( विश्वजिति दक्षिणादानकाले विद्यमानस्वत्ववतामेव देयताधिकरणम् ॥ ६ ॥)

## [ ६ ] दक्षिणाकाले यत्स्वं तत्प्रतीयेत तद्दानसंयोगात् ॥७॥ सि०

विश्वजित्येव संदेहः । किं प्राग्दक्षिणाकालाद्विद्यमानं नियोगतो दक्षिणाकाले दातुं निधातव्यम्, ऊर्ध्वं च दक्षिणाकालाद्भविष्यदनागतमपि दक्षिणाकाले देयमुत यदेव दक्षिणाकाले विद्यते तदेव देयमिति । किं प्राप्तम् । यस्यापि प्रागूर्ध्वं च स्वता, तदपि देयम् । स्वमात्रस्य दानविधानात् । एवं प्राप्ते ब्रूमः । दक्षिणाकाले यत्स्वं विद्यते तदेव देयं, न यत्प्रागूर्ध्वं च । कुतः । स्वस्यात्र दानमनूद्य

५ ॥ ६ ॥

१ कृतभाण्डकानि—पा० । २ सर्वस्वस्य—पा० । ३ धर्मशासनेन—पा० । ४ संभस्त्स्यते—पा० । ५ दातुं—क्वचिन्न स्ति ।

साकल्यं विधीयते । तच्च दानं दक्षिणाकाले प्राप्तत्वात्तस्मिन्नेव कालेऽनूद्यते । तस्माद्दक्षिणाकाल एव विद्यमानं देयमिति ॥ ७ ॥

( विश्वजिति दक्षिणार्थनिर्दिष्टभागस्यैव सर्वस्य देयताधिकरणम् ॥ ७ ॥ )

[ ७ ] अशेषत्वात्तदन्तः स्यात्कर्मणो द्रव्यसिद्धित्वात्[1] ॥ ८ ॥ पू०

तस्मिन्नेव विश्वजिति संदेहः । किं दक्षिणाकाल एव सर्वस्वं दत्त्वा[2] विश्वजिदुत्स्रष्टव्यः, उत न सर्वस्वं दातव्यं, परिसमापनीय इति । किं प्राप्तम् । उत्स्रष्टव्य इति । कुतः । अशेषत्वात् । कथमशेषता । विश्वजिति सर्वस्वं ददातीति । न च शक्यमन्तरेण द्रव्यं परिसमापयितुम् । तस्मात्तदन्तः स्यात् ॥ ८ ॥

अपि वा शेषकर्म स्यात्क्रतोः प्रत्यक्षशिष्टत्वात् ॥ ९ ॥

अपि वेति पक्षव्यावृत्तिः । शेषकर्म स्यात् । न सर्वस्वं दक्षिणाकाले देयं, यावता तत्कर्म परिसमाप्यते, तावच्छेषयितव्यम् । कुतः । क्रतोः प्रत्यक्षशिष्टत्वात् । क्रतोः परिसमाप्तिः प्रत्यक्षशिष्टा । विश्वजिता यजेतेति विश्वजितमुपक्रम्य परिसमापयेदित्यर्थः । परिसमापयता यच्छक्यते दातुं, तावत्सर्वमित्यर्थः[3] । तस्मान्न तदन्तमुत्स्रष्टव्यमिति ॥ ९ ॥

तथा चान्यार्थदर्शनम् ॥ १० ॥

एवं च कृत्वाऽन्यार्थदर्शनमुपपद्यते । अवभृथादुदेत्य वत्सत्वचमाच्छादयतीति शेषे सत्यवकल्पते ॥ १० ॥

अशेषं तु समञ्जसाऽऽदानेन शेषकर्म स्यात् ॥ ११ ॥

तुशब्दः पक्षं व्यावर्तयति । एतत्समञ्जसाभूतं, यदशेषं प्रदीयत इति । एवं सर्वस्वं ददातीति शब्द उपपन्नो भवतीति । यत्तु प्रत्यक्षा समाप्तिरिति । तत्र ब्रूमः । आदानेन शेषकर्म भविष्यतीति ॥ ११ ॥

उच्यते—

नाऽऽदानस्य नित्यत्वात् ॥ १२ ॥

आदानं त्वनित्यम् । नित्यं च शेषकर्म । न हि तयोः संबन्धोऽवकल्पते । तस्माच्छेषयितव्यं किंचिदिति ॥ १२ ॥

---

७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

---

1 द्रव्यसिद्धत्वात्—पा० । 2 सर्वस्वं दत्वा—क्वचिन्नास्ति । 3 सर्वं—पा० ।

दीक्षासु तु विनिर्देशादक्रत्वर्थेन संयोगस्तस्माद-
विरोधः स्यात् ॥ १३ ॥ सि०

तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति किंचिच्छेषयितव्यमिति । दीक्षासु तु विनिर्देशो भवति, प्रकृतावेव ज्योतिष्टोमे । स इह चादकेन प्राप्तः, इदं क्रत्वर्थमिदं भक्षार्थमिदमानमनायेति । तदिह यदानमनाय दातव्यं तस्यायं विकारः सर्वता नाम । कुत एतत् । यतः स्वं ददातीत्यनूद्यते, सर्वतैव विधीयते । तेन नादातव्यस्य दानं विधीयते । न च भक्षार्थं क्रत्वर्थं च दातव्यम् । तस्मादविरोधो भविष्यतीति ॥ १३ ॥

( अष्टरात्रान्तर्गतेऽपि विश्वजिति सर्वस्वदानाधिकरणम् ॥ ८ ॥ )

[८] अहर्गणे च तद्धर्मा स्यात्सर्वेषामविशेषात् ॥ १४ ॥ सि०

अस्त्यहर्गणोऽष्टरात्रः, अथैतस्याष्टरात्रस्य विश्वजिदभिजितावेकाहावभितः, उभयतो ज्योतिर्मध्ये षडहः, पशुकामो ह्येतेन यजेतेति । तत्र संदेहः । किमहर्गणस्थस्यापि सर्वस्वमेव दक्षिणा स्यादाहोस्वित् द्वादशशतमिति । किं प्राप्तम् । सर्वस्वम् । कुतः । सर्वेषां विश्वजितामविशेषात् । य एव प्रकृतो विश्वजितो धर्मः स एव चान्यस्य च देकेन भविष्यति । तस्मात्सर्वस्वं देयमिति ॥ १४ ॥

---

॥ १३ ॥ ]

अहर्गणे च तद्धर्मा स्यात्सर्वेषामविशेषात् ॥ अस्मिन्नधिकरणे सिद्धान्तदूषणम्[४] । न ह्यहर्गणगतो[५], विश्वजितश्चोदकेन[६] नामधेयेन वा धर्मान्[७] गृह्णाति । यत्कारणं[८] प्रयोगाङ्गं दक्षिणा कर्त्रानतिद्वारेण । चिकीर्षितार्थं च कर्तार उपादीयन्ते, यच्च फलवत्तच्चिकीर्षितम् । अहर्गणः फलवान्न केवलो विश्वजित् । तस्मान्न पृथक्त्वेन समुदायिभिर्दक्षिणा अपेक्ष्यन्ते । प्रत्यक्षवचनविहिता द्वादशाहे बहवः कल्पाः ' सहस्रं प्राक्तनुरात्रेभ्यः ' इत्येवमादयः[१०] । द्वादशाहप्रकृतित्वात्[११] तद्दक्षिणा प्राप्नोति ॥ १४ ॥

---

१ इदं मे—पा० । २ सर्वता च—पा० । ३ भुक्त्यर्थं—पा० । ४ सिद्धान्तेति—यदस्मिन्नधिकरणे भाष्यकारैरहर्गणान्तर्गते विश्वजित्यपि, एकाहकाण्डपठितविश्वजितो नामातिदेशप्रापितसर्वस्वमेव देयं, न तु चोदनालिङ्गातिदेशप्रापितां द्वादशाहिकीं द्वादशशतदक्षिणां, नामातिदेशप्राबल्यादित्येवं सिद्धान्तितं तद्दूषणमुच्यत इत्याशयः । ५ अहर्गणगत इति—अष्टरात्रान्तर्गतो विश्वजिदित्यर्थः । ६ विश्वजित इति—एकाहकाण्डपठितादिति पूर्वं शेषः । ७ धर्मानिति—दक्षिणामिति तात्पर्यम् । ८ यत्कारणम्—यस्मादित्यर्थः । ९ प्राक्तनुरात्रेभ्य—पा० । १० इत्येवमादय इति—आदिशब्देन ' अन्वहं द्वादशशतं ददाति ' इत्यादि ग्राह्यम् । ११ प्रकृतित्वादिति—अष्टरात्रे षण्णामह्नां द्वादशाहप्रकृतिकत्वादित्यर्थः ।

द्वादशशतं वा प्रकृतिवत् ॥ १५ ॥

द्वादशशतं वा देयमिति। प्रकृतिवत्कर्तव्यम्। ज्योतिष्टोमश्च प्रकृतिः। तत्र धर्मा विहिताः, न विश्वजिति कृत्स्नाः प्रतीयन्ते। तस्माद्द्वादशशतमत्र देयमिति ॥ १५ ॥

अतद्गुणत्वात्तु नैवं स्यात् ॥ १६ ॥

तुशब्दः पक्षं व्यावर्तयति। नैवं भवितुमर्हति। कुतः। नैष यतो विश्वजितो गुणो द्वादशशतम्। नामधेयेन ह्यत्र धर्मग्रहणम्। तस्माद्विश्वजितो ग्रहीष्यति, न ज्योतिष्टोमादिति ॥ १६ ॥

लिङ्गदर्शनाच्च ॥ १७ ॥

लिङ्गं खल्वपि दर्शयति। किं लिङ्गं भवतीति। एवमाह। हीयते वा एष पशुभिर्यो विश्वजिति सर्वस्वं न ददातीति नियतं सर्वस्वदानं दर्शयत्यहर्गणे ॥ १७ ॥

( विश्वजिति द्वादशशतन्यूनधनस्यानधिकाराधिकरणम् ॥ ९ ॥ )

[९] विकारः सन्नुभयतोऽविशेषात् ॥ १८ ॥ पू०

विश्वजिति, सर्वस्वं ददातीति। तत्रैषोऽर्थः सांशयिकः। किं यस्य द्वादशशतमधिकमूनं वा विद्यते तस्यापि विश्वजित्यधिकार उत यस्य सकलमधिकं वा तस्यैवेति। किं प्राप्तम्। विकारः सन्नुभयतोऽविशेषात्। न विशेषः कश्चिदाश्रीयते। यस्य द्वादशशतमधिकमूनं वाऽस्तीति। तस्मात्सर्वस्य विश्वजित्यधिकार इति ॥ १८ ॥

अधिकं वा प्रतिप्रसवात् ॥ १९ ॥ सि०

न चैतदस्ति, सर्वस्य विश्वजित्यधिकार इति। कस्य तर्हि। यस्य द्वादशशतमस्ति, अधिकं वेति। कुतः। प्रतिप्रसवात्। प्रतिप्रसवो हि ज्योतिष्टोमे सर्वस्वस्योच्यते। द्वादशशतं विधायाऽऽह, एतावता वाव ऋत्विज आनेया अपि वा सर्वस्वेनेति। यद्येतावता नेच्छेयुः, सर्वस्वेनाप्यानमयितव्या इति। तद्यदि द्वादशेन शतेन नेच्छन्ति, नेच्छन्तितरां

[ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

१ भविष्यति—पा० । २ सर्व—पा० । ३ विश्वजिता—पा० । ४ विश्वजिता—पा० । ५ विश्वजिता—पा० । ६ आनमनीया—पा० । ७ ' यद्येतावता ऋत्विजो नाऽऽनमेयुरपि तु सर्वस्वेन ' इति ग्रन्थान्तरधृतः पाठः ।

ततो न्यूनेन । तस्माद्द्वादशशतं ज्योतिष्टोमे । यद्वा सर्वस्वम् । तदिहो-भयमपि प्राप्तम् । तत्रैकः पक्षो नियम्यते, सर्वस्वं देयमिति । स एष न विधिः । प्राप्तत्वात् । अनियतप्राप्तस्तु नियम्यते । स चेन्नियम्यते, यादृशस्तत्र, तादृश एवेह । तत्र च द्वादशशतमधिकं वा सर्वस्वम् । इहापि तद्वदेव । तस्मान्न न्यूनधनस्याधिकार इति ॥ १९ ॥

अनुग्रहाच्च पादवत् ॥ २० ॥

चशब्देनान्वाचयः । इतश्चाधिकं सर्वस्वम् । अधिके हि दीयमाने तदन्तर्गतत्वाद्द्वादशशतमपि दत्तं भवति । पादवत् । यथा, कार्षापणे दीयमाने पादोऽपि दत्तो भवति । एवमिहापीति ॥ २० ॥

( आधाने, अपरिमितवाक्येन संख्यान्तरसाधनकदानविधानाधिकरणम् ॥ १० ॥ )

[१०] अपरिमिते शिष्टस्य संख्याप्रतिषेधस्तच्छ्रु-तित्वात् ॥ २१ ॥ पू०

आधाने श्रूयते, एका देया, षड् देयाः, द्वादश देयाश्चतुर्विंशतिर्देयाः, शतं देयं, सहस्रं देयम्, अपरिमितं देयमिति । तत्र संदेहः । किं यत्परि-मितमेका देयेत्येवमादि, तन्न दातव्यमिति प्रतिषेधो विधीयत उतापरि-मितं नाम किंचित्, तस्य दानं विधीयत इति । किं प्राप्तम् । अपरि-मिते श्रूयमाणे ब्रूमः । शिष्टस्यैकादेः संख्येयस्य या संख्या, सा प्रति-षिध्यते । कुतः । तच्छ्रुतित्वात् । परिमितशब्दश्रवणाद्गणितमवगम्यते । तच्चैकादिकम् । तस्य नञ्शब्देन प्रतिषेधः क्रियते । तत्र श्रुतोऽर्थः कृतो भवति । इतरथाऽपरिमितशब्दे प्रसिद्धिस्त्यज्येत । लक्षणया बहु-त्वमस्यार्थः कल्प्येत । तस्मात्परिमितस्य प्रतिषेध इति ॥ २१ ॥

कल्पान्तरं वा तुल्यवत्प्रसंख्यानात् ॥ २२ सि०

कल्पान्तरं वा स्यात् । अपरो दानकल्पो विधीयते । यथा, एका देयेति दानविधिकल्पः । एवमेषोऽपि दानविधिकल्प एव स्यात् । तुल्यवत्प्रसंख्यानात् । तेन हि पूर्वेण तुल्यमेवेदं प्रसंख्यायते । काऽस्य पूर्वेण तुल्यता । प्रतिज्ञातस्यार्थस्यावगमिका श्रुतिरस्तीति । पूर्वत्र हि देयशब्दश्रुत्या दानं विधीयत इति । इहापि देयशब्दश्रुतिः । सा श्रूय-

---

॥ १९ ॥ २० ॥ २१ ॥

---

१ तुल्यवत्प्रसंख्यानात्—क्वचिन्नास्ति । २ श्रवणेन–पा० ।

माणा शक्नोति दानं विधातुम् । प्रतिषेधे हि विधीयमाने वाक्यस्य व्यापारः । तच्च दुर्बलं श्रुतिं प्रति । तस्मात्कल्पान्तरम् । यच्चापरिमितशब्दे प्रसिद्धिर्बाध्यत इति । समुदायप्रसिद्धिरवयवप्रसिद्धेर्बाधिकैव समधिगता ।

ननु नात्र प्रसिद्धिः । लक्षणेयम् । यद्बहु, तन्न शक्यं परिमातुम् । तस्मादपरिमितत्वेन लक्ष्यते बहुत्वमिति । तच्च न, अनेकस्मिन्नशक्यपरिमाणे सति बहुषु रूढः । अपरिमितमस्य धनं, बह्विति गम्यते । यथा, कुशलः, प्रवीण इति । बहुषु कुशानां लातुर्गुणेषु सत्सु निपुणतायामेव कुशलशब्दप्रयोगाद्रूढिशब्द एव भवति । बहुषु च वीणावादस्य गुणेषु सत्सु निपुण एव प्रवीणशब्दो वर्तमानो रूढ इत्युच्यते । तस्मात्सत्यपि लक्षणात्वे श्रुतिसामर्थ्याद्रोहतिशब्दः । तस्मात्समुदायप्रसिद्ध्याऽपरिमितशब्देऽवयवप्रसिद्धिर्बाध्यते, अश्वकर्णशब्दवत् । अतः कल्पान्तरमिति ॥ २२ ॥

( आधाने सहस्राधिकस्यापरिमितत्वाधिकरणम् ॥ ११ ॥ )

## [ ११ ] अनियमोऽविशेषात् ॥ २३ ॥ पू०

अपरिमिते कल्पान्तरमिति समधिगतम् । अथेदानीमिदं संदिह्यते । किं सहस्रादूनमपरिमितमुत सहस्रादधिकमिति । किं तावत्प्राप्तम् । अनियमोऽविशेषात् । न कश्चिदिह बहुत्वे विशेष आश्रीयते सहस्रादूनमधिकं वेति । अनाश्रीयमाणे यथा कृतं तथा साधु । तस्मादनियमः ॥ २३ ॥

## अधिकं वा स्याद्बह्वर्थत्वादितरेषां संनिधानात् ॥ २४ ॥ सि०

वेति पक्षव्यावृत्तिः । नैतदस्ति । अधिकमूनं वा सहस्रादिति । किं तर्हि । अधिकमेवेति । कुतः । बह्वर्थत्वादपरिमितशब्दस्य । बहुषु हीमं शब्दमुपचरन्तीत्येतदुक्तम् । बहुत्वं चाऽऽपेक्षिकं, किंचिदपेक्ष्य ततोऽधिकं बह्वित्युच्यते । असत्यामपेक्षायामपरिपूर्णमेतत् । यथा पुत्र इति किंचिदपेक्ष्य भवति नान्यथा । तत्र प्रकृतं संनिहितं चापेक्ष्य निर्णयः सहस्रं च संनिहितम् । तस्मात्ततोऽधिकमपरिमितमिति ॥ २४ ॥

---

॥ २२ ॥ २३ ॥ २४ ॥

---

१ वाक्यम् । तच्च दुर्बलं श्रुतेः—पा० । २ शब्दो रोहाद्रूढि–पा० । ३ अथेदानीं—पा० । ४ कश्चिदत्र बहुत्वविशेषः । ५ यथाकामं स्यात्, यथाकृतं साधु—पा० । ६ इतरैः संनिधानात्–इति लिखितपुस्तकेषु पाठो दृश्यते ।

अर्थवादश्च तद्वत् ॥ २५ ॥

कथमेवम् । तत्रोत्कृष्टं वै अपरिमितमिति तदूनतां सहस्रस्य दर्शयति ॥ २५ ॥

( परकृतिपुराकल्पानामर्थवादत्वाधिकरणम् ॥ १२ ॥ )

[ १२ ] परकृतिपुराकल्पं च मनुष्यधर्मः स्यादर्थाय ह्यनुकीर्तनम् ॥ २६ ॥ पू०

इह परकृतयः, पुराकल्पाश्चोदाहरणम् । यथा, इति ह स्माह बर्कुर्वार्ष्णिर्माषान्मे पचत, न वा एतेषां हविर्गृह्णन्तीति । पुराकल्पः, उल्मुकैर्ह स्म पूर्वे समाजग्मुस्तान् ह असुरा रक्षांसि निजघ्नुरित्येवमादयः । तेषु संदेहः । किमेते मनुष्यधर्मा विधय उत तद्गोत्राणाम् । अथवाऽर्थवादा इति । किं तावत्प्राप्तम् । मनुष्यधर्मा विधय इति । कुतः । अर्थाय प्रयोजनायानुकीर्तनमेतद्भवति । कर्तृमनुष्यसंबन्धकीर्तनेन क्रिया प्रशस्ता भवति । प्रशस्तं च प्रतिपाद्यम् । स एष विधिरेवानेन प्रकारेण । अतः परैरपि मनुष्यैः कर्तव्य इति गम्यते ॥ २६ ॥

तद्युक्ते च प्रतिषेधात् ॥ २७ ॥

एवं जातीयकस्य विधेः प्रतिषेधो भवति । तत्तथा न कुर्यादिति प्रसक्तस्य च प्रतिषेधो न्याय्यः । तस्मादपि विधय इति ॥ २७ ॥

निर्देशाद्वा तद्धर्मः स्यात्पञ्चावत्तवत् ॥ २८ ॥

मनुष्यधर्मोऽयं विधिरेवंजातीयक इति गृह्यते । तत्र तु विशिष्टगोत्राणां निर्देशात्तेषामेव धर्म इति गम्यते । स्तुत्या ह्ययं कर्तव्य इति ज्ञायते । स च विशिष्टगोत्राणां श्रूयते । तस्मात्तद्गोत्राणामेव कर्तव्यः । पञ्चावत्तवत् । यथा, पञ्चावत्तं जामदग्नीनामिति तद्गोत्राणामेव भवति, एवमिहापीति ॥ २८ ॥

विधौ तु वेदसंयोगादुपदेशः स्यात् ॥ २९ ॥

तुशब्दादेषोऽपि पक्षो व्यावर्त्यते । विधावेतेषामुपदेशः स्यात् । विधौ वेदेन स्तुतिनिर्देशः कृतः । न विध्याश्रये पुरुषे । पुरुषग्रहणं

॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

१ तदु तथा—पा० । २ जमदग्नीनां—पा० । ३ एवमिदमपीति—पा० । ४ व्यावर्तते—पा० ।

विधिप्रशंसार्थम् । विधिरिति क्रियामाह । एतस्याः क्रियाया भावो यस्मादनेन पुरुषेण क्रियते तस्मात्साधुरिति । न त्वत्र पुरुषः क्रियासंबन्धेन निर्दिश्यते, किंतु स्तोतव्यत्वेन । कुत एतत् । स्तुतिपदस्यान्यस्याभावात् । अपि च, क्रियानिर्देशे श्रुत्या विधानम् । क्रियापुरुषसंबन्धनिर्देशे वाक्येन । तच्च दुर्बलम् । तस्मात्पुरुषमात्रस्य विधानं प्राप्नोति, न तद्गोत्राणामिति ॥ २९ ॥

अर्थवादो वा विधिशेषत्वात्तस्मान्नित्यानुवादः स्यात् ॥ ३० ॥ सि०

एषोऽपि पक्षो वाशब्दाद्विनिवृत्तः । नायं तद्गोत्राणां विधिः, न मनुष्यमात्रस्य वा विधिः, विधिरेव वेति । अर्थवादस्तु । कुतः । विधिशेषत्वात् । अन्यं त्वत्र विधिमामनन्ति । परकृत्युदाहरणे तावत्, तस्मादारण्यमेवाश्नीयादिति । पुराकल्पोदाहरणे, गृहपतेरेवाग्निषु निर्मथ्य निर्वपेरन्निति । न च द्वयोर्विध्योरेकवाक्यभावोऽस्ति । विधिना हि संबध्यमानयोः परकृतिपुराकल्पवचनयोरन्या वचनव्यक्तिः । अन्या तु स्तुत्यर्थप्रवृत्तयोः । न चोभयं यौगपद्येन संभवति । तस्मादर्थवाद इति ॥ ३० ॥

( विश्वसृजामयने संवत्सरशब्दस्य दिवसपरत्वेन मनुष्याधिकाराधिकरणम् ॥ १३ ॥ )

[ १३ ] सहस्रसंवत्सरं तदायुषामसंभवान्मनुष्येषु ॥ ३१ ॥ पू०

अस्ति सहस्रसंवत्सरं सत्रं विश्वसृजामयनं, पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः, पञ्चपञ्चाशतः पञ्चदशाः, पञ्चपञ्चाशतः सप्तदशाः, पञ्चपञ्चाशत एकविंशाः, विश्वसृजामयनं सहस्रसंवत्सरमिति । तत्र संदेहः । किं ये सहस्रायुषस्तेषामनेनाधिकार उत मनुष्याणामिति । यदाऽपि मनुष्याणां तदाऽपि बहवो विकल्पा वक्ष्यमाणाः, अथवा दिवसेषु संवत्सरशब्द इति । किं प्राप्तम् । सहस्रायुषां भवितुमर्हति । कुतः । असंभवान्मनुष्येषु । न मनुष्याणामेतावदायुर्विद्यते । गन्धर्वादय-

---

॥ २९ ॥ ३० ॥

---

१ अतश्च—पा० । २ वाशब्दान्निवर्तते—पा० । ३ अयमर्थवादः स्यात्—पा० । ४ अस्ति सहस्रसंवत्सरं, पञ्च-पा० ।

स्त्वेतावदायुष इति भवति स्मृतिः । उपचारोऽन्यार्थदर्शनं च । प्रजापतिं वै प्रजाः सृजमानं पाप्मा मृत्युरभिजघान, स तपोऽतप्यत सहस्रसंवत्सरान् पाप्मानं विजिहासन्निति । विस्पष्टं चेदं सहस्रसंवत्सरम् । तस्मान्न मनुष्याणामिति ॥ ३१ ॥

अपि वा तदधिकारान्मनुष्यधर्मः स्यात् ॥ ३२ ॥

अपि वेति पक्षव्यावृत्तिः । न गन्धर्वादीनाम् । मनुष्याणामेवाधिकार इति । कुतः । तदधिकारात् । मनुष्याधिकारं शास्त्रं समधिगतमिति । ते हि शक्नुवन्ति कार्त्स्न्येन यथोदितं विधिमुपसंहर्तुमिति । आह । ननु नैतावदायुषो मनुष्याः । उच्यते । रसायनैरायुर्दीर्घं प्राप्स्यन्तीति ॥ ३२ ॥

नासामर्थ्यात् ॥ ३३ ॥

न रसायनानामेतावत्सामर्थ्यं[1] दृष्टं, येन सहस्रसंवत्सरं जीवेयुः । एतानि ह्यग्नेर्वर्धकानि, वलीपलितस्य[2] नाशकानि, स्वरवर्णप्रसादकानि, मेधाजननानि । नैतावदायुषो दातॄणि दृश्यन्ते । ननु स्वरवर्णप्रसादादिदर्शनादेव ज्योग्जीवनमप्यनुमास्यते । नेति ब्रूमः । कुतः । शतायुर्वै पुरुष इत्यनुवादः । स एवं ज्योग्जीवने नावकल्पते । अत्रोच्यते । शतान्यायुरस्येति[3] विग्रहीष्यामः । नैवं संख्याशब्दानां समास इष्यते । न च गमकानि भवन्ति । द्विवचनबहुवचनान्तानामसमास इति चाभियुक्तवचनात् ॥ ३३ ॥

---

॥ ३१ ॥ ३२ ॥ ]

सहस्रसंवत्सरं तदायुषामसंभवान्मनुष्येषु ॥ शतान्यायुरस्येति विग्रहीष्याम इत्युक्ते नैवं संख्याशब्दानां समास इष्यत इति । यौ द्विवचनबहुवचनान्तौ संख्याशब्दौ ताभ्यां न समास इष्यते । कयोपपत्त्या । द्विवचनबहुवचनयोः प्रमाणाभावात् । राजपुरुष इत्युक्ते न राजशब्दात्परं द्विवचनं बहुवचनं वा श्रूयते । नन्वेकत्वेऽपि प्रमाणं नास्ति, तेन वा कथं विग्रहः । उच्यते । एकत्वं जात्यपेक्षं, लिङ्गमर्थप्राधान्यकत्वपेक्षम् । तस्मादेकवचनान्तेनान्यतमलिङ्गयुक्तेन विग्रहो भवति । चित्रगुरिति चित्रा गावो यस्येति विग्रहे प्रयोगस्मृतिः प्रमाणम् । भूमादिष्वर्थेषु मतुबादय इति ॥ ३३ ॥

---

१ मेतत्सामर्थ्यं—पा० । २ वलीपलितनाशकानि—पा० । ३ शतान्यायूंषि यस्येति पाठ आवश्यक इति भाति ।

संबन्धादर्शनात् ॥ ३४ ॥

न ह्येतावदायुषा रसायनानां संबन्धो दृष्टपूर्वः । न च संबन्धादर्शनेऽनुमानमस्ति । ननु सामान्यतो दृष्टं भविष्यति । दृश्यन्ते तावद्ल्पस्य स्थिरभावस्य कारकाणि । एवमभ्यस्यमानानि वीर्यवत्तमानि स्थिरशरीरतामुत्पादयिष्यन्ति । शतायुः पुरुष इति सत्यपि वचने, अधिकं जीवनं दृश्यत एवेति । अत्रोच्यते । नायमेकान्तः । कदाचिद्यां च यावन्तीं च शरीरस्थिरतामुत्पादयेयुः, न द्राघिष्ठकालं यथा प्रक्रामन्तोऽभ्यासात्प्रक्रमाणां वृद्धेर्यां च यावन्तीं च मात्रां प्राप्नुवन्ति, न त्वभ्यस्यन्तः पुरुषायुषेणापि योजनमात्रं प्रक्रमेयुः । एवमिहापि संबन्धाभावात्सहस्रायुष्ट्वं प्राप्नुयुर्न वेति संदिग्धम् । संदिग्धं चेत्सामान्यतो दृष्टं न प्रमाणम् । न चादृष्टोऽर्थः प्रमाणमन्तरेण शक्योऽभ्युपगन्तुम् । तस्मादसंशयं नैतावदायुषः सन्तीति । पुरुषवचने चोक्तम् ॥ ३४ ॥

कथं तर्हीति—

स कुलकल्पः स्यादिति कार्ष्णाजिनिरेकस्मिन्नसंभवात् ॥ ३५ ॥

स मनुष्याधिकारपक्षे कुलकल्पो भविष्यतीत्येवं कार्ष्णाजिनिराचार्यो मन्यते स्म । कुतः । एकस्मिन्नसंभवात् । पुरुषाणामिदमनुशासनम् । न चैतदेकः शक्नोति पारयितुम् । यथा शक्यते, तथा पारयितव्यमिति गम्यमाने, बहवः शक्नुवन्तः प्रवर्तेरन् । अन्येऽपि तत्कुलीना अन्येनाऽऽरब्धं समापयेयुरिति ॥ ३५ ॥

अपि वा कृत्स्नसंयोगादेकस्यैव प्रयोगः स्यात् ॥ ३६ ॥

शास्त्रफलं हि प्रयोक्तरीति समधिगतं, यश्च कार्त्स्न्येन विधिमुपसंहर्तुं समर्थः । स एवाधिक्रियत इति । तस्मान्न कुलकल्पोऽवकल्पते । कथं तर्हि । संप्रदायमात्रेण धर्म इत्यध्यवसीयते । एवं श्रूयते, स्वाध्यायोऽध्येतव्य इति । एवं तर्ह्येतदध्यवसेयं, वचन-

[ ३४ ॥ ३९ ॥

१ प्रागप्यदृष्टकालाम्—पा० । २ यथा युक्ताः प्रक्रमन्तो—पा० । ३ संबन्धाभावात्संदेहः सहस्रायुष्ट्वं प्राप्नुयुर्नेति । तत्संदिग्धं चेत्स—पा० । ४ सन्तीति पुरुषवचनेनोक्तम्—पा० । ५ तर्हीदमिति—पा० । ६ पारयितुमिति—पालयितुमित्यर्थः । ७ समधिगतमिति—( अ० ३ पा० ७ अ० ८ ) इत्यत्रेति शेषः ।

प्रामाण्यादेतत्कर्म कुर्वतामायुर्वर्धेत इति । तच्च न । प्रमाणाभावात् । न ह्येतस्मिन्नर्थे वाक्यमन्यद्वा प्रमाणमस्ति । नन्वर्थापत्तिः, अन्यथाऽऽनर्थक्यं भविष्यतीति । उच्यते । नाऽऽनर्थक्यम् । अध्ययनादेव ह्यदृष्टं भविष्यति । तथा हि सामान्येनादृष्टं कल्पयितुं लघीयो, न तु कर्मणाऽऽयुर्वर्धेत इति विशेषादृष्टकल्पना । अथवा, आनर्थक्यमेवाभ्युपगम्येत कामं, नायुक्ति फलकल्पनम् । अथोच्येत—अर्धतृतीयानि शतानि दीक्षिष्यन्ते, चतुर्भिर्वर्षैः समाप्यत इति । एवमपि नियतपरिमाणं हीयते, चतुर्विंशतिपरमाः सप्तदशावराः सत्रमासीरन्निति । वचनस्य त्वानर्थक्यपरिहाराय परिमाणं हापयिष्यत इति चेत् । तदयुक्तम् । अध्ययनात्फलमस्ति । तस्मान्नैषा कल्पनेति ॥ ३६ ॥

कथं तर्हि । एवम्—

विप्रतिषेधात्तु गुणयन्यतरः स्यादिति लावुकायनः ॥३७॥

अन्यतरोऽत्र गौणः शब्दः स्यात् । यदि वाऽसंवत्सरे संवत्सरशब्दः । यदि वा पञ्चपञ्चाशत इति शब्दो गौण इति । कुत एतत् । विप्रतिषेधात् । विप्रतिषेधो हि भवति, उभयस्मिन्विहिते । कथम् । वाक्यं हि भिद्येत । यदि पञ्चपञ्चाशतास्त्रिवृतः, न संवत्सराः । अथ संवत्सरास्त्रिवृतः, न पञ्चपञ्चाशतः । तस्माद्विरोधादन्यतरद्वचनं गौणमिति लावुकायन आचार्यो मन्यते स्म । आचार्यग्रहणं पूजार्थं, नाऽऽत्मीयमतप्रतिषेधार्थम् ॥ ३७ ॥

संवत्सरो विचालित्वात् ॥ ३८ ॥

एतदुक्तमन्यतरद्वचनं गौणमिति । तदवधारयितव्यम् । तदुच्यते, संवत्सरवचनं गौणमिति । कुतः । विचालित्वात् । विचाली हि संव-

॥ ३६ ॥ ३७ ॥

१ अन्यथा वचनमनर्थकं भवतीति—पा० । २ अभ्युपगम्येत, नायुक्तिफलं कल्प्यम्—पा० । ३ अर्धतृतीयानीति—तृतीयमर्धमेव न पूर्णमित्यर्थः । एवं च सार्धद्विशतसंख्याका यजमाना दीक्षिष्यन्त इति फलितं भवति । ४ तैश्चतुर्भिर्वर्षैः सत्रं समाप्यत इति—लिखितपुस्तकेनोन्नीतोऽयं पाठः । यथाश्रुतपाठस्तु, ते चतुर्भिर्वर्गैः सर्वे समाप्यत इति । ५ उक्तमध्ययनात्फलमिति । तस्मा—पा० । ६ विधीयमाने—पा० । ७ अस्मात्—पा । ८ नाऽऽत्मनः प्र—पा० ।

त्सरशब्दः सावनोऽपि गणितदिवसकः, शीतोष्णवर्षालक्षणोऽपि, चान्द्रमसोऽपि। सं एवंलक्षणकोऽनुवादः शक्यते कल्पयितुम्। पञ्चपञ्चाशत इत्ययं तु व्यक्तपरिमाणस्यार्थस्य वाचकः, एकेनाप्यूने न भवति ॥ ३८ ॥

## सा प्रकृतिः स्यादधिकारात् ॥ ३९ ॥

गवामयने मासाः प्रकृताः, मासेषु च संवत्सरशब्द उक्तः, यो मासः स संवत्सर इति। तस्मात्पञ्चपञ्चाशतो मासा इति। नन्वेतस्मिन्पक्षे सहस्रसंवत्सरशब्दो नावकल्पते। उच्यते। नामधेयमेतत्सहस्रसंवत्सरशब्द इति, न गुणविधिः। नामधेयं च न विधीयते। अविधीयमानं च येन केनचिद्गुणेनावकल्पिष्यते।

नैषोऽपि पक्षो युज्यते। अत्रापि हि स एव दोषः। न तावज्जीवनमस्ति, यावतैतदवकल्प्येत, दाराग्निकालसोमपूर्वत्वापेक्षयेति। तेनैतस्मिश्च क्रियमाणेऽपरिसमाप्त एवास्याऽऽयुः पर्युपयुक्तं स्यात्। तथाचाध्ययनादेवादृष्टं कल्प्येत। एवं तर्हि, द्वादशाहः प्रकृतिरिति, पञ्चपञ्चाशतो द्वादशाहा भविष्यन्तीति। तथा च दृश्यते, द्वादश वै रात्रयः संवत्सरस्य प्रतिमा इति। तत्र स दोषो न भविष्यति। नैवम्। तत्र संवत्सरशब्दस्य साक्षात्प्रतिमाशब्देन संयोगात्। अपि च, पञ्चपञ्चाशतस्त्रिवृत इत्युक्तम्। त्रिवृच्छब्दश्च द्वादशाहे दिवसे दृष्टः, न द्वादशरात्रे। तस्मान्नैवम् ॥ ३९ ॥

## आहनि वाऽभिसंख्यत्वात् ॥ ४० ॥ सि०

वाशब्दः पक्षं व्यावर्तयति। न चैतदस्ति, पञ्चपञ्चाशतो द्वादशरात्रा इति। अहान्येव त्रिवृच्छब्देनाऽऽख्यायन्ते। तस्मादहःसु संवत्सरशब्द इति। अथवा, वाशब्दः पक्षान्तरं व्यावर्तयति। न पञ्चपञ्चाशतो मासाः। किं तर्हि, दिवसाः। द्वादशाहे त्रिवृदहः प्रकृतम्। तत्र संव-

॥ ३८ ॥ ३९ ॥

१ एष लक्षणयाऽनु—पा०। २ सहस्रसंवत्सर इति शब्दो—पा०। ३ केनचिदवकल्प्यते—पा०। ४ एतदवरुध्येत—पा०। ५ तस्मान्नेदं भविष्यति द्वादशाहे संवत्सरशब्द इति—पा०। ६ पक्षं—पा०।

त्सरशब्दो दृश्यते । आदित्यो वा सर्व ऋतवः, स यदैवोदेत्यथ वसन्तो, यदा संगवोऽथ ग्रीष्मो, यदा मध्यंदिनोऽथ वर्षा, यदाऽपराह्णोऽथ शरत्, यदाऽस्तमेत्यथ हेमन्तशिशिराविति, सर्वानृतूनहनि संपादयति । सर्वे च ऋतवः संवत्सरः । तस्मादहः संवत्सरशब्देनोच्यते । अपि च, पञ्चपञ्चाशतस्त्रिवृत इति त्रिवृतां पञ्चपञ्चाशत्त्वम् । न च द्वादशरात्रस्त्रिवृत् । एकं हि द्वादशाहे त्रिवृदहः । न तत्र त्रिवृत्संख्याया द्वादशरात्रेण मुख्यया वृत्त्या सामानाधिकरण्यम् । त्रिवृदहः संबन्धलक्षणया स्यात् । अभिसंख्येयं त्रिवृदहः । तेन श्रुत्यैव सामानाधिकरण्यम् । श्रुतिश्च लक्षणाया ज्यायसी । तस्मात्पञ्चपञ्चाशदहानि संवत्सरः स्यादिति ॥ ४० ॥

[ अहानि वाऽभिसंख्यत्वात् ॥ ४० ॥ सि०

वाशब्दः पक्षं व्यावर्तयति । न चैतदस्ति, द्वादशाहे संवत्सरशब्द इति । किं तर्हि । अहःसु । कुतः । दर्शनात् । अहरिव संवत्सर इति ब्राह्मणम् । ननु द्वादशाहे संवत्सरशब्दः । नैव हि तत्र संवत्सरशब्दः । साक्षात्प्रतिमाशब्देन संयोगात् । अहानि पञ्चपञ्चाशतस्त्रिवृत इति त्रिवृच्छब्देनाऽऽख्यायन्ते, न संवत्सरः । तस्मादहःसु संवत्सरशब्द इति ॥४०॥]

इति शबरस्वामिनः कृतौ मीमांसाभाष्ये षष्ठस्याध्यायस्य सप्तमः पादः ॥

---

॥ ४० ॥]

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां षष्ठाध्यायस्य सप्तमः पादः ॥

---

१ स्यादिति स्थितम्—पा० । २ [ ] एतच्चिह्नान्तर्गतोऽयं पाठो मुद्रितपुस्तकेऽनुपलभ्यमानोऽपि लिखितपुस्तकोपलब्धिमात्रेण मयाऽत्र प्रकाशितः । दृश्यते चेयं सरणिर्भगवतो भाष्यकारस्य ग्रन्थव्याख्यानरसिकतया तत्र तत्र । यथा, चतुर्थाध्यायद्वितीयपादे '' स्वरुस्त्वनेकनिष्पत्तिः ' इत्यादीनां षण्णां सूत्राणां व्याख्याने पौनःपुन्यमिति ।

अथ षष्ठेऽध्यायेऽष्टमः पादः ।

( चतुर्होतृहोमेष्वनाहिताग्नेरेवाधिकाराधिकरणम् ॥ १ )

[ १ ] इष्टिपूर्वत्वादक्रतुशेषो होमः संस्कृतेष्वग्निषु स्यादपूर्वोऽप्याधानस्य सर्वशेषत्वात् ॥ १ ॥ पू०

इह चतुर्होतृष्वाम्नायते, प्रजाकामं चतुर्होत्रा याजयेत्, चतुर्गृहीतमाज्यं गृहीत्वा चतुर्होतारं व्याचक्षीत । पूर्वेण ग्रहेणार्धं जुहुयात्, तदुत्तरेणार्धमिति । तत्र संदेहः । किं पवमानेष्टिसंस्कृतेष्वग्निष्वेवमादय उतासंस्कृतेष्विति । तथा पक्षान्तराश्रयणमपि वक्ष्यमाणं विचारयिष्यते । किं तावत्प्राप्तम् । संस्कृतेष्वग्निष्वेवंजातीयकोऽक्रतुशेषोऽपि होमः स्यात् । यद्यप्यपूर्वा दर्विहोमा न कुतश्चिद्धर्मानाकाङ्क्षन्ति, तथाऽप्याहवनीयादयो होमादीनाकाङ्क्षन्ति, यदाहवनीये जुहोति, तेन सोऽस्याभीष्टः प्रीतो भवति, इत्येवमादिभिः श्रुतिभिः । एवमिष्टिपूर्वत्वात्सर्वहोमानां संस्कृताग्निवृत्तित्वमेवंजातीयकानामिति ॥ १ ॥

इष्टित्वेन तु संस्तवश्चतुर्होतृनसंस्कृतेषु दर्शयति ॥ २ ॥ सि०

तुशब्दात्पक्षो विपरिवर्तते । चतुर्होतृहोमा असंस्कृतेष्वग्निषु[1] भवेयुः । तथा हि दर्शयति । एषा वाऽनाहिताग्नेरिष्टिर्यच्चतुर्होतार इति । अनाहिताग्नेरिष्टयो न विद्यन्ते । ये त्वेते चतुर्होतारस्तस्यैषैवेष्टिरिति, अनाहिताग्नेरेवंजातीयकान् होमान् दर्शयति । तस्मादसंस्कृतेषु भवेयुः ॥ २ ॥

ननु लिङ्गमसाधकं, प्राप्तिर्वक्तव्येति । तदुच्यते—

उपदेशस्त्वपूर्वत्वात् ॥ ३ ॥

एवं तर्हि, अक्रतुशेषाणां विधिरेषं[2] भविष्यति, एषा वाऽनाहिताग्नेः क्रियेति । एवमर्थवद्वचनं भविष्यति । वादमात्रमनर्थकं भवति । अस्य चास्ति विधिसामर्थ्यम् । तस्माद्विधिरसंस्कृतेष्विति ॥ ३ ॥

स सर्वेषामविशेषात् ॥ ४ ॥

आह । एतद्गृह्यते विधिरिति । यत्तु, अक्रतुशेषाणामिति । तन्न ।

---

[ १ ॥ २ ॥ ३ ॥

---

१ असंस्कृतेष्वपि—पा० । २ विधिरेव—पा० ।

सर्वेषां क्रतुशेषाणामक्रतुशेषाणां च चतुर्होतृहोमानाम् । कुतः । अविशेषात् । चतुर्होतृणामयं धर्म उच्यते, न विशेषः क्रतुशेषाणामक्रतुशेषाणां चेति । तस्मात्सर्वेषाम् ॥ ४ ॥

अपि वा क्रत्वभावादनाहिताग्नेरशेषभूतनिर्देशः ॥ ५ ॥

अपि वेति पक्षव्यावृत्तिः । अक्रतुशेषाणामेवायं धर्मो न क्रतुशेषाणाम्[1] । कुतः । अनाहिताग्नेः क्रत्वभावात् । न ह्यनाहिताग्नेः क्रतवः सन्ति । न च क्रत्वङ्गं केवलं प्रयुज्यमानं कस्मैचित्प्रयोजनाय स्यात् । नै[2] चास्यान्यत्फलं प्रकल्प्येत । प्रमाणाभावात् । वचनस्य ह्यन्यदपि प्रयोजनमस्ति । न चानेन वचनेन शक्यतेऽनाहिताग्नेः क्रतुः कल्पयितुम् । तस्मादक्रतुशेषाणामयं धर्म इति ॥ ५ ॥

जपो वाऽनाग्निसंयोगात् ॥ ६ ॥

वाशब्दात्पक्षो विपरिवर्तते । नासंस्कृतेष्वग्निष्वेवंजातीयका होमाः स्युः । कुतः । आधानस्य सर्वशेषत्वात्[3] । ननु वचनमिदम्, एषा वाऽनाहिताग्नेरिष्टिरिति । नेति ब्रूमः । जपार्थवाद एष भविष्यति । ये[4] जपरूपास्तेषामर्थवादो न सर्वेषां चतुर्होतृणाम् । एवं, यदाहवनीये जुहोति, इत्येवमादीनां वचनानामर्थवत्ता भविष्यति ॥ ६ ॥

इष्टित्वेन तु संस्तुते होमः स्यादनारभ्याग्निसंयोगादितरेषामवाच्यत्वात् ॥ ७ ॥

यदुक्तम्, एषा वाऽनाहिताग्नेः क्रिया, इष्टितुल्येति जपानामेव वाद इति । तन्न । कथम् । नैषा वचनव्यक्तिः । यैषाऽनाहिताग्नेः क्रिया, सेष्टितुल्येति । किं कारणम् । सादृश्यमात्रानुवादोऽनर्थकः स्यात् । इतरस्मिन्पक्षे विधिरर्थवान् । येयमिष्टिः, एषाऽनाहिताग्नेरिति, तदिष्टिसंस्तवाद्धोमानामेव वादः । कथम् । इष्टियोगः, स एवाऽऽसेचनाधिको होमः । यदुक्तं, सर्वहोमार्थ आहवनीय इति । तन्न[5] चतुर्होतृनेवाधिकृ-

॥ ४ ॥ ५ ॥ ६ ॥

१ न क्रतुशेषाणामेवायं धर्म उच्यते, नाक्रतुशेषाणामिति—पा० । २ नचास्मात्फलं कल्प्येत—पा० । ३ सर्वशेषत्वादेव—पा० । ४ ये जपास्तेषामयमनुवादो—पा० । ५ क्वचिन्नास्ति । ६ तन्न । न चतु—पा० ।

स्योच्यते, किंत्वविशेषेण होमान्। स चतुर्होतृष्वसंभवादन्येषु भविष्यति। चतुर्होतृषु चानाहिताग्नेरुच्यमानेष्वाहवनीयो नाङ्गमिति ॥ ७ ॥

उभयोः पितृयज्ञवत् ॥ ८ ॥

नैतदस्ति, अनाहिताग्नेरेव चतुर्होतार इति। उभयोः स्युः, पितृयज्ञवत्। यथा पितृयज्ञ आहिताग्नेरनाहिताग्नेश्च, एवं चतुर्होतारोऽपि कथमवगम्यते। वर्णितमेतत्। यदाऽनुवादपक्षस्तदाऽऽहिताग्नेः। यदा विधिपक्षस्तदाऽनाहिताग्नेः। उभयथा वचनव्यक्तिः प्रतीयते। न च प्रतीयमानोऽर्थः शक्यतेऽपह्नोतुम्। तस्मादुभयोश्चतुर्होतार इति ॥ ८ ॥

निर्देशो वाऽनाहिताग्नेरनारभ्याग्निसंयोगात् ॥ ९ ॥

न चैतदस्ति, पितृयज्ञवदुभयोश्चतुर्होतारो भवेयुरिति। कथम्। एष ह्यनाहिताग्निनिर्देशः। एषा वा इष्टिरनाहिताग्नेरिति वचनेनाधिकृतः, नाऽऽहिताग्निः। निर्देशसामर्थ्यात्। अर्थवादे चोपक्षीणं तत्रैव न विरुध्यत इति। यदाहवनीये जुहोतीति वचनं न चतुर्होतृनेवाधिकृत्योच्यत इत्युक्तम्। तस्मादनाहिताग्नेरेवंजातीयका होमाः ॥ ९ ॥

पितृयज्ञे संयुक्तस्य पुनर्वचनम् ॥ १० ॥

अथ यदुक्तं पितृयज्ञवदिति। युक्तं पितृयज्ञे। तत्राऽऽहिताग्निसंयुक्तस्य पुनरेतद्वचनं भवति, अप्यनाहिताग्निना कार्य इति। एतद्वचनमनाहिताग्नेरपीति, अनाहिताग्निनाऽन्वाचयं करोति। इह तथा नास्ति वचनम्। नियोगत एको निर्देशः, एषा वाऽनाहिताग्नेरिष्टिरिति। नात्र, अपिशब्दोऽस्ति। तस्मात्पितृयज्ञेनातुल्यमेतत् ॥ १० ॥

( उपनयनाङ्गहोमानां लौकिकाग्नावनुष्ठानाधिकरणम् ॥ २ ॥ )

[ २ ] उपनयन्नादधीत होमसंयोगात् ॥ ११ ॥ पू०

इदमामनन्ति, उपनयंस्तिसृभिर्जुहुयादिति। तत्र संदेहः। किमयं होम आधानसंस्कृतेष्वग्निषूतासंस्कृतेष्विति। किं प्राप्तम्। उपनयन्नादधीतेति।

---

॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

---

१ वाऽना—पा०। २ नाङ्गमिति तदर्थं नैव वक्तव्यं भवतीति-पा०। ३ उभयोरेषा वचन-पा०। ४ पितृयज्ञवादिति क्वचिन्नास्ति। ५ अनुवादे चोपक्षीणं नैव वि—पा०। ६ अनाहिताग्नाऽन्वाहार्यकं क—पा०। ७ एव—पा०।

संस्कृतेष्विति[1]। कुतः। होमसंयोगादाहवनीयस्य, यदाहवनीये जुहोति, तेन सोऽस्याभीष्टः प्रीतो भवतीति। तस्मादाधानोत्तरकाला एते होमा इति[2] ॥ ११ ॥

स्थपतीष्टिवल्लौकिके[3] वा विद्याकर्मानुपूर्वत्वात् ॥ १२ ॥ सि०

न चैतदस्ति, आधायैवंजातीयकं होतव्यमिति। किं तर्हि। लौकिक एव प्रवर्तेतेति। कुतः। विद्याकर्मानुपूर्वत्वात्। विद्याग्रहणार्था इमे होमाः। विद्यावतश्चाऽऽधानाधिकारः[4]। सामर्थ्यात्। अत आधानोत्तरकालता नैषामवकल्पते। यथा स्थपतीष्ट्याम् ॥ १२ ॥

आधानं च भार्यासंयुक्तम् ॥ १३ ॥

आधानं च भार्यासंयुक्तं श्रूयते। विद्याग्रहणोत्तरकालश्च दारसंग्रहः। तस्मादपि नावकल्पते पूर्वकालताऽऽधानस्य ॥ १३ ॥

अकर्म चोर्ध्वमाधानात्तत्समवायो हि कर्मभिः ॥ १४ ॥

अत्राऽऽह। या पूर्वमाधानाद्दारक्रिया, सा कर्मार्था भविष्यति। वचनाच्चोर्ध्वमाधानादपत्यार्था। द्वयोरपि कालयोः पिण्डपितृयज्ञवन्नैष दोषो भविष्यतीति। अत्रोच्यते। अकर्म च दारक्रियाया आधानोत्तरकाले[5]। कुतः। आहवनीयादिसमवायो हि कर्मभिर्भवति। स्वार्थं चाग्नय आधातव्या इति नियमः। तस्मादुभयस्मिन्नपि काले दारसंग्रह इत्येतन्नास्ति ॥ १४ ॥

श्राद्धवदिति चेत् ॥ १५ ॥

अत्राऽऽह। यथा पिण्डपितृयज्ञ आहिताग्नेरनाहिताग्नेश्च भवति, एवं दारसंग्रहोऽपीति यदुक्तं, तत्परिहर्तव्यम् ॥ १५ ॥

न श्रुतिविप्रतिषेधात् ॥ १६ ॥

नैतदेवम्[6]। श्रुतिविप्रतिषेधो हि भवति। एवं क्रियमाणे दारकर्मणि विद्याग्रहणोत्तरकालं श्रूयमाणं पूर्वं क्रियत इति विप्रतिषिद्धम्। अर्थादन्यदेवेदमिति चेत्। न। अर्थमात्रस्यैव कालनियम एषः। उपनयनं च कर्मार्थम्। तद्द्वितीयस्यां विप्रतिषिध्येत ॥ १६ ॥

॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

१ संस्कृतेष्विति, क्वचिन्नास्ति। २ इति स्थितिः—पा०। ३ स्थपतिवदिति लिखितपुस्तकेषु पाठो दृश्यते। ४ आधानेनाधि—पा०। ५ कालं—पा०। ६ नैषम्—पा०।

सर्वार्थत्वाच्च पुत्रार्थो न प्रयोजयेत् ॥ १७ ॥

अथोच्येत, प्रागाधानाच्च कर्मार्थैव, ऊर्ध्वं चापत्यार्थैवास्य भविष्यति[1]। तेनैवं सति, अस्य न किंचिद्विरोत्स्यत इति । उच्यते । नैतदेवम् । सर्वार्था हि सा न केवलमपत्यार्थतामेष्यति । तदुक्तं[2], फलोत्साहाविशेषादिति । तस्मादपि न द्विर्दारसंग्रहः । अपि चैवं स्मर्यते, धर्मे चार्थे च कामे च नातिचरितव्येति । एवं सत्यतिचरिता स्यात् । अतोऽपि न द्विर्दारसंग्रहः । एकैव भार्या कर्मार्थाऽपत्यार्था च । तस्याश्च विद्याग्रहणोत्तरकालता । अतो नाऽऽधानसंस्कृतेष्वेते होमा इति ॥ १७ ॥

सोमपानात्तु प्रापणं द्वितीयस्य तस्मादुपयच्छेत् ॥ १८ ॥

गृह्यत एतत्, प्रागुपनयनान्नास्ति पत्नीति । यदुक्तमेकैव पत्नीति । तन्न मृष्यते । यथैव स्मृतिः, धर्मे चार्थे च कामे च नातिचरितव्येति । धर्मप्रजासंपन्ने[3] दारे नान्यां कुर्वीतेति च । एवमिदमपि स्मर्यत एव, अन्यतरापायेऽन्यां कुर्वीतेति । तस्माद्यस्य न धर्मसंपन्ना, न प्रजासंपन्ना वा पत्नी, सोऽन्यां कुर्वीतेति । सोमपानादिति चार्थवादं व्यपदिशति स्म । सोमपो न द्वितीयां जायामभ्यपसूयत इति द्वितीयामपि जायां दर्शयति ॥ १८ ॥

पितृयज्ञे तु दर्शनात्प्रागाधानात्प्रतीयेत ॥ १९ ॥

अथ कथं पितृयज्ञस्य द्वौ कालाविति । उच्यते । वचनं हि तत्र दृश्यते । अप्यनाहिताग्निना कार्य इति । तस्मात्प्रागाधानात्पितृयज्ञ इति ॥ १९ ॥

( स्थपतीष्टेर्लौकिकाग्निष्वनुष्ठानाधिकरणम् ॥ ३ ॥ )

[ ३ ] स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत्तादर्थ्याच्चापवृज्येत ॥ २० ॥ पू०

अस्ति स्थपतीष्टिः, एतया निषादस्थपतिं याजयेदिति । तत्र संदेहः ।

॥ १७ ॥ १८ ॥ १९ ॥ ]

[4]अत्र चोदयन्ति । चोदकेनाग्नयः संस्कृतास्तस्यां[5] प्राप्येरन् । स च यत्तस्यां न

१ अपत्यार्था भविष्यति-पा० । २ ( अ० ६ पा० १ अ० ३ सू० १३ ) । ३ आप० ध० स० ( २—५—११—१२ ) ४ अत्रेति—यदस्मिन्नधिकरणे भाष्यकारैः, स्थपतीष्टिश्चोदकसामर्थ्यादाहवनीयं प्रयुङ्क्त इत्युक्तं, तस्मिन्विषये केचिच्चोदयन्तीत्यर्थः । ५ तस्याः प्रा—पा० ।

किमाधानसंस्कृतेष्वग्निषु स्यादुत लौकिकेष्विति। किं प्राप्तम्। संस्कृतेष्विति। कथम्। यदाहवनीये जुहोतीत्येवमादिवचनात्। ननु शूद्रस्याऽऽहवनीयाभावान्नास्ति तस्य श्रुतिरिति। उच्यते। सा ह्याहवनीयं प्रयोजयेत्। यथा प्रयाजानश्रुतान्प्रयोजयति; एवं चोदकसामर्थ्यादिति। तादर्थ्याच्चापवृज्येत। स्थपतीष्ट्यर्थं चाऽऽहिता अग्नयः। तस्यामपवृक्तायामपवृज्येरन्। धारणं हि तेषां दृष्टकार्यमाम्नातम्, अतिक्रान्ते कार्ये न स्यादिति॥ २०॥

अपि वा लौकिकेऽग्नौ स्यादाधानस्यासर्वशेषत्वात्॥ २१॥ सि०

अपि वेति पक्षव्यावृत्तिः। लौकिकेष्वग्निषु स्यान्न संस्कृतेषु। कुतः। आधानस्यासर्वशेषत्वात्। सर्वकर्मशेषभूता अग्नयः। तदङ्गमाधानं, न कर्माङ्गम्। श्रुत्यादीनामभावान्न कर्मप्रयुक्तताऽऽधानस्य, वाक्यसामर्थ्याच्चाग्निप्रयुक्तत्वम्। यच्च दर्शपूर्णमासप्रयुक्तं, तच्चोदकेन प्राप्येत, न द्रव्यप्रयुक्तम्। तस्माल्लौकिकेष्वग्निषु स्थपतीष्टिरिति॥ २१॥

---

विद्यते तत्प्रापयति; विद्यन्ते च तत्राग्नयः। 'यदाहवनीये' इत्यनारभ्यवादः प्रकृत्यर्थः खादिरवत्, न सर्वार्थः। खादिरता स्रुवस्य विधीयते। त्रैवर्णिकाना येषु कर्मस्वधिकारो न तेषांमाहवनीयादिप्रयुक्तिः। कस्मात्। अग्निमत्त्वं तेषाम्। सामर्थ्यादग्निमत्त्वम्। कामश्रुतयस्तेषामाधानश्रुतिं कल्पयन्ति। विद्यन्ते हि तेषामाधानश्रुतयः। तच्चाग्निप्रयुक्त, न कर्मप्रयुक्तम्। एवं त्वग्निमतो निषादस्थपतेरभावादग्निमत्त्वादग्निं प्रयुङ्क्ते। अग्नयोऽप्याधानं, सामर्थ्यात्। अत इदमाधानं स्थपतीष्टिप्रयुक्तम्। अतस्तदर्थम्। तेनाऽऽधानेनाग्निमिश्च तेद्वती। इतरेणाऽऽधानेन ब्राह्मणादयो नित्यमग्निमन्तः। अतस्तदपवर्गेऽपवृज्येत; यदि तादर्थ्यात्तत्रापवृज्येताग्निमत्त्वात्समर्थ इतीतरैरपि कर्मभिरधिकारः स्यात्॥ २०॥

आधानमनङ्गत्वान्न चोदकेन प्राप्यते। न च स्थपतीष्टिप्रकरण आम्नायते। अतो नौपदेशिकं, नाऽऽतिदेशिकम्। लौकिकस्त्वग्निः। स चाऽऽचारतः प्राप्नोति। 'तस्मिन्गृह्याणि' गृहाय हितानीत्यर्थः॥ २१॥

---

१ विद्यन्ते चेति—'यदाहवनीये जुहोति' इत्यादुपदेशेनेति शेषः। २ आहवनीयादिविधिप्रयुक्तिः—पा०। ३ कल्पयन्तीति—कामश्रुतयो हि त्रैवर्णिकानामाधानश्रुतिमन्यथानुपपत्त्या कल्पयेयुः, न तु श्रुत्या विदध्युः। कल्पना च विद्यमानासु प्रत्यक्षश्रुतिषु नोदेतीति भावः। ४ अतस्तदर्थां सा—पा०। ५ तद्वती—आधानाग्निमती। स्थपतीष्ट्यङ्गमाधानमग्न्यर्थमित्यर्थः। ६ गौत० ध० सू० (अ० ५ सू० ८)।

( लौकिकाग्नाववकीर्णिपशुयागानुष्ठानाधिकरणम् ॥ ४ ॥ )

## [४] अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात् ॥२२॥ सि०

अस्त्यवकीर्णिपशुः, ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेतेति। तत्र संदेहः। किं तदर्थमाधानं कर्तव्यमुत लौकिकेष्वग्निषु तद्वर्तेतेति। अवकीर्णिपशुश्च तद्वदित्यधिकरणातिदेशः। पूर्वस्याधिकरणस्य यः पूर्वपक्षः, सोऽत्र पूर्वः पक्षः। यः सिद्धान्तः, स सिद्धान्तः। सर्वार्थमाधानम्। तस्मादाहिताग्निष्विति पूर्वः पक्षः। आधानस्याप्राप्तकालत्वादिति सिद्धान्तः। अप्राप्तोऽयमाधानस्य काल इत्येतदुक्तम्। तस्मादिदमपि कर्म लौकिकेष्विति ॥ २२ ॥

( दैवकर्मणामुदगयनादिकालनियमाधिकरणम् ॥ ५ ॥ )

## [५] उदगयनपूर्वपक्षाहःपुण्याहेषु दैवानि स्मृतिरूपान्यार्थदर्शनात् ॥ २३ ॥ सि०

दैवानि कर्माण्युदाहरणमुपनयनप्रभृतीनि। तत्र संदेहः। किमनियते काले दैवानि कर्तव्यान्युत, उदगयनपूर्वपक्षाहःपुण्याहेष्विति। अनियत इति प्राप्ते, उदगयनादिष्वित्युच्यते। कुतः। एवं स्मरन्ति, तेषु कालेषु दैवानीति। रूपार्थवादश्च। एतद्वै देवानां रूपं, यदुदगयनं, पूर्वपक्षाहरिति। न च वयं देवादीनां रूपं विद्मः। अथ त्वेषु कालेषु दैवानि क्रियन्ते, तत एतेन संबन्धेन रूपवचनमवकल्पते। अन्यार्थं च वाक्यमेतद्दर्शयति, पूर्वाह्णो वै देवानां, मध्यंदिनो मनुष्याणाम्, अप-

[ ॥ २२ ॥ ]

'य इष्ट्या पशुना वा' इति पौर्णमास्याममावास्यायां वा नियतं ग्रहणम्, अग्निहोत्रादेः पक्षे निष्ठत्वात्। उपनयनचूडाकरणादीनि तूदाहरणम्। अत्र सूत्रोपात्तेषु सर्वेषु कालेषु। अन्यानि यथासंभवम्।

---

१ स्मृतिरूपान्यार्थदर्शनं च भवति। ए—पा०। २ पूर्वपक्षोऽहरिति—पा०। ३ इतिकरणः प्रभृत्यर्थकः। एवं च 'य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत' इति वचनात्, तथा 'सायं जुहोति' 'प्रातर्जुहोति' इति वचनाच्च पौर्णमास्यमावास्ययोः सायंप्रातःकालयोश्च नियतमनुष्ठानम्। अतो न सर्वाणि दैवान्युदाहरणमिति भाष्यकाराभिप्राय इत्याशयः। ४ सर्वेष्विति—समुच्चितेषु कालेषूपनयनादीनि कार्याणि। येषु तु समुच्चयासंभवस्तानि यथासंभवं कार्याणीत्यर्थः।

राह्णः पितृणामिति । तस्मादेतेषु कालेषु दैवानि स्युरिति ॥ २३ ॥

अहनि च कर्मसाकल्यम् ॥ २४ ॥

( अहनि च विशेषः । सकलं कर्माहन्येव शक्यते कर्तुमिति, न रात्रौ करिष्यते ॥ २४ ॥ )

( पित्र्यकर्मणामपरपक्षादिकालनियमाधिकरणम् ॥ ६ ॥ )

[ ६ ] इतरेषु तु पित्र्याणि ॥ २५ ॥ सि०

( श्राद्धादीन्यपरपक्षेऽपराह्णे च । स्मृतिरूपान्यार्थदर्शनात् ॥ २५ ॥ )

( ज्योतिष्टोमे भृतिवननसोमक्रययोर्नित्यताधिकरणम् ॥ ७ ॥ )

[ ७ ] याच्ञाक्रयणमविद्यमाने लोकवत् ॥ २६ ॥ पू०

इदं समाम्नायते ज्योतिष्टोमे, द्वादश रात्रीर्दीक्षितो भृतिं वन्वीतेति । तथा सोमं क्रीणातीति । तत्र संदेहः । किं यस्य न विद्यते भृतिस्तेन वनितव्या, यस्य च न विद्यते सोमस्तेन क्रेतव्यः, उतोभयथाऽपि सति चासति च । किं प्राप्तम् । याच्ञाक्रयणमविद्यमाने भृतिधने सोमे च स्यात् । कस्मात् । द्रव्यसंभवार्थं याच्ञाक्रयणमर्थवद्भविष्यति । तद्विद्यमानेऽनर्थकम् । अनर्थकं चोक्तमपि न कर्तव्यम् । तस्मादविद्यमाने भ॰

उत्तरसूत्रद्वयं न व्याख्यातं, निष्प्रयोजनत्वात् । अहनि रात्रौ वा कर्मसाकल्यं भवत्येव ॥ २३ ॥ [ २४ ॥ ]

पित्र्याण्येतानि, उदकतर्पणमहरहः, पिण्डपितृयज्ञोऽमावास्यायाम्, उभयोः पक्षयोः श्राद्धम् । पित्र्यां चातुर्मास्यकाला पौर्णमास्याम् । तानि न नियोगत इतरेषु ॥ २५ ॥

' यैस्तु द्रव्यं चिकीर्ष्यते ' इति द्रव्योपादानार्थत्वाद्द्रव्यं चिकीर्षितम् । तत्तत्प्रयुक्तं

१ ( ) एतच्चिह्नान्तर्गतः सूत्रद्वयस्थो ग्रन्थः कस्मिंश्चिल्लिखितपुस्तके नोपलभ्यते । वार्तिककारैश्च, सूत्रद्वयं भाष्यकारैर्न व्याख्यातमिति कथनाच्चायं ग्रन्थो न भाष्यकारस्येति भाति । २ उभयमपि—पा० । ३ द्रव्यसद्भावार्थे याच्ञाक्रयणम् । तद्वि—पा० । ४ उत्तरसूत्रद्वयमिति—' अहनि च कर्मसाकल्यम् ' ' इतरेषु तु पित्र्याणि ' इति सूत्रद्वयं भाष्यकारैर्न व्याख्यातम् । कुतः । निष्प्रयोजनत्वात् । प्रथमसूत्रस्य मन्दयुक्तिकत्वात्, द्वितीयसूत्रस्य च पूर्वाधिकरणेन गतप्रायत्वाच्च न व्याख्यातमित्याशयः । ५ एतानीति—एतच्च, न नियोगत इत्यनेन वक्ष्यमाणेन संबध्यते । ६ पित्र्या—साकमेधान्तर्गता महापितृयज्ञाख्या क्रियेत्यर्थः । ७ न नियोगत इति—एतेन देवकर्मणामिव पित्र्याणामपि न सर्वेषामुदाहरणत्वमिति बोध्यम् । ८ ( अ० २ पा० १ अ० ३ सू० ८ ) ।

वेत् । लोकवत् । यथा, यस्य लोके नास्ति द्रव्यं, स याचते क्रीणाति च । एवमिहापि द्रष्टव्यम् ॥ २६ ॥

नियतं वाऽर्थवत्त्वात्स्यात् ॥ २७ ॥ सि०

नियतं वा याच्ञाक्रयणं, तद्विद्यमानेऽविद्यमाने च द्रव्ये स्यात् । एवं याच्ञाक्रयणमर्थवद्भवेति । ज्योतिष्टोमप्रयुक्तं हि तच्छ्रूयते । न द्रव्यप्रयुक्तम् । तच्च नित्यं ज्योतिष्टोमस्य । नैवं वचनं भवति, यदा द्रव्यं नास्ति तदा कर्तव्यमिति। ज्योतिष्टोमस्य च नित्यमङ्गमुक्तं, द्रव्याभावो निमित्तमुक्तमिति परिकल्प्येत । कल्पनायां शब्दो बाध्येत। अतो याच्ञाक्रयणसंस्कृतं द्रव्यमिहोपयोक्तव्यम् । अन्यथा वैगुण्यं भवति। तस्मात्सति चासति च द्रव्ये याच्ञाक्रयणमनुष्ठातव्यमिति । अथ यदुक्तं, लोकवदिति । लोके कर्मार्थलक्षणं भवति, न शब्दलक्षणम् । यथाऽर्थस्तथा क्रियते, न यथा शब्दः । वेदे तु शब्देनैवार्थोऽवगम्यते, तथैवानुष्ठेयमिति । तस्माद्विद्यमानेऽपि कर्तव्यम् ॥ २७ ॥

( ज्योतिष्टोमादिषु पयोव्रतादीनामपि नित्यताधिकरणम् ॥ ८ ॥ )

[ ८ ] तथा भक्षप्रैषाच्छादनसंज्ञप्तहोमद्वेषम् ॥ २८ ॥ सि०

ज्योतिष्टोमे श्रूयते, पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्येति । तथा दर्शपूर्णमासयोः प्रैषः, प्रोक्षणीरासादय, इध्माबर्हिरुपसादय, स्रुवं च स्रुचश्च संमृड्ढि, पत्नीं संनह्याऽऽज्येनोदेहि, इति । तथा वाजपेये श्रूयते, दर्भमयं वासो भवतीति । पशौ संज्ञप्तहोमः, यत्पशुर्मायुमकृतोरो वा पद्भिराहते, अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहस इति । तथा, योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति वचनम् । एतान्युदाहरणवचनानि । तेषु संदेहः । किं यस्यापरं भोजनं न विद्यते, स पयो व्रतयेत्, यवागूमामिक्षां वा, उत विद्यमानेऽपीति । तथा, योऽप्रेषितः प्रैषार्थं न प्रतिपद्यते, स प्रेषितव्य उत प्रतिपद्यमानोऽपीति । तथा, यस्य सूत्रमयं वासो नास्ति, स दर्भमयं परिदधीत,

---

तन्निमित्तं चेति पूर्वः पक्षः ॥ २६ ॥

प्रकरणाम्नानादपूर्वप्रयुक्तं तन्निमित्तं चेत्युत्तरः ॥ २७ ॥

---

१ क्रीणीते—पा० । २ भविष्यति—पा० । ३ वचनान्युदाहरणानि । तेषु—पा० ।

उत विद्यमानेऽपीति । तथा, यस्य पशुर्मायुं कुर्यात्, उरो वा पेद्विहिंन्यात्, स एतेन मन्त्रेण जुहुयादुतान्योऽपीति । तथा, यो द्वेष्टि कंचिदन्येन च द्विष्यते, स एव मन्त्रं ब्रूयात्, योऽस्मान् द्वेष्टीति, उताद्विषन्नद्विष्यमाणश्चापीति ।

तत्राधिकरणातिदेशोऽयम् । तत्र यः पूर्वस्मिन्नधिकरणे पूर्वः पक्षः स इह पूर्वः पक्षः । यस्तत्र सिद्धान्तः स इह सिद्धान्तः । अविद्यमाने कुर्यादिति पूर्वः पक्षः । नियतं वाऽर्थवत्त्वादित्युत्तरः । स एवात्र न्यायो यः पूर्वत्र ॥ २८ ॥

( अपररात्रे व्रतस्यानित्यताधिकरणम् ॥ ९ ॥ )

[ ९ ] अनर्थकं त्वनित्यं स्यात् ॥ २९ ॥ सि०

ज्योतिष्टोमे श्रूयते, मध्यंदिनेऽपररात्रे च व्रतं व्रतयतीति । तत्र संदेहः । किं नियतमपररात्रे व्रतमुतानियतमिति । किं प्राप्तम् । नियतं वाऽर्थवत्त्वात्स्यादिति । एवं प्राप्ते, ब्रूमः ।

अनर्थकं त्वनित्यं स्यात् । यदेवं मन्येतास्मिन्काले व्रतं मे जरिष्यतीति तदा व्रतयेत् । यदा तु खलु मन्येत न सम्यग्जरिष्यतीति, तदा तद्व्रतं क्रियमाणमनर्थकं स्यात् । यदि ह्यजीर्णेन यजमानो म्रियेत तदा सर्वतन्त्रलोपः स्यात् । तस्मान्न नियतं तस्मिन्काले व्रतं व्रतयितव्यमिति ॥ २९ ॥

( अग्नीषोमीयपशुयागे छागवत एवाधिकाराधिकरणम् ॥ १० ॥ )

[ १० ] पशुचोदनायामनियमोऽविशेषात् ॥ ३० ॥ पू०

ज्योतिष्टोमे श्रूयते, यो दीक्षितो यदग्नीषोमीयं पशुमालभेत इति । तत्र संदेहः । किं यः कश्चित्पशुरालम्भनीय उत छाग इति । वक्ष्यमाणेनाभिप्रायेण भवति संशयः । नन्वेकेषामाम्नायते, अजोऽग्नीषोमीय इति । सर्वशाखाप्रत्ययं चैकं कर्मेति ।

अत्रोच्यते । प्रतिशाखं भिन्नानि कर्माणीति कृत्वा चिन्ता । किं ताव-

[ २८ ॥ २९ ॥ ]

' पशुमालभेत ' इति नोभयथा प्रतिभातो वाक्यात्संशयः । वक्ष्यमाणेन तु कार-

१ पादौ वा इ—पा० । २ वा—पा० । ३ ( अ० ६ पा० ८ अ० ७ सू० २७ ) । ४ तदा तन्त्रलोपः । तन्त्रलोपे च सर्वलोपः । त—पा० । ५ ज्योतिष्टोमे पशुरग्नीषोमीयो, यो—पा० ।

स्मात्तम् । पशुचोदनायामनियमः। उत्सर्गे कर्तव्ये द्रव्यं शक्यते उत्स्रष्टुं, न पशुत्वम् । द्रव्यं हि साधकम् । अतोऽत्र द्रव्यमन्तरेणोत्सर्गो न संभवतीति द्रव्यमुपादीयते । तस्मिन्नुपादीयमानेऽनियमः, यत्किंचिदुत्स्रष्टव्यमिति । कुत एतत् । अविशेषात् । न हि पशुत्वसंबद्धेषु कश्चिद्विशेष उपलभ्यते । तस्माद्यः कश्चित्पशुरिति ॥ ३० ॥

## छागो वा मन्त्रवर्णात् ॥ ३१ ॥सि०

वाशब्दः पक्षं व्यावर्तयति । नैतदस्ति । यत्र क्वचन द्रव्ये पशुत्वमुपादेयमिति । अस्त्युत्स्रष्टव्यस्य नियमकारणं मन्त्रवर्णः । छागस्य वपाया मेदसोऽनुब्रूहीति, छागप्रकाशनसमर्थो मन्त्रवर्णः समाम्नायते । यदि छागो नोपादेयस्ततस्तत्प्रकाशनसमर्थस्योपादानमनर्थवत् । तेनावगम्यते छागमधिकृत्योत्सर्गं विदधातीति । मान्त्रवर्णिको द्रव्यनियमविधिरिति ॥ ३१ ॥

## न चोदनाविरोधात् ॥ ३२ ॥

नैतदेवम् । न शक्नोति मन्त्रवर्णश्चोदनायां[३] प्रत्यर्थिन्यां द्रव्यं नियन्तुम् । यत्र हि द्रव्यस्य प्रकाशकं न श्रूयते, तत्राप्रकाशितमेव तत्कर्तव्यमिति । तस्मान्न मन्त्रवर्णात्प्रकाश्यनियमविधिः कल्प्यते, एवमत्र प्रकाश्यं प्रकाशयितव्यमिति । अत्र पुनः, शब्देनावगम्यते पशुत्वेन प्रकाशयितव्यमिति । तस्मान्न मन्त्रवर्णस्तत्सद्भावे समर्थः । मन्त्रवर्णाद्धि कल्प्या प्रयोगवचनेन श्रुतिः । इह क्लृप्ता प्रयोगवचनेनोपसंहर्तव्या । अन्य एव पशुशब्दस्यार्थः पशुत्वम् । अन्यो मन्त्रवर्णेन नियम्यते छागः । तस्मान्न मन्त्रवर्णश्चोदनाविरोधेन नियन्तुमर्हतीति ॥३२॥

---

णेन, मन्त्रवर्णात् । यदि नियतो मन्त्रः, छाग एव । अथ पाक्षिकः, यः कश्चित् । गोऽश्वादीनां पशुत्वं सामान्यमत्र सूत्रे पश्वर्थः ॥ ३० ॥

छागो वा मन्त्रवर्णात् ॥ ३१ ॥

न हि विधायकाविधायकगतयोर्विशेषणविशेष्यभावेनैकवाक्यता । 'छागस्य वपायाः' इति वपाविशेषणं छागशब्दः ।

---

१ शक्यमुत्स्र—पा० । २ अग्नये छागस्य—पा० । ३ मन्त्रवर्णः प्रत्यर्थिन्यां चोदनायां सत्यां—पा० । ४ प्रकाश्यमिति क्वचिन्नास्ति । ५ प्रयोगवचनश्रुतिः—पा० । ६ विरोधे निय—पा० । ७ विधायकाविधायकगतयोरिति—पशुछागशब्दयोरिति शेषः ।

## आर्षेयवदिति चेत् ॥ ३३ ॥

इति चेत्पश्यसि न पशुत्वमन्येभ्यः पशुभ्य आच्छेत्तव्यमिति । यथा, आर्षेयं वृणीते, त्रीन् वृणीत इति, सामान्यश्रुतिस्त्रिष्वेवावतिष्ठत इति त्रित्वविशेषो विवक्षितो नान्ये विवक्षिता इति । एवमिहापि पशुत्वं छागं प्रकल्पयितुं विवक्षितं, नान्यान्विशेषानिति ॥ ३३ ॥

## न तत्र ह्यचोदितत्वात् ॥ ३४ ॥

नैतदेवम् । तत्र ह्यचोदितं द्रव्यमुत्सष्टव्यं मन्त्रवर्णे । वरणे पुनश्चोदितम् । तत्र त्रित्वसंख्यासंबन्धस्य वरणे चोदितत्वान्नान्या संख्या क्रियते । आर्षेयशब्दादपि नानार्षेयम् । त्रिशब्दस्य हि तत्सामर्थ्यं, येनाऽऽर्षेयशब्दो विशिष्टसंख्याविषयो नियम्यते । इह न मन्त्रस्य सामर्थ्यम् । तस्मादनियम इति ॥ ३४ ॥

## नियमो वैकार्थ्यं ह्यर्थभेदाद्भेदः पृथक्त्वेनाभिधानात् ॥ ३५ ॥

नियमो वा । ऐकार्थ्यं हि पशुछागशब्दयोः । सामान्यं पशुरिति । छागादयो विशेषा उच्यन्ते । कथम् । तैः सामानाधिकरण्यात् । पशुश्छागः, पशुरुष्ट्रः, पशुर्मेषः, पशुरश्व इति । एवं सति न मन्त्रवर्णः पशुशब्देन विरुध्यते । तेन छागोऽप्यालब्धव्यश्चोदितः । मन्त्रवर्ण उपादीयमाने, इदमवगम्यते । छागं विवक्षित्वाऽयं पशुशब्द उच्चरित इति, नान्यान्विशेषानिति । छागोपकरणमस्योपदर्शितम् । यदुपदर्शने पशुशब्दश्छागाभिप्राय इति गम्यते । यथा युगवरत्रोपदर्शिते, ईषाचक्रादिसंनिधाने च, अक्षमानयेत्युक्ते, यानाक्षमधिकृत्य ब्रूत इति गम्यते, न तु विदेवनाक्षमिति । यदि ह्यर्थभेदो भवेत्पशुछागशब्दयोः पृथक्त्वेना-

---

आर्षेयवरणे तूभौ विधी । तत्रैकेन वरणं विधीयते । अपरेणावयवसंख्यास्तुतिमता वाक्येन वरणे त्रित्वम् ॥ ३२ ॥ [ ३३ ॥ ३४ ॥ ]

अत्र सूत्रे पशुशब्दश्छागाश्वादीनां वाचकः । पूर्वस्मिन्, शब्दार्थे न शक्नोति

---

१ युगवरत्रे, उप—पा० । २ संनिधाने चेदक्षमानयेत्युच्यते तदा याना०—पा० । ३ 'आर्षेयवदिति चेत्' इति सिद्धान्तिशङ्कायाः समाधानं सूत्रं 'न तत्र ह्यचोदितत्वात्' इति, तद्व्याचष्टे—आर्षेयवरणे त्रिति । ४ अवयवसंख्यास्तुतिमतेति—'एकं वृणीते' इत्यादिनेति पूर्वं दृपः । ५ पूर्वस्मिन्निति—पूर्वपक्षयुक्ते सामान्य इत्यर्थः ।

भिधानं, ततो भेदः स्यात्, न छाग एव नियम्येत। अविहितश्छागार्थ इत्यश्वोपादानम्। अपि च च्छागपक्षे तं मन्त्रवर्णः प्रकाशयेत्। छागार्थाभिधाने पुनः पशुशब्दस्य, छागप्राप्तावन्येषामप्राप्तिरित्यन्यस्मिन् प्राप्ते लिङ्गेन नियमः क्रियत इति ॥ ३५ ॥

अनियमो वाऽर्थान्तरत्वादन्यत्वं व्यतिरेकशब्दभेदाभ्याम् ॥ ३६ ॥

अनियमो वा। यः कश्चित्पशुरुपादेयः। अर्थान्तरत्वात्। अर्थान्तरं पशुत्वम्। अर्थान्तरं छागत्वम्। अर्थयोरत्र सामानाधिकरण्यं, न शब्दयोः। कथं पुनरर्थान्तरं गम्यते व्यतिरेकाच्छब्दभेदाच्च। व्यतिरेको हि भवति, कश्चित्पशुर्न छागः। तथा छागः पशुरिति शब्दभेदः शब्दभेदादेवार्थभेदो न्याय्यः। एकस्मिन्वाक्ये समवायात्, पशुं छागमानयेति। इतरथाऽन्यतरेण कृतार्थत्वादन्यतरो वाक्ये न समवेयात्। समवैति च। तस्मादन्यत्पशुत्वमन्यच्छागत्वम्। तस्मादनियमो यः कश्चित्पशुरुपादेय इति ॥ ३६ ॥

न वा प्रयोगसमवायित्वात् ॥ ३७ ॥

तत्रोत्सूत्रिका पक्षव्यावृत्तिः। अन्यत्वेऽपि सति नियम एव।

विशेष्टुं मन्त्रवर्णः स्वार्थोऽपि। व्यक्तिवचनत्वे तु मन्त्रगतोऽपि संनिधानाच्छागविषयं करोति ॥ ३९ ॥

छागादीनां सामान्यं पशुत्वं पशुशब्देनोच्यत इति स एव शब्दार्थः, न छागत्वादीनि ॥ ३६ ॥

एवमेव शब्दार्थे, न वा प्रयोगसमवायित्वादिति—प्रयोगवचनोपसंग्रहार्थं छाग-

१ व्यतिरिक्तो हि—पा०। २ इदं च सूत्रं भाष्यकारैरदृष्ट्वा, तत्रोत्सूत्रिका पक्षव्यावृत्तिरित्युक्तम्। वार्तिककोरणत्वनपत्रष्टेषु पुस्तकेषु दृष्ट्वा पठितमिति तन्त्ररत्नकारा आहुः। तत्प्रमाणीकृत्य मयाऽपि चेदं सूत्रं परिलुप्तं माभूदिति सूत्रपाठक्रमे योजितम्। ३ मन्त्रगतोऽपीति–छागशब्द इति शेषः। ४ छागविषयमिति—चोदनागतं पशुशब्दमिति शेषः। ५ एवं तावत्पशुछागशब्दयोर्व्यक्तिवचनत्वेनोपपादितं सिद्धान्त्येकदेशिमतं पूर्वपक्षवादी दूषयति–' अनियमो वा ' इति सूत्रेण। तत्तद्व्याचष्टे—छागादीनामिति। ६ ( अ० ६ पा० ८ अ० १० सू० ३७ )।

कुतः । मन्त्रस्य प्रयोगवचनेन गृहीतत्वात् । मन्त्रसाधनं हि कर्मेति गम्यते । यदि च्छागमुपादास्यामहे, सगुणं कर्म शक्ष्यामः कर्तुं मन्त्रमुपाददानाः । मन्त्रस्यापाक्षिकत्वात् । अथान्यमुपादास्यामहे, मन्त्रस्य विषयाभावान्मन्त्रमपजहतो न सगुणं कर्म निर्वर्तयेम । अतो न च श्रुतिं बाधामहे, अन्यस्मिन्पशुशब्दो वर्तत इति । नं वाऽन्यमुपादास्यामहे वैगुण्याद्बिभ्यतः । तस्माच्छाग एवोपादातव्य इति । नन्वश्वमप्युपाददाना नैव मन्त्रवर्णमपहास्यामः । स एवाश्वश्छागो भविष्यति । यश्छिन्नगमनोऽश्वः स छागः। छिदेर्गमेश्च च्छागशब्दः प्रसिद्धः ॥३७॥

रूपाल्लिङ्गाच्च ॥ ३८ ॥

कंचित्, मुष्करा भविष्यन्तीति श्रूयते । यद्यन्तरेण वचनममुष्करास्तदेदमुपपद्यते । तस्माच्छिन्नगमनोऽश्वोऽपि छाग इति कर्माख्या भविष्यतीति ॥ ३८ ॥

अत्रोच्यते—

छागे न कर्माख्या रूपलिङ्गाभ्याम् ॥ ३९ ॥

छागे कर्माख्या रूपलिङ्गाभ्यां नावकल्पते । न हि छागशब्दश्छिन्नगमनवचनः । समुदायो ह्यसौ पृथगर्थान्तरे प्रसिद्धो, नासाववयवप्रसिद्ध्या बाधितव्यः । तस्मान्नाश्वश्छागः ॥ ३९ ॥

रूपान्यत्वान्न जातिशब्दः स्यात् ॥ ४० ॥

इदं पदोत्तरं सूत्रम् । अथ कस्मान्न वयोवचनो भवति । वयोवचना ह्येते शब्दाः, छागश्छागलो वत्स इति । तेनाश्वोऽपि वयोवचनो भविष्यतीति । उच्यते । नैतदेवम् । सत्यं वयोवचनः अजजातिगतं तु वयो वदितुं शक्नोति। यथा, शोण इति वर्णवचनोऽश्वजातिगतं वर्णं वदति, नान्यम् । तस्माद्रूपान्यत्वान्न वयोमात्रवचनः, किंतु जातिशब्दः

---

नियमः । एवं विशेषणविशेष्यभावः । विशेषणविशेष्यभावो हि पदेऽपि प्रकृतिप्रत्यययोर्भवति, अश्व इति । वाक्ये पदयोरपि भवति, शुक्लः पट इति । वाक्यान्तरस्थयोरपि भवति, आर्षेयं वृणीत इति । इहापि प्रकरणवशेन प्रयोगवचनवशेन वेति ॥ ३७ ॥
[ ३८ ॥ ३९ ॥ ॥ ४० ॥

---

१ अन्यस्मिन्पुनः पशु—पा० । २ न चान्य—पा० । ३ नन्वश्वमुपा—पा० । ४ लिङ्गं च कंचित्—पा० । ५ भविष्यति-पा० । ६ इदमन्यपदोत्तरं—पा० । ७ बस्को—पा० । ८ अजापतिगतं—पा० ।

स्यात् । जात्याश्रयं वयो वदेत् । अतश्छाग एव नियम्यते ॥ ४० ॥

**विकारौ नौत्पत्तिकत्वात् ॥ ४१ ॥**

इदमपि पदोत्तरम् । इहाश्वादीनां विकारश्छागशब्दः । किंचिदत्राश्वादीनामुच्चार्यते, किंचिदन्यदेव[1] । तस्मादश्वोऽपि छाग इति । न । औत्पत्तिकत्वात् । औत्पत्तिको हि नामिनाम्नोः संबन्ध इत्युक्तम् । नाऽऽख्याविकारः संभवतीति[2] । तस्मान्नाश्वश्छागः । अतश्छाग एवोपादातव्य इति ॥ ४१ ॥

**स नैमित्तिकः पशोर्गुणस्याचोदितत्वात् ॥ ४२ ॥**

पदोत्तरमेवेदं सूत्रम् । अथ कस्मान्न छिद्रनिमित्तश्छागशब्दो भवति । एवं श्रूयते, सुषिरो वा एतर्हि पशुः । यर्हि वपामुत्खिदतीति । नेत्युच्यते । छिद्रत्वस्य गुणस्य पशोरचोदितत्वात् । अव्यङ्गं पशुमालभेतेति हि चोद्यते । तस्मादच्छिद्रः पशुः । न चावयवप्रसिद्ध्या समुदायप्रसिद्धिर्बाध्यत इत्युक्तमेव । तस्माच्छाग एवोपादेयो नाश्वादय इति ॥ ४२ ॥

**जातिर्वा तत्प्रायवचनार्थवत्त्वाभ्याम् ॥ ४३ ॥**

वाशब्दोऽवधारणायाम् । यस्मादत्रावयवप्रसिद्ध्या समुदायप्रसिद्धिर्न बाध्यते । तस्माज्जातेरेव छागशब्दो वाचकः । एवं समुदायस्यार्थवत्ताऽनुगृहीता भविष्यति । तस्मात्तत्प्रायवचनमुपपद्यते । विश्वेषां देवानामुस्राणां, छागानां, मेषाणां, वपानां मेदसोऽनुब्रूहीति जातिप्राये वचनमुपपद्यते । प्रायेणापि हि नियमः क्रियते । यथा, अग्र्यप्राये लिखितं दृष्ट्वाऽग्र्योऽयमिति बुद्धिर्भवति । तस्माच्छाग एवोपादातव्य इति । कृत्वाचिन्तायां प्रयोजनं न वक्तव्यम् ॥ ४३ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये षष्ठाध्यायस्याष्टमः पादः ॥

---

संपूर्णश्च षष्ठोऽध्यायः ॥ समाप्तश्च पूर्वः षट्कः ॥

---

॥ ४१ ॥ ४२ ॥ ४३ ॥ ]

इति श्रीमद्भट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां षष्ठाध्यायस्याष्टमः पादः ॥ समाप्तश्च षष्ठोऽध्यायः ॥

---

१ न किंचिदन्यदेव—पा० । २ भविष्यतीति तस्मात्राश्व—पा० ।

अथोत्तरषट्के—

सप्तमस्याध्यायस्य प्रथमः पादः ॥

( प्रयाजादिधर्माणामुपदेशेन प्रकृतिमात्रार्थताधिकरणम् ॥ १ ॥ )

[ १ ] श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यात् ॥ १ ॥ सि०

पूर्वेणाध्यायषट्केन प्रत्यक्षविहितधर्माणां कर्मणां दर्शपूर्णमासादीनामितिकर्तव्यता चिन्तिता । उत्तरेणेदानीमविहितेतिकर्तव्यताकेष्वैन्द्राग्नादिषु चिन्तयितुमिष्यते । तत्र यदि दर्शपूर्णमासादीनां प्रकरणे ये विहिता धर्मास्ते सर्वकर्मसु विहिता भवन्ति, ततस्तैरेव धर्मैरैन्द्राग्नादयोऽपि धर्मवन्त उक्तास्तथा कर्तव्याश्चेति, नार्थ उत्तरेण षट्केन । अथ ये यस्य प्रकरण उच्यन्ते, ते तत्रैवोक्ता भवन्ति । ततोऽधर्मकाण्यैन्द्राग्नादीनीति तेषु चिन्ता भवति, किमेषां धर्माः सन्त्युत नेति । यदा च सन्ति, तदा के कियन्तो वा कथं चानुष्ठातव्या इति । तदर्थमुत्तरः षट्कः प्रवर्तनीयः ।

तत्र सप्तमेन तावत्सन्ति धर्मा इत्युच्यते । अष्टमेन चेमेऽस्येति । इत्थं प्रयोक्तव्या इति नवमेन । दशमैकादशद्वादशैरेतावन्तः प्रयोक्तव्या नातोऽधिका इति ।

---

प्रत्यक्षविहितधर्माणां दर्शपूर्णमासादीनामितिकर्तव्यता चिन्तितेति—एतदयुक्तम् । सर्वपृष्ठायां किं सकृदुत्तरार्धात्स्विष्टकृतेऽवदेयमुत भेदेनेति चिन्तितम् । तथा 'दृतिनवनीतमाज्यं भवति' इत्येवमादिषु प्रत्यक्षधर्मकेष्वपि चिन्ता वृत्ता । अत एवं वाच्यम् । प्रकृतौ विकृतौ चोपदेशाश्चिन्तिताः । 'सप्तदश प्राजापत्यान्' इत्येवमादिषु प्रत्यक्ष एवोपदेशः । सर्वपृष्ठादिष्वानुमानिकवचनोपदिष्टानामुपदेश एव चिन्तितः ।

सप्तमेन विकृतीनामतिदेशेन धर्मा भवन्तीति प्रतिपाद्यते । अष्टमेन विशेषः । नवमेन विशेषातिदेशः प्रसङ्गेनाऽऽरभ्यते, किं मन्त्रोऽग्निस्वरूपप्रकाशनार्थमुच्चार्यते, उताग्निस्वरूपमविवक्षितम्, तस्मादित्थं प्रयोक्तव्यमित्यतिदेशप्रकार एव चिन्त्यते । स दशमव्यापारमनुमन्यमान एवाऽऽत्मानं लभते । दशमे बाधाभ्युच्चयानुनिष्पादिनी शेषेयत्ता-

---

१ कर्मणामिति क्वचिन्नास्ति । २ सर्वैर्धर्मैः—पा० । ३ उत्तरषट्कः—पा० । ४ दीनां कर्तव्यता—पा० । ५ ( अ०३ पा०५ अ० ४ सू० १६ ) इत्यत्रेति शेषः । ६ ( अ० ३ पा० ८ अ० २० सू० ३६ ) इत्यत्रेति शेषः । ७ तस्मादेवं—पा० । ८ चिन्तित इति—पूर्वस्मिन्न ध्यायषट्क इत्यर्थः ।

तत्रेदं विचार्यते, किं यजिप्रयुक्ता एते धर्माः—कथं यजिर्गुणवान्स्यादित्येवमर्थमाम्नायन्ते, आहोस्विदपूर्वप्रयुक्ताः—कथमपूर्वं स्यादिति। यदि यजिप्रयुक्तास्ततः सर्वार्थाः। अथापूर्वप्रयुक्तास्ततो यथाप्रकरणं व्यवतिष्ठन्ते। किं पुनरत्र युक्तम्? अपूर्वप्रयुक्ता इति। अपूर्वं हि फलवत्। अफलो यजिः। फलवति च प्रयासो विधीयमानोऽर्थवान् भवति। तस्मादपूर्वप्रयुक्ता धर्मा इति।

अतः परमाचार्यस्य सूत्रोपन्यासः। श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यादिति। मुख्यान्यपूर्वाणि। तानि हि फलवत्त्वात्प्रधानानि। प्रधाने च मुख्यशब्दः। तेषां भेद उक्तः शब्दान्तरादिभिर्हेतुभिः। तस्मिन्मुख्यभेदे सति यथाधिकारं भावः स्याच्छेषाणाम्। ये यस्यापूर्वस्याधिकारे प्रकरणे शिष्यन्ते, ते तस्यैव भवेयुः। श्रुतिप्रमाणत्वात्। अयमस्यापूर्वस्य शेषोऽयमस्येत्यत्र श्रुतिरेव प्रमाणं

---

चिन्ता। इयत्ताप्रसङ्गेन चैकादशः प्रयोगेयत्ताविचारार्थमारभ्यते। तन्त्रावापेनेदइयामियत्तायां प्राप्तायां तदपवादत्वेन द्वादश आरभ्यते। अन्यादृशीयत्ता प्रसङ्गेन भवति।

यद्यपि तन्त्रावापप्रसङ्गा उभयत्राविशिष्टास्तथाऽपि पूर्वषट्के नैषामवसरः। यावद्भेदो नावधृतस्तावच्छेषशेषिभावो नास्ति। प्रयोजकाप्रयोजकत्वं च शेषशेषित्वादृते। तथा क्रमः प्रयोजकाप्रयोजकत्वादृते। तदीदृशैः कोऽधिक्रियत इत्यधिकारलक्षणमापतति। न च षष्ठसप्तमयोर्मध्ये तन्त्रावापप्रसङ्गानामवसरः। कथम्। अधिकारानन्तरमिदं विपरिवर्तते, किं धर्मयोगोऽक्रियते, उत न। किं त्वपूर्वमित्यनेन प्रसङ्गेन सप्तमाद्यमारभ्यते।

अथवा—सौर्यादयः प्राकृतैर्धर्मैरधिक्रियन्तेऽतिदेशेन, किं वा नेत्यनेन प्रसङ्गेन सप्तमोऽध्याय आरभ्यते। तद्बलेन विशेषातिदेशोहबाधानामारम्भः। पर्यनुयोगाविशेषाच्च दशमानन्तरं तन्त्रावापप्रसङ्गाः प्रस्तूयन्ते।

श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यादिति। करणेतिकर्तव्यतानामपदविशिष्टा भावना विधीयते। तत्र यदस्यां करणमितिकर्तव्यता वा

---

१ उभयत्रेति—उपदेशेऽतिदेशे चेत्यर्थः। २ परिहारान्तरं वदति—पर्यनुयोगेति। अयमाशयः—तन्त्रावापप्रसङ्गा उपदिष्टातिदिष्टसाधारणा इति यथा पूर्वषट्क आरब्धुं शक्यन्ते तथोत्तरषट्केऽपीति पर्यनुयोगाविशेषाद्यत्र क्व वाऽऽरब्धव्ये सति नियामकाभावादुत्तरषट्क एव समारम्भस्तेषामिति। ३ प्रस्तुताः—पा० ।४ ( अ० ७ पा० १ अ० १ सू० १ )।

क्रमते । न प्रत्यक्षादीनामन्यतमम् । श्रुत्या च ये यस्य प्रकरणे श्रूयन्ते ते तस्यैव भवितुमर्हन्ति । न चान्यस्योक्तोऽर्थोऽन्यस्य भवति । न हि यद्देवदत्तस्य ग्रा[1]साच्छादनादिकं, तद्यज्ञदत्तस्य भवति । तस्माद्यथाप्रकरणं व्यवस्था धर्माणाम् ॥ १ ॥

**उत्पत्त्यर्थाविभागाद्वा सत्त्ववदैकधर्म्यं स्यात् ॥ २ ॥**

अथवा—नैतदेवं, यथाप्रकरणं धर्माणां व्यवस्थेति । कथं तर्हि । ऐकधर्म्यं स्यादिति । समानधर्मता । सर्वे धर्माः सर्वार्थाः । कुतः । उत्पत्त्यर्थाविभागात् । उत्पत्तिरिति यजिं ब्रूमः । अपूर्वस्योत्पादनात् ।

तदन्यत्र न भवति, कर्मान्तरत्वात् । 'शब्दान्तरे[2] कर्मभेदः' इत्युक्तम् । इतिकर्तव्यता च भावनयाऽऽकाङ्क्षिता, किं-केन-कथमिति । न यागापूर्वफलानां स्वयमित्थं[3]मित्याकाङ्क्षाऽस्ति । तस्माद्भावनया संबन्धः ॥ १ ॥

यजिप्रयुक्ता धर्माः । कथम् । तत्र केचिद्वर्णयन्ति[4] । प्रकरणाम्नानानुमितेन वाक्येन संबन्धः[5] । एतदपरे[6] दूषयन्ति । यः फले चोद्यते स एव कथंभावाकाङ्क्षी धर्मैः संबध्यते । स च विशेषः साकाङ्क्षः । तस्मादन्यस्मिन्[7]विशेषान्तरे कुतो धर्मप्राप्तिः । अयं यजिविशेषः श्रुत्या वाक्येन प्रकरणेन च संबध्यते । तत्र[8] प्रयोगवाक्यं धर्मसंबन्धित्वेनोदाहरन्ति । यागोत्पत्तिर्नानेन क्रियते । वाक्यान्तैरुत्पन्नत्वात् । फलसंबन्धश्च[9] । विश्वजि[10]न्न्यायेन प्राप्तत्वात् । पारिशेष्यादितिकर्तव्यतासंबन्धायेदम् । यथा 'अध्वर्युर्गृहपतिं दीक्षयित्वा' इति दीक्षाक्रमपरं वाक्यम् । तत्रोद्दिश्यमानत्वाद्यागस्य स्व[11]पदगतं पदान्तरगतं च विशेषणमविवक्षितम् । तस्मात्सर्वयागेषु धर्माः । न च दर्शपूर्णमासपदेन संबध्यन्ते । अत्यन्तवाक्यत्वात् । यागे विधीयमाने तु धात्वर्थे किंचिद्विधानाच्छ्रुतिः ।

१ ग्रासाच्छादनमुक्तं—पा० । २ ( अ० २ पा० २ अ० १ सू० १ ) । ३ मित्थमन्याकाङ्क्षा-पा० । ४ वर्णयन्तीति—भाष्यमनादृत्य पूर्वपक्षमिति शेषः । ५ संबन्ध इति—प्रयाजादिधर्माणां यजिसंबन्ध इत्यर्थः । ६ अपरे-भाष्यानुसारिणः । ७ तस्मात्प्रयोगेऽन्यस्मिन्—पा० । ८ तत्र प्रयोगेति—एवं पूर्वस्मिन्पक्षे दूषिते धर्माणां पारिप्लवत्वसिद्ध्यर्थं 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति प्रयोगवाक्यं धर्मसंबन्धित्वेनोदाहरन्तीत्यर्थः । ९ फलसंबन्धश्चेति—न क्रियत इति शेषः । १० ( अ० ४ पा० ३ अ० ५ ) अन्नत्येनेत्यर्थः । ११ स्वपदगतमिति—इदं च न्यायप्रदर्शनमात्रं न प्रकृतोपयोगि । परं तु ह्यनिरुभयत्ववत्पदान्तरोपात्तमेव दर्शपूर्णमासाख्यं विशेषणमविवक्षितमिति तात्पर्यम् ।

अर्थ इत्यपूर्वं ब्रूमः । यजिप्रयोजनत्वात् । तयोरविभागः । सर्वाण्यपूर्वाणि यजिमन्ति । यजिसंयोगेन धर्माः शिष्यन्ते । यजेतेत्युक्त्वोक्ताः । ते यजौ न संभवन्ति । तस्याफलत्वात् । तत्रासंभवन्तस्तत्संबद्धेष्वपूर्वेषु विज्ञायन्ते । स च यजिसंबन्धः सर्वेषामपूर्वाणां तुल्यः । तस्मात्सर्वार्था भवन्ति । सत्त्वधर्मवत् । यथा सत्त्वधर्माः, गौर्न पदा स्प्रष्टव्यं इति गोत्वसंबन्धेन श्रूयमाणास्तत्रासंभवन्तस्तत्संबद्धेषु पिण्डेषु विज्ञायन्ते । तस्य च गोत्वसंबन्धस्याविशेषात्सर्वगवीषु शुक्लनीलकपिलकपोतिकासु भवन्ति । एवमिहापि ।

उच्यते । विषम उपन्यासः । तत्र गोसामान्यसंबन्धेन धर्मा विधीयन्ते । गौर्न पदा स्प्रष्टव्य इति । इह पुनर्यजिविशेषसंबन्धेन धर्मा विधीयन्ते । दर्शपूर्णमासाभ्यां यजेत, ज्योतिष्टोमेन यजेतेति । विशिष्टयजिसंबद्ध एवापूर्वे भवितुमर्हन्ति, न सर्वत्रेति । तत्र ब्रूमः । दर्शपूर्णमासाभ्यां यजेतेत्यत्र न शक्यन्ते यागविशेषे धर्मा विधातुम् । किं कारणम् । यदा यजौ धर्मा विधीयन्ते तदा यजिरनूद्यते । यजेतेत्थमिति । यदि यजि·

---

एतदप्ययुक्तम् । प्रयाजादीनामप्यनेन न्यायेन फलसंबन्धः स्यात् । ततश्च कतरे धर्माश्चिन्त्यन्ते । विश्वजिति, अन्यथानुपपत्त्या फलकल्पना । इह तु शब्दवत्त्वात्फलस्यान्यथानुपपत्तिः क्षीणा । तस्मात्प्रथममेव व्याख्यानं युक्तम् । यः फले चोद्यते स इतिकर्तव्यतया संबध्यमान इतिकर्तव्यतां प्रति प्रधानम् । प्रधानस्य चोद्दिश्यमानस्य विशेषणमविवक्षितम् । प्रकरणाम्नानानुमितेनापि वाक्येन स्वशक्त्या सर्वयागानां धर्मसंबन्धः । उपपत्तिस्तु—करणानुग्राहिणीतिकर्तव्यता लोके दृष्टा । सा तथैवेहापि भवितुमर्हति । **सर्वाण्यपूर्वाणि यजिमन्तीत्येवमादिः, स च यजिसंबन्धः सर्वापूर्वाणां तुल्य** इत्येवमन्तोऽयुक्तो ग्रन्थः । यागोऽपूर्वेणाविनाभूतो, न त्वपूर्वं यागेन । 'अपूर्वे चासंभ·

---

१ स्प्रष्टव्येति–पा० । २ अत्र वदामः–पा० । ३ स्वर्गकामो यजेत–पा० । ४ अनेन न्यायेन—विश्वजिन्न्यायेन । ५ प्रथममेवेति–प्रकरणानुमितेन 'प्रयाजादिभिर्यजेत' इत्येवंरूपेण वाक्येनैव धर्मसंबन्ध इति व्याख्यानं युक्तमित्यर्थः । ६ तु शक्यते—पा० । ७ न त्वपूर्वमिति—अविनाभूतमिति शेषः । तथा च होमादीनामप्यपूर्वसाधनत्वान्न सर्वेषामपूर्वाणां यागसंबन्ध इति भाष्योक्तिः संगच्छत इति भावः । ८ आक्षेपप्रसङ्गादेव यच्च 'उत्पत्तौ विध्यभावाद्वा' इति सूत्रे 'यजौ श्रूयमाणाः क्रियमाणाश्चापूर्वार्था भवन्ति' इति भाष्यं तदपि दूषयितुमर्थतः पठति—अपूर्वे चेत्यादिना ।

विधीयेत, न धर्मैः संबध्येत। न हि द्वयोर्विधीयमानयोः परस्परेण संबन्धो भवति। अनुवादश्च सत्यविशेषात्सर्वयागानुवादः। तस्मात्सर्वार्था धर्माः। ननु दर्शपूर्णमासशब्दो विशेषको भविष्यति। न दर्शपूर्णमासशब्दः शक्नोति यागं विशेष्टुम्। अयं हि विधिर्वा स्यादनुवादो वा। यदाऽनुवादस्तदा धर्मसंबन्धार्थः। स च धर्मसंबन्धो यागानुवादेनैव तयोः सिद्धः।

ननु निवृत्तिकरो भविष्यति। दर्शपूर्णमासावेवेत्थं कुर्यान्नान्यानिति। नैवं शक्यम्। यत्करणं न तस्यान्यनिवृत्तिरर्थः। ननु परिसंख्यया करिष्यति। नात्र परिसंख्या युज्यते। यद्यन्येन वाक्येन यागमात्रे धर्मप्रसङ्गः कृतः स्यात्तत एतत्पुनर्वचनं परिसंख्यां कुर्यात्। अथ पुनरसति प्रसङ्गेऽनेनैव प्रसङ्गोऽनेनैव निवृत्तिरिति, अतिभार एकस्यैव वाक्यस्य भवति।

एवं तर्हि, नात्र यजेतेति शब्दो धर्मविधिभिः संबध्यते, यजेत, इत्थमिति। केन तर्हि। दर्शपूर्णमासशब्देन। प्रत्यक्षो हि तेनास्य संयोगः, दर्शपूर्णमासाभ्यां यजेतेति। परोक्षो धर्मविधिभिः। कस्तदा वाक्यार्थः। दर्शपूर्णमासौ कुर्यादिति। नैवं शक्यम्। एवं सति धर्मा असंबद्धाः पारिप्लवा भवन्ति। कथं कृत्वा। येयमाख्यातिकी विभक्तिर्यजेतेति, सा दर्शपूर्णमासयोः कर्तव्यतां विदधाति। तत्र कथं यागमात्रेण यागविशेषेण वा धर्मसंबन्धः स्यात्। विधायिका विभक्तिर्नास्तीत्यसंबद्धा धर्मा भवन्ति। नैष दोषः। न वयं वाक्येन धर्माणां संबन्धं करिष्यामः। केन तर्हि। प्रकरणेन। कथम्। कर्तव्यतायां चोदितायामितिकर्तव्यताकाङ्क्षा भवति, कथं कुर्यादिति। प्रकरणेन धर्माः संबध्यन्ते, इत्थं कुर्यादिति।

नैवं शक्यम्। यदा हि दर्शपूर्णमासौ कर्तव्यतया चोद्येते, तदेतिकर्तव्यताकाङ्क्षैव नास्ति। प्रज्ञातेतिकर्तव्यतात्वात्तयोः। असत्यां

---

वन्तो यागे क्रियन्ते' इत्यप्ययुक्तम्। अन्यत्र श्रुता अन्यत्र कृताः स्युः। अविनाभावमङ्गीकृत्य 'सर्वाण्यपूर्वाणि यनिमन्तीति' ब्रवीति। 'अपूर्वे चासंभवन्तः'

---

१ ततः पुनर्वचनं–पा०। २ निवृत्तिर्विधायेत। भिद्येत तर्ह्येवं वाक्यम्। भवत्वेवं तर्हि–पा०
३ अङ्गीकृत्येति—अन्ये[illegible] सर्वाणि[illegible] नदभिप्रायं मामीमिति भावः।

चेतिकर्तव्यताकाङ्क्षायां प्रकरणमेव नास्ति। एवं तर्ह्युक्तम्, असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वादिति। एवं तर्हि, नैवात्र यागे धर्मा विधीयन्ते। नापि दर्शपूर्णमासयोः कर्तव्यतोच्यते। किं तर्हि। दर्शपूर्णमासाभ्यां यजेतेति पदद्वयेन विशिष्टं यागमनूद्यात्र धर्मा विधीयन्ते, दर्शपूर्णमासाभ्यां यजेतेत्थमिति। एवमपि दर्शपूर्णमासाभ्यामित्यनुवादो न युज्यते। तृतीयार्थस्यासिद्धत्वात्। पूर्ववाननुवादो भवति। अपूर्वश्च तृतीयार्थः। सोऽवश्यं विधातव्यः। तस्मिंश्च विधीयमानेऽन्यदेवासंबद्धमापद्यते, दर्शपूर्णमासौ यजेः करणमिति। तस्मात्स एव प्रथमः पक्षोऽस्तु, यागानुवादेन धर्माणां विधिरिति।

ननु तत्रापि दर्शपूर्णमासाभ्यामित्येतन्न संबध्यते। ननु संभन्त्स्यते। कालवचनः सन् प्रायिको नित्यानुवादो भविष्यति। प्रायेण यागानां दर्शपूर्णमासकालत्वात्। तृतीया च कालस्यार्थकृतं गुणभावमालोच्योपपद्यते। तथा चेत्सर्वे धर्माः सर्वार्था भवन्ति ॥ २ ॥

## चोदनाशेषभावाद्वा तद्भेदाद्व्यवतिष्ठेरन्नुत्पत्तेर्गुणभूतत्वात् ॥ ३ ॥

कर्मचोदनायाः शेषभूतो धर्मसमाम्नायः, एकदेशभूत इत्यर्थः। दर्शपूर्णमासाभ्यां यजेत, अनयाऽन्यन्वाधानादिकयेतिकर्तव्यतयेति। तस्यां चोदनायां यजेर्गुणभावः श्रूयते, दर्शपूर्णमासाभ्यामिति। दर्शपूर्णमासशब्दो हि यजिवचनः। करणभावोऽत्र यजेः श्रूयते। दर्शपूर्णमासाख्येन यागसमुदायेनान्यत्कुर्यादिति। [3]यत्ततोऽन्यत्, तत्कर्तव्यतया चोद्यते न यजिः। अपूर्वं च तत्। ननु फलमत्र वाक्ये श्रूयते,

---

इति—यागस्यैव शक्तिरपूर्वमित्युच्यते। शक्तिमति च क्रियमाणा नाश्रुते कृता भवन्ति ॥ २ ॥

भावनाशेषभावादित्यर्थः। तद्भेदाद्व्यवतिष्ठेरन्—भावनाभेदाद्व्यवतिष्ठेरन्। उत्पत्तेर्गुणभूतत्वात्। उत्पत्तिः—यागः, तस्याः करणत्वेनोपादीयमानत्वाद्गुणभूतः। तस्मान्न स धर्मैः संबध्यते। संबध्यमाने च स्वार्थपरार्थता, वाक्यभेदादिदोषश्च। अतः

---

१ (अ० ३ अ० ४ सू० ११)। २ दर्शपूर्णमासाभ्यामितीति—क्वचिन्नास्ति। ३ यत्तदन्यत्, तत्कर्तव्यतया चोद्यते। तदितिकर्तव्यतया संबध्यते न यजिः—पा०।

स्वर्गकामो यजेतेति । तत्कर्तव्यं स्यात् । सत्यं श्रूयते, न तु तद्याजिना क्रियते । विनष्टे यजौ तद्भवति । अपूर्वं तु तेन क्रियते । तस्मात्तस्य कर्तव्यतोच्यते। यस्य कर्तव्यता तदितिकर्तव्यतया संबध्यते। तस्मादपूर्वार्था धर्माः। तेषां चापूर्वाणां भेद उक्तः। अतस्तद्भेदाद्यथाप्रकरणं व्यवतिष्ठन्ते धर्मा इति ।

अथैतस्मिन्पक्षे कथं दर्शपूर्णमासशब्देन यागो विशेष्यते । उच्यते । नैवात्र यागो विशेष्यते । किं तर्हि । अपूर्वभावनैवोभयपदविशिष्टो[1]च्यते । यथा, अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणातीति । विषम उपन्यासः । तत्र ह्यन्यद्द्रव्यमन्यो गुणः । तेन तत्रोभयविशेषणत्वं युज्यते । इह पुनर्याग एव तौ दर्शपूर्णमासौ । तेनेहोभयपदविशेषणत्वं न युज्यते । उच्यते । इहापि यजेतेति सामान्यं, दर्शपूर्णमासाविति विशेषः । अन्यच्च सामान्यमन्यो विशेषः । एवमपि श्रुत्या सामान्यस्य[2] भावना, वाक्याद्विशेषस्य[3] । न चैतद्युगपद्भवतीति । एवं[4] तर्हि, नैवात्र श्रुत्यर्थः परिगृह्यते । किं तर्हि । वाक्यार्थः । किं कारणम् । श्रुत्यर्थे

सर्वविशेषणविशिष्टा भावना विधीयते । अर्थात्परस्परनियमः । एवमपि श्रुत्या सामान्यस्य भावना, वाक्याद्विशेषस्य । न चैतद्युगपद्भवतीति—अयुक्तोऽयं ग्रन्थः । उपश्लेषलक्षणया श्रुत्या धातुना संबन्धः। तृतीयया तादर्थ्येन दर्शपूर्णमासयोः । तत्रोपश्लेषलक्षणया तादर्थ्यं कल्प्यम् । यदि दर्शपूर्णमासौ भावनया संबध्यमानौ यागवद्भाव्यस्य करणतां प्रतिपद्येयातां, ततो विरोधे श्रुत्या वाक्यं बाध्येत । इह विरोध एव नास्ति । यदिवेदृश्यः श्रुतयः परिगृह्यन्ते, ततो नामपदानामसंबन्धात्केवलान्याख्यातान्यवतिष्ठेरन् । एवं तर्हि नैवात्र श्रुत्यर्थः परिगृह्यते । किं तर्हि । वाक्यार्थ इत्यप्ययुक्तम् । भावार्थाधिकरणविपरीतत्वात्[5] । किं च—यागसामानाधिकरण्याद्यागवचनोऽयम्। तच्च[6] यागफलसंबन्धे भवति । तस्मान्न ज्ञायते किमनेनोच्यते ।

१ उभयपदविशेषणत्वं—पा० । २ सामम्येन—पा० । ३ विशेपेण—पा० । ४ एवं तावच्चोद्यभाष्यमाक्षिप्य परिहारभाष्यमप्याक्षिपति—एवं तर्हीत्यादिना । ५ ( अ० २ पा० १ अ० १ ) भावार्थाधिकरणे हि धात्वर्था एव फलभावनाया करणं न नामार्था इत्युक्तम् । इदं च भाष्यं तेन विरुध्यत इत्याशयः । ६ तच्चेति—सामानाधिकरण्यमित्यर्थः । स चेति—पा० ।

**परिगृह्यमाणे दर्शपूर्णमासशब्दोऽनर्थको भवति । यजतिश्चानुवादः । यजत्यात्मकत्वाद्दर्शपूर्णमासयोः। यजतिसामानाधिकरण्याच्च दर्शपूर्णमासशब्दस्य ॥ ३ ॥**

**सत्त्वे लक्षणसंयोगात्सार्वत्रिकं प्रतीयेत ॥ ४ ॥**

**यत्तु सत्त्ववदिति । अत्र गवाकृतौ धर्मः श्रूयते । आकृतेः पदार्थत्वात् । न च तत्र संभवति । अतोऽसावाकृतिः सहचारिपिण्डलक्षणार्था विज्ञायते । यथा गङ्गायां घोष इति । तच्च साहचर्यं**

---

अपि च—फले विधीयमानस्याऽऽश्रयो देयः क्रिया । सा च गोदोहनादिवन्न लभ्यते । अविहितत्वाद्यागस्य । ततश्चाऽऽश्रयो वाक्येन देयः। तत्र वाक्यभेदः। तस्मादन्यथा वर्ण्यते। एवमपीति नोपश्लेषलक्षणां श्रुतिमभिप्रेत्य । किं तर्हि । अभिधात्रीम् । यजेतेत्ययं प्रकृताप्रकृतयागं भावनासंबन्धित्वेन प्रतिपादयति । दर्शपूर्णमासपदेन प्रकृते स्थाप्यते । तत्र प्रकृतत्वाविशेषेऽपि विशिष्टेष्वेव प्रकृतेषु स्थाप्यते, न प्रयाजादिष्वपि । तस्मादिदं विलम्बितं दृष्ट्वा वाक्यमित्युक्तम् । न च[2] सकृदुच्चरितः प्र[3]कृताप्रकृतवचनः, वाक्यात्प्रकृतवचनश्च संभवति ।

इतरस्त्वाह—य एव यागा विपरिवर्तन्ते त एव फलेन संबध्यन्ते । कुतः । रूपवतां संनिधावरूपः शिष्यमाणः प्रकृतग्राहकः । यजेतेति चायमरूपः । तत्र प्रकृतत्वाविशेषात्सर्वयागेषु प्रसक्तेषु दर्शपूर्णमासशब्दवाच्या एव फले विधीयन्ते । यजतिसामाना[illegible]रण्याच्च दर्शपूर्णमासशब्दस्य। अतो भावयेद्यागेन करणेन दर्शपूर्णमाससंज्ञकेनेति । '[4]दर्शपूर्णमासाभ्यां स्वर्गमिति ' फलेनोपसंहृतं भाष्यकारेण ॥ ३ ॥

स[5]त्त्वं लक्षयित्वा यो धर्म उच्यते स सार्वत्रिकः । गवादयश्चोद्दिश्य[6]न्ते । उपादीयमाने विपरीतम् । न[7] च तत्र **संभवति । अतोऽसावाकृतिः सहचारिपिण्डलक्षणार्था** । अयुक्तमिदम् । ' पशुमालभेत ' इत्यत्राप्येकस्याऽऽलम्भो

---

१ गावः–पा० । २ ' न चैतद्युगपद्भवति ' इत्यस्य भाष्यस्याभिप्रायमाह—न चेति । ३ प्रकृतेति—श्रुतिवशेनेति पूर्वं शेषः । ४ यद्येवं धात्वर्थस्य फलसंबन्धः, कथं तर्हि भाष्यकारेण, एकादशाद्ये ( अ० ११ पा० १ अ० १ सू० १ ) ' दर्शपूर्णमासाभ्यां स्वर्गकामः ' इत्यनेन नामार्थस्य फलसंबन्धः प्रदर्शित इत्याशङ्क्य नामविशेषितस्यैव धात्वर्थस्य फलसंबन्धे नामार्थस्यापि फलसंबन्धः फलिष्यतीत्येवमभिप्रायकं तत्रत्यं भाष्यमित्याह—दर्शेत्यादिना । ५ सत्त्वं लक्षयित्वा—ग्रहादिकं द्रव्यमुद्दिश्य । ६ उद्दिश्यन्त इति—गौर्न पदा स्प्रष्टव्येति निषेधाधिकार इति शेषः । ७ दूषयितुं भाष्यमनुभाषते—न चेति ।

सर्वपिण्डानामविशिष्टमिति सर्वपिण्डेषु विहितं भवति। तस्मात्तत्सार्वत्रिकं प्रतीयेत । इह तु यजेर्गुणभावेन श्रवणान्नैव यजौ धर्माः श्रूयन्ते । क्व तर्हि । अपूर्व इति । एवमपदिष्टो हेतुः । तस्मादनुपन्यासः सत्त्ववदिति ॥ ४ ॥

## अविभागात्तु नैवं स्यात् ॥ ५ ॥

अथ तुशब्दः पक्षव्यावृत्तौ । नैतदेवम् , अपूर्वप्रयुक्ता धर्मा इति । यजिप्रयुक्ता एव । कुतः । अविभागात् । यजिनाऽविभागो धर्माणाम् । प्रत्यक्षं केचिद्द्रव्ये श्रूयन्ते, केचिद्देवतायां, केचिन्मन्त्रेषु । एष च यजिः, यद्द्रव्यं देवतामुद्दिश्य मन्त्रेण त्यज्यते । स एष प्रत्यक्षो यजिना संबन्धो धर्माणाम् । अपूर्वेण त्वानुमानिकः । फलेऽपि यजेः प्रत्यक्षश्रुतो गुणभावः, स्वर्गकामो यजेतेति । आनुमानिकोऽपूर्वेण । अनुमानाच्च प्रत्यक्षं बलीयः । तस्माद्यज्यर्था धर्माः । ननु यजिर्भङ्गित्वात्कालान्तरे फलं दातुमसमर्थः । तत्र कृता धर्मा अनर्थका एव भवन्तीत्युक्तम् । अत्र स्थितस्य न्यायस्याऽऽक्षेपेण प्रत्यवस्थानं क्रियते । तैलपानवदेतद्भविष्यति । यथा तैलपानं घृतपानं वा भङ्गित्वेऽपि सति कालान्तरे मेधास्मृतिबलपुष्ट्यादीनि फलानि करोति । एवं यजिरपि करिष्यति, किं नोऽदृष्टाश्रुतेनापूर्वेण कल्पितेनेति ॥ ५ ॥

## द्व्यर्थत्वं च विप्रतिषिद्धम् ॥ ६ ॥

एवं च सति सर्वे धर्माः सर्वार्था भवन्ति । तथा चैन्द्राग्नादिषु प्रयाजादयः सन्ति । तत्र सौर्ये कर्मणि प्रयाजानां दर्शनमुपपद्यते । प्रयाजे प्रयाजे कृष्णलं जुहोतीति । इतरथा प्रयाजाश्च विधातव्याः । प्रयाजेषु च कृष्णलहोमः । तथा च द्व्यर्थं तत्स्यात् । द्व्यर्थत्वं च विप्रतिषिद्धम् । तस्माद्यजिप्रयुक्ता धर्मा इति ॥ ६ ॥

---

न स्यात् । अनेन न्यायेनाऽऽकृतिलक्षितासु व्यक्तिषु संभवात् । शक्यते वाऽऽकृतिः स्प्रष्टुम् । तस्मादनेन न्यायेन यत्सार्वत्रिकत्वमुक्तं तदतिप्रसज्यते ॥ ४ ॥

अनेन संनिपत्योपकारकास्तदर्था उच्यन्ते । तन्मध्यपातात्प्रयाजादीनामर्थाङ्गतामाह ॥ ५ ॥ [ ६ ॥

---

१ किं-पा० । २ असमर्थाः—पा० । ३ धृति-पा० । ४ शक्यते वेति—व्यक्त्याकृत्योरनत्यन्तभेदादिति हेतुपूरणम् ।

## उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिः स्यात्-तश्च कर्म भेदः स्यात् ॥ ७ ॥

नैतदेवं, यजिप्रयुक्ता धर्मा इति । चोदनायां प्रवृत्तिः स्यात् । चोदनेत्यपूर्वं ब्रूमः । चोदनार्थत्वात्—अपूर्वार्थत्वादपूर्वप्रयुक्ता धर्माः । फलवत्त्वादित्युक्तो हेतुः । यत्तु, प्रत्यक्षो यजिसंबन्धो धर्माणामिति । अत्र ब्रूमः । उत्पत्तौ विध्यभावात् । उत्पत्तिरिति यजिं ब्रूमः । उत्पत्तौ यजौ नास्ति विधिः । यज्यर्था धर्मा इति । केवलं यजौ श्रूयन्ते, क्रियन्ते च । नैतावता तदर्था भवन्ति । यथा, वाससि रागः श्रूयते । वासो रञ्जयतीति, वाससि च क्रियते । न चासौ तदर्थः । स्त्र्यर्थः पुरुषार्थो वा भवति । एवमिहापि यजौ श्रूयमाणाः क्रियमाणाश्चापूर्वार्था भवेयुरर्थवत्त्वाय । ततश्च कर्मभेदः स्यात् । यतोऽपूर्वार्था इति ।

यश्च यजेः प्रत्यक्षः फले गुणभाव इति, स नाकृत्वाऽपूर्वं भवतीति प्राणालिको विज्ञायते । प्रणाड्याऽपि च येन क्रियते तत्कारणं भवति । यथा, गोमयैः पचति, तुषपक्का भवन्तीति । यत्तु, तैलपानवद्यजितः फलं भविष्यतीति । अत्र ब्रूमः । तैलपानस्यापि न कालान्तरे फलं भवति । धातुसाम्यं तस्य फलम् । तच्च तत्कालमेव । यच्च फलं बलपुष्ट्यादि, तत्सम्यगाहारपरिणामाद्भवति । तस्माद्विषम उपन्यासः ॥ ७ ॥

## यदि वाऽप्यभिधानवत्सामान्यात्सर्वधर्मः स्यात् ॥ ८ ॥

यद्यप्यपूर्वं प्रयोजकं धर्माणां, तथाऽपि सर्वधर्मः स्यात्, स स पदार्थः । अभिधानवत्सामान्यात् । अभिधानं तावदेतेषां समानम् । अपूर्वमित्यभिधानवद्धर्मेणाप्यस्य समानेन भवितव्यम् । वाहीकवत् । यथा, वाहीकोऽतिथिरागतः, यवान्नमस्मै प्रक्रियतामित्युक्ते यो यो वाहीकस्तस्य तस्य यवान्नं क्रियते । यथा वा, अक्ष्यामये मुद्गौदनो भोक्तव्यः, उदरामये पयः पातव्यमिति । सर्वत्र च हि, अक्ष्यामये मुद्गौदनो भुज्यते, उदरामयेऽपि पयः पीयते । एवमिहाप्येकस्यापूर्वस्य ये धर्माः श्रुतास्ते सर्वापूर्वाणां भवितुमर्हन्ति ।

---

॥ ७ ॥

---

१ भवति—पा० । २ तद्यथा—पा० ।

अपि च, अरुणपराशरा नाम शाखिनः । तेषां परिचरेषु स्मृतिरूपं ब्राह्मणं भवति । ये दर्शपूर्णमासयोर्धर्मास्ते सर्वेष्टीनामग्नीषोमीयस्य च, इत्यारभ्य, यावत्सर्वाः प्रकृतिविकृतयोऽनुक्रान्ता इति । तन्नानुक्रमणमेतमेव न्यायं सूचयति । तस्मादपूर्वप्रयुक्तत्वेऽपि सर्वे धर्माः सर्वार्था इति ॥ ८ ॥

अर्थस्य त्वविभक्तत्वात्तथा स्यादभिधानेषु पूर्ववत्त्वात्प्रयोगस्य कर्मणः शब्दभाव्यत्वाद्विभागाच्छेषाणामप्रवृत्तिः स्यात् ॥ ९ ॥

उपवर्णनापरिहारस्तावदुच्यते । यदुक्तं वाहीकवदिति । अत्र ब्रूमः । अर्थस्य त्वविभक्तत्वात्तथा स्यादभिधानेषु । अर्थो वाहीकत्वं तद्देशसंबन्धः, सोऽविभक्तः । सर्ववाहीकेष्वनुगत इत्यर्थः । तन्निमित्तश्च प्रीतिविशेषो न पुरुषनिमित्तः । कथं ज्ञायते । पूर्ववत्त्वात्प्रयोगस्य । पूर्ववानत्र प्रयोगः । बहुशो वाहीकाश्चावाहीकाश्च भोजिताः । तत्रान्वयव्यतिरेकाभ्यां ज्ञातमेतत्, देशनिमित्तेयं यत्रान्नप्रियता, न पुरुषनिमित्ता । तस्मात्तथा स्यात्, वाहीकादिष्वभिधानेषु । अथेह कर्मणः शब्दभाव्यत्वा[1]न्नान्यतः शक्यमेतज्ज्ञातुं, के कस्यापूर्वस्य[2] धर्मा इति । शब्देन च व्यवस्थिता[3] विज्ञाता धर्माः । अपूर्वाणां च विभागः, अतः शेषाणामन्यत्र विहितानामन्यत्राप्रवृत्तिः स्यात् ॥ ९ ॥

स्मृतिरिति चेत् ॥ १० ॥

अथ यदुक्तं स्मृतिरिति । तस्य कः परिहारः ॥ १० ॥

न पूर्ववत्त्वात् ॥ ११ ॥

पूर्ववती हीयं स्मृतिः । चोदकं धर्मग्राहकं वक्ष्यति । विध्यन्तो वा प्रकृतिवदिति । तेन प्रापितानां धर्माणामयमनुवादः । एतन्न्यायपूर्विका, नाप्राप्तानां विधायिका । यत्कारणं व्यवस्था धर्माणामेतेन न्यायेन भवति ॥ ११ ॥

---

॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ ]

---

१ भाव्यत्वम् । ना—पा० । २ ज्ञातुं, कस्य—पा० । ३ व्यवस्थया विहिता धर्मा इति—पा० ।

अर्थस्य शब्दभाव्यत्वात्प्रकरणनिबन्धनाच्छब्दादेवान्यत्र भावः स्यात् ॥ १२ ॥

इदं निगमनसूत्रम्। निगमनं च प्रतिज्ञाया हेतोश्च पुनर्वचनम् । तदिदमुच्यते । यस्मादेवं, तस्मादर्थस्य–अग्न्यन्वाधानादेः, शब्दभाव्यत्वात्, प्रतिप्रकरणं च निबन्धनाच्छब्दादेवान्यत्र भावः स्यात् । यथा गन्धर्वाप्सरसो वा एतमुन्मादयन्ति य उन्माद्यत्येता वै गन्धर्वाप्सरसो यद्राष्ट्रभृतम् । तस्मै स्वाहा ताभ्यः स्वाहेति जुहोतीति, अग्निप्रकरण उत्पन्नानां राष्ट्रभृतामुद्राहे उपदेशः । एतेषां राष्ट्रभृतो जुहोत्यभ्यातानां जुहोतीति । असत्येतस्मिन्वचने यथाधिकारं व्यवतिष्ठेरन् धर्मा इति । एवं च सति, अधर्मकाण्यैन्द्राग्नादीनि । तदर्थमुत्तरोऽध्यायषट्कः प्रारब्धव्य इति ।

तत्र सप्तमेन तावदैन्द्राग्नादीनां कर्मणां धर्माः सन्तीत्युच्यते । ते चातिदेशेनेति । अतिदेशो नाम ये परत्र विहिता धर्मास्तत्प्रतीत्यान्यत्र तेषां देशः । यथा, देवदत्तस्य भोजनविधिं कृत्वा शालिसूपमांसापूपैर्देवदत्तो भोजयितव्य इति । तमेव विधिं यज्ञदत्तेऽतिदिशति, देवदत्तवद्यज्ञदत्तो भोजयितव्य इति । श्लोकमप्युदाहरन्ति—

प्रकृतात्कर्मणो यस्मात्तत्समानेषु कर्मसु ।
धर्मप्रदेशो येन स्यात्सोऽतिदेश इति स्थितिः ॥ इति ॥

स च नाम्ना वचनेन वा । तत्र नाम त्रिविधमातिदेशकं, कर्मनाम, संस्कारनाम, यौगिकमिति । वचनं पुनर्द्विविधं, प्रत्यक्षश्रुतमानुमानिकं च । तयोरानुमानिकमुपरिष्टाद्वक्ष्यते । प्रत्यक्षश्रुतं त्विदानीमेव चिन्त्यते ॥ १२ ॥

( इषौ श्येनीयवैशेषिकधर्मातिदेशाधिकरणम् ॥ २ ॥)

[ २ ] समाने पूर्ववत्त्वादुत्पन्नाधिकारः स्यात् ॥ १३ ॥ पू०

अस्तीषुर्नामैकाहः । अपरः श्येनः । तौ द्वावप्याभिचारिकौ । तत्रैषौ

---

त्रिविधं नामधेयम्[1] । कर्मनामधेयं[2], संस्कारनामधेयं[3], यौगिकं चेति । तत्र यौगिकं नाऽऽतिदेशकम् । कथम् । येनैव योगेन द्वादशाहे प्रायणीयशब्दस्तेनैव गवामयनेऽपीति ॥ १२ ॥

---

१ नाम—पा० । २ कर्मनाम—पा० । ३ संस्कारनाम—पा० ।

कांश्चिद्धर्मान् विधायाऽऽह, समानमितरच्छ्येनेनेति । एतच्चिन्त्यते । किमयमनुवादो विधिर्वेति । यदि विधिस्ततोऽतिदेशः । श्येनधर्मानिषावतिदिशति । अथानुवादस्ततो नेति । तत्र किं प्राप्तम् । तत्सूत्रेणैवोपक्रम्यते—समाने पूर्ववत्त्वादुत्पन्नाधिकारः स्यात् ।

समानमितरच्छ्येनेनेति । अत्रोत्पन्नाधिकारः स्यात् । अनुवाद इत्यर्थः । कुतः । पूर्ववत्त्वात् । अयमिषुः पूर्ववान्, ज्योतिष्टोमपूर्वकः । ज्योतिष्टोमिकोऽत्र विध्यन्त इत्यर्थः । अत्र चोदकेनोत्पन्ना ज्योतिष्टोमिका धर्माः सन्ति । श्येनोऽपि ज्योतिष्टोमपूर्वकः । तत्रापि ते सन्ति । य इषौ श्येने च समाना भवन्ति, तानधिकृत्यायं वादो युज्यते । तस्मादुत्पन्नाधिकारत्वादनुवादः ।

किंच—इतरदिति चाभावे नोपपद्यते । इतरशब्दश्चासंनिहितेऽनुपपन्नः संनिहित एव भवति । यथा, इतरः प्रावारो दीयताम् । इतरः कम्बलो दीयतामिति संनिहितो दीयते, न प्रावारमात्रं कम्बलमात्रं वा । ज्योतिष्टोमिकाश्च संनिहिताः । तस्मात्तेषामनुवादः । विहिता हि ते चोदकेनेति ॥ १३ ॥

## श्येनस्येति चेत् ॥ १४ ॥

इतिचेत्पश्यसि, ज्योतिष्टोमिकानामनुवाद इति । नैवम् । श्येनस्य वैशेषिकाणां लोहितोष्णीषादीनां धर्माणां विधिः । कुतः । श्येनग्रहणसामर्थ्यात् । एवं श्येनग्रहणमर्थवद्भविष्यति, धर्मान् विशेषयत् । इतरथाऽनर्थकं स्यात् । सर्वेषां ह्येकाहाहीनसत्राणां ते समानाः । तत्र यावदुक्तं स्यात्, समानमितरदिति, तावदेव समानमितरच्छ्येनेनेति ॥ १४ ॥

## नासंनिधानात् ॥ १५ ॥

नायं श्येनवैशेषिकाणां वादो युज्यते । कस्मात् । असंनिधानात् । अयमितरशब्दः संनिहिते भवति । न च श्येन(शब्देन)वैशेषिका इषौ धर्माः संनिहिताः । यत्तु, श्येनशब्दो वैशेषिको भवतीति । विधिपक्षेऽवैशेषिकत्वं दोषः स्यात् । अनुवादपक्षे तु नैव कश्चिद्विधीयते, किं

[ १३ ॥ १४ ॥

१ तस्मात्तेषां वादः । तेषां चेदनुवादः । वि—पा० । २ अविशेषकत्वं—पा० ।

विशेषयिष्यति । ज्यौतिष्टोमिकास्तु सर्वसाधारणाः सन्तः श्येनस्यापि भवन्तीत्यनुवादो युज्यते । तस्माज्ज्यौतिष्टोमिकानामेवानुवादः ॥ १५ ॥

**अपि वा यद्यपूर्वत्वादितरदधिकार्थे ज्यौतिष्टोमिकाद्विधेस्तद्वाचकं समानं स्यात् ॥ १६ ॥ सि०**

अपि वेति पक्षान्तरपरिग्रहे । विधिरयं श्येनवैशेषिकाणां, न ज्यौतिष्टोमिकानामनुवादः । कुतः । अपूर्वत्वात् । एवमपूर्वमर्थं विधास्यति । तथा प्रवृत्तिविशेषकरो भविष्यति । अनुवादः सन्नप्रवृत्तिविशेषकरोऽनर्थकः स्यात् । नन्वितरशब्दोऽयं संनिहिते भवति । उच्यते । इतरदधिकार्थे, समानमितरत्, समानमधिकमित्यर्थः ।

ननु संनिहितवचनोऽयं नाधिकार्थवचन इति । उच्यते । न केवलमयं संनिहितवचन एव । पूर्वोक्तसदृशमसंनिहितमपि ब्रूते । अवशिष्टं च । यदा हि वस्त्राण्यनुक्रम्येतरशब्दः प्रयुज्यते, देवदत्ताय कम्बलो दीयतां, विष्णुमित्राय कौशेयं, यज्ञदत्ताय क्षौमम्, इतरच्चैत्रायेति, तदा वस्त्रमेव प्रदीयते, न हिरण्यं रजतं वा । इह ज्यौतिष्टोमिकेभ्योऽधिकान् लोहितोष्णादीन् धर्माननुक्रम्येतरशब्दः प्रयुक्तः । तेनात्राप्यधिकानेव वक्तुमर्हति । तथाऽधिकवचनो भवति । अथ ज्यौतिष्टोमिकान् ब्रूते तथा

॥ १९ ॥ ]

इतरशब्दो नाऽऽधिक्ये लोके प्रसिद्धः । तर्हि । उपयुक्ताद्यदितरत्संनिहितं तत्र प्रसिद्धः । न चैकस्य शब्दस्य द्वावर्थौ । तस्मादिषौ वषट्कारनिधनविष्टुतिसप्तहं भवतीत्युक्त्वा समानमितरच्छ्येनेनेति । तत्र ज्योतिष्टोमाच्चोदकेन यत्प्राप्तं तदितरशब्देन परामृश्यते । तस्य विकारो विधीयते । यदितरज्ज्योतिष्टोमात्प्राप्तं तच्छ्येनेन समानं कर्तव्यम् । तथा लोहितोष्णीषादि विकारमात्रमतिदिश्यते ( इतरदधिकार्थे ) चेतरशब्दे वर्ण्यमानेऽप्यप्राकृताः कण्टकवितोदनादयस्तेषामप्यतिदेशः स्यात् । भाष्यकारव्याख्या-

१ अधिकार्थ इति—पा० । २ अतोऽवशिष्टं च—पा० । ३ आधिक्ये-सादृश्ये । ४ इत्युक्त्वेति-अयमभिप्रायः । इषुसंज्ञक एकाहे ' वषट्कारनिधनं भवति ' ' इषुं विष्टुतिं करोति ' ' सप्तहं भवति ' इत्येतैर्वाक्यैः, प्राकृते साम्नि वषट्कारनिधनं, प्राकृतविष्टुतौ चेष्वाकारत्वं, प्राकृते च स्तोत्रे सप्तहाख्यं साम विधायेति । ५ ( ) एतच्चिह्नितस्थाने 'इतरदधिकार्थे—विकारे, इत्यर्थः । अधिकार्थे ' एवंरूपः पाठ अवश्यक इति व्याख्यानानुरोधेनानुमीयते ।

संनिहितवचनः । तत्रावश्यमन्यतरद्वयम् । यद्यधिकार्थतां हित्वा संनिहितार्थताऽऽश्रीयते, अनुवादमात्रमनर्थकं भवति । श्येनशब्दश्चाविवक्षितार्थः । अथ संनिहितार्थतां हित्वाऽधिकार्थता गृह्यते, न कश्चिद्दोषो भवति । तस्मात्सूत्रकार आह—इतरदधिकार्थे, इति । अतो ज्योतिष्टोमिकाद्विधेरधिकाः श्येनवैशेषिका ये, त इहातिदिश्यन्ते । तद्वाचकं समानं स्यात् । समानशब्दः स्यादित्यर्थः । भवति श्येनशब्दश्च विवक्षितः ॥ १६ ॥

( वारुणप्रघासिकाश्वपंचरेषु वैश्वदेविकसार्थवादविधिकाण्डातिदेशाधिकरणम् ॥ ३ ॥ )

[ ३ ] पञ्चसंचरेष्वर्थवादातिदेशः संनिधानात् ॥ १७ ॥ पू०

चातुर्मास्यानां वैश्वदेवे पर्वण्याग्नेयादीनि हवींषि सार्थवादवाक्यैर्विहितानि । धर्माश्च तेषामुक्ताः । वरुणप्रघासेषु केवलानि हवींष्याम्नाय, यद्वैश्वदेविकानां ब्राह्मणं तत्तेषामतिदिश्यते, एतद्ब्राह्मणान्येव पञ्च हवींषि, यद्ब्राह्मणानीतराणीति । तत्र किमर्थवादमात्रस्यायमतिदेश उत सार्थवादकस्य सविधिकस्य कृत्स्नस्य काण्डस्येति । कथं पुनरर्थवादमात्रस्यातिदेशो भवति । यथा पम्पाकुलायप्रतिमाश्च वृक्षा इति । के पुनर्विधयः, केऽर्थवादाः । त्रेधा संनद्धं बर्हिर्भवति, त्रेधा संनद्ध इध्मः, नव प्रयाजा इज्यन्ते, नवानुयाजा इत्येवमादयो विधयः । वार्त्रघ्नानि वा एतानि हवींषीत्यर्थवादाः ।

तत्रेदमुच्यते—

पञ्चसंचरेष्वर्थवादातिदेशः संनिधानात् । पञ्चैतानि हवींषि सर्वपर्वसु संचरन्तीति पञ्चसंचराणीत्युच्यन्ते । तेषु पञ्चसंचरेष्वर्थवादमात्रस्यातिदेश इति । कुतः । संनिधानात् । हविषां संनिहिता अर्थवादाः । हविर्विधिभिरेकवाक्यसंबद्धत्वान्न धर्मविधयः । किमतः । अत एत-

---

नेन—यच्छ्येनेन समानं तदितरादित्याश्रीयमाणे । स्तुतिरपि नोपपद्यते । प्रदेशान्तर इषुर्विहितः, प्रदेशान्तरे च समानमितरादिति । तस्मादानर्थक्याद्वाक्यस्य पूर्वपक्षवचनव्यक्तिपरित्यागः ॥ १६ ॥

---

१ तत्रावश्यावहेयमन्यतरत्—पा० । २ सार्थवादैर्वाक्यैः—पा० । ३ संचरन्तीति सञ्च—पा० । ४ आश्रीयमाणे इति—इतरशब्दो विधेयसमर्पको भवतीत्यादि पूरणम् ।

भवति, यत्पूर्वेषां ब्राह्मणमिति व्यपदेशो युज्यते । तद्धि तेषां ब्राह्मणं येन विधीयन्ते । कोऽन्यो हविषां ब्राह्मणस्य च संबन्धोऽन्यत्र विधेयविधायकभावात् । अर्थवादैश्चैतानि विधीयन्ते न धर्मविधिभिः । धर्मविधिभिस्तु यानि विधीयन्ते न तानि हवींषि । तस्मादर्थवादानामतिदेशो न धर्मविधीनाम् ।

अपि च वरुणप्रघासेष्वपि केचिद्वैश्वदेविका धर्मा विधीयन्ते । यथा, अग्निं मथ्नन्ति, प्रसुवो भवन्तीति । तेषामतिदेशेन विहितानां पुनराम्नानमनर्थकं स्यात्, यदि विधयोऽतिदिश्येरन् । तस्मादर्थवादातिदेश इति ॥ १७ ॥

सर्वस्य वैकशब्द्यात् ॥ १८ ॥ सि०

नैतदेवम्, अर्थवादमात्रस्यातिदेश इति । सविधिकस्य सार्थवादकस्य कृत्स्नस्य काण्डस्यातिदेश इति । कुतः । ऐकशब्द्यात् । समानशब्दत्वादित्यर्थः । समानोऽयं ब्राह्मणमिति शब्दो विधीनामर्थवादानां च । स यथाऽर्थवादान् गृह्णात्येवं विधीनपि गृह्णाति चेत्तानप्यतिदिशति । यत्तु विधीनां हविर्भिः संबन्धो नास्तीति । विधेयविधायकसंबन्धो नास्ति, उपकारलक्षणः संबन्धो भविष्यति । क उपकारः । यदेषामङ्गानि विदधति । अस्तिचेत्संबन्धो, ब्राह्मणशब्दश्रुत्या सर्वातिदेशो न्याय्य इति ॥ १८ ॥

लिङ्गदर्शनाच्च ॥ १९ ॥

लिङ्गं च विधीनामतिदेशं दर्शयति । किं लिङ्गम् । वरुणप्रघासेषु श्रूयते, त्रिंशदाहुतयो हूयेरन्, वाजिनो यजन्त्याहुतीनां संपत्त्यै त्रिंशत्त्वायेति वरुणप्रघासेषु त्रिंशतमाहुतीर्दर्शयति । यदि विधयो नातिदिश्येरन्, ता न स्युः । तस्मादतिदिश्यन्ते ॥ १९ ॥

विहिताम्नानान्नेति चेत् ॥ २० ॥

विहिताम्नानादिति यदुक्तं, तस्य कः परिहार इति, आभाषा[1]र्थं सूत्रम् ॥ २० ॥

[ १७ ॥ १८ ॥ १९ ॥ २० ॥

1 अर्थेनि पाठ उचितः ।

नेतरार्थत्वात् ॥ २१ ॥

अथोच्यते । विध्यतिदेशेऽपि सति नाग्निमन्थनादीनामाम्नानमनर्थकम् । इतरस्य हविषोऽर्थेन भविष्यति, दक्षिणवैहारिकस्य मारुत्याख्यस्य । तस्मान्नैतज्ज्ञापकं विधीनामनतिदेशस्य भविष्यति ॥ २१ ॥

( साकमेधीयैन्द्राग्नैककपालयोः सार्थवादविधिकाण्डातिदेशाधिकरणम् ॥ ४ ॥ )

[ ४ ] एककपालैन्द्राग्नौ च तद्वत् ॥ २२ ॥ सि०

वैश्वदेवे, एककपाल आम्नातः, द्यावापृथिव्य एककपाल इति । वरुणप्रघासेष्वपि, काय एककपाल इति । तत्रापरः, ऐन्द्राग्नो द्वादशकपालो, मारुत्यामिक्षा, इति । तथा साकमेधेष्वप्येककपालैन्द्राग्नावाम्नातौ, ऐन्द्राग्न एकादशकपालः, इन्द्राय वृत्रघ्ने चरुः, विश्वकर्मण एककपाल इति । तत्रेदमाम्नातम् । एतद्ब्राह्मण ऐन्द्राग्नः, एतद्ब्राह्मण एककपालो यद्ब्राह्मण इतर इतरश्चेति । तत्रेदमुच्यते । एककपालैन्द्राग्नौ च तद्वत् । यद्वत्पञ्चसंचराणि । अत्रापि सविधिकस्य सार्थवादकस्य काण्डस्यातिदेशः । तेनैव न्यायेनेति । प्राप्तिसूत्रमेतदुत्तरचिन्तार्थम् ॥ २२ ॥

( साकमेधीयैककपाले वारुणप्रघासिकैककपालधर्मातिदेशाधिकरणम् ॥ ५ ॥ )

[ ५ ] एककपालानां वैश्वदेविकः प्रकृतिराग्रयणे सर्वहोमापरिवृत्तिदर्शनादवभृथे च सकृद्द्व्यवदानस्य वचनात् ॥ २३ ॥ सि०

साकमेधे श्रूयते, एतद्ब्राह्मण एककपाल इति । तत्र चिन्त्यते । वैश्वदेविकस्यैककपालस्येदं ग्रहणमुत वारुणप्रघासिकस्येति । किं प्राप्तम् । वैश्वदेविकस्येति ब्रूमः । किं कारणम् । तस्य विहिता धर्माः, अलंकृत्याभिपूर्योपांशु यष्टव्यः, आविः पृष्ठः कार्यः, इत्येवमादयः । वारुणप्रघासिकस्त्वधर्मकः । यस्य विहिता धर्मास्तत्रैतद्युज्यते वक्तुं, तद्वदिदं कर्तव्यमिति । तस्माद्वैश्वदेविकस्य ग्रहणम् । नन्वैन्द्राग्नसमुच्चार-

॥ २१ ॥ २२ ॥

१ मारुत्याः—पा० । २ वैश्वकर्मणः—पा० । ३ साकमेधेषु श्रूयते, एतद्ब्राह्मण ऐन्द्राग्नः एतद्ब्राह्मण एककपालः—पा० ।

णादेककपालोऽपि वारुणप्रघासिक एव स्यात् । नावश्यमेकपर्वणोरेव समुच्चारणेन भवितव्यं, नानापर्वणोरपि समुच्चारणमविरुद्धम् । तस्माद्वैश्वदेविकस्य ग्रहणमिति प्राप्ते—

उच्यते । वारुणप्रघासिकस्यैककपालस्य ग्रहणमिति । कुतः । यत एककपालानां वैश्वदेविकः प्रकृतिः । कथं ज्ञायते । आग्रयणे सर्वहोमापरिवृत्तिदर्शनात् । आग्रयणे द्यावापृथिवीयस्यैककपालस्य सर्वहोममपर्यावृत्तिं च दर्शयति । यत्सर्वहुतं करोति, सा त्वेका परिचक्षा, हुतोऽहुतः पर्यावर्तते, सा द्वितीया । आज्यस्यैव द्यावापृथिव्यौ यजेतेति, आज्ययागविधिपरे वाक्य एककपालस्य सर्वहोममपर्यावृत्तिं च प्राप्तां दर्शयति । एतस्माद्दर्शनात् । अवभृथे च सकृद्द्व्यवदानस्य वचनात् । अवभृथे चावधारणं भवति, इदमेवैककपालस्य द्विरवद्यतीति । तेन ज्ञायते, नूनमन्यत्र न द्विरवदानमिति । तच्चैतत्सर्वं वैश्वदेविके एककपाले विहितम् ।

तस्मादेककपालानां वैश्वदेविकः प्रकृतिः । किमतः । साकमेधिकेऽप्येककपाले वैश्वदेविका धर्माः प्राप्तास्तेषामतिदेशोऽनर्थकः । वारुणप्रघासिकस्य ये धर्मा वैशेषिका अप्राप्तास्तेषामतिदेशोऽर्थवान् । तस्माद्वारुणप्रघासिकस्यैककपालस्येदं ग्रहणमिति । उच्यते । लिङ्गमेतत् । कुतः प्राप्तिरिति । प्राप्तिमुत्तरत्र वक्ष्यामः, स्वरसामैककपालामिक्षं चेत्यत्र । के पुनस्ते धर्माः । हिरण्मय्यः स्रुचो भवन्ति, शमीमय्यो वेत्येवमादयः ॥ २३ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये सप्तमस्याध्यायस्य प्रथमः पादः ॥

---

॥ २३ ॥ ]

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां

सप्तमस्याध्यायस्य प्रथमः पादः ॥

---

१ ( अ० ७ पा० ३ अ० १० सू० २६ )।

अथ सप्तमाध्यायस्य द्वितीयः पादः ॥

( रथंतरादिशब्दानां गीतिविशेषवाचित्वाधिकरणम् ॥ १ ॥ )

[१] साम्नोऽभिधानशब्देन प्रवृत्तिः स्याद्यथाशिष्टम् ॥ १ ॥ पू०

इदं श्रूयते, रथंतरमुत्तरयोर्गायति, कवतीषु रथंतरं गायतीत्येवमादीनि समाम्नायन्ते । तत्र चिन्ता किमिहातिदिश्यत इति । ननु यद्रथंतरादिभिः शब्दैरुच्यते, तदतिदिश्यते । बाढम् । तदेव तु न ज्ञायते किमेभिः शब्दैरुच्यत इति । ननु सिद्धमेतत्, गीतिषु सामाख्या, इति । तथा सिद्धस्याऽऽक्षेपः करिष्यते । स एव तु निर्णयो भविष्यति । यदि स एव निर्णयः, किमर्थ आक्षेपः । दार्ढ्यार्थः, स्थूणानिखननवत् । तत्र किं प्राप्तम् । तदुच्यते । सस्तोभस्वरकालाभ्यासविकारायां हिंकारप्रणवप्रस्तावोद्गीथप्रतिहारोपद्रवनिधनवत्यामृचि सामशब्दोऽभियुक्तैरुपचर्यते । तस्मात्सैवोच्यते ।

ननु गीतौ सत्यां भावाद्गानाख्यस्य संस्कारकर्मणो वाचका एते शब्दा इत्युक्तम् । तदेवेदमुक्तमाक्षिप्यते । नेमे संस्कारस्य वाचकाः । किं कारणम् । अकर्मकाले प्रयोगात् । अकर्मकाले साम प्रयुज्यते । न च संस्कारकर्माणि प्रोक्षणावेक्षणपर्यग्निकरणादीन्यकर्मकाले प्रयुज्यन्ते । प्रयोजनाभावात् । अथ तु मन्त्रा एते, ततोऽन्वहं स्वाध्यायोऽध्येतव्य इति नियमादकर्मकाले प्रयोगो युज्यते । तस्मादृचां नामानि । किंच, संज्ञाभेदात् । संज्ञाभेदश्च भवति, रथंतरं बृहदित्येवमादिः । स एकत्वात्संस्कारकर्मणोऽनर्थकः । एकेनैव हि तदा पर्याप्तम् । यथा गीतिरिति । अथ ऋचां नामानि, ततस्तासां भेदात्संज्ञापृथक्त्वं युक्तम् । अपि च । यदि गानं रथंतरं, गानं च बृहत्, इदं रथंतरमिदं बृहदिति पृथक्त्वेन संज्ञानिवेशो नोपपद्यते । ऋङ्नामत्वे तूपपद्यते ।

किंच, विकारपृथक्त्वात्तु । ( प्रतिसाम च विकारपृथक्त्वात् । ) प्रतिसाम च विकारपृथक्त्वं दृश्यते । तदेकत्वाद्गानस्यानुपपन्नम् । संस्कारभेदे हि विकारपृथक्त्वं दृष्टम् । तद्यथा, अवहन्तेस्तण्डुलीभावः, पिषेश्चूर्णनम् । न त्वेकस्य तण्डुलीभावश्चूर्णनं च । अथ ऋङ्नामान्ये-

१ एतत्पादस्थं समग्रमपि भाष्यं स्पुटार्थमिति वार्तिककारो न व्याचख्यौ । २ ( अ० २ पा० १ अ० ११ सू० ३६ ) ३ तस्मात्संशयः । उच्यते—पा० ।

तानि । तत ऋचां भेदाद्विकारपृथक्त्वं युज्यते । तस्मादह्नामानीति । तत उत्तरं पठति, साम्नोऽभिधानशब्देन प्रवृत्तिः स्याद्यथाशिष्टमिति । साम्नोऽभिधानशब्देन यथाशिष्टं प्रवृत्तिः स्यात् । यच्छिष्टं प्रवक्तृभिः शिष्येभ्यः । किंच शिष्टम् । स्तोमादिविशिष्टा ऋक् साम । सा प्रवर्तेत । किं कारणम् । तस्या रथंतरादि नामधेयमिति ॥ १ ॥

शब्दैस्त्वर्थविधित्वादर्थान्तरेऽप्रवृत्तिः स्यात्पृथग्भावात्क्रियाया ह्यभिसंबन्धः ॥ २ ॥

तुशब्दः पक्षनिवृत्तौ । न त्वेवं स्यादृचः प्रवृत्तिरिति । कथम् । इह, कवतीषु रथंतरं गायतीति कवतीनां वा कार्येऽभिवत्योऽतिदिश्येरन्, कवतीनां वोपर्याधेयभावेन । तत्र कार्ये तावदतिदेशो न घटते । कुतः । शब्दैरर्थविधित्वात् । शब्दानामर्थविधानं कार्यम् । न च, कवतीषु रथंतरं गायतीति कवतीभिर्योऽर्थोऽभिधीयते, तमभिवत्यः शक्नुवन्ति वक्तुम् । तस्मान्न कार्यातिदेशः । आधेयत्वेऽपि न संभवति । पृथग्भावात् । न हि शब्दः शब्दे समवैति, पृथगेवावतिष्ठते । अभित्वा, कया न इति । क्रियाया हि, गानक्रियायाः शब्देनाभिसंबन्धो भवेन्न शब्दस्य । तस्मादाधेयत्वेनापि नातिदेशः । अतो नायमृचः प्रदेश इति ॥ २ ॥

स्वार्थे वा स्यात्प्रयोजनं क्रियायास्तदङ्गभावेनोपदिश्येरन् ॥ ३ ॥

स्वार्थे वा प्रवर्तमाना अभिवत्यः कवतीनामङ्गभावेनोपदिश्येरन् । कथं पुनः कवतीषु गायतीत्यङ्गभावः शक्य उपदेष्टुम् । शक्यो यथा, येन कर्मणेर्त्सेत्तत्र जयान् जुहुयादिति । किं पुनः प्रयोजनं कवतीनामभिवत्यो निर्वर्तयन्तीति । उच्यते । प्रयोजनमदृष्टं कल्प्यम् । कुतः । क्रियायाः । यस्मात्क्रिया श्रूयते, कवतीषु रथंतरं गायतीति । यथा प्रयाजादीनां प्रयोजनं क्रियायाः । उच्यते । अयमेवास्मिन्पक्षे दोषो, यत्प्रयोजनं क्रियायाः कल्पयितव्यम् । तस्मादयमपि पक्षो दुःश्लिष्टः ॥ ३ ॥

शब्दमात्रमिति चेत् ॥ ४ ॥

इति चेत्पश्यसि, कवत्यङ्गभावेनाभिवतीनामुपदेशो दुःश्लिष्ट

इति। तेन तर्हि शब्दमात्रं प्रदिश्यताम् । रथंतरशब्दं कवतीषु प्रयुञ्जीत । कवतीः रथंतरशब्देनाभिलपेदिति । किं कारणम् । शब्द उच्चरिते । तत्र तावन्मुख्या प्रतिपत्तिः । शब्दे कार्यस्यासंभवादर्थे कार्यं विज्ञायते, यथा गामानयेति । इह तु शब्द एव कार्यं संभवति, नार्थे । अतोऽत्र शब्दं विज्ञास्यामः ॥ ४ ॥

नौत्पत्तिकत्वात् ॥ ५ ॥

पूर्वस्मादेव वादः पापीयान् । कस्मात् । औत्पत्तिकत्वात् । औत्पत्तिको हि नामिनाम्नोः संबन्धः । यः शब्दो यस्मिन्नर्थे औत्पत्तिकेन संबन्धेन प्रसिद्धो न स ततोऽन्यं प्रत्याययितुं शक्नोति । न हि गोशब्देनाश्वोऽभिधातुं शक्यते ॥ ५ ॥

शास्त्रं चैवमनर्थकं स्यात् ॥ ६ ॥

एवं च सत्यतिदेशशास्त्रमनर्थकं स्यात् । अशक्यार्थत्वात् । तस्मान्न शब्दस्यापि प्रदेशो युक्तः । वृत्तिकारस्तु मेने—गानशास्त्रपौर्विधक्यमनर्थकं स्यादिति । तस्यायमभिप्रायः, सत्यां गतौ नैतावान्प्रयासः शिष्टानामफलोऽभ्युपगन्तुं न्याय्य इति ॥ ६ ॥

स्वरस्येति चेत् ॥ ७ ॥

इति चेत्पश्यसि, नाम्नोऽतिदेशोऽयुक्त इति। तेन तर्हि स्वरस्यातिदेशो भवतु । स्वरः सामशब्देन लोकेऽभिधीयते । सुसामा देवदत्त इति । सुस्वरो देवदत्त इति । स्वरो घोषो नाद इति समानार्थाः । स सामशब्देनोच्यते । साम च रथंतरम् । तस्मात्तस्यातिदेशः ॥ ७ ॥

नार्थाभावाच्छ्रुतेरसंबन्धः ॥ ८ ॥

नैतदेवं, स्वरस्यातिदेश इति । कुतः । अर्थाभावात् । अर्थस्य—अभिवतीस्वरस्य कवतीष्वभावात् । नन्वसन्नेवासावतिदेशेन भाव्यते । उच्यते । भावयितुमपि न शक्यते । न ह्यभिवत्यक्षराणामभिव्यञ्जको नादः कवतीषु भावयितुं शक्यः । यदि भाव्येत, न कवत्यो भवेयुः । न चेद्भाव्यते, न भूतः । कवतीषु रथंतरं गायतीत्येतस्याः श्रुते पदानां परस्परेणाभिसंबन्धो[1] न स्यात् । तस्मान्न स्वरस्यातिदेशः ॥ ८ ॥

---

१ पदान्तरेणाभिसंबन्धः—पा० ।

स्वरस्तूत्पत्तिषु स्यान्मात्रावर्णाविभक्तत्वात् ॥ ९ ॥

तुशब्दः पक्षान्तरपरिग्रहे। यद्यभिवतीस्वरस्य कवतीषु प्रदेशो नोपपद्यते, अनुवादो भवतु, कवतीषु रथंतरं गायतीति। कथम् । तदुच्यते। इह, कवतीषु रथंतरं गायतीत्यस्य वाक्यस्य द्वे वचनव्यक्ती भवतः। कवतीषु यद्रथंतरं, तद्गायतीत्येका । रथंतरं यत्, तत्कवतीषु गायतीत्यपरा । तयोरेषा द्वितीया, रथंतरं यत्तत्कवतीषु गायतीति । सा स्वरस्य सामत्वे न संभवतीत्युक्तम्। न ह्यभिवतीस्वरः कवतीषु समावेशयितुं शक्य इति । पूर्वा तु संभवति। कवतीषु यद्रथंतरं, तद्गायतीति । ननु साऽपि न संभवति । न हि कवतीषु रथंतरमस्ति । अतः परमुच्यते । स्वरस्तूत्पत्तिषु स्यात्। स्वरस्त्वभिवतीस्वरः, कवतीनामुत्पत्तिषु—उच्चारणेषु स्यात्। कथम् । मात्रावर्णाविभक्तत्वात् । बहवो मात्रावर्णाश्चाभिवतीनां कवतीनां चाविभक्ता अभिवतीष्वपि विद्यन्ते, कवतीष्वपि । सोऽसावभिवतीस्वरः कवतीषु साधारणवर्णसमवेतो विद्यते, तस्यानुवादोऽयं घटते, कवतीषु रथंतरं गायतीति। तस्मात्स्वरस्यानुवादः ॥ ९ ॥

लिङ्गदर्शनाच्च ॥ १० ॥

लिङ्गं च दृश्यत एतस्मिन्नर्थे। अस्ति, रथंतरमुत्तरयोरिति । किं तल्लिङ्गं भवति। एवमाह । रथंतरमुत्तरयोर्न पश्यामीति विश्वामित्रस्तपस्तेपे, बृहदुत्तरयोर्न पश्यामीति वसिष्ठ इति । यच्च विद्यमानं न दृश्यते, तद्दर्शनाय यत्नः[1] क्रियते। यथा घटं न पश्यामीति प्रदीपं करोति, न शशविषाणं न पश्यामीति। तस्मादस्त्युत्तरयो रथंतरं बृहच्च। तयोरनुवाद इति ॥ १० ॥

अश्रुतेस्तु विकारस्योत्तरासु यथाश्रुति ॥ ११ ॥

तुशब्दः पक्षं व्यावर्तयति। नैतदेवम्, स्वरस्यानुवाद इति। कुतः। एवं सत्युत्तरासु विकारो न कश्चिच्छ्रुतो भवति । तदा उत्तरा यथाश्रुताः प्रयोक्तव्याः। यथा स्वाध्यायकाले श्रुताः। तत्र, रथंतरमुत्तरयोर्गायतीत्येतदनुवादमात्रमप्रवृत्तिविशेषकरमनर्थकमेवाऽऽपद्यते । अतो न स्वरस्यानुवादो युक्तः ॥ ११ ॥

---

१ प्रयत्नः—पा०।

शब्दानां चासामञ्जस्यम् ॥ १२ ॥

रथंतरादीनां च सामशब्दानामसामञ्जस्यं स्यात् । रथंतरमुत्तरयोः, बृहदुत्तरयोरिति । कथम् । तदुच्यते । अयं रथंतरशब्दो बृहच्छब्दो वा स्वरस्य सामशब्दत्वे स्वरसमुदाये आनुपूर्व्याऽवस्थिते स्वरविशेषे प्रयुक्तः । स एकदेशे भिन्नानुपूर्व्ये चासमञ्जसो भवति । तस्मादेतदुक्तम् । स्वरस्य सामशब्दः । तस्य चानुवाद इति । अत्राऽऽह । एवं भवता सर्वे पक्षा निरुद्धाः । ततः किमप्रवृत्तिरेवेति । उच्यते । ऋच एव प्रदेशो भवतु । ननूक्तं, न शक्या ऋच ऋगन्तरे प्रदेष्टुमिति । बाढं, देशलक्षणा भविष्यति । कवतीषु रथंतरं गायतीत्युच्यते । न च शक्यते कवतीषु रथंतरं गातुम् । तत्र देशलक्षणा भवति कवतीदेश इति । यथा, अग्नौ तिष्ठति, कूपे तिष्ठतीति । धर्मलक्षणा वा स्यात् । रथंतरधर्मा वा कवतीषु रथंतरशब्देनातिदिश्यन्ते । यथा, रथंतरे प्रस्तूयमाने पृथिवीं मनसा ध्यायेदित्येवमादयः । यथाऽऽचार्ये प्रोषिते, आचार्यानी भवतामाचार्य इत्याचार्यशुश्रूषाऽऽचार्यान्यामतिदिश्यते ॥ १२ ॥

अपि तु कर्मशब्दः स्याद्भावोऽर्थः प्रसिद्धग्रहणत्वाद्विकारो ह्यविशिष्टोऽन्यैः ॥ १३ ॥ सि०

अपि तु नैवं स्यात्—ऋचः सामशब्दः । तस्याश्च प्रदेश इति । तथा देशलक्षणा धर्मलक्षणा वाऽऽश्रयणीया । अगतिश्चैषा यल्लक्षणापरिग्रहः । किं तर्हि । कर्मशब्दः स्यात् । रथंतरादिर्गानाख्यस्य संस्कारकर्मणो वाचकः । कुतः । उक्तो न्यायो, गीतिषु सामाख्या, इत्यत्र । तत्र गीतिविशिष्टायामृचि, एष शब्दो दृष्टः । न चागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यते । तस्माद्विशेषणं तावदभिधीयते । विशेषणप्रत्ययाच्च सहचरिते विशिष्टे प्रत्ययः । अतो नास्ति ऋचः शब्देन संस्पर्श इति । तेनैव न्यायेन गीतिनामधेयमिति ब्रूमः ।

किंच प्रसिद्धग्रहणत्वात् । अयं च गायतीति शब्दो गानक्रियायां प्रसिद्धः । का पुनरसौ शब्दस्योच्चारणविशेषः । गायति गानं करोतीति । तद्ग्रहणश्च रथंतरादिशब्दः । तद्वचन इत्यर्थः । तेन समुच्चारणादृद्धिलीससामर्थ्याच्च । यथा, आसारितकं गायतीति, वर्धमानकं गायतीति । ननु शब्दवचनेनापि समुच्चारणं भवति, गाथां गायति, ऋचं

१ अतिदेशः—पा० । २ ( अ० २ पा० १ अ० ११ सू० ३६ ) ।

गायतीति सत्यम्। विपरिणम्य तु शब्दं, गानेन ऋचं संस्करोतीति यथानिपतितेनार्थेन न संबध्यते, गानं करोति ऋचमिति। तस्माद्गीतिवचनः। इतश्च गीतिवचनः। कुतः। विकारो ह्यविशिष्टोऽन्यैः। विकारश्चात्र ऋगुद्रव्यस्य दृश्यते। ह्रस्वानामक्षराणां दीर्घता, दीर्घाणां च ह्रस्वत्वम्। विवृतानां संवृतत्वं, संवृतानां विवृतत्वम्। सोऽविशिष्टोऽन्यैः संस्कारकर्मभिः। यथाऽवहन्तिना व्रीहीणां तण्डुलीभावः, पिषिणा तण्डुलानां पिष्टीभावः। तस्माच्छब्दानां संस्कारो गानाख्यो रथंतरादिभिः शब्दैरुच्यते। तस्यायं प्रदेशो, रथंतरमुत्तरयोर्गायतीत्येवमादिः ॥ १३ ॥

अद्रव्यं चापि दृश्यते ॥ १४ ॥

अपि चाद्रव्यं साम दृश्यते। द्रव्यशब्दश्छन्दोगैर्ऋक्ष्वाचरितः। अद्रव्यम्—अनृचमित्यर्थः। अनृचं साम दृश्यते, प्रजापतेर्हृदयमनृचं गायतीति। प्रजापतिहृदयं नाम साम। तदनृच्युत्पन्नम्। यदि ऋचि सामशब्दः, कथं प्रजापतिहृदयमनृचं स्यात्। अथ गीतावेव सामशब्दस्ततो विनाऽपि ऋचा गीतिर्भवति। तत्रैतदुपपद्यते, प्रजापतेर्हृदयमनृचं गायतीति। तस्मादपि गीतिः साम ॥ १४ ॥

ननूक्तं, संस्कारकर्मत्वेऽनर्थकोऽकर्मकाले प्रयोग इति। तत्र ब्रूमः—

तस्य च क्रिया ग्रहणार्था नानार्थेषु विरूपित्वादर्थो ह्यासामलौकिको विधानात् ॥ १५ ॥

तस्य क्रियाऽकर्मकाले ग्रहणार्था, शिक्षितुमभ्यासितुं च। नानार्थेषु नानाभूतेष्वर्थेषु, भिन्नेष्वित्यर्थः। विरूपित्वात्। आश्रयभेदाद्विविधरूपं यद्गानं भवति, तदनृचं शिक्षितव्यमभ्यसितव्यं च प्रयोगमाशुभावाय। भूमिरथिकवत्। तद्यथा, भूमिरथिको भूमौ रथमालिख्य योग्यतां करोति। सा तस्य प्रयोगकाले सौकर्यमुत्पादयति। अर्थो ह्यासां रथंतरादिसंज्ञानां न लौकिके व्यवहारे सिद्धः। यथा, अवहन्त्यादीनाम्। कुतः। विधानात्। विधीयते ह्यसौ शिष्योपाध्यायसंबन्धेन,

१ गीतेः साम—पा०। २ योग्यां—पा०। ३ तस्य योग्या प्र—पा०।

एवं रूपं रथंतरं भवतीति । न लौकिको विज्ञायते । तस्मान्न परिचोदनैषा, अकर्मकाले प्रयोगादिति ॥ १५ ॥

अथ यदुक्तं, संज्ञापृथक्त्वादिति । तत्रोच्यते—

**तस्मिन्संज्ञाविशेषाः स्युर्विकारपृथक्त्वात् ॥ १६ ॥**

तस्मिन्—एकस्मिन्नपि गानाख्ये संस्कारे, संज्ञाविशेषा भवेयुः । कुतः । विकारपृथक्त्वात् । तुल्येऽपि गानत्वे गानविशेषो भवति[1] । गानविशेषाच्च संज्ञापृथक्त्वम् । यथा, आसारितकं, वर्धमानकगीतिः । अन्यथालक्षणाऽऽसारितकगीतिः । अन्यथालक्षणा वर्धमानकगीतिः । एवमिहाप्यन्यथालक्षणा रथंतरगीतिः, अन्यथालक्षणा बृहद्गीतिः[2] । तस्मात्संज्ञापृथक्त्वम् ॥ १६ ॥

**योनिशस्याश्च तुल्यवदितराभिर्विधीयन्ते ॥ १७ ॥**

योनिश्चासौ शस्या, च योनिशस्या । योनिशस्याश्च ऋचः, तुल्यवदितराभिरयोनिशस्याभिर्विधीयन्ते । याज्याः शंसति, शिपिविष्टवतीः शंसति, रथंतरस्य योनिमनुशंसति, बृहतो योनिमनुशंसतीति । का तत्र[3] तुल्यता । शंसतिशब्देन विधानम्[4] । इह एतौ स्तौतिशंसतिशब्दौ समानेऽपि स्तुत्यर्थत्वे व्यवस्थितविषयौ । प्रगीतेषु मन्त्रवाक्येषु स्तौतिशब्दः, अप्रगीतेषु शंसतिशब्दः । यथा, प्रउगं शंसति, निष्केवल्यं शंसतीति । आज्यैः स्तुवते, पृष्ठैः स्तुवत इति । अतः शंसतिशब्देन विधानादप्रगीतामृचं रथंतरस्य योनिं दर्शयति । यदि च गीतिः रथंतरं, ततस्तस्याप्रगीता ऋग्योनिः । अन्यथाऽयं व्यपदेशो नोपपद्यते, रथंतरस्य योनिमिति । तस्माद्गीतिषु सामाख्या ॥ १७ ॥

**अयोनौ चापि दृश्यतेऽतथायोनि ॥ १८ ॥**

अयोनौ च साम दृश्यते । स्थाल्यां सक्त्ववधीयत इत्याहुर्यद्बृहद्गायत्रीषु क्रियतेऽपि चैनां रुजति । न चास्यां संभवतीति । बृहतो बृहती योनिः । तस्य गायत्रीषु प्राप्तिर्नास्ति, यदि ऋचः सामशब्दः । अथ नु गीतेः, ततः सा बृहद्गीतिर्गायत्रीषु वचनात्प्राप्ता । तस्या अयमनुवादो घटते, यद्गायत्रीषु क्रियत इति । अतथायोनि च साम दर्शयति । यादृशी यस्य योनिस्ततोऽन्यादृशे, यो वै विच्छन्दसि सामो-

---

१ तुल्येऽपि गाने विशेषो भवति—पा० । २ बृहती गीतिः—पा० । ३ तु—पा० । ४ अभिधानम्—पा० ।

इति स ऋचं संशृणाति, साम वा विलिशति, साम संशृणाति, ऋचं विलिशतीति । यतरद्द्रसीयस्तस्य विलेशः[1] । यतरद्द्वर्षीयस्तस्य संशरः[2] । तच्च गीतावेव साम्नि युज्यते, न ऋचि । ऊहतिशब्दश्च गीतावेव समर्थो न ऋचि । ऋक्चेत्, सैव यथाम्नायं पठ्यते । तत्र नास्त्यूहप्रसङ्गः । तस्मादपि गीतौ सामशब्दः ॥ १८ ॥

ऐकार्थ्ये नास्ति वैरूप्यमिति चेत् ॥ १९ ॥

यदुक्तं, तस्य क्रिया ग्रहणार्थेति । तत्र परिचोद्यते । ऐकार्थ्ये नास्ति वैरूप्यमिति । रथंतरगीतेर्बृहद्गीतिरर्थान्तरम् । तेन रथंतरगीतौ गृहीतायां बृहद्गीतिरगृहीता भवतीति युक्तो रथंतरे गृहीते बृहतः शिक्षार्थमकर्मकाले प्रयोगः । रथंतरगीतेस्त्वेक एवार्थः । तस्य योन्यां प्रयोगे शिक्षिते पुनरुत्तरासु न शिक्षितव्यम् । तास्वकर्मकाले प्रयोगः संस्कारकर्मत्वेन युक्तो भवति । तस्मान्न संस्कारस्य सामशब्द इति, स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति ॥ १९ ॥

स्यादर्थान्तरेष्वनिष्पत्तेर्यथा पाके ॥ २० ॥

स्याद्वैरूप्यम् । कुत एतत् । अर्थान्तरेष्वनिष्पत्तेः । ऋगन्तरेष्वाश्रय[3]भेदाद्भिद्यते । यथा पाके । यथैक एवायमर्थः पाको नाम । तस्यार्थान्तरे वैरूप्यं भवति । अन्यथालक्षण ओदनस्य पाकः, अन्यथालक्षणो गुडस्य । येनौदनपाको गृहीतो नासावशिक्षित्वा गुडं पक्तुं जानाति । तस्मात्तस्याप्यकर्मकाले प्रयोग उपपद्यते ॥ २० ॥

शब्दानां च सामञ्जस्यम् ॥ २१ ॥

एवं च सामशब्दानामृक्शब्दानां च सामञ्जस्यं भवति । कवतीषु रथंतरं गायतीति, कवतीशब्द ऋच एव वक्ष्यति, रथंतरशब्दश्च साम । इतरथा कवतीशब्दे वा देशलक्षणा स्यात् । रथंतरशब्दे वा धर्मलक्षणा । तस्माद्गीतौ सामशब्द इति ॥ २१ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये सप्तमाध्यायस्य
द्वितीयः पादः ॥

---

१ अधिकपरिमाणासु ऋक्षु सामगाने ऋक्शेषे सामादर्शनं विलेशः । २ न्यूनपरिमाणासु गाने सामैकदेशस्य लोपः संशरः । ३ आश्रयभेदात् । यथा—पा० ।

अथ सप्तमस्याध्यायस्य तृतीयः पादः ॥

( अग्निहोत्रादिनाम्नां धर्मप्रदेशकत्वाधिकरणम् ॥ १ ॥ )

## [ १ ] उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात् ॥ १ ॥ सि०

नाम्ना धर्मप्रदेशं वक्ष्याम इति, आदौ प्रतिज्ञातं सोऽयमुच्यते । कुण्डपायिनामयने श्रूयते, मासमग्निहोत्रं जुहोतीति । तत्रैतत्समधिगतं, नैयमिकादग्निहोत्रात्कर्मान्तरमेतदिति । अधुनाऽग्निहोत्रशब्दश्चिन्त्यते, कथमयं प्रयुक्त इति । तदर्थमारभ्यते । उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यादिति । उक्तमादौ, क्रियाभिधानं कर्मनामधेयमग्निहोत्रशब्द इति—तत्प्रख्यं चान्यशास्त्रमित्यत्र । तस्यान्यत्र श्रुतौ कौण्डपायिनामयनीये जुहोतौ विधिप्रदेशः स्यात्—धर्मप्रदेशः । नैयमिकस्याग्निहोत्रस्य ये धर्मास्तेऽस्मिन्ननेन नाम्नाऽतिदिश्येरन् । किं कारणम् । उच्यते । परशब्दोऽयं परत्र वृत्तः । परशब्दस्य परत्र वृत्तौ तद्वद्भावो गम्यते । स यत्र विज्ञातो भवति तत्रानूद्यते । यथा, सिंहो देवदत्त इति । यत्राविज्ञातस्तत्र विधीयते । यथा, अमी पिष्टपिण्डाः सिंहाः क्रियन्तामिति । इह चाविज्ञातोऽस्य जुहोतेरग्निहोत्रवद्भावः । तस्मात्स विधीयते । मासमग्निहोत्रं जुहोतीति, अग्निहोत्रवज्जुहोतीति । कथं पुनरसति वतिप्रत्यये वत्यर्थः शक्योऽवगन्तुमिति । उच्यते । साहचर्यात् । अग्निहोत्रशब्दोऽयं कर्मणा संबद्धस्तत्सहचरितदोहनादिधर्मवत्तां लक्षणया शक्नोति गमयितुम् । शक्नोति चेद्गमयितुं, प्रदेष्टुमपि शक्ष्यति ।

---

नैयमिकस्याग्निहोत्रशब्दो नामधेयमित्युक्तम् । पुनरुच्चार्यमाणो धर्मातिदेशको भवति । कथम् । अग्निहोत्रस्य याऽवगतेतिकर्तव्यता तां शक्नोति लक्षयितुं विनाऽपि वतिना । ( न )वाक्यसंयोगात् । न चायं गुणविधिः, तद्धितचतुर्थ्योरभावात् । उच्चार्यमाण एव विज्ञातं नामिनमवबोधयति । उभयत्र नामधेयमिति चेत् । तन्न । नामधेयं विशिष्टे

---

१ ( अ० २ पा० ३ अ० ११ ) इत्यत्रेति शेषः । २ ( अ० १ पा० ४ अ० ३ सू० ४ ) । ३ प्रवृत्तः—पा० । ४ जुहोति—पा० । ५ शक्नोति—पा० । ६ ( अ० १ पा० ४ अ० ३ सू० ४ ) इत्यत्रेति शेषः । ७ वाक्यसंयोगादिति—प्रकरणान्तराधिकरणे जुहोतिरयं कर्मान्तरवचन इत्युक्तम् । एवं च परशब्दसामानाधिकरण्यादग्निहोत्रशब्दो गौण इति भावः ।

एवमन्तरेणापि वर्ति, वत्यर्थः शक्योऽवगन्तुमिति ॥ १ ॥

अपूर्वे वाऽपि भागित्वात् ॥ २ ॥

वाऽपीति विपर्यासेन प्रयुङ्क्ते । अपि वेत्यर्थः । अपि वाऽपूर्वे एते उभे अपि कर्मणी स्यातां, न कौण्डपायिनामयनीयो जुहोतिर्नैयमिकपूर्वः । साधारणं च नामधेयमुभयोः । कुतः । भागित्वात् । अयमपि जुहोतिर्भागी एतस्य नामधेयस्य । यथैव तत्र, अग्निहोत्रं जुहोतीति समुच्चारणम्, एवमिहापि । तत्र तुल्ये समुच्चारणे तस्यैवैतन्नामधेयं नास्येत्यत्र विशेषहेतुर्नास्ति । तस्मादुभयोः साधारणं नामेति नास्ति धर्मपदेशः ॥ २ ॥

नैतद्युक्तम् । कुतः ।

नाम्नस्त्वौत्पत्तिकत्वात् ॥ ३ ॥

औत्पत्तिको हि नामिनाम्नोः संबन्धः । यन्नाम यस्मिन्नर्थे औत्पत्तिकेन संबन्धेन प्रसिद्धं, तस्मिन्नेव सदा विज्ञेयं, नान्यत्र च । तथाऽव्यवस्थायां, शब्दार्थे विश्वासो न स्यात् । उक्तम्, अन्यायश्चानेकार्थत्वमिति । यदा च नोभयार्थस्तदा नैयमिकं तावदाह । तत्साद्गुण्यविधानार्थं चेतरत्रापि प्रयोग उपपद्यत इति नास्तीतराभिधानत्वे हेतुः । तस्माद्विधिप्रदेशः स्यात् ॥ ३ ॥

अत्राऽऽह । कस्मात्पुनस्तन्नामधेयमिदमिह प्रयुक्तमित्युच्यते, न पुनरेतन्नामधेयं तत्रेति । तत आह—

प्रत्यक्षाद्गुणसंयोगात्क्रियाभिधानं स्यात्तदभावेऽप्रसिद्धं स्यात् ॥ ४ ॥

नैयमिकेऽग्निहोत्रे प्रत्यक्षो गुणसंयोगः । प्रत्यक्षविहिता धर्माः सन्ति । इत्थं दोग्धि, इत्थं श्रपयति, चतुरुन्नयति, खादिर्याग्निहोत्रसमिन्धनति, इत्थं जुहोति, एतस्मिन्काले जुहोतीत्येवं प्रत्यक्षाद्गुणसंयोगान्नैयमिकस्य तन्नामधेयम् । इह प्रयुज्यमानं दोहनादिक्रियाभिधानं स्यात् ।

भवति । न चेह विशिष्टताऽस्ति, द्रव्यदेवताभावात् । उभयत्र च नामधेयत्वेऽदृष्टा शक्तिः कल्प्या ॥ १ ॥ [ २ ॥ ३ ॥

१ तत्राऽऽह—पा० । २ नामधेयत्वाददृष्टा—पा० ।

धर्मप्रदेशकमित्यर्थः । अस्य पुनर्जुहोतेर्न केचिद्धर्माः सन्ति । तदभावे—तेषां धर्माणामभावे, अप्रसिद्धं स्यात् । न प्रज्ञायेत, किमर्थमयमग्निहोत्रशब्द इह प्रयुक्त इति ।

एवं वा । प्रत्यक्षो गुणसंयोगो, नैयमिकस्य द्रव्यदेवतासंयोगः । दध्ना जुहोति, पयसा जुहोति, अग्नये च प्रजापतये च सायं जुहोतीति । एतस्मात्प्रत्यक्षाद्गुणसंयोगात्क्रियाभिधानं स्यात् । कर्मनामधेयम् । इत्थंरूपो जुहोतिरग्निहोत्राख्य इति । अथेतरजुहोते रूपं नास्ति । तदभावेऽप्रसिद्धं स्यात्, न ज्ञायेत कीदृशं तदग्निहोत्रमिति । ननु मासोऽस्य रूपं भविष्यति । न मासः कर्माङ्गं, कर्तृधर्मः सः । अपि च, अग्निहोत्रं तु मासे विधीयते, न मासेनाग्निहोत्रं रूप्यते । तस्मान्नैयमिकस्यैतन्नामधेयमितरत्र तद्वदतिदेश इति ॥ ४ ॥

( प्रायणीयनाम्नो धर्मानतिदेशकत्वाधिकरणम् ॥ २ ॥ )

किमेष एवोत्सर्गः, सर्वं कर्मनामान्यत्र श्रूयमाणं धर्माणां ग्राहकमिति । एवं खलु प्राप्तम् । एवं प्राप्त इदमारभ्यते—

[२] अपि वा सत्रकर्मणि गुणार्थैषा श्रुतिः स्यात् ॥५॥ सि०

गवामयने श्रूयते, वैश्वानरो ज्योतिष्टोमः प्रायणीयमहर्भवतीति । अस्ति तु द्वादशाहे प्रथममहः प्रायणीयं नाम, प्रायणीयोऽतिरात्र इति । तयोर्नानात्वं तेनैव न्यायेन सिद्धं प्रकरणान्तरे प्रयोजनान्यत्वामिति ।

तत्रायं प्रायणीयशब्दः परत्रापि श्रूयमाणो न धर्माणां ग्राहकः । किं तर्हि । गुणार्थैषा श्रुतिः । कथम् । लक्षणया नामधेयं धर्माणां ग्राहकमुक्तम् । असति च श्रुत्यर्थे लक्षणार्थो ग्राह्यः । इह तु श्रुत्यर्थ एव संभवति । गुणार्थ एष शब्दः । गुणेन—क्रियायोगेन, तस्मिन्कर्मणि श्रुत्यैव प्रयुज्यते । प्रयान्ति अनेनेति प्रायणीयं, प्रवर्तन्तेऽनेन सत्र इति । वाक्यशेषश्चास्यैतमेवार्थमाह । ज्योतिरेव पुरस्ताद्दधातीति । येन ज्योतिः प्रायणीयं भवति, तेन ज्योतिः पुरस्तात्क्रियत इत्यर्थो, ज्योतिरेव पुरस्ताद्दधातीति । तस्मान्नायमतिदेशः ॥ ५ ॥

---

॥ ४ ॥ ]

प्रयन्त्यनेनेति प्रायणीयमित्यनेन योगेन द्वादशाहे, इयं संज्ञा प्रवृत्ता । गवामयनेऽप्ययं योगो विद्यत एवेति धर्मातिदेशो नास्ति । यत्र तु पञ्चमः षष्ठो वा प्रायणीयः, तस्य योगाभावादनुदाहरणत्वम् । तस्मात्तादृशो न पूर्वाधिकरणापवादः ॥ १ ॥

---

१ अर्थान्तरस्य जुहोतेः—पा० । २ ( अ० २ पा० ३ अ० ११ सू० २४ ) ।

( विश्वजिति षाडहिकषट्पृष्ठातिदेशाधिकरणम् ॥ ३ ॥ )

### [३] विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वाज्ज्यौतिष्टोमिकानि पृष्ठान्यस्ति च पृष्ठशब्दः ॥६॥ पू०

विश्वजित्सर्वपृष्ठो भवतीति श्रूयते । तत्र विचार्यते । किमयमनुवादो विधिर्वेति । किं प्राप्तम् । अनुवाद इति । कुतः । यो ह्यसर्वपृष्ठस्तस्य सर्वपृष्ठता विधेया । यस्तु सर्वपृष्ठ एव, तस्य तया किं विहितया । अयं च सर्वपृष्ठ एव । कथम् । तत्पूर्वकत्वात् । ज्योतिष्टोमपूर्वकत्वात् । ज्योतिष्टोमिकानि स्तोत्राण्यत्र प्राप्यन्ते । तेषु माहेन्द्रस्तोत्रादीनि चत्वारि सन्ति । तानि सर्वाण्यस्य । तैरयं सर्वपृष्ठो भवति । ननु न तानि पृष्ठानि । उच्यते । अस्ति च पृष्ठशब्दः । तेष्वस्ति पृष्ठशब्दः । सप्तदशानि पृष्ठानीति । तस्मादनुवादः ॥ ६ ॥

### षडहाद्वा तत्र हि चोदना[१] ॥ ७ ॥

नायमनुवादः । किं तर्हि । विधिः । अनुवादोऽप्रवृत्तिविशेषकरोऽनर्थकः स्यात् । अपि च, ज्योतिष्टोमे न पृष्ठबहुत्वमस्ति, यस्यायमनुवादः स्यात् । षडहे तु तदस्ति । तत्र हि चोदना, पृष्ठानां रथंतरं पृष्ठं भवतीत्येवमाद्याः । तस्मात्षाडहिकानामातिदेशिको[२] विधिरिति ॥ ७ ॥

---

[ ॥ १ ॥ ]

ज्योतिष्टोमे ' रथंतरं पृष्ठं भवति ' इत्येकस्य पृष्ठस्य विहितत्वात्सर्वशब्दस्य विधेयाभावाद्वाक्यानर्थक्यं प्रसज्यते । षडहे च गायत्रं प्रकृत्य सर्वाणि पृष्ठानि कार्याणीति विहितं, तत्र सर्वपृष्ठशब्दावर्थवन्तौ । ज्योतिष्टोमे च छत्रिन्यायेन पृष्ठशब्दप्रयोगाल्लक्षणा । ' सप्तदशानि पृष्ठानि ' इति च सप्तदशता विधीयते न पृष्ठता । न च विकल्पप्राप्तयोः समुच्चयेनार्थवत्ता । व्यर्थत्वादेव सर्वशब्दस्य । सर्वपृष्ठ इति च समासोऽयम् । समासेन च विदधतो नानेकगुणविधानं दुष्करम् । अथवा[३] पृष्ठगता[४] सर्वता[५] साक्षाद्विधीयते न पृष्ठानि । न चाविधाय पृष्ठानि तत्सर्वता शक्या विधातुम् । तस्मादर्थापत्त्या पृष्ठानां[६] विधानम् । तस्मात् षाडहिकानि सर्वपृष्ठानि विधीयन्ते । एवं च क्रमविधिपरं वाक्यमुपपत्स्यते तस्मिन्विश्वजिति ॥ ७ ॥

---

१ चोदना—पा० । २ अतिदेशको—पा० । ३ भाष्यकारीयं वाक्यभेदपरिहारप्रकारान्तरं दर्शयति—अथवेति । ४ पृष्ठेषु सर्वता विधीयते—पा० । ५ सर्वता—पा० । ६ सर्वपृष्ठानां विधानम् । एवं च—पा० ।

## लिङ्गाच ॥ ८ ॥

लिङ्गं चैतमर्थं दर्शयति । पवमाने रथंतरं करोति, आर्भवे बृहत् । मध्ये इतराणि । वैरूपं होतुः साम, वैराजं मैत्रावरुणस्य, रैवतं ब्राह्मणाच्छंसिनः शाक्वरमच्छावाकस्येति विनिवेशपरे वाक्ये षाडहिकानि पृष्ठानि दर्शयति ॥ ८ ॥

## उत्पन्नाधिकारो ज्योतिष्टोमः ॥ ९ ॥

अथ यदुक्तम्, अस्ति च पृष्ठशब्द इति । तत्र ब्रूमः । न त्वेष औत्पत्तिकः पृष्ठशब्दः । उत्पन्नानां स्तोत्राणामसावधिकारः । यान्येतानि पृष्ठानीति । ज्ञाते च तेषां पृष्ठत्वे तदुपपद्यते, न च तत्र ज्ञातम् । कथं तर्ह्ययमनुवादः । लिङ्गसमवायात् । एकं तत्र माहेन्द्रस्तोत्रमिति । षाडहिकानां पुनः पृष्ठत्वं ज्ञातम् । कथम् । तत्र हि चोदनेत्युक्तम् । तेषां वादे, श्रौतः पृष्ठशब्दस्यार्थः परिगृहीतो भवति । इतरथा लाक्षणिकः । तस्मात्षाडहिकानां प्रदेश इति ॥ ९ ॥

## द्वयोर्विधिरिति चेत् ॥ १० ॥

इति चेत्पश्यसि षाडहिकानां पृष्ठानां विधिरिति । नैतद्युक्तम् । किं कारणम् । द्विकर एवं सर्वपृष्ठशब्दोऽभ्युपगतो[1] भवति, पृष्ठानि च विदधाति । तेषां च सर्वत्वम् । अस्तु, को दोषः । असंभव इत्याह । यदि पृष्ठशब्दः पृष्ठानि विदधाति, सर्वशब्देन न शक्यते विशेषयितुम् । अथानुवदति, तथा शक्यते । पृष्ठानि त्वविहितानि भवन्ति । तेष्वसत्सु कस्येदं सर्वत्वं विधीयते । उभयक्रियायाश्चासंभवः । अथात्र बृहद्रथंतरयोर्विकल्पेन प्राप्तयोः सामस्त्यं केवलं विधीयते, सर्वपृष्ठो भवतीति । उभे अपि बृहद्रथंतरे भवतो नैकमिति । ततोऽयं दोषो न भवति । तस्माद्द्वयोरविकारः ॥ १० ॥

## न व्यर्थत्वात्सर्वशब्दस्य ॥ ११ ॥

नैवमेतत् । कुतः । व्यर्थत्वात्सर्वशब्दस्य । एवं सति सर्वशब्दो व्यर्थो भवति, अर्थशून्यः । अयं हि बहुविषयो द्वयोर्न युज्यते । षाडहिकानां तु विधाने नैष दोषः । ननु च तत्रापि द्विकरः शब्दो भविष्य-

[ ८ ॥ ९ ॥ १० ॥

[1] अभ्युपगम्यते—पा० ।

ति । उच्यते । न भविष्यति । सर्वत्वं केवलं पृष्ठानां विधास्यति, न पृष्ठानि । ननूक्तं, पृष्ठेष्वसत्सु कस्येदं सर्वत्वं विधीयत इति । उच्यते । पृष्ठानां सर्वत्वं हि विहितम् । तत्संपादयितव्यम् । न च पृष्ठान्यकुर्वता तत्संपादयितुं शक्यते । तत्रार्थात्पृष्ठानि करिष्यति । एवं न दुष्यर्थः शब्दो भविष्यति । सर्वशब्दश्च समर्थितः । तस्मात्षाडहिकानामतिदेश इति ॥ ११ ॥

( अवभृथनाम्नः सौमिकावभृथधर्मातिदेशकत्वाधिकरणम् ॥ ४ ॥ )

## [ ४ ] तथाऽवभृथः सोमात् ॥ १२ ॥ सि०

वरुणप्रघासेषु श्रूयते, वारुण्या निष्कासेन तुषैश्चावभृथं यन्तीति । तत्र संदेहः । किं दार्शपूर्णमासिकेऽपां न्युत्सेके तुषनिष्कासं विधीयत उत सौमिकादवभृथाद्धर्मातिदेश इति । किं युक्तम् । दार्शपूर्णमासिके गुणविधिः । एवं संनिहितमत्ययोऽनुगृह्यते । संनिहितो ह्यसौ चोदकेन प्रापितः । ननु नासाववभृथः । उच्यते । अस्ति तत्रावभृथशब्द इति । एष वै दर्शपूर्णमासयोरवभृथ इति ।

एवं प्राप्त इदमाह । तथाऽवभृथः सोमात् । यथा षडहात्पृष्ठानामतिदेश एवं सौमिकादवभृथादिह धर्मातिदेशः । कुतः । अभिहितो न्यायः, उक्तं क्रियाभिधाने तच्छ्रुतावन्यत्र विधिप्रदेशः स्यादिति ॥ १२ ॥

## प्रकृतेरिति चेत् ॥ १३ ॥

अथ यदुक्तं, दार्शपौर्णमासिकेऽवभृथे गुणविधिर्भवत्विति । तस्य कः परिहार इत्याभाषान्तं सूत्रम् ॥ १३ ॥

## न भक्तित्वात् ॥ १४ ॥

नैतद्युक्तम् । कुतः । यतो नास्ति दर्शपूर्णमासयोरवभृथः । ननु, एष वै दर्शपूर्णमासयोरवभृथ इति श्रूयते । सत्यं श्रूयते, न त्वेवमवभृथत्वमस्य भवति । कथम् । उच्यते । एष वै दर्शपूर्णमासयोरवभृथ इत्येतस्य वाक्यस्य द्वयी वचनव्यक्तिः । निर्ज्ञातावभृथत्वस्य वा पदार्थस्य दर्शपूर्णमाससंबन्ध उच्यते । यथा देवदत्तो यज्ञदत्तस्य पुत्र इति, नि-

॥ ११ ॥ ॥ १२ ॥ १३ ॥

१ ( अ० ७ पा० ३ अ० १ सू १ ) । २ निर्णीतावभृथत्वस्य—पा० ।

ज्ञातपुत्रत्वस्य देवदत्तस्य यज्ञदत्तसंबन्ध उच्यते । निर्ज्ञातसंबन्धस्य वाऽ-विर्ज्ञातावभृथत्वस्यावभृथत्वम् । यथा, अयमाम्रो यज्ञदत्तस्य पुत्र इति । निर्ज्ञातयज्ञदत्तसंबन्धस्याऽऽम्रपुत्रत्वमुच्यते । तदस्यापां न्युत्सेकस्य दर्शपूर्णमाससंबन्धः प्रकरणान्निर्ज्ञातो, नावभृथत्वम् । अतोऽस्यावभृथत्व-मुच्यते । न चायमवभृथः । नन्वयमप्यवभृथो भवतु । नैतद्युक्तम् । अन्याय्यो ह्यनेकार्थत्वम् । कथं तर्हि शब्दप्रयोगः । सादृश्यात् । किं सादृश्यम् । अप्सु संबन्धः । स एष भक्त्या प्रशंसावादोऽपां न्युत्से-कस्य, अवभृथ इवायमिति, यथा, आम्रे पुत्रवादः । तस्मान्नास्ति दर्श-पूर्णमासयोरवभृथः । अतो नात्र गुणविधिः ॥ १४ ॥

लिङ्गदर्शनाच्च ॥ १५ ॥

लिङ्गं चैतमर्थं दर्शयति । किं लिङ्गं भवति । एवमाह । नाऽऽयुर्दा जुहोति, न साम गायति, न वा गमनमन्त्रं जपतीति, सौमिकावभृथध-र्माणां प्रतिषेधं कुर्वंस्तद्धर्मप्राप्तिं दर्शयति । तस्मात्सौमिकादवभृथाद्धर्म-प्रदेश इति ॥ १५ ॥

( वारुणप्रघासिकावभृथस्य तुषनिष्कासद्रव्यकत्वाधिकरणम् ॥ ९ ॥ )

[५] द्रव्यादेशे तद्द्रव्यः श्रुतिसंयोगात्पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् ॥ १६ ॥ सि०

वारुणप्रघासिकोऽवभृथः सौमिकादवभृथाद्धर्माणां ग्राहक इत्युक्तम् । तत्रेदं चिन्त्यते । किं पुरोडाशद्रव्यकोऽसावुत तुषनिष्कासद्रव्यक इति । किं प्राप्तम् । पुरोडाशद्रव्यक इति । कुतः । नाम्ना पुरोडाशः प्राप्यते । ननु प्रत्यक्षश्रुतं तुषनिष्कासम् । सत्यं प्रत्यक्षश्रुतं, न तु शक्यते विधा-तुम् । अवभृथोऽत्र विधीयते, अवभृथं यन्तीति । यदि तुषनिष्कासमपरं विधीयते, ततो वाक्यं भिद्येत । अवभृथं यन्ति, तच्च तुषनिष्कासेनेति । तुषनिष्कासश्रवणमिदानीं किमर्थम् । अनर्थकम् । संबन्धाभावात् ।

एवं प्राप्ते ब्रूमः । द्रव्यादेशे तद्द्रव्यः । द्रव्यादेशे, एतस्मिंस्तुषनि-ष्कासेनावभृथं यन्तीति । तद्द्रव्यः स्यात्, तुषनिष्कासद्रव्यः । कुतः । श्रुतिसंयोगात् । तुषनिष्कासं प्रत्यक्षश्रुतं, पुरोडाशस्त्वानुमानिकोऽनि-देशेन प्राप्यते ।

---

॥ १४ ॥ १९ ॥

ननु पुरोडाशोऽपि प्रत्यक्षश्रुतो नाम्ना । यद्यपि प्रत्यक्षश्रुतः, सामान्येन तु प्राप्यते । तुषनिष्कासं तु विशेषेण । बाध्यते च सामान्यं विशेषेण। अपि च, लक्षणया पुरोडाशो गम्यते, श्रुत्या तुषनिष्कासम्। श्रुतिलक्षणयोश्च श्रुतिर्न्यायया[1] । तस्मात्तुषनिष्कासद्रव्यक इति । अथ यदुक्तं न संबध्यतेऽवभृथेन तुषनिष्कासं, वाक्यभेदप्रसङ्गादिति । तत्र ब्रूमः। यद्यवभृथं विहाय तुषनिष्कासं विधीयते, ततो वाक्यभेदः स्यात्। तुषनिष्कासद्रव्यकोऽपूर्वोऽवभृथश्चोद्यते । तथा, सगुणकर्मविधानमविरुद्धम् । अविधीयमाने च तुषनिष्कासे तद्ग्रहणमनर्थकमेव स्यात् । तस्मात्तुषनिष्कासद्रव्यकः । पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् । यद्यत्र प्रत्यक्षश्रुतं न द्रव्यं स्यात्ततः पुरोडाशस्तत्प्रकृतित्वात्स्यात् । अत्र तु प्रत्यक्षश्रुतं तुषनिष्कासम् । तस्मान्न पुरोडाशः ॥ १६ ॥

( वैष्णवशब्दस्य सोमिकातिथ्येष्टिधर्मातिदेशकत्वाधिकरणम् ॥ १ ॥ )

[ ६ ] गुणविधिस्तु न गृह्णीयात्समत्वात् ॥ १७ ॥ सि०

आतिथ्ये श्रूयते, वैष्णवो नवकपालो भवतीति । तथा राजसूये, पूर्वैर्मासैस्त्रिसंयुक्ते वैष्णवस्त्रिकपाल इति । तत्र विचारः । योऽयं त्रिसंयुक्ते वैष्णवस्त्रिकपाल इति वैष्णवशब्दः, अयमातिथ्यधर्माणां ग्राहको नेति । किं युक्तम् । ग्राहक इति । कुतः । विहितधर्मके कर्मणि दृष्टः शब्दोऽन्यस्मिन्नविहितधर्मके श्रूयमाणो धर्माणां ग्राहक इत्युक्तम् , उक्तं क्रियाभिधानमित्यत्र । तत्रायमपि विहितधर्मक आतिथ्ये दृष्टः । इदानीमविहितधर्मके त्रिसंयुक्ते दृश्यते । तस्माद्धर्माणां ग्राहक इति ।

एवं प्राप्ते ब्रूमः । गुणविधिस्तु न गृह्णीयात्समत्वात् । गुणविधिरयम् । आतिथ्यस्य गुणं विष्णुदेवतासंयोगं विदधाति । स एव धर्मान् ग्रहीतुं न शक्नोति । कुतः । समत्वात् । समो ह्ययमातिथ्ये, त्रिसंयुक्ते च । यथा तत्र विष्णुदेवतां विदधाति, एवमत्रापि। श्रुत्यर्थासंभवाच्च लक्षणया धर्माणां ग्राहकः कल्प्यते । इह च प्रत्यक्षश्रुत्यर्थ एव संभवति देवताविधिः । तस्मान्नायं ग्राहक इति ॥ १७ ॥

---

॥ १६ ॥ १७ ॥

---

१ श्रुतिर्बलीयसी—पा० । २ ( अ० ७ पा० ३ अ० १ सू० १ )

( निर्मन्थ्यादिशब्दानां धर्मानतिदेशकत्वाधिकरणम् ॥ ७ ॥ )

[७] निर्मन्थ्यादिषु चैवम् ॥ १८ ॥ सि०

पशावग्नीषोमीये धर्मवान्निर्मन्थ्योऽग्निराम्नातः। साध्या वै देवा इत्यारभ्याग्नौ श्रूयते, निर्मन्थ्येनेष्टकाः पचन्तीति । तथा, दर्शपूर्णमासयोर्बर्हिराज्ये धर्मवती । पशौ श्रूयते, बर्हिषा यूपावटमवस्तृणातीति, आज्येन यूपमनक्तीति । तत्र संदेहः । किं निर्मन्थ्यादयः शब्दा धर्माणां ग्राहका नेति । तत्राधिकरणातिदेशः क्रियते । निर्मन्थ्यादिषु चैवम् । यथा वैष्णवशब्दे । अत्राप्ययं यौगिको निर्मन्थ्यशब्दः सद्योनिर्मथितमग्निमाह । तथा बर्हिराज्यमिति द्रव्यशब्दो । ते त्रयोऽपि स्वार्थं विधाय कृतार्था भवन्ति, धर्मान् ग्रहीतुं न शक्नुवन्ति । तस्मान्न ग्राहकाः ॥ १८ ॥

( प्रणयनशब्दस्य सौमिकप्रणयनधर्मानतिदेशकत्वाधिकरणम् ॥८॥ )

[८] सौमिकं तु प्रणयनमवाच्यं हीतरत् ॥१९॥ पू०

चातुर्मास्येषु श्रूयते, द्वयोः प्रणयन्ति, तस्मादृद्वाभ्यामेतीति । अस्ति तु सोमे प्रणयनं धर्मवत् । तथा दर्शपूर्णमासयोरधर्मकम् । तत्र संदेहः । किं सौमिकमेतत्प्रणयनमुत दार्शपौर्णमासिकमिति ।

तत्र सूत्रेणैवोपक्रमः । सौमिकं तु प्रणयनमवाच्यं हीतरत् । सौमिकमेतत्प्रणयनम् । किं कारणम् । अवाच्यं हीतरत्, दार्शपौर्णमासिकम् । चोदकेन प्राप्तत्वात् । कथं पुनरयं प्रणयतिशब्दः प्रणयनमात्रवचनः सन्सौमिकं प्रणयनविशेषं शक्नोति वक्तुम् । लक्षणयेति ब्रूमः । तीर्थशब्दवत् । तद्यथा, तीर्थशब्दस्तीर्थमात्रवचनः संस्तीर्थविशेषं धर्मसाधनं कदाचिद्ब्रूते, तीर्थयात्रां गत इति ॥ १९ ॥

उत्तरवेदिप्रतिषेधश्च तद्वत् ॥ २० ॥

न वैश्वदेवे उत्तरवेदिमुपवपन्ति, न शुनासीरीये, इति प्राप्तिपूर्वो हि प्रतिषेधो भवति । सौमिके च प्रणयन उत्तरवेदिर्न दार्शपौर्णमासिके ॥ २० ॥

---

॥ १८ ॥ १९ ॥ २० ॥ ]

---

१ 'प्रणयनं तु सौमिकमवाच्यं हीतरत्'—इत्यपि बहुषु पुस्तकेषु पाठो दृश्यते । परं तु गुरुपरम्पराप्राप्तपाठक्रममादृत्य स उपेक्षितः ।

## प्राकृतं वाऽनामत्वात् ॥२१॥ सि०

**प्राकृतं चैतत्प्रणयनं, दार्शपौर्णमासिकम् ।**

---

प्राकृते प्रणयने स्थिते 'परिसंख्यार्थं श्रवणम्' इत्येवमादीनि सूत्राणि परस्परेणासंबद्धानि । कथम् । यदा परिसंख्या भवति तदा द्वयोः प्रणयनाभावादाहवनीयाभावः । आहवनीयाभावाद्यागाभावः । न च दर्शपूर्णमासयोः प्रणयनं धर्मवत् । येन धर्मपरिसंख्यायां कृतायां प्रणयनं केवलं क्रियेत । गुणार्थमपि नोपपद्यते । कथम् । यत्र तस्मिन्नेव वाक्ये गुणिनमुच्चार्य गुणो विधीयते, यथा 'दध्ना जुहोति' 'शरमयं बर्हिर्भवति' तत्र भवति गुणविधिः । इह प्रणयनमुच्चार्य न कश्चिद्विधीयते । उत्तरवेदिविधिरिति चेत् । न । प्रणयनवाक्याद्वाक्यान्तर उत्तरवेदिग्रहणात् । अर्थवादोऽप्यनुपपन्नः । यत्र विधीयते तत्रार्थवादः । प्रणयनं दर्शपूर्णमासयोर्विधीयते । इह त्वविधानात्किमर्थवादेन ।

'मध्यमयोर्वा गत्यर्थवादादिति' । वरुणप्रघासशाकमेधयोर्विधीयमाने पुनः श्रवणादुपपद्यत एवार्थवादः । अस्मिन्पक्ष उक्तो दोषः परिसंख्येति ।

'प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधादिति' । इदमपि प्राकृते प्रणयने स्थिते न संबध्यते । ( यत्र प्रणयनं तत्राग्निः, तत्रैव चोत्तरवेदिः प्राप्नोत्यग्निसंस्कारिका । सा यत्र प्रतिषिध्यते तत्राग्निर्विद्यते । तत्र च प्रणयनम् । अनेन प्रतिषेधलिङ्गेन प्रथमोत्तमयोः प्रणयनम् ) । प्राकृते प्रणयने स्थिते संज्ञाया अभावः । अनियमपक्षस्य चानुत्थानं उत्तरवेदेश्चाप्रसङ्गात् । उत्तरवेदिप्रतिषेधेन यः पक्षः प्रथमोत्तमयोरिति तस्य मूलाभावः । 'मध्यमयोर्वा गत्यर्थवादात्' इत्युक्तम् । अविधानात्प्रणयनस्यार्थवादो न घटते ।

---

१ प्राकृतं वैतत्-पा० । २ 'सौमिकं तु प्रणयनम्' इत्यारभ्य 'परिसंख्यार्थं श्रवणम्' इत्यन्तैश्चतुर्भिः सूत्रैरेकमधिकरणम् । 'प्रथमोत्तमयोः प्रणयनम्' इत्यारभ्य 'औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः' इत्यन्तैस्त्रिभिः सूत्रैरपरमधिकरणमित्येवं भाष्यकारीयं सप्तसूत्रकमधिकरणद्वयपक्षं दूषयितुमारभते—प्राकृत इत्यादिना । ३ स्थिते—भाष्यकारीयप्रथमाधिकरणसिद्धान्तेनेति शेषः । ४ अर्थवाददूषणप्रसङ्गाद्भाष्यकारीयं द्वितीयाधिकरणसिद्धान्तसूत्रं तावद्दूषयितुमारभते—मध्यमयोरिति । ५ पुनः श्रवणादिति—प्रणयन इति शेषपूरणम् । ६ अस्मिन्पक्षे—विधानपक्षे । ७ प्रथमोत्तमयोरिति सूत्रतात्पर्यमाह—यत्रेत्यादिना । ८ ( ) एवंचिह्नान्तस्थाने पाठान्तरं 'यत्र प्रणयनं तत्राग्निः । तत्रैव चोत्तरवेदिप्रतिषेधात् । इदमपि प्राकृते प्रणयनम् । अनेन प्रतिषेधलिङ्गेन प्रथमोत्तमयोः प्रणयनम्' इति । अयं च पाठो न व्याख्यातृसंमतः । ९ इत्युक्तमिति—अस्य च दूषणमर्थवादत्वासंभवरूपं प्रागेव प्रसङ्गादुक्तमित्यर्थः ।

कुतः । अनामत्वात् । प्रणयनशब्दः सौमिकस्य प्रणयनस्य न नामधेयम् । नैतत्तस्य वाचकमित्यर्थः । यद्ययं तस्य वाचकः स्यात्ततस्तदिह ब्रूयात् । इदं तु पदार्थनामधेयं, पदार्थस्य प्राङ्नयनस्य वाचकम् । यस्यं वाचकं तदिह शक्नोत्यग्नेः प्राचीनं नयनं वक्तुम् । तच्चेहास्त्येव । तस्मात्तस्य वाचकः । एवं संनिहितप्रत्ययो न बाधितो भवति ।

अथ यदुक्तं तीर्थशब्दवद्भविष्यतीति । अत्र ब्रूमः । तीर्थशब्दोऽपि तीर्थमात्रमेव ब्रूते । तीर्थयात्रां गत इति तु, उक्त्वा कानिचित्तीर्थान्यनुक्रान्तानि । यतोऽसौ तद्विशिष्टार्थो विज्ञायते । यत्र तु केवलः प्रयुज्यते, तत्र तीर्थमात्रमेव ब्रूते । यथा, तीर्थे स्नाति तीर्थमेव हि समाना-

---

ननु वरुणप्रघासानां गुणवाक्यप्राप्तावेवायं तेषामेवात्रेति वादः स्यात् । कोऽयमर्थः । उपात्र वपन्तीति, अवान्तरप्रकरणाद्वरुणप्रघासानामेवोत्तरवेदेः प्राप्तत्वात्प्रथमोत्तमयोः प्रतिषेधानुपपत्तिमाह । तत्र प्रतिषेधे त्रीण्यपि पर्वाण्यनुकीर्तयेत् । यद्यवान्तरप्रकरणेन वरुणप्रघासानामुत्तरवेदिस्तत्र त्रयाणामेवोत्तरवेदेरभावात्सर्वत्र कार्यः प्रतिषेधः सामर्थ्यादिति । न चायमनुवादः । यत्रार्थवादत्वेन प्रतिषेधस्तत्र नित्यानुवादो भवति । तस्मादनारभ्य श्रवणाच्चातुर्मास्यानामुत्तरवेदिः प्रथमोत्तमयोः पर्युदस्यते । एवं प्राकृते प्रणयने सूत्राणि न घटन्त इत्यन्यथा वर्ण्यते ।

इह हि त्रयः पक्षाः । किं दार्शिकं प्रणयनं सौमिकमपूर्वं वेति । दार्शिकमुत्सूत्रं पक्षं कृत्वा, 'सौमिकं तु प्रणयनं' इत्यनेन निवार्यते । एवं तुशब्दोऽर्थवान्प्रणयनं तु । 'उत्तरवेदिप्रतिषेधश्च' तद्धाप्यस्य स्थानमेव । 'प्राकृतं वाऽनामत्वात्' इति चापूर्वं प्रणयनान्तरं वरुणप्रघाससाकमेधयोर्विधीयते । अग्निप्रणयनोत्तरकालम् । 'आहवनीयाद्धावग्नी प्रणयतः' इति श्रूयते । प्रागपि होमादाहवनीयः श्रुतश्रपणनिर्वापोपस्थानप्रायश्चित्तैः प्रयुक्तो विद्यते । तस्माच्च देशलक्षणार्थं आहवनीयशब्दः । एवं चेत्प्रणयनान्तरं विधीयते, प्राकृतं वेति—स्वाभाविकमित्यर्थः । 'अनामत्वादिति—भाष्यव्याख्यानमेव । प्रथमस्य प्रयोजनसूत्रमिदं 'परिसंख्यार्थं श्रवणं गुणार्थमर्थवादो वा' इति । यथासंभवमेतेषु पुनः श्रुतिर्योजनीया । 'प्रथमोत्तमयोः प्रणयनमु-

---

१ यस्य वाचकमिति क्वचिन्नास्ति । २ तस्माद्देशलक्षणार्थं इति सर्वत्र पाठः । परंतु चवर्ण आवश्यक इति भाति । ३ भाष्यं व्याख्यातमेव—पा० ।

नां भवतीति । अपि च संभवति श्रुत्यर्थे लक्षणार्थोऽग्राह्यः । संभवति चात्र श्रुत्यर्थः । तस्मान्न लक्षणार्थो ग्राह्य इति ॥ २१ ॥

परिसंख्यार्थं श्रवणं गुणार्थमर्थवादो वा ॥ २२ ॥

तत्राऽऽह यदुक्तम्—अवाच्यं हीतरदिति, तस्य कः परिहारः । उच्यते । परिसंख्यार्थं वा स्यात् । द्वयोः प्रणयन्ति, न चतुर्ष्विति । गुणार्थम् । अर्थवादार्थं वा । तस्माद्द्वाभ्यामेतीति । तत्र परिसंख्यायां तावत्त्रयो दोषाः । गुणोऽपि न कश्चिद्विधीयते । परिशेषादर्थवादार्थम् । नन्वर्थवादोऽपि निष्प्रयोजनः । प्रणयनस्य प्राप्तत्वात् । अर्थवादस्य प्रयोजनमुत्तरस्मिन्नधिकरणे वक्ष्यामः, मध्यमयोर्वा गत्यर्थवाद-दिति ॥ २२ ॥

( मध्यमयोरेव पर्वणोः प्रणयननिषेधाधिकरणम् ॥ ९ ॥ )

[९] प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात् ॥ २३ ॥ पू०

द्वयोः प्रणयन्तीति श्रूयते । तत्र संदेहः । कतरयोर्द्वयोरिति । अनियमे प्राप्ते, उच्यते । प्रथमोत्तमयोः प्रणयनम् । कुतः । उत्तरवेदिप्रतिषेधात् । तत्रोत्तरवेदिः प्रतिषिध्यते, न वैश्वदेव उत्तरवेदिमुपवपन्ति, न शुनासीरीये, इति । अस्मिन्प्रणयन उत्तरवेद्यामभिनिधानं विहितम् । अतो यत्र प्रणयनं, तत्रोत्तरवेदिप्राप्तिः । प्राप्तौ च सत्यां प्रतिषेधः । प्रथमोत्तमयोश्चासौ । तस्मात्तयोः प्रणयनमिति ॥ २३ ॥

---

त्तरवेदिप्रतिषेधात् ' इति मध्यमस्य पक्षस्य प्रयोजनमिदं सूत्रम् । द्वयोः पर्वणोः प्रणयनान्तरं भवति । उत्तरवेदिप्रतिषेधश्च तद्वदिति । ' औत्तरवेदिकोऽनारभ्यप्रतिषेधः ' इत्येतत्परिहारसूत्रं, भाष्यव्याख्यातमेव ॥ २१ ॥ [ २२ ॥ २३ ॥

---

१ अपि चासंभवति श्रुत्यर्थे लक्षणार्थो गृह्यते । सं—पा० । २ अत्राऽऽह । अथ यदुक्तम्—पा० । ३ द्वयोरिति—'मध्यमयो र्वा गत्यर्थवादस्त इति तृतीयस्य सिद्धान्तपक्षस्य प्रयोजन सूत्रमिति पूर्व शेषः । ४ ' सौमिके तु प्रणयनम् ' इत्यारभ्य सप्तसूत्रकं त्रिपक्षमेकमधिकरणमिति वार्तिककाराणामाशयः ।

मध्यमयोर्वा गत्यर्थवादात् ॥ २४ ॥ सि०

मध्यमयोर्वा पर्वणोः प्रणयनम् । कुतः । गत्यर्थवादात् । गत्यर्थवादेनैतद्द्वयोः प्रणयनमुच्यते । तस्माद्द्वाभ्यामेतीति । ऊरुसंस्तुते चैते पर्वणी, ऊरू वा एतौ यज्ञस्य, यद्वरुणप्रघासाः साकमेधाश्चेति । ऊरू च गमनसाधने, तत्रैवं स्तुतिसंबन्धो विज्ञायते । ऊरू यज्ञस्य, वरुणप्रघासाश्च साकमेधाश्चेति, तयोर्द्वयोः प्रणयन्ति । तस्माद्द्वाभ्यामूरुभ्यां यज्ञः समाप्तिं याति । प्रणयनेन हि तौ बलवन्तौ भवतः । अङ्गभूयस्त्वादिति । एतत्तदर्थवादस्य प्रयोजनम् ॥ २४ ॥

अथ यदुक्तम्, उत्तरवेदिप्रतिषेधादिति । तत्र ब्रूमः—

औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः ॥ २५ ॥

अनारभ्य कंचित्पर्वविशेषं, चातुर्मास्येषूत्तरवेदिराम्नाता, उपात्र वपन्तीति । तस्यानारभ्यविधेरयं प्रतिषेधः । ननु वरुणप्रघासानां गुणवाक्यप्राप्तावेवायं तेषामेव, अत्रेति वादः स्यात् । नैतदेवम् । प्रकरणाच्चातुर्मास्यानामेव । यदि वरुणप्रघासानां वादः स्यात्, तत्र प्रतिषेधे त्रीण्यपि पर्वाण्युत्कीर्तयेत् । अथोच्येत, द्वयोः पर्वणोर्वादो भवत्विति । अत्र ब्रूमः । न द्वयोः पर्वणोः प्रकरणं, वरुणप्रघासानां वा । वरुणप्रघासानां प्रकरणे द्वयोः पर्वणोरुत्कीर्तनं प्रतिषेधे न स्यात् । तस्माच्चातुर्मास्यानामेव वादः । नन्वेवमप्यर्थवादेनैतज्ज्ञातं, मध्यमयोः प्रणयनमिति । किमर्थं प्राप्तस्य प्रणयनस्य पुनःश्रवणमिति । अत्र प्रयोजनं नोक्तम् । असति प्रयोजनेऽन्यस्मिन्परिसंख्यार्थमेव भवति । तत्र दोषा उक्ताः । तस्माद्गुणार्थमेवैतच्छ्रवणम् । ननु नास्ति कश्चिद्गुणः । उच्यते । गुणः श्रूयते, उत्तरवेद्यामग्निनिधानम् । तस्मात्तदर्था पुनः श्रुतिः ॥ २५ ॥

( स्वरसामादिशब्दानां धर्मातिदेशकत्वाधिकरणम् ॥ १० ॥)

[१०] स्वरसामैककपालामिक्षं च लिङ्गदर्शनात् ॥ २६ ॥ सि०

---

॥ २४ ॥ २५ ॥

गवामयने श्रूयते, अभितो दिवाकीर्त्यमहः, त्रयः स्वरसामानो भवन्तीति। तेषां विशेषधर्मा आम्नाताः। यथा, सप्तदशा भवन्ति अंततयाऽतिग्राह्या गृह्यन्त इत्येवमादयः। पुनरन्यत्र श्रूयते, पृष्ठ्यः षडहो, द्वौ स्वरसामानाविति। तथा वैश्वदेवे श्रूयते, द्यावापृथिव्य एककपाल इति। तत्राऽऽम्नाता विशेषधर्माः, सर्वहुतं जुहोति, अपर्यावर्तयञ्जुहोतीति। पुनरपरत्र, काय एककपाल इति। तत्रैव श्रूयते, वैश्वदेव्यामिक्षेति। तत्रापि विशेषधर्माः केचिदाम्नाताः। पुनरन्यत्र, मैत्रावरुण्यामिक्षेति। तत्र संदेहः। किं स्वरसामशब्दोऽन्यत्र श्रूयमाणो गावामयनिकेभ्यः स्वरसामभ्यो धर्माणां ग्राहक उत नेति। एवमेककपालामिक्षाशब्दावपि।

तत्र, गुणविधिस्तु न गृह्णीयात्समत्वादित्यग्रहणे प्राप्ते, इदमुच्यते। स्वरसामैककपालामिक्षं च धर्माणां ग्राहकम्। किं कारणम्। लिङ्गदर्शनात्। लिङ्गं तत्र तादृशं दृश्यते। येन ज्ञायते, सर्व एते धर्माणां ग्राहका इति। स्वरसामसु तावत्, पृष्ठ्यः षडहो द्वौ स्वरसामानावित्युक्त्वाऽऽह। तत्र, यत्तृतीयं सप्तदशमहस्तत्त्रयस्त्रिंशस्य स्थानमभिपर्याहरन्ति, स उत्तराणां स्तोमानामव्यवायाय, त्रयाणां च सप्तदशानामनूचीनताया इति। यद्येतौ स्वरसामानौ गावामायनिकानां धर्माणां ग्राहकौ, तत्रैतावपि सप्तदशौ। तथाऽत्र त्रयः सप्तदशा अनूचीना भवन्ति। तत्रैतद्वचनं युज्यते, त्रयाणां सप्तदशानामनूचीनताया इति।

तथा—आग्रयणे, द्यावापृथिव्यमेककपालं विधायाऽऽह, यत्सर्वहुतं करोति, सा त्वेका परिचक्षा, हुतोऽहुतः पर्यावर्तते, सा द्वितीया। आज्यस्यैव द्यावापृथिव्यौ यजेतेति, आज्यविधिपरे वाक्ये सर्वहोमपर्यावृत्तिं च वैश्वदेविकौ धर्मौ प्राप्तौ दर्शयति। तथा मैत्रावरुण्यामामिक्षायां, न वाजिनेन प्रचरन्तीति वाजिनेज्यां वैश्वदेविकं धर्मं प्रतिषेधंस्ततो

---

अपवादापवादप्रसङ्गेनेदमारभ्यते। नामधेयेनातिदेशः। स्वराणि सामान्यस्येति यथैव गवामयने गुणविधित्वेऽतथेतरत्रापि, 'पृष्ठ्यः षडहः, द्वौ स्वरसामानौ' इति। आमिक्षैककपालावपि द्रव्यविधित्वाद्गुणविधी। एवं गुणविधित्वादतिदेशाभावे प्राप्ते, 'यैस्य

---

१ (अ० ७ पा० १ अ० ६ सू० १७)। २ (अ० ८ पा० १ अ० १ सू० २)।

धर्मप्राप्तिं दर्शयति । एतेभ्यो लिङ्गेभ्य एतज्ज्ञायते, यथास्वं धर्माणां ग्राहका इति । प्रतिपत्त्यर्थकर्म वाजिनेज्या, स्विष्टकृत्त्वात् मत्वैतदुक्तम् । आह । लिङ्गमपादिष्टम् । कुतः प्राप्तिरिति । उच्यते । लक्षणया प्राप्ति[१], लिङ्गात्तु लक्षणापरिग्रहः ॥ २६ ॥

चोदनासामान्याद्वा ॥ २७ ॥

स्वरसामत्वसामान्यात्, एककपालत्वसामान्यात्, आमिक्षासामान्याद्वा, यस्य लिङ्गमर्थसंयोगादित्यनेन प्राप्तिरिति ॥ २७ ॥

( अनोवासःप्रभृतिशब्दानामाकृतिनिमित्तताधिकरणम् ॥ ११ ॥ )

[११] कर्मजे कर्म यूपवत् ॥ २८ ॥ पू०

कश्चिच्छ्रूयते—वासो ददाति, अनो ददातीति । तत्र विचार्यते । किं वाससोऽनसश्च क्रिया प्राप्यत उत नेति । तत्राऽऽह । एवं तावत्परीक्ष्यम् । किं कर्मनिमित्तावेतौ शब्दावुताऽऽकृतिनिमित्ताविति । यदि कर्मनिमित्तौ, ततः प्राप्यते । अथाऽऽकृतिनिमित्तौ, ततो नेति । किं तावत्प्राप्तम् । कर्मनिमित्ताविति । कुतः । कर्मागमे तद्दर्शनात् । यदा तस्मिन् द्रव्ये, दारुणि सूत्रे वा दारुकारेण तन्तुवायेन वा कर्म कृतं भवति, तदैतौ शब्दौ प्रवर्तेते न प्राक् । अतो विज्ञायते कर्मनिमित्ताविति । यदा कर्मनिमित्तौ, तदेतदारभ्यते, कर्मजे कर्म यूपवत् ।

कर्मजे—एतस्मिन्वासआदौ द्रव्ये श्रूयमाणे, कर्म प्राप्यते । कथम् । यूपवत् । यथा यूपशब्दो जोषणादिक्रियानिमित्तः स यत्र श्रूयते, तत्र जोषणाद्याः क्रियाः प्राप्यन्ते, एवमिहापीति ॥ २८ ॥

रूपं वाऽशेषभूतत्वात् ॥ २९ ॥ सि०

अत्रोच्यते, नैतौ कर्मनिमित्तौ । किं कारणम् । ये नैमित्तिकाः शब्दास्ते निमित्तमुपलभ्य प्रयुज्यन्ते । यथा, दण्डी छत्रीति । इमौ त्वनुपलभ्य क्रियामाकृतिमात्रे प्रयुज्येते । तस्मान्नैतौ क्रियानिमित्ताविति ।

लिङ्गमर्थसंयोगात् ' इत्यनेनातिदेशः प्राप्यते ॥ २६ ॥ [ २७ ॥ २८ ॥ ]

आकृतिवचना एवैते । न क्रिया समुच्चार्यते । यथा, लावकः पावक इत्यनेन । शब्दे-[३]

१ यथा स्वरसामादयः स्वधर्माणां ग्राहका इति—पा० । २ ( अ० ८ पा० १ अ० २ सू० २ ) । ३ अथ—अनोवासःप्रभृतिभिः शब्दैरवाच्याऽपि तक्षणवयनादिक्रिया लक्षणयाऽभिधीयत इति शङ्कायामाह—शब्देनेति ।

अथोच्येत[1], आकृत्यां क्रियामनुमाय ततः शब्दं प्रयुङ्क्त इति । अत्र ब्रूमः । प्रत्यक्षामाकृतिनिमित्ततां गम्यमानामुत्सृज्य, अदृष्टायां क्रियायां निमित्तत्वकल्पनायां हेतुर्नास्तीति । यदुक्तं, क्रियोत्तरकालं प्रवृत्तिदर्शनादिति । अत्र ब्रूमः । प्राक् क्रियाया आकृतिरनभिव्यक्ता । सा क्रिययाऽभिव्यज्यते । यतः क्रियोत्तरकालं शब्दप्रयोगः । तस्मादाकृतिनिमित्तौ । यदेवं तदा सिद्धं रूपं देयम् । कुतः । अशेषभूतत्वात् । नात्र क्रिया शेषभूता । क्रियावाचिनः शब्दस्याभावात् । यूपे तु प्रत्यक्षविहिता जोषणाद्याः क्रियाः । तस्माद्यूपवदिति, अतुल्योपन्यासः ॥ २९ ॥

( गर्गत्रिरात्रे लौकिकाग्नेरुपनिधेयत्वाधिकरणम् ॥ १२ ॥ )

## [ १२ ] विशये लौकिकः स्यात्सर्वार्थत्वात् ॥ ३० ॥सि०

गर्गत्रिरात्र आज्यदोहानि सामानि प्रकृत्य श्रूयते, अग्निमुपनिधाय स्तुवत इति । अत्र विशयः[2] । किं लौकिकोऽग्निरुपनिधेय उत वैदिक इति । किं प्राप्तम् । वैदिक इति । कुतः । सर्वकर्मार्थ उत्पन्नोऽसौ । यान्यहं कर्माणि करिष्ये तैश्चास्म्यधिकृत इति । अतो वैदिक उपनिधेय इति । एवं प्राप्त उच्यते । विशये लौकिकः स्यात्सर्वार्थत्वात् । एतस्मिन्विशये—लौकिकं वैदिकमिति, लौकिकः स्यात् । कुतः । सर्वार्थत्वात् । लौकिकः सर्वार्थः । न तस्य कार्यं किंचिन्निर्दिष्टम् । अतो यद्यदग्निना कर्तव्यं दृष्टमदृष्टं वा तत्तदुपादीयमानमविरुद्धम् । तस्माल्लौकिकः स्यात् ॥ ३० ॥

---

नाऽऽकृतिर्बोध्यते । क्रिया लक्षणया । श्रुतिश्च लक्षणाया ज्यायसी ॥ २९ ॥

आहवनीयादयः कैमर्थ्याभिलाषिणः प्रयोजने दत्ते निराकाङ्क्षीभूताः । अन्यत्र शेषभावे, एषां नास्ति प्रमाणम् । धिष्ण्या अपि व्याघारणार्थमुत्पन्नास्तेनैव निराकाङ्क्षा नान्यत्र विनियोक्तव्याः । व्याघारणे कृतेऽप्रवृत्ते कर्माणि लौकिक इति प्रसङ्गादुपनिधाने संभवति, योऽन्य आनीयते तत्र प्रयत्नः कर्तव्य इति[3] ॥ ३० ॥

---

१ अथोच्यते—पा० । २ संशयः—पा० । ३ कर्तव्य इति—स वायुना इति शेषपूरणम् ।

अथ यदुक्तं, वैदिकं सर्वकर्मार्थमुत्पन्नम्। तस्मात्तदुपनिधेयमिति। अत्र ब्रूमः—

न वैदिकमर्थनिर्देशात् ॥ ३१ ॥

न वैदिकमग्निद्रव्यं शास्त्रेणोत्पादितम्। तस्य शास्त्रेणैव कार्यं निर्दिष्टं, यदाहवनीये जुहोतीत्यारभ्य। तस्मिन्सर्वार्थे कल्प्यमाने निर्देशोऽनर्थकः स्यात्। तस्माल्लौकिकोऽग्निरुपनिधेयः। सर्वार्थत्वं चैषां स्वे स्वे कार्ये वर्तमानानां भविष्यति। एवमुभयमविरुद्धं, सर्वार्थत्वं निर्देशश्चेति ॥ ३१ ॥

अथ धैष्ण्या अग्नयः कस्मान्नोपनिधीयन्ते। अत्रोच्यते—

तथोत्पत्तिरितरेषां समत्वात् ॥ ३२ ॥

इतरेषामप्यग्नीनां धैष्ण्यानां तथोत्पत्तिः, न सर्वार्थ इत्यर्थः। कुतः। समत्वात्। एतेऽपीतरैरग्निभिः समाः। एतेषामपि निर्दिष्टं कार्यं, प्रागासीनो धिष्ण्यानाघारयतीति। अतस्ते नोपनिधेया इति ॥ ३२ ॥

( उपशये यूपशब्दस्य संस्कारानतिदेशकत्वाधिकरणम् ॥ ११ ॥ )

[ १३ ] संस्कृतं स्यात्तच्छब्दत्वात् ॥ ३३ ॥ पू०

एकादशिन्यां श्रूयते, उपशयो यूपो भवतीति। तत्र संदेहः। किमेतदुपशयद्रव्यं संस्कृतं, जोषणादयः संस्कारा अत्र कर्तव्या उत नेति। किं युक्तम्। संस्कृतं स्यात्। कर्तव्या अत्र जोषणादयः संस्काराः। कुतः। तच्छब्दत्वात्। अयं यूपशब्दः संस्कारनिमित्तः। स एषोऽसत्सु संस्कारेषु नोपपद्यते। तस्मात्ते कार्या इति ॥ ३३ ॥

भक्त्या वाऽयज्ञशेषत्वाद्गुणानामभिधानत्वात् ॥३४॥ सि०

न वा कर्तव्याः। कुतः। अयज्ञशेषत्वात्। एते संस्कारा अस्मिन्काष्ठे क्रियन्ते। एतेन द्वारेण यजतिना संभत्स्यन्ते। इत्थं संस्कृते काष्ठे नियुक्तेन पशुना यागः क्रियमाणोऽपूर्वं निर्वर्तयतीति। अस्मिंश्चोपशये न पशुर्नियुज्यते, तत्र कृताः संस्कारा अनर्थकाः स्युः। ननु वचनसामर्थ्याददृष्टार्था भविष्यन्ति। उच्यते। नात्र वचनं यूपः

[ ३१ ॥ ३२ ॥ ॥ १ ॥६

१ उपशयवाच्यं संस्कृतं—पा०।

कर्तव्य इति। वर्तमानापदेशोऽयम्। ननु वर्तमानापदेशोऽपि न घटते संस्काराणामभावे। उच्यते। भक्त्या भविष्यति। यथा, यजमानो वै यूप इति। आह। तत्र सादृश्यात्। इह पुनः कथमिति। उच्यते। गुणानामभिधानत्वात्। यूपगुणानां यूपसंस्काराणामभिधानत्वात्। यूपसंस्कारास्तत्र केचिदर्थमात्राश्छेदनादयस्तूर्ष्णीं कृताः सन्ति। तैरयमभिधीयते यूप इत्ययूपः सन्। यथा, स्नाता कन्याऽनलंकृता, मालागुणेनाप्यलंकृतेति। एवमेकदेशेनापि संस्काराणां संस्कृत इति स्तुत्याऽभिधीयते ॥ ३४ ॥

( पृष्ठशब्दस्य ऋक्मन्त्रवाचित्वाधिकरणम् ॥ १४ ॥ )

## [ १४ ] कर्मणः पृष्ठशब्दः स्यात्तथाभूतोपदेशात् ॥ ३५ ॥ ॥ पू०

अग्नौ श्रूयते, पृष्ठैरुपतिष्ठत इति। तत्र चिन्त्यते। किं पृष्ठधर्माः कर्तव्या उत नेति। के पुनस्ते। सामान्यधर्माः, हिंकारादयः, विशेषधर्माः, रथंतरे प्रस्तूयमाने पृथिवीं मनसा ध्यायेत्। बृहति, समुद्रामित्येवमादयः। किं तावत्प्राप्तम्। तत आह। एतत्तावन्नः परीक्ष्यम्। किमयं पृष्ठशब्दः कर्मणो वाचक उत द्रव्यस्येति। ननु सिद्धमेतत्कर्मनामधेयं पृष्ठशब्द इति, यस्मिन् गुणोपदेशः प्रधानतोऽभिसंबन्ध इत्यत्र। तास्वेव चोदनास्वेतदुक्तं, सप्तदशानि पृष्ठानि, वैरूपं पृष्ठं, वैराजं पृष्ठमिति। इहेदानीं, पृष्ठैरुपतिष्ठत इत्यस्यां चिन्त्यते। किं पुनरत्र युक्तम्। तत आह, कर्मणः पृष्ठशब्दः स्यात्तथाभूतोपदेशात्।

कर्मणो वाचकः पृष्ठशब्दः स्यात्। कुतः। तथाभूतोपदेशात्। यथाभूतः स उपदेशः, यत्रायं पृष्ठशब्दः कर्मनामाधिगतस्तथाभूतोऽयमपि। किमस्य तथात्वम्। पृष्ठशब्दसामान्यम्। पृष्ठशब्दस्तत्र कर्मवचनोऽधिगतः। स एवायम्। तस्मादिहापि तद्वचन एवावगन्तव्यः। विशेषाभावात्। यद्यत्रान्यार्थः कल्प्येत, एकः शब्दोऽनेकार्थः स्यात्।

---

॥ ३४ ॥

---

१ ( अ० १ पा० ४ अ० २ सू० ३। २ कर्मणः पृष्ठशब्दः—पा०। ३ तथाभूतः स उपदेशः, यथाऽयं पृ—पा०। ४ अवगन्तुं न्याय्यः—पा०। ५ यद्यन्यार्थः—पा०।

तत्र को दोषः । शब्द उच्चरिते संशयः स्यात्कार्थप्रत्ययः । तत्र व्यवहारो न सिध्येत् । व्यवहारार्थश्च शब्दप्रयोगः । कारणान्तरं वा प्रकरणाद्यपेक्ष्यम् । एकार्थत्वे तु निरपेक्षोऽर्थप्रत्ययः । तस्मादनेकार्थत्वमन्याय्यम् । तस्मात्कर्मनाम पृष्ठशब्दः । यदा कर्मनाम, तदा यदि तावत्तानि कर्माणीहोपदिश्यन्ते, तत्रोत्पत्तिरेषामनर्थिका । अथ मा भूदेष दोष इत्येतदुपस्थानं तत्र विज्ञायते । तत इदं प्रकरणं बाध्येत । तस्मात्साहश्यविधिरयम् । पृष्ठैरुपतिष्ठते—पृष्ठसदृशैः कर्मभिरुपतिष्ठत इति । तत्साहश्यं च धर्मैर्भवति । तस्मात्कर्तव्या धर्मा इति ॥ ३५ ॥

अभिधानोपदेशाद्वा विप्रतिषेधाद्द्रव्येषु पृष्ठशब्दः स्यात् ॥ ३६ ॥ सि०

न चैतदेवं, कर्मणः पृष्ठशब्द इति । किं तर्हि । द्रव्येषु पृष्ठशब्दः स्यात् । ऋग्द्रव्येषु, अभित्वा शूर नो नुम इत्येवमादीनामृचां वाचकः । कुतः । अभिधानोपदेशात् । अभिधानोपदेशोऽयं, पृष्ठैरुपतिष्ठत इति । पृष्ठैरभिदधातीत्यर्थः । कथं पुनरयमुपस्थानवचनोऽभिधानार्थः शक्यो विज्ञातुम् । उच्यते । उपग्रहविशेषात् । मन्त्रकरण उपतिष्ठतेरात्मनेपदं भवति । मन्त्रस्त्वभिधानस्य करणं नोपस्थानस्य । उपस्थानं शरीरेण क्रियते, मनसा वा । तस्मादभिधानार्थः । स एष विप्रतिषेधः । यदि पृष्ठशब्दः कर्मसु कल्प्यते, आत्मनेपदं बाध्यते । न हि तदा मन्त्रः करणं भवति । अथाऽऽत्मनेपदमनुरुध्यते, उपस्थानविप्रतिषेधः । तदाऽभिधानार्थताऽऽपतति । तत्राऽऽत्मनेपदानुरोधो न्याय्यः । पृष्ठशब्दो हि

---

॥ ३६ ॥ ]

द्रव्यवचनः पृष्ठशब्दः । कुतः । आत्मनेपदं मन्त्रकरणे स्मर्यते । तच्च मन्त्रकरणमाभिधानमन्तरेण संभवतीत्यभिधाता धातुरनुमीयते परस्तस्मात् । अतोऽत्र श्रुतानुमितौ द्वौ धातू । तत्र तिष्ठतिः सामर्थ्यप्राप्तोऽनूद्यते । उपसर्गार्थोऽप्यनुवादः । सामीप्यस्य प्राप्तत्वात् । यस्योपस्थानं क्रियते तस्य समीप एव स्थित्वा तत्क्रियते, नान्यथा । तस्मादुपग्रहात्पृष्ठशब्द आत्मीयान् मन्त्रान् लक्षयति । पृष्ठशब्दे श्रुतिवृत्ते गृह्यमाणेऽस्य-

---

१ श्रुतानुमितौ द्वाविति—श्रुतो धातुरुपतिष्ठतिः, अनुमितश्चाभिदधातिरित्यर्थः ।

लक्षणया पृष्ठसाधनं मन्त्रं ब्रुवन्नर्थवान् । आत्मनेपदं तु मन्त्रकरणेनैवो-पपद्यते । अतः पृष्ठसाधनेषु मन्त्रेषु पृष्ठशब्दः ।

आह । नैतद्युक्तम् । उपस्थानार्थता हि श्रुत्योपतिष्ठतेः । आत्म-नेपदाल्लिङ्गादभिधानार्थता । न च लिङ्गेन श्रुतिर्बाधितव्या । उ-च्यते । नैवात्र श्रुतिर्बाध्यते । स्वार्थमेवोपतिष्ठतिराह समीपस्थानम् । तस्याभिधानार्थ । अभिधानं निर्वर्तयितुमग्निसमीपे तिष्ठेदिति तिष्ठतिराह, आत्मनेपदात् । ततोऽविरोधः । आह । एवमप्यभिधानस्य मन्त्रः करणं, नोपतिष्ठतेः । तत्रासंबन्ध एवोपस्थानस्य मन्त्रेण । तथा, पृष्ठैरुपतिष्ठत इति समुच्चारणमनर्थकं स्यात् । उच्यते । अभिधानमभिनिर्वर्तयन्मन्त्र उप-स्थानस्य करणं भवति । यतोऽस्य प्रयोजनं निर्वर्तयति । न हि निष्प्र-योजनमनुष्ठीयते । तस्मान्मन्त्रेष्वेव पृष्ठशब्दः । मन्त्रेषु चेत्, नास्ति धर्माणां प्राप्तिः । न हि मन्त्राणां धर्माः । अधर्मकास्त इति ॥ ३६ ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये सप्तमस्याध्यायस्य तृतीयः पादः ॥

---

न्तत्र आत्मनेपदस्य स्यात् । तस्मात्पृष्ठशब्दो मन्त्राभिधायी ।

आह—उपस्थानवचनः कथमभिधाने वर्तते । धातूपसर्गयोरर्थः सोऽभिधानसाम-र्थ्यलक्षणत्वान्न विरुध्यते । इतरस्त्वाह—अभिधानस्य मन्त्रो नोपतिष्ठतेः । एवं चेदभि-धानार्थः स कथमुपतिष्ठतेस्तादर्थ्यं प्रतिपद्यते । उच्यते । यथा दीक्षणीयादयः पुरुषसं-स्काराः फलप्रतिग्रहणयोग्यं पुरुषं कुर्वन्तो यागकार्ये वर्तमानास्तदर्थाः । एवमिहाप्युप-तिष्ठतेरभिधानं कार्यम् । एवं च तद्व्यापारं कुर्वन्तस्तदर्थतां प्रतिपद्यन्ते ॥ ३६ ॥

इति श्रीभट्टकुमारिलविरचितायां मीमांसाभाष्यव्याख्यायां टुप्टीकायां सप्तमाध्यायस्य तृतीयः पादः ॥

---

१ तिष्ठेदित्यात्मनेपदाविरोधः । आह—पा० । २ ' आह । नैतद्युक्तम् ' इति चोद्यभाष्याभि-प्रायमाह—अहेत्यादिना । ३ उच्यत इत्यादि परिहारभाष्यार्थमाह—धातूपसर्गयोरिति ।

## अथ सप्तमस्याध्यायस्य चतुर्थः पादः ॥

( अविहितेतिकर्तव्यताकेषु सौर्यादिष्वितिकर्तव्यताया अतिदेशाधिकरणम् ॥ १ ॥ )

**[ १ ] इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वम् ॥ १ ॥ सि०**

अनारभ्य किंचिच्छ्रूयते, सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इति। तत्रैषोऽर्थः समधिगतो यागोऽयं चोद्यत इति, यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसंबन्धादिति। तथेदमप्युक्तं, कर्मफलयोः संबन्धे कर्म गुणतः, फलं प्रधानत इति, प्रत्यर्थं चाभिसंयोगात्कर्मतो ह्यभिसंबन्धस्तस्मात्कर्मोपदेशः स्यादिति। इदमपि चोक्तं, यजिरपूर्वं साधयति। ततश्चापूर्वात्कालान्तरे फलं भवतीति, चोदना पुनरारम्भ इत्यत्र। एवमेतस्मिन्सति, सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इत्यत्र सौर्ययागेनापूर्वं कृत्वा ब्रह्मवर्चसं साधयेद्ब्रह्मवर्चसकाम इत्येवं विज्ञायते।

आह। यत्र तृतीयायुक्तो यजिस्तत्र युक्तो गुणभावाभ्युपगमः। यथा, ज्योतिष्टोमेन स्वर्गकामो यजेतेति। इह त्वसत्यां तृतीयायां कथं तृतीयार्थो गम्यत इति। उच्यते। किमत्र तृतीयानिर्दिष्टेन यजिना कार्यं, यदा स्वभावसिद्धः कर्मणां फलं प्रति गुणभावः। यत्राप्यसौ श्रुतस्तत्राप्यकिंचित्कर एव। गतार्थत्वात्। तथा, यत्रापि द्वितीयाश्रुतिः।

---

नाम्नाऽतिदेशोऽभिहितः। इदानीमानुमानिकेन वचनेनातिदेश उच्यते। **किमत्र तृतीयया कार्यं, यदा स्वभावसिद्ध एष कर्मणां गुणभाव इति।** एतदयुक्तम्। साध्यसाधनसंबन्धस्य वैदिकत्वात्। यथाश्रुतं तदा भवति। न चाश्रवणे तृतीयायाः साधनतां प्रतिपद्यते। न च सामान्यतो दृष्टं लौकिकं कर्म गुणभूतम्। अनेनापि कर्मणा गुणेनैव भवितव्यम्। अतः को ग्रन्थार्थः। यजेतेत्युच्चरिते किं, केन, कथमिति तिस्र आकाङ्क्षा जायन्ते। तत्र किमिति नित्यमेव पुरुषार्थापेक्षः साक्षात्पारम्पर्येण वा। धातुस्तत्करणं भवति। पुरुषार्थस्य कर्मभूतत्वादाह—**स्वभावसिद्धः कर्मणां गुणभाव इति।** अथवा—स्वर्गं प्रार्थयमानस्य करणमभिलषतस्तृतीयया करणं निर्दिश्यते। तद्विवक्षायां दर्शपूर्णमासादीनि निर्दिश्यन्ते। स्वर्गं प्रार्थयमानः कमुपायं कुर्यात्—यागं कुर्यादिति। केनोपायेन कुर्यात्—यागं कुर्यादिति। ईदृश्यां विवक्षायां सौर्यादीनि

---

१ ( अ० २ पा० ३ अ० ५ सू० १४ )। २ ( अ० ६ पा० १ अ० १ सू० ३ )। ३ ( अ० २ पा० १ अ० २ सू० ५ )। ४ स्वाभाविकः—पा०। ५ यागं कुर्यात्—यागमुपायत्वेन कुर्यादित्यर्थः।

यथा, अग्निहोत्रं जुहुयादिति । तत्रापि विभक्तिव्यत्ययो वा, ईप्सित-तमत्वस्य वाऽविवक्षा, कामं वाऽऽनर्थक्यं स्यान्न तु कथंचिदपि कर्मणः प्रति गुणभावः शक्योऽपह्नोतुम् । तस्माद्यागेनापूर्वसाधनमत्रो-च्यते । तत्र यागो विज्ञायते । लौकिकोऽसौ पदार्थः । तेन तु कथम पूर्वं साध्यत इत्येतन्न विज्ञायते । इह तु यागेनापूर्वं साधयेदित्येतावदे-वोक्तम् । कथं साधयेदितीतिकर्तव्यता नोक्ता । येषां चार्थानां ज्ञायत एवेतिकर्तव्यता, तेषां कर्तव्यत्वमात्रमुपदिश्यते । यथा, ओदनं पचेदिति । येषां तु न ज्ञायते ते सहेतिकर्तव्यतयैवो-पदिश्यन्ते । यथा दर्शपूर्णमासौ । एवं चेन्नूनं ज्ञायते यागेनापूर्वनिर्वृ-त्ताविति कर्तव्यता यस्मान्नोक्ता तस्मान्नूनमसावस्तीति । आह । यद्यस्ति लोके ततो ज्ञायेतैव । अथ नास्त्येव, कथं शक्या ज्ञातुमिति । उच्यते। बाढमस्ति, लौकिकी वैदिकी च । लौकिकी तावत्पार्वणस्थालीपाका-दिषु, वैदिकी दर्शपूर्णमासादिषु । यदि तत्पूर्वा एताश्चोदनास्तदपेक्षाः, सौर्ययागेनापूर्वं साधयेत्, यथाज्ञातयेतिकर्तव्यतयेति, ततो युक्त इति-कर्तव्यताया अविधिः । न च विधीयते । अत इतिकर्तव्यताया अवि-धेर्यजतेः पूर्ववत्त्वं, विहितेतिकर्तव्यताकत्वमिति ।

अथ य आहुः, यजेत—यागं कुर्यादिति । जुहुयात्—होमं कुर्या-दिति । तेषां किं नैव धर्माकाङ्क्षा भवति । भवतीति ब्रूमः । यद्यपि प्रज्ञातेतिकर्तव्यताको यजिर्द्रव्यं देवतां प्रत्युत्सृज्यत इति । तथाऽपि यदा

---

विधीयन्ते । भवति हि द्विःप्रकारस्यापेक्षा । तस्मादविरोधः । येषां चार्थानां ज्ञायत एवेतिकर्तव्यता, तेषां कर्तव्यत्वमात्रमुपदिश्यते । यथौदनं पचेदिति ।

नन्वयुक्तमिदम् । 'ओदनं पचेत्' इत्यत्रापि तिस्र आकाङ्क्षा विद्यन्ते । एवं चेत्—किं, केन, कथमित्याकाङ्क्षायामितिकर्तव्यता संबध्यते । तत्र प्रत्यक्षादिना निर्दि-श्यते । इह शास्त्रेण निर्दिश्यते । आकाङ्क्षात्रयं तु तुल्यम् । अत ओदनं पचेदिति केवलो न निर्दिश्यते । फलेनायं तु ग्रन्थः । पचेदित्येतावत्यपि निर्दिष्टे (केन) कथमिति—ज्ञायते एवेतिकर्तव्यताविधिः । यत्रेतिकर्तव्यता समीपे नाऽऽम्नायते तत्र

---

१ ईप्सिततमत्वस्य—पा० । २ ननु-पा० । ३ यस्मादुक्तेति मुद्रितपुस्तके पाठः । ४ प्रज्ञातेतिक-र्तव्यतो—पा० । ५ तत्र—पाके, इतिकर्तव्यतेति शेषः । ६ इह—दर्शपूर्णमासादौ । ७ तात्पर्यतो भाष्यग्रन्थो योजयितव्य इति समाधत्ते—फलेनेति । ८ कथमिति—कथमित्यपेक्षायाम् । ९ सूत्रार्थ-माह—यत्रेत्यादिना ।

फलार्थः क्रियते तदा धर्मानाकाङ्क्षति । न ह्यधर्मकात्फलं भवति । कथं ज्ञायते । यो ह्यमेध्यं द्रव्यमुच्छिष्टः, शयानो वा, मौढपादो, वामेन हस्तेन वा, पादेन वा यथाकथंचिद्देवताया उत्सृजति, तस्य फलं न भवतीति शिष्टाः स्मरन्ति । यस्तु मेध्यं द्रव्यं, शुचौ देशे, प्रयतः, प्राङ्मुखो, दक्षिणेन हस्तेन, समाहितमनाः, मन्त्रवान्नियमवान्च देवताया उत्सृजति, तस्य फलं भवतीति स्मरन्ति । तस्माद्यावान्यजतिः फलायाऽऽम्नायते स सर्वो धर्मानाकाङ्क्षति । अतस्तेषामप्यस्ति धर्माकाङ्क्षा सत्यामाकाङ्क्षायां संनिहितैर्धर्मैरविप्रतिषिद्धः संबन्धः प्रकृतौ । विकृतौ त्वानुमानिकैः ॥ १ ॥

( सौर्यचर्वादौ वैदिक्या एवेतिकर्तव्यताया अतिदेशाधिकरणम् ॥ २ ॥ )

## [ २ ] स लौकिकः स्याद्दृष्टप्रवृत्तित्वात् ॥ २ ॥ पू०

अधुनैवं चिन्त्यते । किमनियमो लौकिकी वैदिकी वेतिकर्तव्यता, उत लौकिक्येव, आहोस्विद्वैदिक्येवेति । अत्र विशेषाभावादनियमे प्राप्ते । उच्यते । स लौकिकः स्यात् । स खलु कर्तव्यतोपायो लौकिकः स्यात् । कुतः । दृष्टप्रवृत्तित्वात् । दृष्टा ह्यस्य तत्र तत्र प्रवृत्तिः । यथा, पार्वणस्थालीपाके, अष्टकाचरौ, आग्रहायणे कर्मणि, इत्येवं यत्र यत्र यागेनापूर्वं साध्यते, तत्र तत्रास्य प्रवृत्तिर्दृष्टा । अतोऽन्वयाद्विज्ञायते, यागस्यापूर्वं साधयतोऽयमभ्युपाय इति । अयं चापि यागः । तस्मादस्यापि स एवाभ्युपायः ॥ २ ॥

## वचनात्तु ततोऽन्यत्वम् ॥ ३ ॥

आह—किमेष एवोत्सर्गः, सर्वत्र लौकिकीतिकर्तव्यतेति । एवं खलु प्राप्तम् । एवं प्राप्ते ब्रूमः । वचनात्तु ततोऽन्यत्वमिति । यत्र प्रत्यक्षं वचनं वैदिक्यास्तत्र न लौकिकी स्यात् । वचनसामर्थ्याद्वैदिक्येव स्यात् । यथा, उपसत्सु, गृहमेधीये च ॥ ३ ॥

---

कथंभावस्य साकाङ्क्षत्वात्कस्यापि संबन्धिन्या, इतिकर्तव्यतया भवितव्यम् । यथा, विश्वजिति किमंशसाकाङ्क्षत्वात्फलमनुषज्यते, एवमिहापि । इदं सूत्रमुत्तरविवक्षार्थम् । न्यायादेवैतत् ज्ञायते भवितव्यमिति ॥ १ ॥

इदं तु चिन्त्यम्, किमसौ लौकिकी वैदिकी वेति ॥ २ ॥ ३ ॥

---

१ आग्रहायणीये—पा० । २ ऽयमुपायः—पा० । ३ अनुषज्यते—कल्प्यते । ४ भवितव्यमिति—इतिकर्तव्यतयेति शेषः । ५ चिन्त्यं—विचारणीयम् ।

## लिङ्गेन वा नियम्येत लिङ्गस्य तद्गुणत्वात् ॥४॥ सि०

लिङ्गेन वा, इतिकर्तव्यता नियम्येत । कतरा । यस्या लिङ्गम् । वैदिक्याश्च लिङ्गम् । तस्माद्वैदिकी । किं पुनर्लिङ्गम् । सौर्ये तावच्चरौ श्रूयते, प्रयाजे प्रयाजे कृष्णलं जुहोतीति । तथा, ऐन्द्राबार्हस्पत्ये, अर्धं बर्हिषो लुनाति, अर्धं न, स्वयं दितमर्धं वेद्यां करोत्यर्धं नेति । तथा पितृयज्ञे, न होतारं वृणीते, नाऽऽर्षेयमिति । एतैर्लिङ्गैर्ज्ञायते वैदिकीति-कर्तव्यतेति । कथम् । लिङ्गस्य तद्गुणत्वात् । एते हि प्रयाजादयो वैदिकस्यापूर्वस्य गुणाः । यदि च तदीयेतिकर्तव्यता प्रवर्तिता, तत एतेषु कर्मस्वेत सन्ति । तत्रैतानि वचनान्युपपद्यन्ते, प्रयाजे प्रयाजे कृष्णलं जुहोतीत्येवमादीनि । तस्माद्वैदिकीतिकर्तव्यता नियम्येत ॥४॥

## अपि वाऽन्यायपूर्वत्वाद्यत्रनित्यानुवादवचनानि स्युः ॥ ५ ॥

अपि वा नैवं स्यात्, वैदिकीतिकर्तव्यतेति । यत्कारणम् । एतै-र्लिङ्गैर्न शक्यते वैदिकी नियन्तुम् । कुतः । अन्यायपूर्वत्वात् । न्याय-पूर्वकं हि वचनं तत्साधकं भवति । न चैतानि न्यायपूर्वाणि । न हि वैदिक्याः प्रवृत्तिर्युक्ता । निबद्धा हि सा प्रकरणादिभिः कारणैर्दर्शपू-र्णमासादिषु । कथं तर्ह्येतानि लिङ्गानि । उच्यते । यत्रनित्यानुवादव-चनानि स्युः । इह तावत्, अर्धं बर्हिषो लुनाति, अर्धं नेति, यत्र बर्हि-स्तत्रैव भविष्यति । यत्कारणम् । सतो बर्हिष एतदुच्यते । न चेहास्ति बर्हिः । न होतारं वृणीते, नाऽऽर्षेयमिति नित्यानुवादो भविष्यति । ननु नित्यानुवादः सन्ननर्थको भवति । किं क्रियतां, यस्यार्थो नास्ति। प्रयाजे प्रयाजे कृष्णलं जुहोतीति वचनं प्रयाजानां भविष्यति । कथं पुनरत्र प्रयाजाश्च कृष्णलहोमश्च युगपच्छक्या वक्तुम्[1] । भिद्यते हि तथा वाक्यम् । एवं तर्हि न प्रयाजान्वक्ष्यति । प्रयाजे कृष्णलहोमं विधास्यति । न चासत्सु प्रयाजेषु कृष्णलहोमः शक्यते कर्तुमित्यर्था-

---

॥ ४ ॥

'अपि वाऽन्यायपूर्वत्वात्' । कथं पुनरत्र प्रयाजाश्च कृष्णलहोमश्च युगपच्छ-क्यां अभिधातुम् । भिद्यते हि तथा वाक्यम् । एवं तर्हि न प्रयाजावक्ष्यति । प्रयाजेषु कृष्णलहोमं विधास्यति । न चासत्सु प्रयाजेषु कृष्णलहोमः

---

१ कृष्णलहोमश्च शक्यो वक्तुं—पा०। २ कृष्णलहोमश्च शक्यः कर्तुमित्ययुगपच्छक्या—पा०।

त्प्रयाजान्करिष्यति । तस्मात्र लिङ्गेन वैदिक्या नियमः । यथोक्तेन न्यायेन लौकिक्येवेतिकर्तव्यतेति ॥ ५ ॥

## मिथो विप्रतिषेधाच्च गुणानां यथार्थकल्पना स्यात् ॥ ६ ॥

तत्राऽऽह । अथ कस्मान्नोभे अपीतिकर्तव्यते सह प्रवर्तेते इति । किमेवं भविष्यति । एवं तुल्यापेक्षा कर्मणामन्यतरतो न बाधिता भवति । उच्यते । सह प्रवृत्तावेकया चेत्कर्म निरपेक्षं कृतं, द्वितीयस्याः प्रवृत्तिर्वि-प्रतिषिद्धा । अतो मिथः प्रवृत्तेर्विप्रतिषेधाद्यथार्थकल्पना स्यात् । एक-स्याः प्रवृत्तिः स्यादित्यर्थः । कथमेकस्याः प्रवृत्तेर्धर्माणां यथार्थकल्पनां भवति । ये धर्मा येषु कार्येषु प्रकृतावुत्पन्नास्त इहापि तेष्वेव भवन्ति । इतरथा द्वितीयस्या धर्मा अयथार्था भवेयुः पूर्वैर्धर्मैः । तेषां कार्याणां निर्वर्तितत्वात् । एवमेकस्याः प्रवृत्तेर्यथार्थकल्पना भवति । अतो यथा-र्थकल्पना स्यादित्यनेनैकस्याः प्रवृत्तिरित्युक्तं भवेत् । एकस्याः प्रवृत्तौ यथोक्तेन न्यायेन लौकिक्याः प्रवृत्तिरिति ॥ ६ ॥

## भागित्वात्तु नियम्येत गुणानामभिधानत्वात्संबन्धा-दभिधानवद्यथा धेनुः किशोरेण ॥ ७ ॥

तुशब्दः पक्षनिवृत्तौ । न त्वेवं स्यात् । लौकिकीतिकर्तव्यतेति ।

---

शक्यः कर्तुमित्यर्थात्प्रयाजान्करिष्यतीति—अयुक्तमिदम् । विशिष्टविधाने न भवति वीप्सा । यथा, ग्रामो ग्रामो रमणीय इति नानवगते ग्रामार्थे वीप्सा, एव-मिहाप्यनवगतोऽत्र प्रयाजार्थः, विधेयत्वात् । तस्मादन्यथा सूत्रं वर्ण्यते । 'प्रयाजे प्रयाजे कृष्णलं जुहोति ' इत्युपपद्यते । एवं गुणविधिः, वीप्सा । ( लिङ्गस्य ) ॥५॥ [ ॥ ६ ॥

---

१ अत्राऽऽह—पा० । २ प्रवृत्तिः—पा० । ३ प्रवृत्तिः—पा० । ४ उपपद्यत इति—अत्र चोपपादकग्रन्थो लिखितपुस्तकेऽपि नोपलभ्यते । परं तु व्याख्यानानुरोधेनैतादृशो ग्रन्थ आवश्यक इति भाति । स च ' प्रयाजे प्रयाजे कृष्णलं जुहोति ' इति नानेन प्रयाजा विधीयन्ते । ' समिधो यजति ' इत्येवमादिभिर्दर्शपूर्णमासयोर्विहितत्वात् । एवं चेद्यत्र प्रयाजा विद्यन्ते तत्र प्रयाजे प्रयाजे कृष्णलं जुहोतीत्युपपद्यते । इति । ५ एव प्रयाजानामुद्देश्यत्वाद्गुणविधिर्वीप्साचोपपद्यत इत्याह—एव-मिति । ६ अत्रापि चिह्नित स्थाने ' तस्माल्लिङ्गस्यासाधकत्वाद्दृष्टप्रवृत्तिर्लौकिक्येवेतिकर्तव्यता ' इत्येवंरूपो ग्रन्थ आवश्यकोऽपि नोपलभ्यत इति यथावद्ग्रन्थलापने महत्संकटम् ।

किं तर्हि । वैदिकी नियम्येत । कुतः । भागित्वात् । वैदिक्यपि भागिनी प्रवृत्तेः । साऽपि ह्यपूर्वस्येतिकर्तव्यता । समाने च भागित्व उभयोर्वैदिक्येव स्यात् । गुणानामभिधानत्वात् । गुणा एते प्रयाजादयः सौर्यादिषु दृश्यमाना अभिधायका भवन्त्येतस्यार्थस्य । यथा वैदिक्यत्रेतिकर्तव्येति बोधका भवन्तीत्यर्थः ।

कस्मात् । संबन्धात् । एते हि तयेतिकर्तव्यतया संबद्धाः । अतः साहचर्यात्तां गमयन्ति । अभिधानवत् । यथा कौण्डपायिनामयने, अग्निहोत्रमित्यभिधानं कर्मणो वाचकम् । तत् , कर्मसहचरितान् धर्मानानयति । तेष्वसत्स्वेतदभिधानमिह न युज्यत इति तेषां धर्माणां तत्र भावो विज्ञायते । एवमिहापि प्रयाजादीनां दर्शनमसत्यां वैदिक्यां न युज्यत इति तस्या अपीह भावो विज्ञास्यते । नन्वसति न्याये लिङ्गमकारणम् । सत्यमेवम् । उक्तस्तु न्यायो भागित्वादिति ।

यत्तु दृष्टप्रवृत्तिर्लौकिकीति । तत्र ब्रूमः । यद्यपि दृष्टप्रवृत्तिः स्यात्, तथाऽपि वैदिक्येव नियम्येत । कथम् । यथा धेनुः किशोरेण । तद्यथा, कृष्णकिशोरा धेनुरिति । यद्यपि धेनुशब्दो गोधेन्वां दृष्टप्रवृत्तिस्तथाऽप्यभिधानसामान्यादश्वधेन्वामपि भागीति किशोरेण लिङ्गेनाश्वधेन्वां विज्ञायते । एवमिहापि यद्यपि लौकिकी दृष्टप्रवृत्तिः, तथाऽपीतिकर्तव्यतासामान्येन भागित्वाल्लिङ्गेन वैदिकी विज्ञेया ॥ ७ ॥

## उत्पत्तीनां समत्वाद्वा यथाधिकारं भावः स्यात् ॥ ८ ॥

अथवा नैव लिङ्गेन नियम इति । कुतः । उत्पत्तीनां समत्वात् । धर्माणां प्रयाजादीनामुत्पत्तयः समाः सर्वेषामाग्नेयाद्यङ्गभावेन, न परस्पराङ्गत्वेन । किमतः । यदि प्रयाजादीनामनुयाजादयोऽङ्गानि स्युस्ततो यत्र प्रधानं तत्राङ्गानीति प्रयाजदर्शनेनानुयाजादयोऽनुमीयेरन्, यदा तु समप्रधाना एते तदा प्रयाजदर्शनेन कामं प्रयाजा अनुमीयेरन्। प्रयाजधर्मा वा । न त्वनुयाजादयः । तस्माल्लिङ्गमनियामकम् ।

यत्तु, अभिधानवदिति । अत्र ब्रूमः । युक्तं तत्र । यत्र हि परशब्दः परत्र प्रयुक्तः संस्तद्धर्मानतिदिशतीत्युक्तम् । अपि च, विधिरसौ ।

॥ ७ ॥

१ प्रवृत्तिः—पा० ।

अग्निहोत्रवद्धोतव्यमिति । अयं पुनरनुवादः । तेनात्र प्रयाजादीनामेव नास्ति प्राप्तिः, कुतोऽनुयाजादीनाम् । तस्माद्विषम उपन्यासः, अभिधानवदिति । अतो यथाधिकारं भावः स्यात् । ये धर्मा यस्यापूर्वस्याधिकार आम्नातास्ते तत्रैव भवेयुः ॥ ८ ॥

एवं तर्हि, सौर्यं चरुं निर्वपेदित्यनेनाऽऽख्यातेन प्रधानस्य विधानोत्पत्तिः, शेषाणां च वचनं भवतु । कथं कृत्वा । नानङ्गं प्रधानमुच्यमानं कस्मैचित्प्रयोजनाय कल्पत इति । तेन च प्रापितानामङ्गानामेतेभ्यो लिङ्गेभ्यो विशेषावधारणं भविष्यति । तत्रेदमुच्यते—

## उत्पत्तिशेषवचनं च विप्रतिषिद्धमेकस्मिन् ॥ ९ ॥

एकस्मिञ्छब्दे प्रधानस्योत्पत्तिरङ्गानां च वचनं न संभवति । किं कारणम् । उत्पन्नं हि प्रधानमङ्गान्यपेक्षते । अपेक्षया च तानि गृह्यन्ते । तस्मान्नैतदपि युक्तम् । यदि च निर्वपेदित्यनेन शब्देनाङ्गान्यपि विधीयेरंस्ततस्तेषामपि फलसंबन्धः स्यात् । तथा, अङ्गत्वमेव व्याहन्येत । ततोऽयमपि वादो न घटते । तस्माद्यथोक्तो लौकिक एवाभ्युपायः॥९॥

## विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत तथा हि लिङ्गदर्शनम् ॥ १० ॥

विध्यन्तो वा सौर्यादिकायां चोदनायां प्रवर्तेत, न धर्मा लौकिकाः। कः पुनरयं विध्यन्तो नाम । विधेरन्तो विध्यन्तः । अथ विधिः कः । यद्वाक्यमुपलभ्य पुरुषः कस्मिंश्चिदर्थे प्रवर्तते, कुतश्चिद्वा निवर्तते, स विधिः । विधीयते ह्यनेनार्थः । यथा लोके, देवदत्त गामभ्याज शुक्लामिति तस्याभ्याजेतिविध्यादिः । इतरोऽन्तः । वेदेऽपि, दर्शपूर्णमासाभ्यां यजतेति विध्यादिः । विध्यन्तोऽपि प्रधानविधिवर्जितं कृत्स्नं पौरोडाशिकं ब्राह्मणम् । तेन समेतोऽयं विध्यादिर्विशिष्टापूर्वनिर्वृत्तिं प्रति पुरुषं प्रवर्तयति । तस्मात्सोऽस्यान्तः । तथा, सोमेन यजेतेति

---

॥ ८ ॥ ९ ॥ ]

कथंभावाकाङ्क्षायां यत्रेतिकर्तव्यता नाऽऽम्नायते तत्र कथंभावस्याव्यावृत्तत्वाच्चोदना सदृशं वाक्यं बुद्धावुपस्थापयति । तद्वाक्यमवबोधितं वाक्यार्थमवबोधयति । स

---

१ प्रवर्तते—पा० । २ चोदना—सौर्यादिचोदना । ३ सदृशं—स्वसदृशम् ।

विध्यादिः । सौमिकमपि ब्राह्मणं विध्यन्तः । एष विध्यन्तो नाम ।

एतेषु च सौर्यादिषु विध्यादिरस्ति विध्यन्तो नास्ति । एतेष्वपि स विध्यन्तः कल्प्येत । कथं कृत्वा । अपरिपूर्णं यद्वाक्यं तदध्याहारेण वा पूर्येत, व्यवहितकल्पनया वा । तत्राध्याहाराद्व्यवहितकल्पना ज्यायसी अध्याहारे ह्यश्रुतः शब्दः कल्प्येत । इतरत्र श्रुतेन संबन्धः । तस्माद्व्यवहितो ब्राह्मणावयवोऽस्य परिपूरकः कल्प्यते । यथा, वसन्ताय कपिञ्जलानालभते, ग्रीष्माय कलविङ्कानालभत इति । तेन वैदिकीतिकर्तव्यता प्राप्यते ।

ननु यदि तद्ब्राह्मणमस्यान्तः कल्प्यते, तत्र न भवति। तदेतन्मयूरनृत्यमापद्यते। तद्यथा, मयूरस्य नृत्यतोऽन्यदपाव्रियतेऽन्यत्संव्रियते। एवमिहापीदं संव्रियते तदपाव्रियते। नैष दोषः। प्रत्यक्षस्तस्य तत्र भावः । इह पुनरानुमानिकः । न चाऽऽनुमानिकं प्रत्यक्षं बाधते । इह तर्हि न प्राप्नोति । *प्रत्यक्षविरोधात् । स्यादेवं, यदि विरोधः स्यात् । न त्वस्ति* विरोधः । तत्रापि भविष्यतीहापि । तदेतदुक्तं, विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेतेति । उच्यते । प्रकृतिवदिति किम् । आह । अष्टमे प्रकृतिनियमं करिष्यति । इयमस्य प्रकृतिरिति । तदुच्यते, विध्यन्तो वा प्रकृतिरिव प्रवर्तेत । यो यस्य कर्मणः प्रकृतिरिति, यस्याऽऽग्नेयः प्रकृतिस्तस्याऽऽग्नेयादेव । यस्याग्नीषोमीयस्तस्याग्नीषोमीयादिति । एवं सर्वत्र ।

अथ कस्मान्न लौकिको विध्यन्तः कल्प्यते । उच्यते । लौकिकस्य विधेरभावाद्विध्यन्त एव नास्ति । कुतस्तत्कल्पनेति । आह । लौकिकीतिकर्तव्यता प्राप्यतां, किं विध्यन्तकल्पनयेति । उच्यते । वैदिकी ह्यत्रेतिकर्तव्यता न लौकिकी । कस्मात् । तथा हि लिङ्गदर्शनं प्रयाजादि समर्थितं भवति ॥ १० ॥

---

न वाक्यार्थः फलकरणेतिकर्तव्यतायुक्तः । तत्र फलकरणे, अनाकाङ्क्षितत्वान्न संबध्येते । इतिकर्तव्यता त्वपेक्षितत्वात्संबध्यते, उपमितलक्षितप्रापणेन । सादृश्यं च वैदिकेनैव भवति, न लौकिकेनेति ॥ १० ॥

---

१ पुर्यते–पा० । २ शब्द इति क्वचिन्नास्ति । ३ प्रकृतेरिव–पा० । ४ या या यस्य कर्मणः—पा० । ५ उपमितलक्षितप्रापणेन–उपमितेन वाक्यान्तरेण लक्षिता येतिकर्तव्यता तत्प्रापणेनेत्यर्थः ।

लिङ्गहेतुत्वादलिङ्गे लौकिकं स्यात् ॥ ११ ॥

यदि लिङ्गाद्वैदिकोऽभ्युपायो भवति, तेन तर्हि, अलिङ्गे लौकिकं स्यात्। यत्र कर्मणि किंचिल्लिङ्गं नास्ति, तत्र लौकिकं स्याद्विधानम्। यथा, ऐन्द्राग्नमेकादशकपालं निर्वपेद्यस्य सजाता वीयुरिति ॥ ११ ॥

लिङ्गस्य पूर्ववत्त्वाच्चोदनाशब्दसामान्यादेकेनापि निरूप्येत यथा स्थालीपुलाकेन ॥ १२ ॥

अत्रोच्यते। स्यादेवं, यदि लिङ्गहेतुको वैदिक उपायः स्यात्। न त्वसौ लिङ्गहेतुकः। किंहेतुकस्तु। विध्यन्तहेतुकः। विध्यन्तोऽपि न्यायपूर्वः। स च न्यायस्तुल्यः सर्वेषां कर्मणां वैकृतानां लिङ्गवतामलिङ्गवतां च। कुतः। चोदनाशब्दसामान्यात्। कर्मचोदनायां शब्दः समानः। सर्वत्र विध्यादिरस्ति, न विध्यन्तः। तुल्यश्चापेक्षयाऽन्यत्र श्रुतेन विध्यन्तेन संबन्धः। तदेतन्न्यायपूर्वकं लिङ्गमेकत्रापि दृश्यमानं तुल्यन्यायानां सर्वेषां धर्मवत्तां ज्ञापयति। यथा स्थाल्यां तुल्यपाकानां पुलाकानामेकमुपमृद्यान्येषामपि सिद्धतां जानाति। तुल्यो हेतुरस्य चान्येषां च सिद्धत्वस्येति। तस्मात्सर्वत्र वैदिकीतिकर्तव्यता।

अथ यदुक्तं, दृष्टप्रवृत्तिर्लौकिकीतिकर्तव्यतेति। अत्र ब्रूमः। सामान्यतो दृष्टमेतदुपदिश्यते। सामान्यतो दृष्टं च यदव्यभिचारि तत्प्रमाणम्। सव्यभिचारं चैतत्। दृष्टा हि [1]गणयागादयोऽनेवमितिकर्तव्यताकाः। तस्माददृष्टप्रवृत्तित्वादित्यहेतुः। यत्तु, वैदिक्या भागित्वात्तत्पूर्वकाणि लिङ्गानि भविष्यन्तीति। अत्र ब्रूमः। भागित्वस्यापूर्वेतिकर्तव्यतात्वं किल हेतुः। तद्भावश्च तस्याः शब्दपूर्वः। शब्देन च दर्शपूर्णमासयोरसाविति ज्ञायते, न सर्वत्रेति। तस्मान्न भागित्वम्। अतो विध्यन्तेनैवेतिकर्तव्यता प्राप्यते नान्यथा। अथ कस्मादेतानि वैकृतानि वाक्यानि न्यूनान्येव नानुमन्यन्ते, किमेभिः पूरितैः। न्यूनान्यनर्थकानि भवन्तीति। भवन्तु, को दोषः। शिष्टैरेषां संपरिग्रहो न युज्यते, प्रमादाद्भविष्यतीति। नास्त्यक्षरे मात्रायां वा प्रमादः। कुत एतावति ग्रन्थे भविष्यति। कथम्। तुल्यं च सांप्रदायिकमित्युक्तम्। व्यामोहोऽपि विदुषां युगसहस्राणि बहूनि नानुवर्तेत। युज्यते चैषामपेक्षया पूरणम्। तस्मादूनानि नानुमन्यन्ते। अतो वैदिकीतिकर्तव्यतेति सिद्धम् ॥ १२ ॥

[ ११ ॥ १२ ॥ ]

१ गणयागा अनेव—पा० ३ २ ( अ० ९ पा० २ अ० १ सू० ८ )।

( गावामयनिकज्योतिरादिष्वैकाहिकत्वेऽपठितज्योतिरादिधर्मानुष्ठा-
नाधिकरणम् ॥ २ ॥ )

[ २ ] द्वादशाहिकमहर्गणे तत्प्रकृतित्वादैकाहिकमधिका-
गमात्तदाख्यं स्यादेकाहवत् ॥ १३ ॥ पू०

प्रजाकामा गवामयनमुपेयुरिति सत्रं विधायाऽऽम्नायते, ज्योति-र्गौरायुरिति । गवामयने द्वादशाहिको विध्यन्त इति वक्ष्यति, गणेषु द्वादशाहस्येति । तत्र चोदकेन द्वादशाहिका धर्माः प्राप्यन्ते । एकाहानामपि यथास्वं नामभिः प्रातिस्विकाः । ये तत्र द्वादशाहिका ऐकाहिकैरविरुद्धास्ते यथाप्राप्तं क्रियन्ते । विरुद्धेषु संशयः । किं द्वादशाहिको धर्मः कर्तव्य उतैकाहिक इति । किं प्राप्तम् । तत्र सूत्रेणैवोपक्रमः । द्वादशाहिकमहर्गणे तत्प्रकृतित्वात् । द्वादशाहप्रकृतित्वाद्विध्यन्तेनैव प्राप्यन्ते । नन्वेवं नामधेयं बाध्यते । न बाधिष्यते नामधेयं ज्योतिरादि । अधिकागमाद्भविष्यति । ये ज्योतिष्टोमिकेभ्योऽधिकाः स्तोत्रशस्त्रविकारास्तदागमात् । एकाहवत् । यथा तस्मिन्नेव ज्योतिष्येकाहे ज्योतिःशब्दोऽधिकागमाद्भवति । सत्सु ज्योतिष्टोमिकेषु ज्योतिष्टोमेऽभावात् । अधिकधर्मार्थोऽयं शब्दः । न चाधिकानां द्वादशाहिकैर्विरोधोऽस्ति । तस्माद्द्वादशाहिकं धर्मजातं विरुद्धं कर्तव्यमिति ।

अधिकागमात्तदाख्यं स्यादेकाहवदित्येतस्यापरा व्याख्या । ये द्वादशाहेऽधिका ऐकाहिकेभ्यः केचिद्धर्मा उच्यन्ते । अभिप्लवोऽन्वहं भवति, गौरिवीतमन्वहं भवतीति । तेषामधिकानामागमात्तदाख्यं स्यात् । एतद्द्वादशाहिकमहर्ज्योतिराख्यमायुराख्यं वा । कथम् । एका-

चोदकनामधेययोर्बलाबलं चिन्त्यते । तत्र चोदको बलवान्नामधेयात् । कुतः । फले विधीयमान इतिकर्तव्यतामाकाङ्क्षति । गणश्च फले विधीयते । अतो गणत्वसामान्याद्-द्वादशाहिको विध्यन्तः । अथवा—चोदकप्राप्तेभ्यो यदधिकं ज्योतिष्टोमाद्धर्मजातमाम्नायते तदपेक्षा गौरायुरित्येवमाद्याः संज्ञाः प्रकर्तव्याः । इहापि नामधेयं श्रूयमाणं(नास्ति) शिष्टान्धर्मानतिदिशति । अथवा—तत्राधिकधर्मागमान्नामधेयं भविष्यति । अस्मिन्पक्षे

१ ( अ० ८ पा० १ सू० १७ ) ।

